BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS:
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH, M. A. C. I. E.
AND
G. THIBAUT, PH. D.
*No. 85.*

# व्याकरणमिताक्षरा ।

सर्वतन्त्रस्वतन्त्रश्रीमदन्नंभट्टप्रणीता ।

श्रीपरवस्तुश्रीनिवासजगन्नाथस्वामिभिरार्यवरगुरुभिः
तत्पुत्रेण आचार्यभट्टनाथस्वामिना च संशोधिता ।

# VYÂKARANAMITÂKSHARÂ,

A gloss on PÂNINI's Grammatical Aphorisms,

BY SREE ANNAMBHATTA.

EDITED BY

S. P. S. JAGANNÂTHASWÂMY ARYAVARAGURU
AND HIS SON
ÂCHÂRYA BHATTANÂTHASWÂMY.

*Fasciculus IV.*

BENARES.
*blished by the Proprietors Messrs. Braj B. Das & Co.,*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhamba Sanskrit Book Depot.*

Printed at the Vidyâ vilas Press,
BENARES.
1904.

श्रीरस्तु ।

---

अन्नम्भट्टकृता

# मिताक्षरा

नाम

पाणिनीयलघुवृत्तिः ॥

---

शिवं साम्बं नमस्कृत्य गणेशंचसरस्वतीम् ।

पाणिनीयमतेनाहं वृत्तिंकुर्वे मिताक्षराम् ॥

अइउण् । ऋलृक् । एओङ् । ऐऔच् । हयवरट् । लण् । ञमङणनम् । झभञ् । घढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् ॥

इति प्रत्याहारार्थसूत्राणि । प्रत्याह्रियन्ते संगृह्यन्ते अनेके वर्णा-यैस्ते प्रत्याहारा अणादयः । तत्सिद्ध्यर्थानि सूत्राणि । णादय-श्चतुर्दशान्त्यवर्णा इत्सञ्ज्ञाः । हकारादिष्वकार उच्चारणार्थः । लण्मध्ये त्वित्सञ्ज्ञको रप्रत्याहारार्थः । अइउ णित्यादा वसन्देहार्थे न्धि नंकृतः । कुमार्य् लृतक इत्यादा वच्कार्य सिद्ध्येल्कारोप-शः । ऋलृवर्णयो स्सावर्ण्यं सवर्णदीर्घार्थ मवश्यं वाच्य मिति तत-स्वाच्कार्यसिद्धौ लृकारोपदेशो व्यर्थ इत्याहुः । अटां मध्ये वि-सर्जनीयजिह्वामूलीयोपध्मानीयाना मुपदेशः कर्तव्यः । चरःकेण ।

रूपेण । अड्व्यवाय (८।४।२) इतिणत्वं यथा स्यात्। अट्युप-
संख्याना देवा त्वाश्रित मपि कार्यं सिद्धयु। तेन व्यूढोरस्के नेत्यत्र
विसर्जनीयस्या ल्त्वात्तस्था निकस्य सकारस्या नल्विधा विति
स्थानिवद्भावप्रतिषेधात् णत्वाभावस्सिद्धः ॥

हकारो द्विरुपात्तो य मटिशल्यपि वाञ्छया ।
अर्हे णायुक्ष दित्यत्र द्वयं सिद्धं भविष्यति ॥

अमूयमूर्भ्यां अकारेण प्रत्याहारे प्यतिप्रसङ्गाभावान्मकारानुबन्धो
व्यर्थः। तथाचञमङणनञभाञि त्येक मेव सूत्र मित्याकरे ॥

प्रत्याहारे ऽनुबन्धानां कथ मज्ग्रहणेषु न ।
आचारा दप्रधानत्वाल्लोपश्च बलवत्तरः ॥

## वृद्धि रादैच् ॥ १ ॥

आदैचां वृद्धिसञ्ज्ञा स्यात्। आकारमात्रस्य वृद्धित्वेऽपि सर्वमास
इत्यादोचर पदवृद्धौ सर्वंचे (६।२।१०५) त्येष स्वरो नभवति। उ-
त्तरपदाधिकारविहितवृद्धि धर्मत्वस्य विवक्षणात्। तावद्भार्यइत्यत्रापि
वृद्धि र्निमित्तस्येति पुंवद्भावनिषेधोन। वृद्धीनांनिमित्तस्येतिविग्र
हाश्रयणात्। वतुप श्चाकारमात्रनिमित्तत्वात्। अकारस्यसवर्णाग्रा
कत्वादैजर्थं तपरत्वम्। तादपिपरस्तपरइति। तेन खट्वैडकादि
स्थानिन श्चतुर्मात्रत्वेऽपि दीर्घ एवादेशः। वृद्धिप्रदेशा स्सिचिवृ
द्धि (७।२।१) रित्यादयः ॥

## अदेङ्गुणः ॥ २ ॥

अदेङांगुणसञ्ज्ञास्यात् । अतपरत्वमुभयार्थम् । गुणप्रदेशा आद्गुण (६।१।८७) इत्यादयः ॥

## इको गुणवृद्धी ॥ ३ ॥

परिभाषेयम् । गुणवृद्ध्यनुवृत्त्या सिद्धेपुनर्गुणवृद्धिग्रहणं सञ्ज्ञ य विधने नियमार्थम् । यत्रगुणवृद्धी स्वसञ्ज्ञया विधीयेतेतत्रेकइत्येतदुपस्थितं वेदितव्यम् । विशेषणविशेष्यभावे कामचारः निमदिपुगन्तलघूपधगुणादौ अङ्गावयवस्येकोगुणइतिव्याख्यायते । जुसिसार्वधातुकादिगुण इगन्तस्याङ्गस्येत्यादि । इकः किम् । याता । ग्लायति । उम्भिता । आत्सन्ध्यक्षरव्यञ्जनानां नभवति । स्वसञ्ज्ञया किम् । द्यौः । पन्थाः । सः । इमम् ॥

## न धातुलोप आर्धधातुके ॥ ४ ॥

सर्वस्यापि धातो र्लोपे गुणवृद्धिप्रसङ्गाभावा त्सामर्थ्याद्धात्वेकदेशो धातुशब्देन विवक्षितः । धातोर्लोपो यस्मिन्निति बहुव्रीहिः । धात्वेकदेशलोपनिमित्ते आर्धधातुकेपरत स्तन्निमित्ते इको गुणवृद्धी नस्तः । लोलुवः । पोपुवः । मरीमृजः । धातुग्रहणं किम् । अनुबन्धलोपे माभूत् । लून् लविता । बहुव्रीहि र्लोपस्य गुणवृद्ध्यो श्चैकार्धधातुकनिमित्तत्वलाभाय । चेच्छेद्यतइत्यादौ यङ्निमित्तणिलोपेपि णिनिमित्तगुणसिद्धिः । आर्धधातुकेकिम् । तोतोर्ति । जोहोर्ति । तु-

र्वाहुर्व्या र्यङ्लुगन्तयो राल्लोप(६।४।२१)इति छकारवकारयो स्त्रिप माश्रित्य झलादिप्रत्ययपरत्वनिमित्तलोपेसति तन्निमित्तगुणो न स्यात्। इकःकिम्। अभाजि। रागः। लोलुव इत्यादौ यङोऽकारस्यातो लोपे सति यकारमात्रस्यैव सम्भवा दचिपरतो गुणादौ कर्तव्ये ऽल्लोपस्य स्थानिवत्त्वादगुणाद्यप्रसङ्गात्सूत्रमिदं नकर्तव्य मित्याकरे। यदिसूत्रं नक्रियेत लोलुव इत्यादा वुञ्ङि कृते लघूपधगुणः स्यात्। नच तलाचः स्थानिवद्भावः। अनादिष्टादचः पूर्वत्रिधौस्थानिवद्भावात्। उवङ आदिष्टादचः पूर्वत्वात्। एवंयायावरः दरीदृशइति आतोलोप (६।४।६४) इति ऋदृशोङिगुण (७।४।१६) इतिचस्यात् इतिहरदत्तः। अत्राहुः। अङ्गवृत्ते पुनर्वृ त्ताविधि र्निष्ठितस्ये त्येवंगुणादयोनभविष्यन्तीत्येवंभाष्याभिप्रायइति॥

क्ङिति च ॥५॥

क्ङिन्निमित्ते इकोगुणवृद्धीनस्तः। चितम्। छिन्नम्। मृष्टः। अत्र गकारोऽपि चर्त्वभूतोनिर्दिश्यते। ग्लाजिस्थश्चग्स्नुः (३।२।१३९)। जिष्णुः। इकःकिम्। लैगवायनः। कामयते॥

मृजेरजादौक्ङितिवृद्धिर्वेष्यते ॥

मृजन्ति। मार्जन्ति॥

विङ्तीतिपरसप्तमीत्यपिभाष्येस्थितम्। क्ङित्यनन्तरो य इक् तस्यपत्किंचिन्निमित्तं गुणवृद्धीनेति। नचैवंभिन्नमित्यादौदि कारेण व्यवधानान्निषेधानसङ्गः। क्नोः कित्त्वविधानाद् ज्ञापकात्

लघूपधगुणस्यापि निषेधसिद्धेरित्यादितत्त्वैवानुसन्धेयम् ॥

## दीधी वेवीटाम् ॥ ६ ॥

दीधीवेव्यो रिटश्च गुणवृद्धिर्न स्तः । आदीध्यनम् । आदीध्यकः । आवेव्यनम् । आवेव्यकः । इडत्रागमो गृह्यते नधातुः । व्याख्यानात् । रणिता । अत्र लुडादेशस्य तिपो डादेशे तासे ष्टिलोपे सति लघूपधगुणः प्रतिषिध्यते । दीधी वेव्यो श्छान्दसत्वा त्तत्र चादीध्यन मित्यादि प्रयोगाभावा दधीधे ददीधयु रितिच गुणदर्शना न्निषेधो व्यर्थः । इटोपि नेड्वशी (७।२।८) त्यत इडित्यनुवर्तमानेपुनरार्धधातुकस्ये (७।२।३५) डितीड्ग्रहणमविकृतरूपप्रतिपत्त्यर्थ मिति गुणाप्रसङ्गः । अङ्गकार्यमेव नियम्यत इति पिपठीरिति र्वोरुपधाया (८।२।७६) इति दीर्घत्वं भवत्येव । अग्रहीत् । अवादीदित्यादौ ग्रहोऽलिटि दीर्घः (७।२।३७) सिज्लोपएकादेशेसिद्ध (वा०८।२।६) इति वचना द्भवतीति सूत्र मेत न्नकर्तव्य मित्याकरे ॥

## हलोनन्तराः संयोगः ॥ ७ ॥

निरन्तरा हलः संयोगसञ्ज्ञाः स्युः । हल इति जातौ बहुवचनम् । तेन यथासम्भवं द्वयो र्बहूनांच सञ्ज्ञा स्यात् । संयुज्यन्ते वर्णा अस्मिन्निति संयोग इत्यन्वर्थत्वा दे कस्य न । हलः किम् । तितउ छत्रम् । तत्रोतेर्डडसन्श्च (उ०५।२३) इत्यसंहितयानिर्देशा त्सन्धि र्नभवतीति संयोगान्तलोपप्रसङ्गः । अनन्तराः किम् । पचनिपनसम् ।

स्कोः संयोगाद्यो रिति (८।२।२९) सलोपेन। ऽन्द्रिरीयिपतीत्यत्र-नन्द्रा (६।१।३) इति नकारस्य न द्वित्वनिषेध. । तत्राजादे रित्यनुवृत्त्या अचामा वादिय, तस्मा त्पदे अनन्तरा नदराः संयोगादयो द्वि नेष्यन्त इतिव्याख्याना दकारस्यच नकारेण व्यवधाना दित्याकरे ॥

## मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥

मुखसहिता नासिका मुखनासिका । मुखनासिकयोच्चार्यमाणो ऽनुनासिकसञ्ज्ञः स्यात् । मुखेतिकिम् । अनुस्वारस्यैव स्यात् । नासिकाकिम् । कादीनां माभूत् । भासादवासिन्याये नोभयवचनानामपि नासिकाग्रहणेन ग्रहणसम्भवा दनुस्वारस्य सञ्ज्ञाया मप्यदोषान्मुखग्रहणं नकर्तव्य मित्याकरे ॥

## तुल्यास्यप्रयत्नंसवर्णम् ॥ ९ ॥

आस्ये भवमास्यम् - ताल्वादि, प्रारम्भोयत्न स्समयत्नः । स्पृष्टतादिः । तुल्यौस्थानमयत्नौ यस्य तदक्षरं मिथः सवर्णं स्यात् । आस्यग्रहणं किम् । कचटतपानां माभूत् । प्रयत्नग्रहणंकिम् । इचुयशानां मा भूत् । नभमश्च्योततो त्यत्र झरोझरीति (८।४।६५) शकारस्य चकारे लोपः स्यात् ॥

## ऋलवर्णयोर्मिथःसावर्ण्यंवाच्यम् ॥

होतृ‍ऌकारः । ह ऌकारः ।

अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। उपूपध्मानीयाना मोष्ठौ। ऋटुरषाणां मूर्धा। लृतुलसानां दन्ताः। एदैतोः कण्ठतालु। ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम्। नासिकानुस्वारस्य ॥

स्पृष्टंकरणं स्पर्शानाम्। ईषत्स्पृष्ट मंतस्थानाम्। विवृत मूष्मणां स्वराणांच। संवृतं ह्रस्वस्य। सोऽत्रसावर्ण्यार्थं विवृतः प्रतिज्ञायते ॥

कादयो मावसानाः स्पर्शाः। ञमङणना अनुनासिकाः। यरलवा अन्तस्थाः। शषसहा ऊष्माणः। ᳵक इति जिह्वामूलीयः। ᳶप इत्युपध्मानीयः। अं इत्यनुस्वारः। अः इतिविसर्जनीयः ॥

## नाज्झलौ ॥ १० ॥

तुल्यास्यप्रयत्ना वप्यज्झलौ नसवर्णौ। दण्डहस्तः। सवर्णदीर्घो हकारस्य नभवति। ऊष्मणा मीषद्विवृतत्वा त्स्वराणांचविवृतत्वा त्सावर्ण्या प्रसङ्गा दिद मपिसूत्रं नकर्तव्य मित्याकरे। अस्मिन्पक्षे कुमारीशेत इत्यत्रदीर्घप्रसङ्गादकस्सवर्ण इत्यत्र (६।१।१०१) चेति नानुवर्त्यम्। ऊष्मस्वराणां प्रयत्नै क्यमङ्गीकृत्यै तत् सूत्रारम्भपक्षेतु एतत्सूत्रप्रवृत्तिकाले प्रकृत्यापवादन्यायेन सवर्ण सञ्ज्ञाया अनिष्पादा- तदधीनग्राहकशास्त्रस्याणुदित्सवर्णस्य (१।१।६९) त्स्याप्रवृत्ते रत्र- ग्राच्प्रत्याहारा न्तर्गतेकारस्यसवर्णाग्राहकत्वा दीर्घशकारयो स्सावर्ण्यनिषेधादज्ग्रहणं कर्तव्यमिति ॥

## ईदूदेद्द्विवचनंप्रगृह्यम् ॥ ११ ॥

ईदूदेदन्तं द्विवचनं प्रगृह्यसञ्ज्ञं स्यात् । हरी इति । विष्णू इति । गङ्गे इति । हरी इत्यादा वाद्यन्तवदेकस्मि (१।१।२१) न्निति वाद्यन्तत्वम् । ईदूदेत्किम् । रामावत्र । द्विवचनंकिम् । गौर्यत्र । मणीवादि नेत्येतद्भाष्यवार्तिकयो रदर्शना दनार्ष मेतत् । मणीवेत्यत्र वकार इवार्थे । रोदसीवेत्यादे श्छान्दसत्वा च्छन्दसि सर्वे विधयो विकल्प्यन्त इतीष्टसिद्धिः । तपरत्व मसन्देहार्थम् ॥

## अदसो मात् ॥ १२ ॥

अदसो मात्परावीदूतौ तथा । अमी ईशाः । अमू आसाते । अदसः किम् । शम्यत्र । ए दित्यननुवृत्त्यैव अमुकेऽत्रेत्यत्राप्रसङ्गा न्मादिति नवक्तव्य मित्याहुः ॥

## शे ॥ १३ ॥

सुपांसुलुगिति (७।१।३९) विभक्त्यादेशः शेइति । एतदपि तथा । अस्मे इन्द्राबृहस्पती ॥

## निपातएकाजनाङ् ॥ १४ ॥

एकश्वासा वच एकाच् । एकाज्निपात अङ्वर्ज्यः प्रगृह्यः । अ अनन्त । इ ईश । निपातः किम् । चकारात्र । एकाच्किम् । प्रेदम् । अनाङ्किम् ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्या द्वाक्यस्मरणयो रङित् ॥
ओत्तमै रेक्ष्यसे न त्व मामृता देन्द्रतो ऽखिलैः ।
आ एवं सर्व्ववेदार्थ आ एवं सद्वचो हरेः ॥

आङः प्रतिषेधादेवाऽऽन्मात्रत्वे सिद्धे एकग्रहण मन्यत्रवर्णग्रहणे जातिग्रहणज्ञापनार्थम् । तेन दम्भे हल्ग्रहणस्य जातिवाचकत्वा त्सिद्ध मित्युपपन्न मित्याकरे ॥

## ओत् ॥ १५ ॥

ओदन्तो निपातः प्रगृह्यसञ्ज्ञः स्यात् । अहो ईशा । ओत्किम् । प्रेदम् । निपातः किम् । शम्भोऽव ॥

## सम्बुद्धौ शाकल्यस्येतावनार्षे ॥ १६ ॥

सम्बुद्धा वोदन्तो ऽवैदिके इतौ वा तथा । शम्भो इति । शम्भविति । अनार्षे किम् । ब्रह्मबन्धवित्यब्रवीत् । इतौ किम् । शम्भोव । सम्बुद्धौ किम् । गवित्ययमाह । अत्रानुकार्यानुकरणयो र्भेदस्याविवक्षितत्वेन अर्थवत्त्वा द्विभक्त्युत्पत्ति र्न ॥

## उञः ॥ १७ ॥

उञ इतौ वा प्रगृह्यत्वम् । उ इति । विति ॥

## ऊँ ॥ १८ ॥

अय मादेशश्च वा । ऊँइति ॥

## ईदूतौचसप्तम्यर्थे ॥ १९ ॥

सप्तम्यर्थे या वीदूतौ तौ प्रगृह्यौस्तः । (अध्यस्यां मामकी) तनू इति । (सोमो) गौरी अधिश्रितः । तन्वां गौर्या मिति प्राप्ते सुपांसुलु (७।१।३९)गित्यादिना सप्तम्यालुक् । ईदूतौकिम् । (प्रियस्सूर्ये प्रियः) अग्ना भवाति । अग्निशब्दा त्सप्तम्याडादेशः । सप्तमीतिकिम् । मती । सुष्ठुती । मत्या सुष्ठुत्ये ति प्राप्ते । अर्थग्रहणं किम् । वाप्यामश्वो वाप्यश्वः । नद्या मातिर्नद्यातिः । वातामयी अस्ति मृगत्व मित्यत्रापि प्रगृह्यत्व मेवानेन सूत्रेण । एतस्य छन्दोमात्रविषयत्वस्य भाष्ये अदर्शनात् । अन्येतु भष्येसोमो गौरी अधिश्रित इत्यादि वैदिकोदाहरणदर्शना च्छन्दोविषयत्व मस्येति वातप्रम्यस्तीत्ये व भवितव्य मित्याहुः ॥

## दाधाघ्वदाप् ॥ २० ॥

दारूपा धारूपाश्च धातवो घुसञ्ज्ञाः स्यु र्दाप् दैपौ विना । दो,दद्, धेट्, दाण्, दाञ्, धाञ्चग्रहणमिष्यते । दीडस्तु मीनातीत्यादिना (६।१।५०) आत्वेकृतेऽपि घुसञ्ज्ञायाअभावा दुपादास्तेस्यत्र स्थाध्वो (१।२।१७) रितीत्वं नभवति ।प्रनिदातेति नेर्णत्व मपि नभवति । केचित्तु दीङःप्रतिषेधः स्थाघ्वोरित्वे इतिवार्तिके इत्वमात्रे घुसञ्ज्ञाप्रतिषेधा दन्यत्राप्रतिषेधा त्प्रणिदातेति भवितव्य मेवणत्वेनेत्याहुः ॥

## आदयन्तवदेकस्मिन् ॥ २१ ॥

एको ऽसहायः । एकस्मिन्न प्यादाविवांतइव कार्यं स्यात् । यथा। कर्तव्य मित्यत्र प्रत्ययाद्युदात्तत्वम् । एवमौपगव इत्यत्रापि । एकस्मिन्निति किम् । सभासन्नयनेभवः साभासन्नयनः । आकाराश्रिता वृद्धसञ्ज्ञा नभवति ॥

## तरप्तमपौघः ॥ २२ ॥

एतौ घसञ्ज्ञौस्तः । आतिशायनिकं (प्रत्यय)प्रकरण एव तादोघः, पितौघः इतिवा लाघवार्थं वक्तव्ये प्रकरणोत्कर्षेण संज्ञाकरणं स्वार्थेऽपि तरवस्तीति ज्ञापनार्थम् । तेनव्पाच्तर (२।२।३४) मित्यादि सिद्ध्यति । योगापेक्षंच ज्ञापकमि तीयसुनपि स्वार्थे सिद्ध्यतीतिग तीयांसं, महीयांस मित्यादि प्रयोगोपपत्तिः ॥

## बहुगणवतुडतिसंख्या ॥ २३ ॥

एते सङ्ख्यासञ्ज्ञाः स्युः । बहुकृत्वः । गणकृत्वः । तावत्कृत्वः । कतिकृत्वः । बहुगणयोः सङ्ख्यावचनयो र्ग्रहणंनसङ्घवैपल्यार्थयोः । महासञ्ज्ञायाः प्रयोजन मन्वर्थत्वा त्संख्याशब्दस्यैकादिकाया अपि सङ्ख्याकार्यसिद्धिः । एकधा, द्विधेत्यादि ॥

## अर्धपूर्वपदस्य पूरणप्रत्ययान्तस्य सङ्ख्या सञ्ज्ञा वाच्यासमासः कन् विध्यर्थम् ॥

अर्धपञ्चम शूर्पः । अर्धपञ्चमकः । अर्धपञ्चमेन शूर्पेण क्रीति इति

तद्धितार्थे द्विगुः। शूर्पादञन्यतरस्या (५।१।२६) मित्यत्र ठञ्च। अध्यर्धेति (५।१।२८) लुक्। वतोरिड्वा (५।१।२३) इतिसङ्ख्याया विहितस्य कनः वत्वन्ता दिड्विधानादेव ज्ञापकात्सङ्ख्याकार्यसिद्धिः। बहुपूगेति (५।२।५२) पट्कतीति (५।२।५१) च डट्यागमविधानात् बह्वादीना मपि सङ्ख्याकार्य सिद्धिरिति सूत्रमेत न्नकर्तव्य मित्याकरे॥

## ष्णान्तापट्॥ २४॥

षान्ता नान्ताच सङ्ख्या षट्सञ्ज्ञा स्यात्। षट्। पञ्च॥

## डतिच॥ २५॥

डत्यन्तासङ्ख्या षट्सञ्ज्ञा स्यात्। कति। पूर्वसूत्रे (बहुगणेतिसूत्रात्) डत्यनुवृत्त्या सिद्धे सूत्र मेत न्नकर्तव्य मिति स्थितम्॥

## क्तक्तवतूनिष्ठा॥ २६॥

एतौ निष्ठासञ्ज्ञौ स्तः। कृतः। कृतवान्॥

## सर्वादीनिसर्वनामानि॥ २७॥

तद्गुणसंविज्ञानबहुव्रीहिः सर्वादीनीति। सर्वनामानीत्यत्रपूर्वपदात्संज्ञायामिति (८।४।३) णत्वमतएवनिपातनान्नभवति। सर्व। विश्व। उभ। उभय। डतर। डतम। इतर। अन्य। अन्यतर। त्वत्। त्व। सम। सिम। नेम। एक। पूर्व। पर। अवर। दक्षिण। उत्तर। अपर। अधर। स्व। अन्तर। त्यद्। तद्। यद्। एतद्। इदम्।

अदस् । द्वि । युष्मद् । अस्मद् । किम् । अन्वर्थसञ्ज्ञाविज्ञाना त्सञ्ज्ञोपसर्जनव्यावृत्तिः । सर्वोनामकश्चित् । तस्मै सर्वाय । अतिसर्वाय । उभशब्दस्यसर्वनाम्नस्तृतीयाच ( २।३।२७ ) इत्येतदर्थः पाठः ॥

## विभाषादिक्समासेबहुव्रीहौ ॥ २८ ॥

अत्रसर्वनामतान । नबहुव्रीहावित्यस्यापवादः । दक्षिणपूर्वस्यै दक्षिणपूर्वायै । दिग्ग्रहणं निषेधविकल्पयो र्विषयविभागार्थम् । समासे किम् । दक्षिणदक्षिणस्यैदेहि । अतिदिष्टबहुव्रीहौ न विकल्पः । मुख्यसमासग्रहणात् । बहुव्रीहौकिम् । द्वन्द्वेमाभूत् । दक्षिणोत्तरपूर्वाणाम् ॥

## नबहुव्रीहौ ॥ २९ ॥

अत्रसर्वनामतान । प्रियसर्वाय परसर्वस्मै इत्याद्यर्थं तदन्तविध्यङ्गीकारात् प्राप्तिः । उपसर्जनप्रतिषेधेन सिद्धत्वा त्सूत्रमेतदनर्थकम् । नचत्वत्कपितृको मत्कपितृक इत्यत्र बहुव्रीहवयवस्य सञ्ज्ञानिषेधार्थमिदम् । तत्रसञ्ज्ञाया इष्टत्वात् । त्वकत्पितृक इत्येव भवितव्यमित्याकरे ॥

## तृतीयासमासे ॥ ३० ॥

नसर्वनामता । मासपूर्वाय । समासइत्यनुवर्तमाने पुनः समासग्रहणात्तृतीया समासार्थ वाक्येपिन । मासेनपूर्वाय । पूर्वसदृशेत्यादि

(२।१।३१) प्रतिपद तृतीया समासइह गृह्यते नकर्तृकरणे कृताब-
हुल (२।१।३२) मिति। त्वयकाकृतम् ॥

द्वन्द्वेच ॥ ३१ ॥

नसर्वनामता। पूर्वापराणाम् ॥

विभापाजसि ॥ ३२ ॥

द्वन्द्व इत्येव। पूर्वापरे। पूर्वापराः। जसञ्शीभावंमत्येवविकल्पः।
अकच्तु नभवति। द्वन्द्वेचइति निषेधात् ॥

प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥ ३३ ॥

एते जसि वा सर्वनामसञ्ज्ञाः। तयः प्रत्ययः। प्रथमे प्रथमाः
द्वितये द्वितयाः। शेषं रामवत्। नेमे नेमाः। शेषं सर्ववत् ॥

पूर्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थाया
मसञ्ज्ञायाम् ॥ ३४ ॥

एतेषां व्यवस्थाया मसञ्ज्ञायां गणपाठा त्सर्वनामसञ्ज्ञा या प्राप्ता
सा जसि वा स्यात्। स्वाभिधेयापेक्षावधिनियमो व्यवस्था। पूर्वे
पूर्वाः। एवं परादीना मपि। व्यवस्थायांकिम्। दक्षिणा गाथकाः।
कुशला इत्यर्थः। सत्यामपि व्यवस्थायां न नाम्नि। उत्तराः कु-
रवः ॥

स्वमज्ञातिधनाख्यायाम् ॥ ३५ ॥

ज्ञाति धना न्यवाचिनः स्वशब्दस्य प्राप्ता सर्वनामसञ्ज्ञा जसि वा

स्यात्। स्वे, स्वाः। ज्ञातिधनयोस्तु स्वाः। ज्ञातयः, अर्था वा। आख्याकिम्। स्वे स्वावा पुत्रा गावोवा। अत्रात्मीयत्वाख्या ज्ञातिधनयो र्वर्तते। नतु ज्ञातित्वधनत्वयो राख्येति विकल्पसिद्धिः॥

अन्तरंवहिर्योगोपसंव्यानयोः॥ ३६॥

एतयोः सर्वनामसञ्ज्ञोन्तरशब्दो जसि तत्सञ्ज्ञो वा स्यात्। अन्तरे अन्तरावा गृहाः। नगरवाह्या अन्त र्वर्तिनश्चोच्यन्ते। वहिर्देशयोगोवहिर्योगः। बाह्येनयोगो वहिर्योग इत्यर्थद्वयाश्रयणात्। अन्तरे अन्तरावा शाटकाः। परिधानीया इत्यर्थः। एतयोः किम्। ग्रामयोरन्तरेतापसः। मध्ये इ त्यर्थः। गणेव्यवस्थादर्थमेव पाठात् पूर्वादोनिनवेत्ये वसूत्रे कर्तव्यमिति पूर्वादि सूत्रत्रयं व्यर्थ मित्याहुः॥

समःअतुल्ये॥

समाय सदृशाय॥

अन्तरपुरि॥

अन्तरायां पुरि॥

तीयस्य ङित्सु सर्वनामता वाच्या॥

द्वितीयस्मै, द्वितीयाय। द्वितीयस्यै, द्वितीयायै। विभाषाद्वितीयातृतीयाभ्या (७।३।११५) मित्येतन्नवक्तव्यम्॥

स्वरादि निपातमव्ययम्॥ ३७॥

स्वरादयो निपाताश्चाव्ययसञ्ज्ञाः स्युः ॥

तद्धित श्चासर्वविभक्तिः ॥ ३८ ॥

यस्मा न्नसर्वविभक्ते रुत्पत्तिः सतद्धितान्तो ऽव्ययसञ्ज्ञः । यतः । यत्र । असर्वविभक्तिः किम् । औपगवः । औपगवौ । औपगवाः । तद्धितःकिम् । एकः । द्वौ । बहवः । उभयशब्दस्य द्विवचना भावा त् गोदा वरणा इत्यादावव्ययसञ्ज्ञा निरासायस्वरादिषु तसिला- दितद्धितानां पाठः कार्य. । एव मव्ययकृताम् । अव्ययीभावस्यच तत्रैवपाठे स्वरादिसूत्रमेकमेवालमितिपञ्चसूत्रीमपश्चार्थेत्याहुः ॥

कृन्मेजन्तः ॥ ३९ ॥

कृदयो मान्त एजन्तश्चसोऽव्ययसञ्ज्ञः । स्मारं स्मारम् । जीवसे । पिबध्यै । अन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थम् । इहमाभूत् । आधये । चिकीर्षवे । कुम्भकारेभ्यइति । लक्षणप्रतिपदेतिवा सन्निपातलक्ष- णेतिवा ऽनतिप्रसङ्गा दन्तग्रहणं चिन्त्यमित्याहुः ॥

क्त्वातोसुन्कसुनः ॥ ४० ॥

एत दन्त मव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः ॥

अव्ययीभावश्च ॥ ४१ ॥

अव्ययम् ॥

लुङ्मुखस्वरोपचारेष्वेव ॥

उपाग्नि । उपाग्निमुखः । नाव्ययदिक्छब्देति (६।२।१६८) प्रतिषेधः सिद्धः । विसर्जनीयस्थानिकः सकार उपचारइत्युच्यते । उपपयःकारः । अतःकृकमी(८।३।४६)त्यत्रानव्ययस्येति प्रतिषेधसिद्धिः । नियमःकिम् । उपाग्निकम् । अकृच्छ्रभवति । स्वरादौ पठितस्यापितद्धितादेः पुनः सञ्ज्ञाविधान मनित्यत्वज्ञापनार्थम् । तेन सूर्यस्योदेतो रिति नलोक (२।३।६९) इत्यादिना नषष्ठीनिषेधः ॥

## शिसर्वनामस्थानम् ॥ ४२ ॥

जश्शसोश्शि (७।१।२०) रित्येतत् सर्वनामस्थानसञ्ज्ञं स्यात् । कुण्डानि ॥

## सुडनपुंसकस्य ॥ ४३ ॥

स्वादिपञ्चवचनानि सर्वनामस्थानसञ्ज्ञानिस्यु रक्लीवस्य । राजा । राजानौ । राजानः । अक्लीवस्य किम् । सामानि । सुट्किम् । राज्ञः ॥

## नवेतिविभाषा ॥ ४४ ॥

जातिपदार्थाश्रयेणेदं सूत्रम् । इतिशब्दोर्थनिर्देशार्थः । नेति प्रतिषेधः । वेति विकल्पः । तयो र्विभाषेति सञ्ज्ञा । विभाषाप्रदेशेषु नेति वेतिचोपस्थितौनेत्यनेन समीकृतेविषये वेति विकल्पः क्रियते । उभयतो विभाषाः प्रयोजयन्ति । विभाषाश्वेः (६।१।३०) शुशाव । शिश्वाय । शुशुवतुः । शिश्वियतुः । विभाषाशब्दस्य सं

ऽन्यतरस्या मित्यादिय द्विकल्पप्रतिपादकत्वा न्निषेधमुखेन विकल्पे प्राप्तविभाषैव स्यात्। विधिमुखेन त्वप्राप्तविभाषैव स्यात्। निषेधेनतु कित्यपि सम्प्रसारणाभावे सिद्धे सर्वत्र विधिमुखेनैव विकल्प. प्रवर्तत इति नार्थद्वयपरत्वम्। एवंचयथासम्भवंविभाषाव दन्यतरस्या मित्यादेरपि नवेत्यर्थद्वयसञ्ज्ञात्वंवेदितव्यम्। विभाषाग्रहण स्योपलक्षणत्वात्। ह्रक्रोरन्यतरस्या(१।४।५३)मित्यत्रापिनाप्तविभाषा या भाष्ये स्थिरत्वात्। भाष्येतु व्यक्तिपक्षाश्रयणेनसूत्रं प्रत्याख्यातम्। विभाषाश्वे(६।१।३०)रित्यस्य प्रतिलक्ष्यं भेदा त्किति निषेध मुखे नाकिति विधिमुखेन प्रवृत्ता विष्टसिद्धेरिति॥

## इग्यणःसम्प्रसारणम्॥ ४५॥

स्थानिभूतो भावीयाइक् सम्प्रसारणसञ्ज्ञःस्यात्। अदुहितरामित्य त्र लुङात्मनेपदोत्तमपुरुषैकवचनस्य इटोलावेशस्य यण् स्थानिकस्यापियथासङ्ख्याश्रयणात्त्सम्प्रसारणसञ्ज्ञा। तेनहल(६।४।२)इति दीर्घेन। द्युभ्यामित्यत्रदिवउत्(६।१।१३१)इतितपरत्वान्नदीर्घः। अक्षद्यूनावित्यत्र सम्प्रसारणाच्च (६।१।१०८) इति न पूर्वरूपत्वम् वार्णादाङ्गस्य बलीयस्त्वात्॥

## आद्यन्तौटकितौ॥ ४६॥

टित्कितौ यस्योक्तौ तस्यक्रमा दाद्यन्तयोःस्त.। अभवत्। भन[1] कीयम्॥

## मिदचोन्त्यात्परः ॥ ४७ ॥

अन्त्यादचःपरो मित्स्यात् । स्थानेयोगत्वस्य प्रत्ययपरत्वस्य चापवादः । ज्ञानानि । रुणद्धि ॥

## मस्जेरन्त्यात्पूर्वंनुम् वाच्योऽनुषङ्गसंयोगादिलोपार्थम् ॥

मग्नः । मङ्क्ता ॥

## एच इग्घ्रस्वादेशे ॥ ४८ ॥

ह्रस्वादेशे कार्ये एचः इगेव स्यात् । प्ररि । अतिनु । चित्रगु । एचः किम् । अतिखट्वः । ह्रस्वेतिकिम् । दे३वदत्त ॥

## षष्ठीस्थानेयोगा ॥ ४९ ॥

योगः सम्बन्धः । स्थानेयोगो यस्याः सास्थानेयोगा । निपातनात् सप्तम्या अलुक् । आनन्तर्यादयनेकसम्बन्धप्राप्तौ स्थानेयोगैवेति नियम्यते । तिष्ठन्त्यस्मिन् शब्दा इति स्थानमर्थः । षष्ठीतिस्थानी लक्ष्यते । अर्थादादेशार्थे स्थानीज्ञेयः । स्थान्यर्थाभिधान समर्थ आदेशोभवतीत्यर्थः । यद्वा षष्ठीविभक्तिरेवादेशार्थाभिधाननिमित्तसम्बन्धाज्ञेया । अथवास्थान शब्दःप्रसङ्गवाची । प्रसङ्गनिमित्तसम्बन्धाज्ञेया । अस्तेर्भूः(२।४।५२)इति अस्तेरर्थेभूः, अस्तेःप्रसङ्गे वाभूरित्यर्थः । स्थनेनवायोगोयस्यास्सा । तृतीयायाएत्त्वंनिपातनात् । स्थाने

अयोगाइतिवाच्छेदः । अनिर्धारित योगा अयोगा योगवतिवायोगा वः योगवतीत्यर्थः। तेनावयवषष्ठयामुदुपधाया गोह(६।४।८९)इत्यादौ नातिप्रसङ्गः। व्याख्यानतएव स्थानेयोगस्यज्ञातुं शक्यत्वा देतत्सूत्रमशिष्यमित्याकरे ॥

## स्थानेन्तरतमः ॥ ५० ॥

स्थाने प्राप्यमाणानांमध्ये सदृशतम आदेशः स्यात् । दण्डाग्रम् । खट्वाग्रम् । स्थनेइतिवर्तमाने स्थाने ग्रहणं यत्रानेक(विध)मान्तर्यं तत्रस्थानतएव आन्तर्यंबलीयो यथास्यात् । चेता । स्तोता । प्रमाणत अकारोगुणः प्राप्नोति । स्थानतएव् । तमप्ग्रहणंकिम् । वाग्घसति । त्रिष्टुब्भसति । झयोहोन्यतरस्याम् (८।४।६२) हकारस्य सोष्मण स्सोष्माणो द्वितीयाः प्राप्नुवन्ति । नादवतो नादवन्त इतितृतीयाः । तमप् ग्रहणान्नादवन्त स्सोष्माणश्च चतुर्था भवन्ति ॥

## उरण् रपरः ॥ ५१ ॥

उःस्थाने प्रसज्यमानएव अण् रपरःस्यात् । तेनगुणवृद्धिप्रसङ्गे रश्रुतिमतो रश्रुतिमन्तौ वरारौभवतः। कर्ता । कारकः । उः किम् । खेयम् । ईचस्तः(३।१।१११) । अण्किम् । सुधातुरकङ्च(४।१।९७) सौधातकिः । उ रिति लकारस्यापि सावर्ण्यात्-ग्रहणात् रपरइति प्रत्याहारग्रहणा त्लपरत इत्यादौ लपरत्वसिद्धिः ॥

## अलोन्त्यस्य ॥ ५२ ॥

षष्ठीनिर्दिष्टस्यान्त्यस्यालआदेशः स्यात्। इद्गोण्याः (१।२।५०)प॰ञ्चभिर्गोणीभिःक्रीतः पञ्चगोणिः ॥

## ङिच्च ॥ ५३ ॥

ङिदनेकालपि अन्त्यस्यैव स्यात्। आनङृतोद्वन्द्वे (६।३।२५) होतापोतारौ । तातङो ङित्त्वस्य गुणनिषेधार्थत्वा त्सर्वादेशत्वम् ॥

## आदेःपरस्य ॥ ५४ ॥

पञ्चमीनिर्देशेनक्रियमाणंकार्यं परस्यादेः स्यात्। ईदासः (७।२।८३) आसीनः ॥

## अनेकाल्शित्सर्वस्य ॥ ५५ ॥

अनेकाल् आदेश शिच्च सर्वस्य स्यात् । अस्तेर्भूः (२।४।५२) भविता । जश्शसोश्शिः (७।१।२०) । कुण्डानि ॥

## स्थानिवदादेशोऽनल्विधौ ॥ ५६ ॥

आदेशः स्थानिवत्स्यात् नत्वल्विधौ। अस्तेर्भूः (२।४।५२) । धातुत्वा त्तृजादयः । भविता । भवितुम् । किमः स्थानिवत्त्वादङ्कार्यम् । केन । काभ्यामित्यादि । स्थानिवदिति संबंधिशब्दत्वादेवादेशेलब्धे एरु(३।४।८६) रित्यादौ तेस्तु रित्यानुमानिकादेशस्यापिस्थानिवद्भावार्थ मादेशग्रहणम् । अनल्विधावितिकिम् । द्यौः । पन्थाः । सः । हल्ङ्याादिलोपोन सञ्ज्ञाधिकारात् । स्थानोआदेशस्य सञ्ज्ञा माभू दिति वदित्युक्तम् ॥

## अचः परस्मिन्पूर्वविधौ ॥ ५७ ॥

अल्विध्यर्थमिदम् । परनिमित्तो ऽजादेशः पूर्वविधौकर्तव्ये स्थानिवत् स्यात् । पटयति । अवधीत् । बहुखट्वकः । टिलोपाल्लोपयोः स्थानिवद्भावा द्धोपधात्वत्वविधिः । बहुखट्वक इत्यत्र शेषाद्विभाषेति (५।४।१५४) कप्यापोन्यतरस्या (७।४।१५) मितिह्रस्वस्य ह्रस्वान्तेन्त्यात्पूर्वमिति(६।२।१७४) उदात्तत्वंन । अचः किम् । आगत्य । वाल्यपि(६।४।३८) इतिमलोपः तुक्किकर्तव्येनस्थानिवत् । परस्मिन्निति किम् । आदीध्ये इतिटेरेत्वे कृतेयोवर्णयोर्दीधीवेव्यो रिति (७।४।५३) लोपोन। पूर्वेति किम् । हेगौः । परनिमित्ताद्वृद्धिः संबुद्धिलोपेनस्थानिवत् । परस्मिन् पूर्वस्येत्येव पूर्वस्य कार्ये लब्धे विधिग्रहणं स्वाश्रयनिवृत्त्यर्थम् । तेन अध्वर्यो: वाय्वो रित्यत्र लोपोव्योर्वलि (६।१।७६) इतियवयो र्लोपो न ॥

## नपदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वार दीर्घजश्चर्विधिषु ॥ ५८॥

पदान्तादिविधौ परनिमित्तो जादेशो न स्थानिवत् ॥ पदान्ते कानिसन्ति । कौस्तः । इति । श्नसोरल्लोपस्य(६।४।१११)स्थानिवत्त्वा द्यणवादेशौ नस्तः ॥ द्विर्वचने । दध्यत्र । यणः स्थानिवत्त्वाभावा दनचिच(८।४।४७) इतिधस्यद्वित्वम् ॥ वरे । यायावरः । यश्चयङः(३।२।१७६) इतिवरच्यतोलोपेवलिलोपे घातोलोपस्या स्थानिवत्त्वादातोलोपइटिच(६।४।६४) इत्यालोपोन ॥ यलोपे । कण्डूतिः । कण्डूयतेःक्तिच्यतोलोपोवलिलोपे नस्थानिव-

ब् ॥ स्वरे । चिकीर्षकः । ण्वुल्यतोलोपोलिति (६।१।१९३) इति-स्वरे न स्थानिवत् ॥ सवर्णे । शिण्ढि । शिषेःश्नमिलोटो हौ श्नस्याल्लोपेहेर्धित्वेषस्यजश्त्वे नधत्वे ष्टुत्वेनधीत्यस्यढत्वे अल्लो-पस्यास्थनिवत्त्वादनुस्वारस्यपरसवर्णः ॥ अनुस्वारे । शिंषन्ति । अल्लोप स्यास्थानिवत्त्वा न्नश्चापदान्त स्येत्यनुस्वारः ॥ दीर्घे ॥ प्रतिदीव्ना । अनोकारलोपो हलिचेति (८।२।७७) दीर्घविधौ नस्थानिवत् ॥ जशि ॥ सग्धिः । बब्धाम् । अदेःक्तिनिवहुलंछन्द-सि (२।४।३९) इतिघस्लादेशेघसिभसोर्हलिच (६।४।१००) इत्युप-पधालोपेझलोझलि (८।२।२६) इतिसलोपेझषस्तथोर्धोऽध (८।२।४०) इतिधत्वेउपधालोप स्यास्थानिवत्वात् घस्य जश्त्वम् । समानाच्चा-सौग्धिः । छन्दसिसमानस्यसभावः । बब्धामिति भसेस्ताम्शि-पःश्लुःद्विर्भावः अभ्यासकार्यम् । पूर्ववदुपधालोपादि ॥ चर्विधौ । ज क्षतुः । जक्षुः । लिट्यदोघस्लादेशः । गमहन (६।४।९८) इत्युपधालो-पः । तस्यास्थानिवत्त्वादघकारस्य चर्त्वम् ।शासिवसि (८।३।६०) इतिषः ॥

## स्वरदीर्घयलोपेषुलोपाजादेशएवनस्थानिवत् ॥

अभ्यस्त स्यादेव ॥ बहुखट्वकः । गिर्योः । वाय्वोः । स्वरदीर्घयलो-पान । स्थानिवद्भावात् । ह्रस्वान्तेन्त्यात्पूर्वमिति (६।२।१७४) स्वरः। हलिचेति (८।२।७७) दीर्घः । लोपोव्योर्वलीति (६।१।७६) लोपः ॥

## द्विर्वचनेऽचि ॥५९ ॥

द्वित्वनिमित्ते ऽचि योजादेशः सस्थानिवत्स्यात् द्वित्वेकर्तव्ये । चक्रतुः । चक्रुः । परत्वाद्यणादेशे अनच्कत्वात् द्वित्वं नस्यात् । रूपातिदेशोयम् । तेनाभ्यासेअचःश्रवणं युज्यते । द्वित्वनिमित्तेकिम् । दुद्यूपति । ऊठि यणादेशो नस्थानिवत् । अनिकिप् । जेघीयते । ईघ्राध्मोरिति (७।४।३०) ईकारे ... निमित्तो नस्थानिवत् । द्विर्वकर्तव्येकिम् । द्विर्वचनानन्तरं ...ादिक ... यथा स्यात् । चक्रुः ॥

## अदर्शनं लोपः ॥ ६० ॥

प्रसक्तस्यादर्शनं लोपसञ्ज्ञं स्यात् । लोपनदशा लोपोव्योर्वलि(६।१।७६) इत्यादयः ॥

## प्रत्ययस्यलुक्श्लुलुपः ॥ ६१ ॥

लुगादिशब्दैःकृतं प्रत्ययादर्शनं क्रमाल्लुगादिसञ्ज्ञं स्यात् । अत्ति । जुहोति । वरणाः । प्रत्ययस्यकिम् । अगस्तयः । कुण्डिनाः । आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् (२।४।७०) इत्यत्र लुगित्यनुवर्तते स्थादेशनिर्देन यायासङ्ख्याभावा त्पर्यायेणैकैकस्य त्रय आदेशाः स्युः । प्रत्ययस्येत्युक्तौतु अगस्त्यशब्दा दण्यणः कौण्डिन्यशब्दाद्गर्गादियञश्च बहुषुवर्तमानस्य लुकि अवशिष्टप्रकृतिभागस्य यथासङ्ख्य मगस्ति कुण्डिन जित्यादेशा दिष्टसिद्धिः । भाष्येतु गोत्रेलुगचि (४।१।८९)इत्यतो गोत्रग्रहणानुवृत्त्यागोत्रेविहितस्यलुगिति प्रत्ययस्यैवलुग्भविष्यतीतिप्रत्ययग्रहणमुत्तरत्रानुवृत्त्यै सर्वप्रत्ययलोपेम

त्ययलक्षणार्थम् । एकदेशलोपे तु न । आघ्नीतसंशयस्योपेणागमोयेति । परत्वा दुपधालोपे पुनःप्रसङ्गविज्ञाना दनुनासिकलोपः स्या दि त्युक्तम् ॥

## प्रत्ययलोपेप्रत्ययलक्षणम् ॥ ६२ ॥

प्रत्यये लुप्ते ऽपि तदाश्रितं कार्यं स्यात् । अग्निचित् । अधोक्। सुप्तिङ्लोपेपिपदसञ्ज्ञा। प्रत्ययस्येत्यनुवृत्त्याकृत्स्नप्रत्ययलोपएवप्रत्ययलक्षणम्। नेह । आघ्नीय । प्रत्ययलोपे तल्लक्षण मित्येव वाच्ये प्रत्ययग्रहणं वर्णाश्रये नास्ति प्रत्ययलक्षण मित्येत दर्थम् । गोहितम् । रैकुल अवार्यौन ॥

## नलुमताङ्गस्य ॥ ६३ ॥

लुक्, श्लु, लुपएते लुमन्तः । लुमता लुप्ते तन्निमित्त मङ्गस्य कार्यं न स्यात् । मृष्टः । जुहुतः । शपोलुकि श्लौच गुणवृद्धी न । लुमताकिम् । कार्यते । अङ्गस्यकिम् । पञ्च । पयः ॥

## अचोन्त्यादिटि ॥ ६४ ॥

अच इति निर्धारणे षष्ठी । जातावेकवचनम् । अन्त्याचप्रभृतिशब्द ष्टिसञ्ज्ञः स्यात् । पचेते । पचेथे ॥

## अलोन्त्यात्पूर्वउपधा ॥ ६५ ॥

अन्त्यादलःपूर्वोवर्ण उपधासञ्ज्ञः स्यात् । चेतति ॥

## तस्मिन्नितिनिर्दिष्टेपूर्वस्य ॥ ६६॥

सप्तमीनिर्देशेन क्रियमाणं कार्यं पूर्वस्यैव स्यात् । इकोयणचि (६।१। ७७) । दध्यत्र । निर्दिष्टग्रहणमानन्तर्यार्थम् । तेनेह न । अग्निचिदत्र ॥

## तस्मादित्युत्तरस्य ॥ ६७ ॥

पञ्चमीनिर्देशेन क्रियमाणं परस्यैव स्यात् । तिङ्ङतिङः (८।१।२८) ओदनंपच । नेह । पचत्योदनम् ॥

## स्वं रूपं शब्दस्याशब्दसञ्ज्ञा ॥ ६८ ॥

इहशास्त्रे शब्दस्य स्वं रूपं ग्राह्यम् शब्दसञ्ज्ञां वर्जयित्वा । अग्नेर्ढक् (४।२।३३) इत्यादौ शब्दे नार्थमतीता वर्ये कार्यासम्भवा तद्वाचि शब्दमात्रस्य कार्यप्रसक्ताविद मारभ्यते । तेनाग्निशब्दाद्वेवढक् न वै श्वानरादिभ्यः । अशब्दसञ्ज्ञाकिम् । तरप्तमपौघः (१।१।२२) घग्रहणे सञ्ज्ञिग्रहणं नस्वरूपस्य । रूपग्रहण मर्थपरिग्रहार्थम् । तेनार्थवद् ग्रहणे नानर्थकस्येति सिद्धं भवति । विभाषावृक्षेत्यत्र (२।४।१२) विशेषाणामेव ग्रहणम् । स्वेपुष (३।४।४०) इत्यत्रस्वरूपस्य पर्यायाणां विशेषाणांच । सभाराजे (२।४।२३) त्यत्रराजादौ पर्यायस्यैव । पक्षिमत्स्यमृगान् (४।४।३५) इत्यत्रपक्षिमृगयोः स्वरूपपर्याय विशेषाणां मत्स्येस्वरूपस्य विशेषाणांच । मीनस्यै कस्यपर्याय स्येष्यते ॥

## अणुदित्सवर्णस्यचाप्रत्ययः ॥ ६९ ॥

अत्राण् परेणणकारेण । अणुदिच्चसवर्णस्य ग्राहकः स्वस्यच । अस्यच्वौ (७।४।३२) । पटीभवति । जटीभवति । कुहोश्चुः

(७।४।६२)।कुचुटुतुपु एते उदितः। अप्रत्ययः किम्।सन्नाशं सभिक्षुः (३।२।१६८)। दीर्घो नभवति॥

## तपरस्तत्कालस्य ॥ ७० ॥

तपर स्तात्परो वातावान् ग्राह्यः। अतो भिसऐस् (७।१।९) रामैः। तत्कालस्य किम्। खट्वाभिः॥

## आदिरन्त्येन सहेता ॥ ७१ ॥

आदि रन्त्येनेता सहोच्चार्यमाणो मध्यगानां स्वस्यचसञ्ज्ञास्यात्। अल्।सुप्। तिङ्। अन्त्येनकिम्।सुडिति टाइत्यनेनसञ्ज्ञामाभूत्। इताकिम्। अक्प्रत्याहारः कपयिति ककारेण माभूत्। तस्यापि पूर्व वर्णसमुदायापेक्षयाऽन्त्यत्वात्। नचैवं हलन्त्य (१।३।३) मिती त्सञ्ज्ञाप्रसङ्गः। उपदेशान्त्यत्वा भावात्। नविभक्तौ (१।३।४) वित्यत्रनेति योगविभागान्नतस्येत्सञ्ज्ञे तिन्यासोह्येयः। अप्रस क्त्यायोगविभागे मानाभावात्। अत्रोपदेशग्रहणाभावेन वैवक्षिका न्त्यत्वमादाय प्रसङ्गसम्भवादित। अत्रान्त्येनेति शक्य मकर्तुम्। प्राथम्या दनन्यार्थत्वाच्चैट् ष्टका रेणैव सुट्प्रत्याहारः। अतएव ऌ कारस्थावर्णेन सहोच्चार्यमाणो रेफो रप्रत्याहारः। नचत्रैवक्षिकान्त्यग्र हणा त्सङ्गतिः। टाइत्यस्याव्याप्तिप्रसङ्गादिति॥

## येनविधिस्तदन्तस्य ॥ ७२ ॥

येनविशेषणेनकार्यं विधीयते तत्तदन्तस्य स्वस्यचस्यात्। एरच्

(३।३।९६)। नयः। चयः॥

## समासप्रत्ययविधावुगिद्वर्णग्रहणवर्जनेतिवाच्यम्॥

द्वितीयाश्रित(२।१।२४)इत्यादि।कष्टश्रितः। कष्टंपरमश्रितइत्यत्रन। नडादिभ्यःफक् (४।१।९९)। नाडायनः। सौतनाडिरित्यत्रन। उगितश्च (४।१।६) भवती। अतिभवती। अतइञ् (४।१।९५) दाक्षिः। अस्यापत्यं इः॥

## यस्मिन्विधिस्तदादावल्ग्रहणे॥

अचोयत्कुवङौ। श्रियौ।श्रियः। भ्रुवौ। भ्रुवः॥

## वृद्धिर्यस्याचामादिस्तद्वृद्धम्॥७३॥

जातौबहुवचनम्। यस्याचस्समुदायस्यादिर्वृद्धिःतद्वृद्धसञ्ज्ञंस्यात्। शालीयः। औपगवीयः। आदिःकिम्। सभासन्नयनेभवः साभासन्नयनः॥

## वानामधेयस्यवृद्धत्वम्॥

देवदत्तीयः। दैवदत्तः॥

## गोत्रान्तादसमस्तवत्प्रत्ययइतिवाच्यम्॥

घृतप्रधानोरौढिर्घृतरौढिः। तस्यच्छात्राःघृतरौढीयाः। ओदनपाणिनीयाः॥

जिह्वाकात्यहरितकात्ययोर्न ॥

जैह्वाकाताः । हारितकाताः ॥

त्यदादीनि च ॥ ७४ ॥

एतानि वृद्धसञ्ज्ञानि स्युः । त्यदीयम् । किमीयम् । त्यादायनिः । मादायनिः ॥

एङ् प्राचां देशे ॥ ७५ ॥

यस्याच्समुदायस्यादिरेङ् तद्वृद्धं स्यात्प्राग्देशाभिधाने । गोनर्दीयः । भोजकटीयः । एङ् किम् । अहिच्छत्रम् । प्राचां किम् । देवदत्तो नाम वाहीकेषु ग्रामः । तत्र भवो दैवदत्तः । देशे किम् । गोमत्यां भवा मत्स्या गौमताः ॥

प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा ।
विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥

भाष्ये तु प्राचामित्याचार्यपरमङ्गीकृत्य व्यवस्थितविकल्पत्वात् । प्राग्देशवाचिनस्तु देवदत्तशब्दस्य वृद्धत्वात् ठञ्ञिठाविष्येते ॥

इति श्रीमहोपाध्याय श्रीमद्राघवसोमयाजिकुलावतंस श्रीमदद्वैतविद्याचार्य श्रीमत्तिरुमलार्यवर्यस्य सूनो रन्नंभट्टस्य कृतौ व्याकरणस्य मिताक्षरायां वृत्तौ प्रथमस्याध्यायस्य प्रथमः पादः ॥ १ ॥

॥ अथप्रथमाध्यायद्वितीयपादः ॥

गाङ्कुटादिभ्योञ्णिन्ङित् ॥ १ ॥

गाङादेशात्कुटादिभ्यश्चाञ्णितः प्रत्ययाङित्कार्यकृतःस्युः । अध्यगीष्ट । अध्यगीषाताम् । अध्यगीषत । कुटिता । कुटितुम् । अञ्णित्किम् । उत्कोटयति । उत्कोटः ॥

व्यचेःकुटादित्वमनसिवाच्यम् ॥

विचिता । विचितुम् । अप्रत्ययेतु उरुव्यचाः ॥

विजइट् ॥ २ ॥

विजेःपरइडादिप्रत्ययोङित्स्यात् । विजिता । विजितुम् । इट्किम् । उद्वेजनम् ॥

विभाषोर्णोः ॥ ३ ॥

अस्मादिडादिर्वाङित्स्यात् । ऊर्णुविता । ऊर्णविता । ऊर्णुवितुम् । ऊर्णवितुम् । इडादिःकिम् । ऊर्णवनम् ॥

सार्वधातुकमपित् ॥ ४ ॥

रपित्सार्वधातुकं ङित्स्यात् । कुरुतः । सार्वधातुकं किम् । कर्ता ।
अपित्किम् । करोति ॥

असंयोगाल्लिट् कित् ॥ ५ ॥

असंयोगात्परोऽपिल्लिट् कित्स्यात् । बिभिदतुः । असंयोगात्किम् ।
सस्रंसे । अपित्किम् । बिभेदिथ ॥

इन्धिभवतिभ्यां च ॥ ६ ॥

लिट् कित् । इन्धेः संयोगार्थम्, भवतेः पिदर्थम् । समीधे दस्युहन्त
मम् । बभूव । बभूविथ ॥

श्रन्थिग्रन्थिदम्भिस्वञ्जीनां वाच्यम् ॥

थतुः । श्रेथुः । देभतुः । देभुः । परिषस्वजे । भाष्यवार्तिक
ोरदर्शनान्मतान्तरमेतदित्याहुः ॥

इन्धेर्भाषायामाभावितव्यम् । लिट् तु छान्दसः । दृष्टानुवि
धिश्छन्दसि भवति । भुवो वुक् नित्यत्वात् गुणं बाधत इति सूत्रमेत
दकर्तव्यमित्याकरे ॥

मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ ७ ॥

एभ्यः क्त्वा कित्स्यात् । न क्त्वा सेट् (१।२।१८) इत्यस्यापवादः ।
गुधकुषक्लिशां रलो व्युपधा (१।२।२६) दिति विकल्पं बाधित्वा नित्या
र्थं वचनम् । मृडित्वेत्यादि ॥

## रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ॥ ८ ॥

एभ्यः संश्चक्त्वा च कितौ स्तः । रुदविदमुषां रलो व्युपधा(१।२।२६)दिति विकल्पबाधनार्थम् । ग्रहेर्विध्यर्थम् । स्वपिप्रच्छ्योः सन्नर्थम् । किदेवहित्वा । रुरुदिषति । रुदित्वेत्यादि ॥

## इको झल् ॥ ९ ॥

इगन्ताज्झलादिः सन् कित्स्यात् । चिचीषति । तुष्टूषति । इकः किम् । पिपासति । झल् किम् । शिशयिषते ॥

## हलन्ताच्च ॥ १० ॥

इक्समीपाद्धलः परो झलादिः सन् कित्स्यात् । बिभित्सति । बुभुत्सते । इक्समीपात्किम् । यियक्षते । झल् किम् । विवर्तिषते । दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम् । धिप्सति ॥

## लिङ्सिचावात्मनेपदेषु ॥ ११ ॥

इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । भित्सीष्ट । अभित्त । इक्समीपात्किम् । यक्षीष्ट । हलः किम् । चेषीष्ट । झल् किम् । वर्तिषीष्ट । लिङ्सिचौ किम् । द्वेष्टा । आत्मनेपदेषु किम् । अस्राक्षीत् ॥

## उश्च ॥ १२ ॥

ऋवर्णात्परौ झलादी लिङ्लङ्परस्सिच्चेत्येतौ कितौ स्तः । कृषीष्ट ।

अकृत । झल्किम्। अवर्षिष्ट । तङ्किम् । अकार्षीत् ॥

वागमः ॥ १३ ॥

गमेः परौ झलादोलिङ्सिचौ वा कितौ स्त स्तङि । सङ्गसोष्ट । सङ्गंसोष्ट। समगत । समगंस्त ॥

हनःसिच् ॥ १४ ॥

हन्तेः सिच् कित्स्यात्तङि । आहत ॥

यमोगन्धने ॥ १५ ॥

सूचनार्थाद्यमः सिच्कित्स्यात्तङि। उदायत। सूचितवानित्यर्थः। सर्वत्रानुदात्तोपदेशे (६।४।३७) त्यनुनासिकलोपः । गन्धने किम् । उदायंस्तरज्जुम् । उत्क्षिप्तवानित्यर्थः ॥

विभाषोपयमने ॥ १६ ॥

विवाहार्थाद्यमस्सिच्किद्वा स्यात्तङि । भार्यामुपायत उपायंस्त वा ॥

स्थाघ्वोरिच्च ॥ १७ ॥

अनयोरिदन्तादेशः स्यात्सिच्च कित्स्यात्तङ । उपास्थित अदित ॥

नक्त्वासेट् ॥ १८ ॥

सेट्क्त्वा किन्नस्यात्। देवित्वा। वर्धित्वा। सेट्किम्। कृत्वा। यत्त

किम्। निगृहीतिः॥

## निष्ठाशीङ्स्विदिमिदिक्ष्विदिधृषः ॥१९॥

एभ्यः सेण्निष्ठा कि न्नस्यात्। शयितः। स्वेदितवा नित्यादि। से ट्किम्। स्विन्नः। आदितश्च (७।२।१६) विभाषाभावादि कर्मणो (७।२।१७) रितीड्विकल्पः॥

## मृषस्तितिक्षायाम् ॥२०॥

सेण्निष्ठा कि न्नस्यात्। मर्षितः। मर्षितवान्। क्षमायांकिम्। अपमृषितं वाक्य माह॥

## उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ॥२१॥

उदुपधा द्धातोः सेण्निष्ठा किद्वा स्याद्भाव आदिकर्मणिच। मुदितमनेन। मोदितमनेन। प्रमुदितः। प्रमोदितः। उदुपधात्किम्। लिखितम्। प्रलिखितम्। भावादिकर्मणोःकिम्। रुचितंकार्षापणम्। व्यवस्थितविकल्पाश्रयणा च्छब्विकरणाना मेव विकल्पः। नेह। गुधितम्॥

## पूङःक्त्वाच ॥२२॥

अस्मात् क्त्वा निष्ठाच सेटौ कितौ नित्यं नस्तः। पवित्वा। पवितः। क्लिशः क्त्वानिष्ठयोः (७।२।५०)। पूङश्च (७।२।५१) इतीट्। क्त्वा ग्रहणमुत्तरार्थम्। नक्त्वासेट् (१।२।१८) इत्येवसिद्धम्॥

## नोपधात्थफान्ताद्वा ॥ २३ ॥

नकारोपधात्थान्तात्फान्ताच्च सेट्क्त्वा कि द्वा स्यात् । ग्रथित्वा । ग्रन्थित्वा । गुफित्वा । गुम्फित्वा । थफान्तात्किम् ॥ स्रंसित्वा । नोपधात्किम् । रेफित्वा ॥

## वञ्चिलुञ्च्यृतश्च ॥ २४ ॥

एभ्यः सेट्क्त्वाकिद्वास्यात् । वचित्वा । वञ्चित्वा । लुचित्वा । लुञ्चित्वा । अतित्वा । ऋतिः सौत्रोघृणार्थः ॥ सेट्किम् । वक्त्वा । उदितोवेति (७।२।५६) वेट् ॥

## तृषिमृषिकृषेः काश्यपस्य ॥ २५ ॥

सेट्क्त्वाकिद्वा । तृषित्वा । तर्षित्वेत्यादि । काश्यपग्रहणं पूजार्थम् । वेतिहि वर्तते ॥

## रलोव्युपधाद्धलादेःसंश्च ॥ २६ ॥

उश्चइश्चवो । उइवर्णोपधाद्धलादेःरलंतात्परौ क्त्वासनौ सेटौवा कितौ स्तः । द्युतित्वा । द्योतित्वा । दिद्युतिषते । दिद्योतिषते । लिखित्वा । लेखित्वा । लिलिखिषति । लिलेखिषति । रलःकिम् । देवित्वा । दिदेविषति । व्युपधात्किम् । वर्तित्वा । विवर्तिषति । हलादेःकिम् । एषित्वा ॥ एषिषिषति । सेट्किम् । भुक्त्वा । बुभुक्षते ॥

## ऊकालोऽज्झ्रस्वदीर्घप्लुतः ॥ २७ ॥

उ ऊ ऊ३ इत्येवं कालोऽच् क्रमाद्ध्रस्वदीर्घप्लुतसञ्ज्ञः स्यात् । एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः ॥ अजिति संयोगा च समुदायनिवृत्त्यर्थम् । प्रतक्ष्य । व्यञ्जनद्वयस्य मात्रिकत्वा ह्रस्वस्ये (६।१।७१)ति तुङ्मभूत् । तितउच्छत्रम् । दीर्घात् (६।१।७५) पदान्ताद्वा (६।१।७६) इति विकल्पो माभूत् ॥

## अचश्च ॥ २८ ॥

एते ह्रस्वादयः स्वसञ्ज्ञया विधीयमाना अच एव स्थाने स्युः । ह्रस्वो नपुंसके (१।२।४७)। अतिरि । अचः किम् । सुवाग्ब्राह्मणकुलम् ॥ अकृत्सार्वधातुकयोर्दीर्घः (७।४।२५) स्तूयते । अचः किम् । भिद्यते । वाक्यस्यटेः प्लुतः (८।२।८२) । देवदत्ता३ । अचः किम् । अग्निचीइत् । तकारस्य माभूत् । स्वसञ्ज्ञया किम् । दयौः । पन्थाः ॥

## उच्चैरुदात्तः ॥ २९ ॥

## नीचैरनुदात्तः ॥ ३० ॥

ताल्वादिस्थाने ऊर्ध्वाधरभागयुक्ते ऊर्ध्वभागे नोच्चार्यमाणोऽजुदात्तः। अधरभागेनोच्चार्यमाणोऽजनुदात्तः । सूत्रयो रुच्चैर्नीचैरित्यूर्ध्वाधरभागग्रहणम् । अभ्यासगम्यश्चायं स्वरविशेषः । षड्जादिवत् ॥

## समाहारःस्वरितः ॥ ३१ ॥

उदात्तानुदात्तत्वयो र्यस्मि न्नचि समाहारः स स्वरितः ॥

## तस्यादित उदात्तमर्धह्रस्वम् ॥ ३२ ॥

उदात्तानुदात्तयोस्समाहार इत्युक्ते कियान् भाग उदात्तः क्वेति विवेकाभिधानार्थमिदम् । तस्य स्वरितस्यादितः अर्धह्रस्वमुदात्तम् । उपरितनं सर्वमनुदात्तम् । अर्धह्रस्वमित्यर्धमात्रोच्यते । तेन दीर्घस्योपरि सार्धमात्रानुदात्ता । प्लुतस्य तु सार्धद्विमात्रोनुदात्तः । ह्रस्वादीनां त्रयाणामप्यादितोर्धमात्रैवोदात्तेति विवेकः ॥

## एकश्रुति दूरात्संबुद्धौ ॥ ३३ ॥

उदात्तानुदात्तयोरविभागो भेदतिरोधानमेकश्रुतिः । सयस्मिन्वाक्ये दृश्यते तदेकश्रुतिः । दूरात्संबुद्धौ एकश्रुतिवाक्यं स्यात् । त्रैस्वर्यापवादः । संबुद्ध्या वन्वर्थग्रहणम् । आगछत ब्राह्मणा३ः । दूरात्किम् । आगछतब्राह्मणाः । त्रैस्वर्यमेव ॥

## यज्ञकर्मण्यजपन्यूङ्खसामसु ॥ ३४ ॥

यज्ञकर्मण्येकश्रुतिः स्यात् जपादिव्यतिरिक्ते । अग्निर्मूर्धा दिवः ककुदित्यादि । यज्ञकर्मणिकिम् । अभ्यासेत्रैस्वर्यमेव । जपादौ तु यज्ञाङ्गेपि यथाध्ययनस्वरएव । न्यूङ्खाः षडोकारास्तेषु केचिदुदात्ताः केचिदनुदात्ताः । सामान्यध्ययनस्वरेणैवगेयमिति ॥

## उच्चैस्तरांवावषट्कारः ॥ ३५ ॥

वषट्कार इति वौषट्शब्दो गृह्यते । यज्ञकर्मणि वौषडित्यस्योदात्तस्वरो वास्यात्पक्षे एकश्रुतिः । सोमस्याग्ने वीही३ वौ३ षट् ॥

## विभाषाछन्दसि ॥ ३६ ॥

वेति वर्तमाने विभाषाग्रहणं यज्ञकर्मणोत्यस्य निवृत्त्यर्थम् । तेनाध्ययनकालेपि एकश्रुति र्नेन विकल्प्यते । इषेत्वोर्जेत्वा । अग्नआयाहिवीतये । अग्निमीळेपुरोहितम् । शन्नोदेवीरभिष्टये ॥

## नसुब्रह्मण्यायांस्वरितस्यतूदात्तः । ३७ ।

सुब्रह्मण्योमि त्यादिनिगदे यज्ञकर्मणि एकश्रुति र्नभवति । तत्र लक्षणत. प्राप्तस्य स्वरित स्योदात्तः स्यात् । सुब्रह्मण्योम् । यत्सत्यया न्तत्वा त्तित्स्वरितम्(६।१।१८५)तस्य एकादेशः स्वरित एव । तस्य ओमाङोश्च(६।१।९५)त्येकादेशोपिस्थाने तरतम(१।१।५०) इतिस्वरित एव । त स्याने नेदात्तविधिः । एव मिन्द्र गच्छे तीन्द्रशब्द आमंत्रितस्वरे णाद्युदात्तः । शेषनिघातेन द्वितीयेनुदात्तः । तस्योदात्तादनुदात्तस्येति(८।४।६६)स्वरितः । तस्या नेनोदात्तविधि रिति एव मग्रेप्यूह्यम् ॥

## देवब्रह्मणोरनुदात्तः ॥ ३८ ॥

सुब्रह्मण्यायां मेव देवा ब्रह्माण इत्यनयोः स्वरितस्यानुदात्तः स्यान्नोदात्तः । देवा ब्रह्माण आगच्छतागच्छत ॥ द्वयोर प्यामंत्रितंपूर्वमविद्यमानव (८।१।७२) दिति द्वितीयस्याष्टमिकनिघाताभावा दामंत्रित स्वरे णाद्युदात्तयो र्द्वितीयस्याचः स्वरित स्यानेनानुदात्तत्वम् ॥

## स्वरितात्संहितायामनुदात्तानाम् ॥ ३९ ॥

स्वरितात्परेषामनुदात्तानामेकश्रुतिः स्यात्संहितायाम् । इमं मेगङ्गे यमुने सरस्वति । वचनमतन्त्रम् ।-एकस्यद्वयोरपि । पचति । अग्निवेश्यः । संहितायांकिम् । इमम् । मे । गंगे ॥

## उदात्तस्वरितपरस्यसन्नतरः ॥ ४० ॥

उदात्तः स्वरितोवा यास्मा त्पर स्त स्यानुदात्तस्य सन्नतरः स्यात् । अनुदात्ततर इत्यर्थः । इषेत्वोर्जेत्वा । वायव्यं ॥

## अपृक्तएकाल्प्रत्ययः ॥ ४१ ॥

एकाल्यः प्रत्ययः सोपृक्तसञ्ज्ञः । क्विप् क्विन् विजादयः । एकाल्किम् । दर्विः । जागृविः । प्रत्ययःकिम् । सुरांसुनोतीति सुरासुत् । त माचष्ट इति णिचि क्विपि टिलोपणिलोपयो र्धातु सकार स्यावन्ता दिति लोपो नभवति । सुराः ॥

## तत्पुरुषःसमानाधिकरणःकर्मधारयः ॥ ४२ ॥

भिन्नप्रवृत्ति निमित्तयोः शब्दयो रेकार्थवृत्तिः सामानाधिकरण्यम् । समानाधिकरणपद स्तत्पुरुषः कर्मधारय सञ्ज्ञःस्यात् । पाचकस्त्री । पुंवत्कर्मधारये (६।३।४२) तिपुंवद्भावः । तत्पुरुषःकिम् । पाचिकाभार्यः । समानाधिकरणः किम् । पाचिकापुत्रः ॥

## प्रथमानिर्दिष्टं समासउपसर्जनम् ॥ ४३ ॥

समास शास्त्रे प्रथमान्त मुपसर्जनसञ्ज्ञं स्यात् । कृष्णश्रितः ॥

## एकविभक्तिचापूर्वनिपाते ॥ ४४ ॥

विग्रहे य न्नियतविभक्तिकं त दुपसर्जनसञ्ज्ञं स्या न्नतु तस्य पूर्वनिपातः । निष्कौशाम्बिः । गोस्त्रियो (१।२।४८) रितिह्रस्वः । पूर्वनिपातस्तुन ॥

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ ४५ ॥

धातुप्रत्ययवर्जं मर्थवच्छब्दरूपं प्रातिपदिकसञ्ज्ञं स्यात् । डित्थः । अर्थव त्किम् । धन मित्यत्र नन्तावधे र्माभूत् । अन्यथा नलोपः स्यात् । अधातुः किम् । अहन् । अप्रत्ययः किम् । कुण्डे । प्रत्यया न्तस्य सञ्ज्ञायां ह्रस्वोनपुंसक (१।२।४७) इति ह्रस्वे कुण्डेत्यनिष्टं स्यात् ॥

## कृत्तद्धितसमासाश्च ॥ ४६ ॥

कृत्तद्धितान्ताः समासाश्च प्रातिपदिक सञ्ज्ञाःस्युः । कर्ता । औपगवः । राजपुरुषः । अर्थवत्समुदायस्य नियमार्थं समासग्रहणम् । तेन वाक्यस्य नस्यात् ॥

## ह्रस्वोनपुंसकेप्रातिपदिकस्य ॥ ४७ ॥

क्लीबे प्रातिपदिकस्य ह्रस्वः स्यात् । अतिरि । अतिनु । नपुंसके नम् । ग्रामणीः । प्रातिपदिकस्यकिम् । कुण्डे ॥

## गोस्त्रियोरुपसर्जनस्य ॥ ४८ ॥

उपसर्जनत्वं गोस्त्रियो र्विशेषणम्। स्त्रीति टाबाद्यन्तं गृह्यते। उपसर्जनगोंतप्रातिपदिक स्योपसर्जनस्त्रीप्रत्ययान्तान्तप्रातिपदिकस्यच ह्रस्वः स्यात्। चित्रगुः। अतिखट्वः। उपसर्जनस्यकिम्। ब्राह्मणगौः। अतिराजकुमारो। स्त्रीप्रत्ययान्त त्वाभावा दिह न। अति तन्त्रीः। अति श्रीः ॥

## ईयसोवहुव्रीहे र्न ॥

वह्व्यः श्रेयस्यो ऽस्य वहुश्रेयसी पुरुषः ॥

## लुक्तद्धितलुकि ॥ ४९ ॥

तद्धितलु क्युपसर्जनस्त्रीप्रत्ययस्य लुक्स्यात्। ह्रस्वापवादः। आमलक्याः फलमामलकं। तद्धितेति किम्। परमगार्गीकुलम्। लुकि किम्। गार्गीत्वम्। उपसर्जनेतिकिम्। अवन्ती। कुन्ती। कुरूः। स्त्रियामवं तीतिञ्यङ्ण्ययो र्लुकि इतोमनुष्य जातेः (४।१।६५) ऊङुत (४।१।६६) इति ङीषूङौ। प्रधानतद्धितार्थ वृत्तित्वादलनोपसर्जनत्वम् ॥

## इद्गोण्याः ॥ ५० ॥

गोण्या उपसर्जनस्त्रीप्रत्ययस्य इत्स्या त्लुक्। पञ्चभिर्गोणीभिः क्रीतः पञ्चगोणिः। इदिति योगविभागात् पञ्चसूचिः ॥

## लुपियुक्तवद्व्यक्तिवचने ॥ ५१ ॥

व्यक्तिवचने इतिलिङ्गसङ्ख्ययोः पूर्वाचार्यनिर्देशः। तदीयमेवेदं सूत्रम्। अतएव तद्शिष्यमिति वक्ष्यति। लुपिसति प्रकृतिव ल्लिङ्गसङ्ख्ये स्तः। पञ्चालानां निवासो जनपदः पञ्चालाः। जनपदेलुप्(४।२। ८१)। लुपिकिम्। लवणः सूपः। लवणाल्लुक् (४।४।२४)। व्यक्तिवचनेऽइति किम्। शिरोपाणा मदूरभवं नगरं शिरोपा स्त स्यवनं शिरीपवणम्। विभाषौषधि (८।४।६) इतिणत्वम्॥

## हरीतक्यादिपुलिंगमेव॥

हरीतक्यः॥

## खलतिकादिपुवचनमेव॥

खलतिकस्य पर्वत स्यादूरभवानि वनानि खलतिकं वनानि॥

## विशेषणानांचाजातेः॥ ५२॥

लुबन्तस्य विशेषणानामपि लिङ्गवचने तद्वदजातेः। यावल्लुवंतस्य विशेष्यत्वेन विशेषणत्वन चाजाति शब्दोनप्रयुज्यत इत्यर्थः। पञ्चालारम्याः। अजातेः किम्। पञ्चालाजनपदोरम्यः॥

## मनुष्यलुपि नविशेषणानां युक्तवत्॥

चञ्चाअभिरूपः। तृणमयः पुरुषश्चञ्चा। तत्सदृशोपिमनुष्यश्चञ्चा। संज्ञाया (५।३।८७) मितिविहितस्यकनो लुम्मनुष्य (५।३।९८) इति लुप्। एवं वधिकादर्शनीयः॥

तदशिष्यंसञ्ज्ञाप्रमाणत्वात् ॥ ५३ ॥

युक्तवद्वचनं नकर्तव्यम् । कुतः । संज्ञाप्रमाणत्वात् । संज्ञा संव्यवहारः प्रमाणं यस्य तत्त्वा दित्यर्थः । आपो दाराः सिकता वर्षा इत्यादिवत् पञ्चालाः गोदौ वरणेत्यादि । लिङ्गवचनयो र्लौकव्यवहर सिद्धत्वा दित्यर्थः ॥

लुब्योगाप्रख्यानत् ॥ ५४ ॥

जनपदेलु (४।२।८१) वित्यादिना लुब प्यशिष्यः । कुतः । योगाप्रख्यानात् । पञ्चालादिशब्दा जनपदादीनां सञ्ज्ञाः । न तत्रतद्धितार्थयोगोऽस्तीति नतद्धितोत्पत्ति र्नापि लु बित्यर्थः ॥

योगप्रमाणेचतदभावेऽदर्शनंस्यात् ॥ ५५ ॥

पञ्चालादीनां योगाप्रतीतेर्नयौगिकत्व मि त्युक्तम् । इदानीं यौगिकत्वे बाधक मुच्यते । पञ्चालानां निवास इत्यादि योगस्य प्रमाणे प्रत्यायके पञ्चा लादिशब्दे अङ्गीक्रियमाणे योगाभावे प्रयोगादर्शनंस्यात् । इदानीं क्षत्रियसंबंधाभावेऽपि जनपदादौ पञ्चलादि शब्दप्रयोगा द्रूढिशब्दा एवैत इत्यर्थः ॥

प्रधानप्रत्ययार्थवचनमर्थस्यान्य प्रमाणत्वात् ॥ ५६ ॥

समासे प्रधानार्थस्य तव्यदादिप्रत्ययार्थस्य वचनं प्रधानोपसजने प्रधानार्थं सह ब्रूतः, प्रकृतिप्रत्ययौ प्रत्ययार्थं सहब्रूत इति पूर्वाचा

र्यवचनं य त्तद् प्यशिष्यम् । कुतः ।अर्थ स्यान्यप्रमाणत्वात् । लोकगम्यत्वा दित्यर्थः ॥

## कालोपसर्जनेचतुल्यम् ॥५७॥

कालोपसर्जने इ तिसप्तम्येक वचनम् । अशिष्यमितो ह्यनुवृत्तं भाव प्रधानम् । अशिष्यत्वंतुल्यं पूर्वनिरस्त्वे रिति । यद्वा उपसर्जने इतिद्वि वचनमव । तुल्यमिति स त्रत्वान्निर्देशस्य द्विवचनस्यै दावचनम् । तु ल्येइत्यर्थः । अथवाकालोपसर्जनेअशिष्ये । चोहेतौ । तुल्यं ऽ निरस नंपूर्वेण तस्य । तुल्य त्वंवहेतुसाम्यादिति । अर्थस्यान्य प्रमाणत्वमत्रा पि हेतुर्लभ्यते । पूर्वस्यारात्रे रपरार्धः भाविन्याः पूर्वार्धः संपूर्णमह श्चाद्यतन स्तद्भिन्नोनद्यतनः कालः । अप्रधान मुपसर्जन मितिच प्राचां परिभाषणं व्यर्थम् । लोकसिद्धत्वा देवेत्यर्थः । अन्यपदार्थ प्रधानो बहुव्रीहि रुत्तर पदार्थ प्रधान स्तत्पुरुष इत्यादे रप्यशिष्य त्वद्योतनार्थो योगविभागः ॥

## जात्याख्यायामेकस्मिन्बहुवचनमन्यत रस्याम् ॥५८॥

जाते रेकत्वा ज्जातिशब्देषु सर्व त्रैकवचने प्राप्ते पक्षे बहुवचनं वि धीयते । व्रीहिः । व्रीहयः । जातीतिकिम् । देवदत्तः । जातिग्रहण सामर्थ्या च्छिक्षान्यगत लोकप्रसिद्ध जाति र्गृह्यते । ते नावस्थाभेदे न्दंवद्यत्वादे र्जातित्वेपि न बहुवचनम् । एकस्मिन्निर्तिकिम् । व्रीहि यवौ ॥

सङ्ख्याशब्दप्रयोगेन ॥

एको व्रीहिः संपन्नः सुभिक्षं करोति ॥

अस्मदोद्वयोश्च ॥ ५९ ॥

एकस्मिन् द्वयो श्चास्मदो बहुवचनं वा स्यात् । अहं ब्रवीमि । वयं ब्रूमः । आवां ब्रूवः । वयं ब्रूमः ॥

सविशेषणस्य न ॥

अहं देवदत्तो ब्रवीमि । अहं पण्डितो ब्रवीमि ॥

युष्मदि गुरा वेके ॥

त्वं मे गुरुः । यूयं मे गुरवः ॥

फल्गुनीप्रोष्ठपदानांच नक्षत्रे ॥ ६० ॥

फल्गुन्योः प्रोष्ठपदयोश्च द्वयो र्बहुवचनं वा स्यात् । पूर्वे फल्गुन्यौ, पूर्वाः फल्गुन्यः । पूर्वे प्रोष्ठपदे, पूर्वाः प्रोष्ठपदाः । नक्षत्रे किम् । फल्गुन्यो माणविके । फल्गुन्यो र्जाते इत्यर्थे फल्गुन्यषाढाभ्यां टानौ (वा० ४।३।३४) विति वार्तिका ट्टप्रत्यये टित्वा न्ङीप् ॥

छन्दसिपुनर्वस्वोरेकवचनम् ॥ ६१ ॥

वेत्येव । पुनर्वसु नक्षत्रम् । पुनर्वसू नक्षत्रम् । छन्दसि किम् । पुनर्वसू ॥

विशाखयोश्च ॥ ६२ ॥

छन्द स्येकवचनं वा । विशाखे नक्षत्रम् । विशाखा नक्षत्रम् । छन्द सि किम् । विशाखे ॥

तिष्यपुनर्वस्वो नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनंनित्यम् ॥ ६३ ॥

छन्दसीति निवृत्तम् । तिष्य एकः पुनर्वसू द्वौ तयो र्द्वन्द्वे बहुवचनस्य प्रसङ्गे द्विवचनं स्यात् । तिष्यपुनर्वसू । एतयोः किम् । कृत्तिकारो हिण्यः । नक्षत्रे किम् । तिष्यो माणवकः । पुनर्वसू माणवकौ । तिष्यपुनर्वसवः । तिष्यपुनर्वसुशब्दाभ्यां नक्षत्रेणयुक्त (४।२।३) इत्यण् । लुबविशेषे (४।२।४) । तत्रजात (४।३।२५) इति सन्धिवेले (४।३।१६) त्यण् । तस्य श्रविष्ठाफल्गुन्यनूराधे (४।३।३४) ति लुक् । नक्षत्रइति वर्तमाने पुन र्नक्षत्रग्रहणं पर्यायलाभार्थम् । पुष्यपुनर्वसू । सिद्ध्यपुनर्वसू । द्वन्द्वे किम् । य स्तिष्य स्तौ पुनर्वसू येषां ते तिष्यपुनर्वसवः । उन्मुग्धा स्ति यादय एव विपर्यासेन गृह्यमाणा बहुव्रीहि र्नोच्यन्त इति नक्षत्रसमास एवायम् । बहुवचनस्येति किम् । तिष्यपुनर्वस्विदम् । सर्वो द्वन्द्वो विभाषैकवद्भवती त्येकत्वम् । इद मेव बहुवचनग्रहणं सर्वो द्वन्द्व इत्यस्य ज्ञापकम् ॥

सरूपाणामेकशेषएकविभक्तौ ॥ ६४ ॥

सरूपाणां मध्ये एक एव शिष्यतेनेतरे एकविभक्तौ परतः । वृक्षौ । वृक्षाः । रूपग्रहणं किम् । भिन्नार्थानामपि शब्दसाम्ये यथा स्यात् । अक्षाः पादाः माषाः । एकेति किम् । द्वयो र्बहूनांवा शेषो माभूत ।

शेषः किम्। अदेशोमाभूत्। एकविभक्तौ किम्। पयः पयो जरयति॥

## वृद्धोयूनातल्लक्षणश्चेदेवविशेषः॥ ६५॥

यूना सहवचने गोत्रं शिष्यते गोत्रयुवप्रत्ययकृतमेववैरूप्यंचे त्तयोः। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वृद्धः किम्। गर्गगार्ग्यायणौ। यूनाकिम्। गार्ग्यगर्गौ। तल्लक्षणं किम्। गार्ग्यवात्स्यायनौ। एवकिम्। भागवित्तिश्च भागवित्तिकश्च भागवित्तिभागवित्तिकौ। भगवित्तशब्दात् गोत्रे अतइञ् (४।१।९५) तस्मा द्यूनि वृद्धाट्ठक्सौवीरेषु बहुल (४।१।१४८) मिति ठक्। कुत्सनं सौवीरत्वंच भागवित्तिकस्य विशेषान्तर मप्यस्ती त्येकशेषाभावः॥

## स्त्रीपुंवच्च॥ ६६॥

यूना सहवचने वृद्धा स्त्री शिष्यते साच पुंवत्। गार्गीच गार्ग्यायणश्च गार्ग्यौ॥

## पुमांस्त्रिया॥ ६७॥

स्त्रिया सहोक्तौ पुमान् शिष्यते स्त्रीपुंसलक्षणश्चे देव विशेषः। ब्राह्मणश्च ब्राह्मणीच ब्राह्मणौ। तल्लक्षणःकिम्। कुक्कुटमयूर्यौ। एवकिम्। इन्द्रेन्द्राण्यौ। अत्र पुंयोगादाख्याया (४।१।४८) मि त्यप रोविशेष इति काशिका। अत्र ब्राह्मणीति पुंयोगलक्षणङीपि ब्राह्मणाविति नस्यात्। जातिलक्षणङीप्यपि बहुविशेषणदर्शनेन तस्यापि एवकारेण व्यावृत्तिप्रसङ्गाच्च। अत्राहुः। अरण्यारण्यान्या वि

त्येवकारस्य यथोक्तं प्रत्युदाहरणं तत्रमहत्त्व स्याधिकत्वात्। इन्द्रे न्द्राण्या वित्यादौ त्वनभिधाना देकशेषाभाव इति। पुमान् किम्। प्राक्प्रच्यौ। अत्र प्रागि त्यव्यय मलिंग मिति काशिका। अत्रापि यदिप्रथमान्ता दस्तातेर्लुक् तदा सहप्रयोग एवाय मनुपपन्नः। यदि सप्तम्यन्तात् तदाकथंद्वन्द्व इति चि न्त्यम्। तत्रः स्त्रीशेषो माभूदिति पुमानि त्युक्तम्। ब्राह्मणवत्साच ब्राह्मणोवत्सश्चे त्येकशेषोनभ वति प्रधानस्त्रीप्रत्ययकृत विशेषस्यैवा श्रयणात्। पदान्तरगम्ये पि स्त्रीपुंसविशेषे पुंशेषः। गौ रियं गौ रयं एतौगावौ॥

## भ्रातृपुत्रौस्वसृदुहितृभ्याम्॥ ६८॥

यथासंख्यम्। भ्राताचस्वसाच भ्रातरौ। पुत्रश्चदुहिताचपुत्रौ॥

## नपुंसकमनपुंसकेनैकवच्चास्या न्यतरस्याम्॥ ६९॥

अक्लीबेन सहोक्तौ क्लीबं शिष्यते एकत्वमस्य वा स्यात्। लिङ्गविशे षएवचेत्। शुक्लः कंबलः, शुक्लाद्विपटी, शुक्लंवस्त्रं, तदिदंशुक्लं। तानीमानि शुक्लानि॥

## पितामात्रा॥ ७०॥

मात्रासहोक्तौ पितावाशिष्यते। पितरौ। मातापितरौ॥

## श्वशुरः श्वश्र्वा॥ ७१॥

श्वशुरश्च श्वश्रूश्च श्वशुरौ, श्वश्रूश्वशुरौ वा॥

## त्यदादीनि सर्वैर्नित्यम् ॥ ७२ ॥

सर्वैः सहोक्तौ त्यदादीनि शिष्यन्ते नित्यम् । स च देवदत्तश्च तौ ॥

## त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते ॥

स च यश्च यौ । भगवता त्वनियम आश्रितः । स च यश्च यौ । ता
विति वा ॥

## ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ॥ ७३ ॥

ग्राम्यपशूनां सहोक्तौ स्त्रीशिष्यते । नतु पुमान् । गाव इमाः । अजा
इमाः । ग्राम्येति किम् । रुरव इमे । पशुषु किम् । ब्राह्मणाः । स
ङ्घेषु किम् । एतौ गावौ । अतरुणेषु किम् । वत्सा इमे ॥

## अनेकशफेष्विति वाच्यम् ॥

नेह । अश्वा इमे ॥

इतिश्रीमहोपाध्याय श्रीमद्राघवसोमयाजिकुलावतंस श्रीमद
द्वैत विद्याचार्यश्रीमत्तिम्मलार्यवर्यस्य सूनोरन्नंभट्टस्य
कृतौ व्याकरणमिताक्षरायां वृत्तौ प्रथमस्या
ध्यायस्य द्वितीयः पादः ॥



॥ प्रथमाध्यायतृतीयपादः ॥

## भूवादयोधातवः ॥ १ ॥

क्रियावाचिनो भ्वादयो धातुसञ्ज्ञाः स्युः । भवति । एधते इत्यादि । क्रियावाचिनः किम् । वा इति निपातस्य या इति सुबन्तस्य चमाभूत् । भ्वादयः किम् । हिरुक् । पृथगि त्यादीनां माभूत् ।

भूवादीनां वकारोयं मङ्गलार्थः प्रयुज्यते ।
भुवो वार्थं वदन्तीति भ्वार्थावा वादयः स्मृताः ॥

## उपदेशे जनुनासिकइत् ॥ २ ॥

उपदिश्यतेऽनेने त्युपदेशः सूत्रधातुपाठादिः । कृत्यल्युटोबहुल (३ । ३ । ११३) मि त्यसञ्ज्ञायामपि घञ् । उपदेशे नुनासिको जित्सञ्ज्ञःस्यात् । एधते । उपदेशेकिम् । अभ्र आँ अपः । अत्रा दोनुनासिक श्छन्दसो ( ६ । १ । १२४ ) ति विधानसामर्थ्यं । द्वित्वेऽपिलोपो नभविष्यति । अणो ऽप्रगृह्यस्यानुनासिक(८।४।५७) इतिदधिशब्दस्य आचारक्विपि इदित इतिनुम् स्यादित्युपदेशग्रहणमितिन्यासः । तच्चिन्त्यम् । इत्सञ्ज्ञायां नुमित्रानुनासिकस्यासिद्धत्वात् । तस्मादुत्तरार्थंस दत् स्पष्टार्थम् । अच्किम् । आतोमनिन् ( ३ । २ । ७४ ) इत्यत्रमकार नकारादे र्माभूत् । हलन्त्या न्मनि नन्त्या दचः परः स्यात् । नद्यादौ नित्स्वरःस्यात् । अनुनासिकः किम् । सर्वस्याचोमाभूत् । प्रतिज्ञानुनासिक्याः पाणिनीयाः ॥

## हलन्त्यम् ॥ ३ ॥

उपदेशे ऽन्त्यं हलित्स्यात् । इण् गतौ । अइउण् । ऋलृक् । णकारादिरित् । उपदेशे किम् । अग्निचित् । अन्त्यं किम् । मनिनादेर्मकारादेर्माभूत् । हलित्येकशेषेण सूत्रद्वयम् । तेन नान्त्योऽन्याश्रयः । लकारद्वयनिर्देशो वा एकस्य संयोगान्तलोपः ॥

## नविभक्तौतुस्माः ॥ ४ ॥

विभक्तिस्था स्तवर्गसकारमकारा इतो न स्युः । वृक्षात् । राजानम् । मिदचोन्त्यात्परः स्यात् । राज्ञः । सितिच (१।४।१६) इति पदसञ्ज्ञा स्यात् । इदमस्थमुः (५।३।२४) इत्युकारानुबन्धे नैतस्यानित्यत्वज्ञापनात् किमोऽत् (५।३।१२) इटोऽत् (३।४।१०६) इत्यत्र तस्येत्वम् ॥

## आदिर्ञिटुडवः ॥ ५ ॥

आदिरित्येकत्वमविवक्षितम् । प्रत्येकाभिप्रायं वा । सामर्थ्याद्धातोरितिलभ्यते । धातोराद्याञिटुडुएते इतः स्युः । ञिमिदा स्नेहने टुवेपृ कम्पने । डुकृञ् करणे । उपदेशइत्येव । ञिकारीयति । आदिः किम् । पटूयति । चुटू इति दर्शनादलनटवर्गग्रहणम् ॥

## षःप्रत्ययस्य ॥ ६ ॥

प्रत्ययादिः षइत्स्यात् । शिल्पिनिष्वुन् ( ३ । १ । १४५ ) ॥

## चुटू ॥ ७ ॥

प्रत्ययाद्यौ चुटू इतौस्तः । शाण्डिकादिभ्योञ्यः (४।३।९२,

सप्तग्यांजनेडैः (३।२।९७)। चरेष्टः (३।२।१६)। योगविभागोऽनित्य त्वज्ञापनार्थः। तेन चुञ्चुप् चणपोश्चकारस्यनेत्वम्। आदिरित्येव। सम्मोदश्चकटच् (५।२।२९)। सङ्कटम्॥

## लशक्वतद्धिते॥ ८॥

तद्धितवर्जप्रत्ययाद्या लशकुवर्गाइतः स्युः। ल्यप्। शप्। क्त्वा। अतद्धिते किम्। चूडालः। रोमशः। अश्वकः॥

## तस्यलोपः॥ ९॥

तस्येतोलोपः स्यात्। ञिटुडूनां सर्वलोपार्थं तस्यग्रहणम्॥

## यथासङ्ख्यमनुदेशःसमानाम्॥ १०॥

अनुदिश्यत इत्यनुदेशः पश्चादुच्चार्यमाणः। अतएवपूर्वोच्चारित उद्देशो लभ्यते। एकत्व मविवक्षितम्। सङ्ख्या शब्देन क्रमोविवक्षितः। समसङ्ख्याना मुद्देशिना मनूद्देशिनांच यथाक्रम मुद्देशिभि रनूद्देशिनः सम्बध्यन्त इत्यर्थः। उत्तरसूत्रा त्स्वरितेनेति विभज्य यत्स्वरितत्वप्रतिज्ञा तत्रैव शब्दतो ऽर्थतो वा समसङ्ख्यानां यथासङ्ख्यं तूदीशलातुरवर्मतीत्या दौ (४।३।९४) परस्मैपदानांणल् तुसित्यादौच (३।४।८२)। नस्तोःश्चुनाश्चुः (८।४।४०) इत्यादौ। स्वरितत्वाभावात्। समानांकिम्। लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः (१।४।९०)॥

## स्वरितेनाधिकारः ॥ ११ ॥

अधिकारोऽनुवृत्तिः । स्वरितलिङ्गे नानुवृत्तिर्ज्ञेया । यद्वा । स्वरिते सति नाधिकारः । यावत्पर्यन्त मनुवृत्ति स्तत्र स्वरितत्वकरणे तद नन्तरं नानुवर्ततइत्यर्थः । प्रतिज्ञास्वरिताः पाणिनीयाः । प्रत्ययः (३।१।१) धातोः (३।१।९१) इत्यादि ॥

## अनुदात्तङित आत्मनेपदम् ॥ १२ ॥

अनुदात्तेतो ङितश्च धातोरात्मनेपदंस्यात् । आस्ते । शेते । अविशेषे णालादेशविधाना न्नियमार्थ मिदम् ॥

## भावकर्मणोः ॥ १३ ॥

भावकर्मणो विंहितस्य लस्यस्थाने सर्वत्रात्मनेपदं स्यात् । भावो धात्वर्थः । तस्यैकत्वात्तङ्ग्येकवचनंसर्वत्र । सुप्यतेभवता । क्रियते कटः ॥

## कर्तरिकर्मव्यतीहारे ॥ १४ ॥

कर्तर्यात्मनेपदं स्यात्क्रियाविनिमयेगम्ये । व्यतिलुनीते ॥

## नगतिहिंसार्थेभ्यः ॥ १५ ॥

उक्तोन । व्यतिसर्पन्ति । व्यतिघ्नन्ति ॥

हसादीनांचन ॥

व्यतिहसन्ति । एवंजल्पेरपि । भाष्ये व्यतिकथयन्ती त्युदाहृतम् ॥

काशिकायां व्यतिपठन्तीति । तत्र हसिनकाराणां शब्दक्रियाणा मिति हसादीना मिति भाष्यस्य कैयटे व्याख्याना दुभयोपपत्तिः ॥

हरतेरनिषेधः ॥

व्यतिसम्प्रहरन्ते राजानः ॥

इतरेतरान्योन्योपपदाच्च ॥ १६ ॥

आभ्यां युक्ता त्क्रियाविनिमयेपि नात्मनेपदं स्यात् । इतरेतरस्यान्योन्यस्यवा व्यतिलुनन्ति ॥

परस्परस्येष्टिः ॥

परस्परस्य व्यतिलुनन्ति ॥

नेर्विशः ॥ १७ ॥

निपूर्वा द्विशते रात्मनेपदं स्यात् । निविशते ॥

परिव्यवेभ्यःक्रियः ॥ १८ ॥

एभ्यः क्रीणाते स्तङानौ । परिक्रीणीते । एवंव्यव । इहोभयपदिनामात्मनेपद मकर्त्रभिप्रायार्थम् ॥

विपराभ्यांजेः ॥ १९ ॥

विजयते । पराजयते । इहोपसर्गग्रहणम् । परासेना जयति ॥

आङोदोऽनास्यविहरणे ॥ २० ॥

आङ्पूर्वो दाञ् आत्मनेपदं स्यान्नतु मुखविकासेऽर्थे । विद्या मादत्ते । आस्यविहरणे तु मुखं व्याददाति । आस्यविहरणसदृशादपि न । विपादिका व्याददाति । कूलं व्याददाति ॥

स्वाङ्गकर्मकादेवनिषेधः ॥

व्याददते पिपीलिका पतङ्गस्यमुखम् ॥

क्रीडोऽनुसम्परिभ्यश्च ॥ २१ ॥

एभ्य श्चकारादाङश्च क्रीडेस्तङानौ स्तः । अनुक्रीडते । एवं संपर्याङ्भ्यः । समा साहचर्या दनोपसर्ग ग्रहणा त्कर्म प्रवचनीययोगे न । माणवक मनुक्रीडति । माणवकेन सहेत्यर्थः । तृतीयार्थे । (१। ४। ८५) इत्यनुः कर्मप्रवचनीयः ॥

समोऽकूजने ॥

सङ्क्रीडन्ति शकटानि ॥

आगमेःक्षमायाम् ॥

आगमयते ॥

शिक्षेर्जिज्ञासायाम् ॥

विद्यासुशिक्षते ॥

आशिषिनाथः ॥

सर्पिषोनाथते ॥

हृतेर्गतताच्छील्ये ॥

पैतृक मनुहरन्तेऽश्वाः ॥

किरतेर्हर्षजीविकाकुलायकरणेषु ॥

अपस्किरते वृषो हृष्टः । कुक्कुटो भक्षार्थी । श्वाआश्रयार्थी वा ॥

आङिनुपृच्छ्योः ॥

आनुते । आपृच्छते ॥

शपउपालम्भने ॥

देवदत्ताय शपते ॥

समवप्रविभ्यस्थः ॥ २२ ॥

एभ्य स्तिष्ठते स्तङनौ । सन्तिष्ठते इत्यादि ॥

आङःप्रतिज्ञाने ॥

आपिशलि रस्तिं सकारमात्र मातिष्ठते । आगमौगुणवृद्धी आतिष्ठते ॥

प्रकाशन स्थे याख्ययोश्च ॥ २३ ॥

स्वाभिप्रायाविष्करणे निर्णे तारख्यायांच स्थ स्तङनौ । कृष्णायतिष्ठतेगोपी । त्वयि तिष्ठते विवादः ॥

उदोऽनूर्ध्वकर्मणि ॥ २४ ॥

उद: स्वाङ्गात् नानूर्ध्वक्रियायाम् ॥

उद ईहायामिति: ॥

मुक्तौ मुत्तिष्ठते । तदर्थं यतत इत्यर्थः । ईहायांकिम् । ग्रामाच्छत मु त्तिष्ठति । अनूर्ध्वकर्मणि किम् । आसना दुत्तिष्ठति ॥

उपान्मन्त्रकरणे ॥ २५ ॥

उपात् स्थ स्तङानौ स्तो मन्त्रकरणेर्थे । गायत्र्योपतिष्ठते ऽर्कम् ॥

उपा देवपूजासङ्गतिमैत्रीपथिष्विति वाच्यम् ॥

विष्णु मुपतिष्ठते । यमुना गङ्गा मुपतिष्ठते । सुत मुपतिष्ठते । गङ्गा मुपतिष्ठते पन्थाः ॥

लिप्सायांवा ॥

भिक्षुको धार्मिक मुपतिष्ठते उपतिष्ठतिवा ॥

अकर्मकाच्च ॥ २६ ॥

उपा त्तिष्ठते रकर्मका त्तङानौ । ज्ञान मुपतिष्ठते । उत्पद्यत इत्यर्थः । अकर्मका त्किम् । राजान मुपतिष्ठति ॥

उद्विभ्यांतपः ॥ २७ ॥

आभ्यांतपो ऽकर्मका त्तङानौ । उत्तपते । वितपते । दीप्यत इत्यर्थः । अकर्मका त्किम् । उत्तपति सुवर्णम् ॥

स्वाङ्गकर्मकाच्च ॥

उत्तपते वितपते पाणिम् । स्वमङ्गं स्वाङ्गं, नत्वद्रवं मूर्तिं मदि ति । तेनेह न । देवदत्तो यज्ञदत्तपाणि मुत्तपति । उद्विभ्यां किम् । निष्टपति ॥

## आङोयमहनः ॥ २८ ॥

आङः पराभ्या मकर्मकाभ्या माभ्यां तङानौ स्तः । आयच्छते । आहते ॥

आत्माङ्गकर्मकाभ्यांच ॥

आयच्छते पाणिम् । आहते शिरः । अकर्मकाभ्या मात्माङ्गकर्मकाभ्यां किम् । शत्रुमाहन्ति । परशिर आयच्छति ॥

## समोगम्यृच्छिभ्यास् ॥ २९ ॥

भच्छि स्वर स्यर्ति श्रु विदीना मुपसंख्यानम् ॥

एभ्यः सम्पूर्वेभ्यो ऽकर्मकेभ्य स्तङानौ स्तः । सङ्गच्छते । समृच्छते । सम्पृच्छते । संस्वरते । अर्तेस्सामान्यग्रहणम् । समारत । सर्तिशास्ति (३ । १ । ५६) इत्यङ् । ऋदृशोऽङिगुणः (७ । ४ । १६) । संशृणुते ॥

विदेर्ज्ञानार्थस्यैव ॥

संवित्ते ॥

दृशेरिष्टिः ॥

सम्पश्यते । अकर्मकेभ्यः किम् । गङ्गां सङ्गच्छति ॥

## निरसमुपविश्यो ह्वः ॥ ३० ॥

अकर्मकादिति निवृत्तम् । एभ्यो ह्वेञः प्राग्वत् । निह्वयते । एवं स मुपवि ॥

उपसर्गा दस्यत्यूह्यो र्वावचनम् ॥

निरस्यति । निरस्यते । अनूहति । अनूहते ॥

## स्पर्धाया माङः ॥ ३१ ॥

आङो ह्वेञ स्तङानौ स्पर्धायाम् । मल्लो मल्ल माह्वयते । स्पर्धा यां किम् । गाः प्राह्वयति गोधुक् ॥

## गन्धनावक्षेपण सेवन साहसिक्य प्रतियत्न प्रकथनोपयोगेषु कृञः ॥ ३२ ॥

हिंसात्मकसूचने भर्त्सनादौ च कृञ स्तङानौ । उत्कुरुते । श्येनो वर्तिका मदाकुरुते । शिव मुपकुरुते । परदारान् प्रकुरुते । एधोदक स्योपस्कुरुते । गाथाः प्रकुरुते । शतं प्रकुरुते । धर्मार्थं विनियुङ्क्त इत्यर्थः । एषु किम् । कटं करोति ॥

## अधेः प्रसहने ॥ ३३ ॥

अधेः कृञ स्तङानौ स्तभ्शक्तौ । दैत्या नधिकुरुते विष्णुः ॥

## वेः शब्दकर्मणः ॥ ३४ ॥

विपूर्वां च्छन्दकर्मणः क्रमस्तङानौ। स्वरान् विकुरुते ॥

अकर्मकाच्च ॥ ३५ ॥

विपूर्वात् कृञो ऽकर्मका त्तङानौ। वायुर्विकुरुते। विकुर्वते सैन्धवाः। अकर्मकात्किम्। चित्तं विकरोति कामः ॥

संमान नोत्सञ्ज नाचार्यकरणज्ञान भृति विगणन व्ययेषु नियः ॥ ३६ ॥

पूज नोत्क्षेपणादौ नियस्तङानौ स्तः। शास्त्रे नयते। दण्ड मुन्नयते। पुत्र मुपनयते। पदार्थां न्नयते। भृत्य मुपनयते। करं विनयते। शतं विनयते। धर्मार्थं विनियुङ्क्तइत्यर्थः। एषु किम्। अजां नयति ग्राम्म् ॥

कर्तृस्थे चाशरीरे कर्मणि ॥ ३७ ॥

कर्तृस्थे अमूर्ते कर्मकारके निय स्तङानौ स्तः। कोपं विनयते। कर्तृस्थे किम्। गुरोः कोपं विनयति। अमूर्तेकिम्। गडुं विनयति। कर्मणि किम्। बुद्ध्या विनयति ॥

वृत्ति सर्ग तायनेषु क्रमः ॥ ३८ ॥

अप्रतिबन्धोत्साह स्फीततासु क्रम स्तङानौ स्तः। ऋचि क्रमते बुद्धिः। धर्मे क्रमते। सतां श्रीःक्रमते। एषु किम्। क्रामति ॥

उपपराभ्याम् ॥ ३९ ॥

वृत्त्यादि ष्वाभ्यामेव क्रम स्तङानौ स्तः । उपक्रमते । पराक्रमते । आभ्यांकिम् । संक्रामति । वृत्त्यादिषु किम् । उपक्रामति ॥

आङ उद्गमने ॥ ४० ॥

आङः क्रम स्तङना वुद्गमने । ज्योति राक्रमते ॥

ज्योतिरुद्गमनएव ॥

नेह । आक्रामति धूमः । उद्गमनेकिम् । खमाक्राम त्यर्कः । व्याप्नो तीत्यर्थः ॥

वेः पादविहरणे ॥ ४१ ॥

वेः क्रमः प्राग्व त्पादविहरणे । साधुविक्रमते वाजी । पादेतिकिम् । वाजिना विक्रामति ॥

प्रोपाभ्यां समर्थाभ्याम् ॥ ४२ ॥

तुल्यार्थाभ्या माभ्यां क्रम स्तङानौ । क्रियारम्भए वानयो स्तुल्यार्थता । भोक्तुं प्रक्रमते ॥

अनुपसर्गाद्वा ॥ ४३ ॥

क्रमते । क्रामति ॥

अपह्नवेज्ञः ॥ ४४ ॥

ज्ञाते स्तङना वपलापे । शत मपजानीते ॥

अकर्मकाच्च ॥ ४५ ॥

अकर्मका जानाते स्तङानौ स्तः । सर्पिषोजानीते । सर्पिषोपायेन प्रवर्तत इत्यर्थः ॥

## सम्प्रतिभ्या मनाध्याने ॥ ४६ ॥

आभ्यां ज्ञः प्राग्व दनौत्कण्ठ्ये । सञ्जानीते । प्रतिजानीते । औत्कण्ठ्ये तु सञ्जानाति ॥

## भास नोपस भाषा ज्ञानयत्न विम त्यु पमन्त्रणे षु वदः ॥ ४७ ॥

दीप्तिसांत्वनादिषु वदते स्तङानौ । शास्त्रे वदते । भृत्या नुपवदते । पाणिनि र्वदते । क्षेत्रे वदते । विवदन्ते शिष्याः । परदारा नुपवदते ॥

## व्यक्तवाचां समुच्चारणे ॥ ४८ ॥

मनुष्याणां सहोच्चारणे वदते स्तङानौ । संप्रवदन्ते विप्राः । व्यक्तवाचांकिम् । संप्रवदन्ति खगाः ॥

## अनोरकर्मकात् ॥ ४९ ॥

व्यक्तवाग्विषया दनुपूर्वा द्वदतेरकर्मका त्तङानौ स्तः । अनुवदतेकठः कलापस्य । यथा कलापोऽधीयानोभवति तद्व त्कठ इत्यर्थः । अकर्मका त्किम् । ग्रन्थ मनुवदति । व्यक्ततया किम् । अनुवदति वीणा ॥

## विभाषाविप्रलापे ॥ ५० ॥

नृणां विमतिसहितव्यामिश्रवचने वदते स्तङानौ वा । विप्रवदन्ति विप्रवदन्ते वा वैद्याः ॥

अवाद्ग्रः ॥ ५१ ॥

अवाद् गिरते स्तङानौ । अवगिरते । अवपूर्वाद्गृणाते नेष्यते ॥

समः प्रतिज्ञाने ॥ ५२ ॥

संपूर्वा द्गिरते स्तङानौ स्तोऽभ्युपगमे । शतं सङ्गिरते ॥

उदश्चरः सकर्मकात् ॥ ५३ ॥

उत्पूर्वा च्चरते स्सकर्मकात्तङानौ स्तः । धर्म मुच्चरते । उत्क्रम्य चरतीत्यर्थः । सकर्मकात्किम् । धूम उच्चरति ॥

समस्तृतीयायुक्तात् ॥ ५४ ॥

संपूर्वाच्चरते स्तृतीयान्तयोगे तङानौ । अश्वेन सञ्चरते । तृतीयेतिकिम् । उभौलोकौ संचरसि । अत्रतृतीयार्थ सम्भवेपि सा नश्रूयते ॥

दाणश्चसाचेच्चतुर्थ्यर्थे ॥ ५५ ॥

संपूर्वा दाण श्चतुर्थ्यर्थं तृतीयायोगे तङानौ । दास्या संप्रयच्छते कामुकः । अशिष्टव्यवहारे चतुर्थ्यर्थे तृतीया । साचेच्छन्दस्यच शब्दार्थत्वा दनेनैव सूत्रेण विधीयत इति कैयटः । समइति षष्ठ्यन्तत्वात् प्रेण व्यवधानेऽपि । चतुर्थ्यर्थे किम् । दास्या संयच्छति

भिक्षां भिक्षते ॥

उपाद्यमः स्वकरणे ॥ ५६ ॥

उपाद्यम स्तङानौ स्तो विवाहेऽर्थे । कन्यामुपयच्छते ॥

ज्ञाश्रुस्मृदृशां सनः ॥ ५७ ॥

एभ्यः सनन्तेभ्य स्तङानौ स्तः । जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते ॥

नानोर्ज्ञः ॥ ५८ ॥

अनुपूर्वात् ज्ञः सनन्ता त्तङानौ न स्तः । अनु जिज्ञासति पुत्रम् ॥

प्रत्याङ्भ्यां श्रुवः ॥ ५९ ॥

आभ्यां परात् शृणोते स्सनन्ता त्तङानौ स्तः । प्रतिशुश्रूषति । आशुश्रूषति ॥ इहोपसर्गग्रहणात् कर्मप्रवचनीये न । द्विजंप्रति शुश्रूषति ॥

शदेः शितः ॥ ६० ॥

शित्संबन्धिनः शदे स्तङानौ स्तः । शीयते । शितः किम् । शत्स्यति ॥

म्रियतेर्लुङ्लिङोश्च ॥ ६१ ॥

म्रियते र्म्रियादन्ता ल्लुङ्लिङोश्च तङानौ स्तोनान्यत्र । म्रियते । मृत । मृषीष्ट । एषु किम् । मरिष्यति ॥

पूर्ववत्सनः ॥ ६२ ॥

सनः पूर्वधातो रात्मनेपदनिमित्तं सनन्तेतिदिश्यते । शिशयिषते । जुगुप्सते । मीमांसते । शिशत्सति मुमूर्षतीत्यत्र शदिम्रियतिमात्रस्या निमित्तत्वा न्नात्मनेपदम् ॥

आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ॥ ६३ ॥

आम्प्रत्ययो यस्मा द्विहित स्तद्वत् अनुप्रयुज्यमानस्य कृञ आत्मने पदं स्या दकर्तृगेऽपि क्रियाफले । एधांचक्रे । कृञः किम् । एधामास । अनुप्रयोगे प्रत्याहारग्रहण स्यात्तस्य कृञ्ग्रहणमेव ज्ञापकम् । उम्भांचकारेत्यत्र कर्त्रभिप्रायेऽपि नात्मनेपदम् । पूर्ववदि त्यनवर्त्य पूर्ववदितिविधेराम्प्रत्ययव देवेति नियमस्य चाश्रयणात् ॥

प्रोपाभ्यां युजे रयज्ञपात्रेषु ॥ ६४ ॥

आभ्यां युजे स्तङानौ । प्रयुङ्क्ते । उपयुङ्क्ते ।

स्वराद्यन्तोपसृष्टा द्वाच्यम् ॥

उद्युङ्क्ते । वियुङ्क्ते । यज्ञपात्रेषुतु प्रयुनक्ति ।

समः क्ष्णुवः ॥ ६५ ॥

संक्ष्णुतेऽस्त्रम् ।

भुजोऽनवने ॥ ६६ ॥

तङानौस्तः । ओदनं भुङ्क्ते । पालनेतु पृथिवीं भुनक्ति । अनवन

इत्युक्तेः कौटिल्यार्थस्य भुजे रग्रहणम् । निभुजति पाणिम् ॥

णे रणौ यत्कर्म णौचेत्सकर्ता नाध्याने ॥६७ ॥

ण्यन्तादात्मनेपदं स्या दणौयत्कर्मसएवण्यन्तस्य कर्ताचेत् । नत्वाध्याने । पश्यन्ति भवं भक्ताः । दर्शयते भवो भक्तान् स्वयमेव । इहकर्तृस्थाक्रिया । तेनकर्मवत्कर्मणे(३।१।८७)नि कर्मवत्त्वाभावा दात्मनेपद मप्राप्तं विधीयते । अणौये कर्तृवर्माणो तद्व्यतिरिक्तकर्माभावे चायं विधिः । तेनेह न । आरोहन्ति हस्तिनं हास्तिपकाः । आरोह्यमाणो हस्ती स्थल मारोहयति मनुष्यानिति । स कर्तेतिकिम् । दर्शयति भक्तान् भक्तिः । अणौकिम् । गणयति गणं गोपालः । गणयति गणः स्वयमेव । इहगणनं सङ्ख्याविशेषज्ञानं कर्तृस्थमितिस्मदत्त्वाभावेनापि नतदानी । भाग शोनस्थापनार्थस्य कर्मस्य भावत्वेऽपि भाष्यकारवचना दात्मनेपदम् । णिजन्ता ण्णि चीप्यतएव गणयते गणः स्वयमेवेति । औत्कण्ठ्ये स्मरयति भक्तान् भवः ॥

भीस्म्योर्हेतुभये ॥ ६८ ॥

आभ्यां ण्यन्ताभ्यां तदानो स्तः । भयोजका ट्टयंचे द्वाच्यम् । भयं विस्मयस्या प्युपलक्षणम् । मुण्डो भापयते । जटिलो विस्मापयते । हेतुभयेकिम् । कुञ्चिकयैनं भाययति । विस्मापयति । अलंकरणाद्ध यं नेनेः ॥

गृधि वञ्च्योः प्रलम्भने ॥ ६९ ॥

आभ्यां ण्यन्ताभ्यां तङानौ स्तः प्रलम्भने। बटुं गर्धयते। वञ्चयते। प्रलम्भने किम्। श्वानं गर्धयति। अहिं वञ्चयति॥

लियः सम्मानन शालीनीकरणयोश्च॥ ७०॥

लियो ण्यन्तात् तङानौ पूजाभिभवयोः प्रलम्भनेच। जटाभि र्लापयते। श्येनो वर्तिका मुल्लापयते। बाल मुल्लापयते। विभाषा लीयते (६।१।५१) रित्यात्व मत्रविषये नित्यमिष्यते। अन्यत्रविकल्पः॥

मिथ्योपपदात्कृञोऽभ्यासे॥ ७१॥

मिथ्योपपदात् कृञो ण्यन्तात् तङानौ स्तः पौनःपुन्ये। पदं मिथ्या कारयते। सापचारं स्वरादिदुष्ट मसकृ दुच्चारयतीत्यर्थः। मिथ्योपपदा त्किम्। साधु पदं कारयति। अभ्यासे किम्। सकृ त्पदं मिथ्या कारयति॥

स्वरितञितः कर्त्रभिप्राये क्रियाफले॥ ७२॥

णेरिति निवृत्तम्। स्वरितेतो ञितश्च धातो स्तङानौ स्तः कर्तृगे प्रधानफले। यजते। कुरुते। कर्तृगे किम्। यजन्ति याजकाः॥

अपाद्वदः॥ ७३॥

कर्तृगे फले तङानौ। न्याय मपवदति॥

णिचश्च॥ ७४॥

णिजन्तात् तङानौ कर्तृगे फले। पाचयते॥

## समुदाङ्भ्यो यमोऽग्रन्थे ॥ ७५ ॥

एभ्यो यम स्तङानौस्तः । नतु ग्रन्थकर्मकात् । व्रीहीन् संयच्छते । भारमुद्यच्छते । वस्त्रं मायच्छते । ग्रन्थेतु वेदानुद्यच्छति ॥

## अनुपसर्गा ज्ञः ॥ ७६ ॥

कर्तृगे फले तङानौ । जानीते । अनुपसर्गात्किम् । प्रजानाति । कर्तृगे फले किम् । देवदत्तस्य गां जानाति ॥

## विभाषो पपदेन प्रतीयमाने ॥ ७७ ॥

कर्तृगे फले यदात्मनेपदं विहितं तदुपपदेन द्योत्ये कर्तृगे फले वास्यात् । स्वं यज्ञं यजति यजतेवा ॥

## शेषात्कर्तरि परस्मैपदम् ॥ ७८ ॥

आत्मनेपदनिमित्तहीना द्धातोः कर्तरि परस्मैपदं स्यात् । याति । वाति । कर्तरि कर्मव्यतीहार (१।३।१४) इत्यतः कर्तृग्रहणानुवृत्त्या कर्तरि कर्तरि कर्तैव न कर्मेत्यर्थलाभा त्कर्मकर्तरि न परस्मैपदम् ॥

## अनुपराभ्यां कृञः ॥ ७९ ॥

आभ्यां कृञ स्तङानौ कर्तृगे पि फले गन्धनादावपि । अनुकरोति । पराकरोति । सञ्ज्ञापूर्वको विधिरनित्यइ त्यनुकुरुते इत्यपि भवतीति नवीनाः ॥

अभिप्रत्यतिभ्यः क्षिपः ॥ ८० ॥

क्षिप प्रेरणे । स्वरितेत् । एभ्यः क्षिपः कर्तृगे फले परस्मैपदं स्यात् । अभिक्षिपति । एवं प्रत्यति ॥

प्राद्वहः ॥ ८१ ॥

प्राग्वत् । प्रवहति ॥

परेर्मृषः ॥ ८२ ॥

परिमृष्यति । वहेरपि । परिवहति ॥

व्याङ्परिभ्यो रमः ॥ ८३ ॥

विरमति । आरमति । परिरमति ।

उपाच्च ॥ ८४ ॥

उपाद्रमे रन्तर्भावितण्यर्थात्परस्मैपदं स्यात् । यज्ञदत्त मुपरमति । उपरमयतीत्यर्थः ॥

विभाषाऽकर्मकात् ॥ ८५ ॥

उपाद्रमे रकर्मकाद्वा परस्मैपदम् । उपरमति । उपरमते । निवर्तत इत्यर्थः ।

बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ ८६ ॥

एभ्यो णेः पूर्वं सचित्तवत्कर्तृकेभ्यो चलनार्थेभ्यश्चण्यन्तेभ्यः कर्तृगे फले परस्मैपदं स्यात् । बोधयति पद्मम् । योधयति । नाशयति ।

जनयति । अध्यापयति । मादयति । द्रावयति । स्रावयति ॥

## निगरणचलनार्थेभ्यश्च ॥८७॥

अदन कम्पनार्थेभ्यो ण्यन्तेभ्यः कर्तृगे फले परस्मैपदं स्यात् । भो जयति । चलयति ।

अत्तेर्न ।

आदयते ॥

## अणा वकर्मका च्चित्तवत्कर्तृकात् ॥८८॥

णेः पूर्व मकर्मका च्चित्तवत्कर्तृका ण्ण्यन्ता त्कर्तृगे फले परस्मैपदं स्यात् । शेते कृष्णः । शाययति कृष्णं गोपी । अकर्मकात्किम् । भक्तं कारयते । चित्तवत्कर्तृकात्किम् । शोषयते शालिं वायुः । अणौ किम् । आरोहयमाणं प्रयोजयति आरोहयते । अत्र णेरिति हेतुमण्णिचो ग्रहणा दणाविल्यपि तस्यैवग्रहणा त्स्वार्थणिजन्ता दकर्मका द्धेतुमण्णिचि अनेन परस्मैपदं भवति । चेतयमानं प्रयोजयति चेतयति ॥

## नपाद स्याङ्य माङ्यस परिमुहरुचि नृति वद वसः ॥ ८९ ॥

मूलद्वयोक्तलक्षणवद्भ्यः पादिभ्यो ण्यन्तेभ्यः कर्तृगे फले परस्मैपदं नस्यात् । पाययते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । वादयते । वासयते ॥

धेटोऽपिनिषेधः ॥

धापयते । अकर्तुः फले परस्मैपदं स्यादेव । सोमं पाययतियाजकः ॥

वा क्यषः ॥ ९० ॥

क्यषन्ता दात्मनेपदं वा स्यात् । लोहितायति । लोहितायते । लोहितादिडा ज्भ्यःक्यष् (३।१।१३) इतिक्यष् ॥

द्युद्भ्योलुङि ॥ ९१ ॥

द्युतादिभ्यः कृपि पर्यन्तेभ्यः परस्मैपदं वास्याल्लुङि । अद्युतत् । अद्योतिष्ट । लुङिकिम् । द्योतते ॥

वृद्भ्यः स्यसनोः ॥ ९२ ॥

वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्या त्स्येसनिच । वर्त्स्यति वर्तिष्यते । विवृत्सति विवर्तिषतइत्यादि ॥

लुटिचक्लृपः ॥ ९३ ॥

कृपेर्लुटि स्यसनो र्वापरस्मैपदं स्यात् । कल्प्स्यति । कल्पिष्यते । चिक्लृप्सति चिकल्पिषते । कल्पिता । कल्पितासे । स्यसनोः स्वरितत्वादेवा नुवृत्तिसिद्धौ चकारोव्यर्थः । एवंसर्वेचकारा भगवताप्रत्याख्याताः ॥

इतिश्रीमहोपाध्याय श्रीमद्राघवसोमयाजिकुलावतंस श्रीमद्द्वैत विद्याचार्यश्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ व्याकरणमिताक्षरायां वृत्तौप्रथमस्याध्यायस्य तृतीयः पादः ॥

---

## आकडारा देका सञ्ज्ञा ॥ १ ॥

इतऊर्ध्वं कडाराः कर्मधारय(२।२।३८)इत्यतःप्रा गेकस्यैकैव सञ्ज्ञा ज्ञेया। सावया परा5 नवकाशाच। ते नाततक्षदित्यत्र गुरुसञ्ज्ञया लघुसञ्ज्ञायाबाधा न सम्वन्धावः ॥

## विप्रतिपेधे परं कार्यम् ॥ २ ॥

तुल्यवलयो रन्यत्रसावकाशयो रेकत्र प्राप्ति र्विप्रतिपेधः। तत्र परं कार्यंस्यात्। उत्सर्गापवाद नित्यानित्यान्तरङ्गवहिरङ्गादिपु तुल्य वलत्वाभावा न्नायं योग स्तत्र प्रवर्तते। वलवतैव तत्र भवितव्यम्। व्यक्तिपदार्थपक्षे पर्यायेण विधिद्वयप्रसक्तौ नियमार्थ मिदम्। जातिपदार्थपक्षे उभयोर प्यप्रवृत्तौ परविध्यर्थम्। वृक्षाभ्यां वृक्षेष्वित्य त्र सावकाशयो र्दीर्घत्वयो र्वृक्षेभ्य इत्यत्र प्राप्तौ अनेनैत्वमेव भवति ॥

## यू स्त्र्याख्यौनदी ॥ ३ ॥

ईच ऊच यू। अविभक्तिको निर्देशः। पूर्वसवर्णदीर्घो वा छान्दसः। स्त्रिय माचक्षातेस्त्र्याख्यौ। मूलविभुजादित्वात् कः। ईदूतौनित्यस्त्रीलिङ्गौ नदी संज्ञौ स्तः। गौरी। लक्ष्मीः। वधूः ॥

प्रथमलिङ्गग्रहणंकार्यम् ॥

अतिलक्ष्म्यै ब्राह्मणाय। आख्यग्रहणंकिम्। ग्रामण्येस्त्रियै ॥

नेय ङुवङ् स्थाना वस्त्री ॥ ४ ॥

इयङुवङोः स्थिति र्ययो स्ता वीदूतौ नदीसञ्ज्ञौ नस्तः। नतु स्त्री। हेश्रीः। हेभ्रूः। अस्त्री किम्। हेस्त्रि ॥

वा ऽऽमि ॥ ५ ॥

इयङुवङ्स्थानौ वा आमिनदीसञ्ज्ञौ स्तः। श्रीणाम्। श्रियाम्। भ्रूणाम्। भ्रुवाम्। अस्त्रीत्येव। स्त्रीणाम् ॥

ङिति ह्रस्वश्च ॥ ६ ॥

य्वोः सवन्धी ह्रस्वः, इयङुवङ् स्थानौच यू, स्त्रियां ङिति वा नदीसञ्ज्ञौस्तः। मत्यै। मतये। धेन्वै। धेनवे। श्रियै। श्रिये। भ्रुवै। भ्रुवे। अस्त्रीत्येव। स्त्रियै। स्त्रियामितिकिम्। शम्भवे ॥

शेषोघ्यसखि ॥ ७ ॥

अनदीसञ्ज्ञं ह्रस्वं यूवर्णान्तं सखिवर्जं घिसञ्ज्ञंस्यात्। हरये। शम्भवे। मतये। धेनवे। असखिकिम्। सख्या। सख्ये। सख्युः। सख्यौ ॥

पतिःसमासएव ॥ ८ ॥

पति स्समासएव घिसंज्ञः। भूपतिना। भूपतये। समासेकिम्। प

त्या । पत्ये ॥

## षष्ठीयुक्तश्छन्दसिवा ॥ ९ ॥

षष्ठीयुक्तः पतिरसमासे छन्दसि वाघिः स्यात् । पशूनां पतये नमः । षष्ठीतिकिम् । मयापत्या जरदष्टिः ॥

## ह्रस्वं लघु ॥ १० ॥

ह्रस्व मक्षरं लघुसञ्ज्ञं स्यात् । चेता ॥

## संयोगे गुरु ॥ ११ ॥

संयोगे परतो ह्रस्वं गुरुसञ्ज्ञंस्यात् । शिक्षा ॥

## दीर्घंच ॥ १२ ॥

दीर्घमात्रं गुरुसञ्ज्ञंस्यात् । ईहां चक्रे ॥

## यस्मात्प्रत्ययविधि स्तदादि प्रत्यये ऽङ्गम् ॥ १३ ॥

प्रत्ययो यस्मा द्विधीयते तदादिशब्दः प्रत्ययेपरे अङ्गसञ्ज्ञः स्यात् कर्ता । अकरिष्यत् । तदादिग्रहणं स्पाद्यर्थम् । करिष्यामि ॥

## सुप्तिङन्तं पदम् ॥ १४ ॥

सुबन्तं तिङन्तंच पदसञ्ज्ञं स्यात् । देवदत्तः पचति । अन्तग्रहण मन्यत्रसञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तविधि प्रतिषेधार्थम् । कुमारगौरितरा । अन्यथा कुमारिगौरितरेति, स्यात् । पुंवद्भावस्य ह्रस्वेन पर

त्वा द्राधनात् ॥

नः क्ये ॥ १५ ॥

क्यचि क्यङि क्यषिच नान्तमेव पदसञ्ज्ञं स्यात् । राजीयति । रा जायते । चर्मायति । नियमः किम् । वाच्यति ॥

सितिच ॥ १६ ॥

सिति प्रत्यये पूर्वं पदं स्यात् न भम् । ऊर्णायुः ॥

स्वादिष्वसर्वनामस्थाने ॥ १७ ॥

कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसञ्ज्ञं स्यात् । राजभ्याम् । सर्वनामस्थानेतु राजानौ । राजानः ॥

यचि भम् ॥ १८ ॥

यकाराजादिषु स्वादिषु असर्वनामस्थानेषु पूर्वं भसञ्ज्ञं स्यात् न पदसञ्ज्ञम् । गार्ग्यः । औपगवः ॥

नभोऽङ्गिरो मनुषां व त्युपसंख्यानम् ॥

नभइव नभस्वत् । अङ्गिरस्वत् । मनुष्वत् ॥

वृषण्वस्वश्वयोः ॥

वृषण्वसुः । वृषणश्वस्यमेने । नभःप्रभृत्युपसंख्यानं सर्वं छन्दोविषयमिति कैयटः ॥

तसौ मत्वर्थे ॥ १९ ॥

तान्त सान्तौ भसञ्ज्ञौ स्तो मत्वर्थेप्रत्यये । विद्युत्वान् । पयस्वान् । तसौकिम् । तक्षवान् ग्रामः ॥

## अयस्मयादीनि च्छन्दसि ॥ २० ॥

एतानि च्छन्दसि साधूनि । अयस्मयेन कमण्डलुना ॥

### उभयसञ्ज्ञान्यपि ॥

ससुष्टुभास ऋक्वता । पदत्वा स्कुत्वम् । भत्वा ज्जश्त्वाभावः । छन्दसिकिम् । अयोमयम् ॥

## बहुषु बहुवचनम् ॥ २१ ॥

कमादिबहुत्वे बहुवचनं स्यात् । तण्डुलाःपच्यन्ते ब्राह्मणैः । अव्ययादाप्सुप (२।४।८२) इति ज्ञापका दव्ययेभ्यः स्वादयः ॥

## द्व्येकयोर्द्विवचनैकवचने ॥ २२ ॥

भावप्रधानो निर्देशः । द्वित्वैकत्वयो रेतेस्तः । स पचति । तौ पचतः ॥

## कारके ॥ २३ ॥

अधिकारो ऽयम् । क्रियाया निमित्तं कारकमुच्यते । सामान्येन निर्धारणे एकवचनम् । कारके ष्वित्यर्थः । तेनकारकेषु ध्रुवमपादान, मीप्सिततमं कर्मेत्या द्यर्थःसम्पद्यते । ध्रुवमपाये ऽपादानम् (१।४।२४) ग्रामा दायाति । कारकेकिम् । वृक्षस्यपर्णपतति । अकथितंच (१।४।५१) । पुत्रं पन्थानंपृच्छति । ब्राह्मणस्य पुत्रं पन्थानं पृ

च्छति । ब्राह्मणस्य वृक्षस्येव कारकत्वाभावा न्न कर्मापादानत्वे ॥

ध्रुवमपायेऽपादानम् ॥ २४ ॥

अपायो विश्लेष स्तस्मिन् साध्ये यद्ध्रुवमवधिभूतं तदपादानं स्यात् । ग्रामा दायाति । धावतोऽश्वात्पतति ॥

जुगुप्सा विराम प्रमादार्थाना मुपसंख्यानम् ॥

पापा ज्जुगुप्सते । पापाद्विरमति । धर्मात्प्रमाद्यति ॥

भीत्रार्थानां भयहेतुः ॥ २५ ॥

भयार्थ त्राणार्थानां योगे भयहेतुरपादानं स्यात् । चोराद्बिभेति । चोरात्त्रायते । भयहेतुः किम् । अरण्येबिभेति ॥

पराजे रसोढः ॥ २६ ॥

पराजेः प्रयोगे असह्योऽर्थोऽपादानं स्यात् । अध्ययना त्पराजयते । असोढःकिम् । शत्रून् पराजयते ॥

वारणार्थाना मीप्सितः ॥ २७ ॥

वारणार्थानां योगे ईप्सितो र्थोऽपादानंस्यात् । यवेभ्यो गां वारयति । ईप्सितः किम् । यवेभ्यो गां वारयति क्षेत्रे ॥

अन्तर्धौ ये नादर्शन मिच्छति ॥ २८ ॥

अन्तर्धिर्व्यवधानम् । तन्निमित्तक मात्मनो येनादर्शन मिच्छति तदपादानं स्यात् । उपाध्याया दन्तर्धत्ते । निलीयते ॥

आख्यातोपयोगे ॥ २९ ॥

उपयोगो नियमपूर्वक विद्याग्रहणम् । तत्राख्याता अपादानं स्यात् । उपाध्याया दधीते । उपयोगे किम् । नटस्य गाथां शृणोति ॥

जनिकर्तुः प्रकृतिः ॥ ३० ॥

जायमानस्य प्रकृति र्हेतु रपादानं स्यात् । गोमयाद्वृश्चिको जायते ॥

भुवः प्रभवः ॥ ३१ ॥

भवनं भूः । प्रभव त्यस्मादिति प्रभवः । भू कर्तुः प्रभव स्तथा । हिमवतो गङ्गा प्रभवति । प्रथमं दृश्यत इत्यर्थः ॥

कर्मणा य मभिप्रैति स सम्प्रदानम् ॥ ३२ ॥

यदुद्देश्यकं कर्म त त्संप्रदान मित्यर्थः । विप्राय गां ददाति ॥

क्रियया य मभिप्रैति सोऽपि संप्रदानम् ॥

पत्येशेते ॥

छन्दसि कर्मसंप्रदानयोः करणकर्मत्वे वाच्ये ॥

पशुना रुद्रं यजते ।पशुं रुद्रायददातीत्यर्थः । अन्वर्थसंज्ञया ददाति कर्म वात्र गृह्यतइति काशिका । अतत्य क्रियाग्रहणस्य गत्यर्थक मणोति ( २ । ३ । १२ )सूत्रस्यच गत्याख्याना त्कर्ममात्रं भाष्या भिप्रेतं प्रयोगत्वगा चानतिप्रसङ्गइति कैयटः ॥

रुच्यर्थानां प्रीयमाणः ॥ ३३ ॥

रुच्यर्थानां प्रयोगे प्रीयमाण स्संप्रदानं स्यात् । देवदत्तायरोचते मोदकः ॥

## श्लाघ ह्नु स्था शपां ज्ञीप्स्यमानः ॥ ३४ ॥

श्लाघादेः प्रयोगे ज्ञापयितु मिष्ट स्संप्रदानं स्यात् । देवदत्ताय श्लाघते ह्नुते तिष्ठते शपतेवा । देवदत्तंप्रति श्लाघमान स्तामेव श्लाघां देवदत्तं ज्ञापयितु मिच्छतीत्यर्थः । ज्ञीप्स्यमानः किम् । देवदत्तं श्लाघते ॥

## धारे रुत्तमर्णः ॥ ३५ ॥

धारयतेः प्रयोगे उत्तमर्ण स्संप्रदानं स्यात् । देवदत्ताय शतं धारयति ॥

## स्पृहे रीप्सितः ॥ ३६ ॥

स्पृहयतेः प्रयोगे ईप्सितोऽर्थः संप्रदानंस्यात् । पुष्पेभ्यः स्पृहयति ॥

## क्रुधद्रुहेर्ष्याऽसूयार्थानां यंप्रति कोपः ॥ ३७ ॥

क्रुधाद्यर्थानां प्रयोगे यंप्रति कोपः स संप्रदानं स्यात् । देवदत्ताय क्रुध्यति । द्रुह्यति । ईर्ष्यति । असूयति । क्रोधोरोषः । द्रोहोऽपकारः । ईर्ष्यापरगुणासहनम् । असूया परगुणविध्वंसनम् । क्रोधः कोपएव । द्रोहादीनामपि कोपपूर्वकाणामेव ग्रहणम् । तेन यंप्रति कोपइ त्युपपन्नम् । यंप्रति कोपःकिम् । भार्या मीर्ष्यति मैना

मन्यो ग्रासीदिति ॥

क्रुधद्रुहोरुपसृष्टयोःकर्म ॥३८॥

एतयोः प्रागुक्तं कर्म स्यात् । पूर्वापवादः । देवदत्त मभिक्रुध्यति । अभिद्रुह्यति । उपसर्गयुक्तयोः किम् । देवदत्ताय क्रुध्यति ॥

राधीक्ष्यो र्यस्य विप्रश्नः ॥३९॥

एतयोः कारकं संप्रदानं स्या द्यस्य विविधः प्रश्नः क्रियते । शुभाशुभविषय इत्यर्थः । देवदत्ताय राध्यति । ईक्षतेवा । पृष्टो ज्योतिर्वि च्छुभाशुभं पर्यालोचयतीत्यर्थः । विप्रश्नः किम् । देवदत्तस्य राध्य त्यादनम् ॥

प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ॥४०॥

आभ्यां परस्य शृणोते र्योगे पूर्वस्याः प्रवर्तन क्रियायाः कर्ता संप्रदानं स्यात् । देवदत्ताय गां प्रतिशृणोति । आशृणोति । तेन प्रेरितस्सन् प्रतिजानीत इत्यर्थः

अनुप्रतिगृणश्च ॥ ४१ ॥

अनुप्रतिपूर्वस्य गृणातेः कारकं पूर्वस्याः क्रियायाः कर्तृभूतं संप्रदानं स्यात् । होत्रेऽनुगृणाति । प्रतिगृणाति । अनुगरः प्रतिगर इति शंसितुः प्रोत्साहन मुच्यते । होतारं शंसन्त मोथामोदैवेति प्रोत्साहय तीत्यर्थः ॥

साधकतमं करणम् ॥ ४२ ॥

क्रियासिद्धौ प्रकृष्टोपकारकत्वेन विवक्षितं करणसंज्ञं स्यात् । परशुना छिनत्ति । तम ग्रहणं किम् । गङ्गायां घोषः ॥

## दिवः कर्मच ॥ ४३ ॥

दिवः साधकतमं कर्मसंज्ञं वास्यात् । अक्षै रक्षान्वा दीव्यति ॥

## परिक्रयणे संप्रदान मन्यतरस्याम् ॥ ४४ ॥

नियतकालं वेतनादिना स्वीकरणं परिक्रयः । तत्करणं संप्रदानं वास्यात् । शताय शतेनवा परिक्रीतोनुब्रूहि ॥

## आधारो ऽधिकरणम् ॥ ४५ ॥

क्रियाश्रययोः कर्तृकर्मणो राधा रोधिकरण संज्ञः स्यात् । कटे आस्ते । स्थाल्यामोदनं पचति ॥

## अधिशीङ्स्था ऽऽसां कर्म ॥ ४६ ॥

अधिपूर्वाणा मेषा माधारः कर्म स्यात् । अधिशेते अधितिष्ठति अध्यास्ते वा कैलासं शिवः ॥

## अभिनिविशश्च ॥ ४७ ॥

अभिनिपूर्वस्य विशते राधारः कर्म स्यात् । अभिनिविशते सन्मार्गम् । इहा न्यतरस्यां ग्रहणस्य व्यवस्थित विभाषार्थ मनुवृत्तेः क्वचिन्न । व्याकरणे ऽभिनिवेशः । यस्मिन् यस्मि न्नभिनिविश तइतिच ॥

## उपान्वध्याङ्वसः ॥ ४८ ॥

उपादिपूर्वस्य वसते राधारः कर्म स्यात् । उपवस त्यनुवस त्यधि वस त्यावसति वैलासं शिवः ॥

अभुक्त्यर्थस्य न ॥

वने उपवसति ॥

## कर्तुरीप्सिततमं कर्म ॥ ४९ ॥

कर्तुः क्रियया आप्तुमिष्टतमं कर्म संज्ञं स्यात् । कटं करोति । कर्तुः किम् । माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषाः नकर्तुः । ईप्सिततमं किम् । अग्ने र्माणवकं वारयति । कर्म त्यनुवृत्तावपि पुनः कर्मग्रहण माधारनिवृत्त्यर्थम् ॥

## तथायुक्तं चानीप्सितम ॥ ५० ॥

ईप्सिततमव त्क्रियायुक्त मीप्सितभिन्नमपि कर्मसंज्ञं स्यात् । विषं भुङ्क्ते । अहिं लङ्घयति । ग्रामं गच्छन् तृणं स्पृशति ॥

## अकथितंच ॥ ५१ ॥

अपादानादि विशेषसंज्ञाभि रकथितं कारकं कर्म संज्ञं स्यात् । परिगणनं कर्तव्यम् ।

> दुहि याचि रुधि प्रच्छ भिक्षि चिञ् ब्रू जि शास्मुपाम्
> दण्डनीहरवहां कर्मयुक्तं यस्त दकीर्तितम् ॥

गां दोग्धि पयः । अत्र पयो मुख्यं कर्म । तन्निमित्तस्य गो स्तेन कर्मत्वम् । अपादानत्वादिक मविवक्षित्वा कारकत्वमात्र विवक्षायां कर्मत्वम् । तद्विवक्षायां तु यथाप्राप्तिं पञ्चम्यादि भवति । गोर्दोग्धि पयः । कारकत्वस्या प्यविवक्षायां संबन्धमात्रे षष्ठ्यपि भवति । गो र्दोग्धि पयः । एवमुत्तरत्रापि यथासंभवं त्रैरूप्यं द्रष्टव्यम् । पौरवं गां याचते । अत्र दुह्याद्य वर्थग्रहणात्पर्यायाणाम पीष्यते तेन भिक्षियाच्यो स्समानार्थत्वात् भिक्षिग्रहणेनैव सिद्धे याचिग्रहण मनुनयार्थस्य संग्रहार्थम् । अविनीतं विनयं याचते । गा मवरुणद्धि व्रजम् । देवदत्तं पन्थानं पृच्छति । पौरवं गां भिक्षते । वृक्ष मवचिनोति फलानि । माणवकं धर्मं ब्रूते । देवदत्तं शतं जयति । माणवकं धर्म मनुशास्ति । देवदत्तं शतं मुष्णाति । देवदत्तं शतं दण्डयति । अजां नयति ग्रामम् । भारं हरति ग्रामम् । भारं वहति ग्रामम् । परिगणनं किम् । नटस्य गाथां शृणोति । कृत्यानां कर्तरिवेति (२।३।७१) सूत्रे कष्टव्या ग्रामं शा खेति प्रयोगात् कृषिरपि द्विकर्मकः । कौमुद्यां मन्थग्रह पचोपि संगृहीताः ॥

## गति बुद्धि प्रत्यवसानार्थ शब्दक र्माक र्मकाणा मणि कर्ता स णौ ॥ ५२ ॥

गत्याद्यर्थानां शब्दकर्माकर्मकाणां चाणौ यः कर्ता स ण्यन्तानां कर्मसंज्ञः स्यात् । गमयति माणवकं ग्रामम् ॥

गत्यर्थेष नीवह्यो न ॥

नाययति वाहयतिवा भारं देवदत्तेन ॥

नियन्तृकर्तृकस्य वहे रनिषेधः ॥

वाहयति यवान् बलीवर्दम् । बोधयति माणवकं धर्मम् । भोजयति माणवक मोदनम् ॥

आदिखाद्यो न ॥

आदयते देवदत्तो नौदनम् । खादयति वा ॥

भक्षे रहिंसार्थस्य न ॥

भक्षयति पिण्डीं देवदत्तेन । हिंसार्थस्यतु भक्षय त्यमात्य मरीन् राजा । अहिंसार्थस्येति पयु दास सामर्थ्या दे वा लाणीकर्तुः कम त्वम् । अध्यापयति माणवकं पदम् । आसयति देवदत्तम् । अत्र शब्द कर्मेत्यत्र साधनकर्म गृह्यते । क्रियाग्रहणे कर्मग्रह णानर्थ क्यात् । गति बुद्धि शब्द प्रत्यवसाना र्थाकर्मकाणा मित्येव सिद्धेः ॥

जल्पति विलप त्याभापा मुपसंख्यानम् ॥

जल्पति विलप त्याभापतेवादेवदत्तः । जल्पयति विलापयति आ भापयतिवा देवदत्तम् । प्रयोजकव्यापारेण प्रयोज्य स्याप्यमान त्वात्कर्तु रीप्सिततम (१।४।४९) मित्येव सिद्धे नियमार्थ मिदम् । तेन पाचय त्योदनं देवदत्तेने त्यादौ न । अणौकिम् । गमयति देवदत्तं यज्ञदत्तः । त मन्यः प्रयुङ्क्ते गमयति यज्ञदत्तेन

देवदत्तं विष्णुमित्रः ॥

हृक्रो रन्यतरस्याम् ॥ ५३ ॥

हृक्रो रणिकर्ता णौवा कर्म स्यात् । हारयति भारं, कारयति कटं वा, भृत्यं भृत्येनवा ॥

अभिवादिदृशो रात्मनेपदे वेतिवाच्यम् ॥

अभिवादयते गुरुं देवदत्तं देवदत्तेनवा । दर्शयते राजा भृत्यान् भृत्यैर्वा ॥

स्वतन्त्रः कर्ता ॥ ५४ ॥

क्रियायां स्वातन्त्र्येण विवक्षितो र्थः कर्तास्यात् । देवदत्तः पचति । स्थालीपचति ॥

तत्प्रयोजको हेतुश्च ॥ ५५ ॥

तस्य स्वतन्त्रस्य प्रयोजको हेतुसंज्ञः स्या त्कर्ताच । कुर्वन्तं प्रेरयति कारयति । हेतुमति (३।१।२६) चेति णिच् । कर्तृत्वाच्च लकारः ॥

प्रा ग्रीश्वरा न्निपाताः ॥ ५६ ॥

अधि रीश्वर (१।४।९७) इतिपर्यन्तं निपातसंज्ञाधिकारः । उपसर्गादि संज्ञया अस्या स्समावेशार्थो वधि निर्देशः । ईश्वरे तो सुन्कसुना (३।४।१३) वित्य स्यावधित्व निरासा य सरेफावधि

ग्रहणम् ॥

## चादयो ऽसत्त्वे ॥ ५७ ॥

अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः । चादिषु,

उपसर्गस्वरप्रतिरूपकाश्च

इति पठ्यते । तेन

अवदत्तं विदत्तंच प्रदत्तं चादिकर्मणि ।
सुदत्त मनुदत्तंच निदत्तमिति चेष्यते ॥

इत्यादौ अच उपसर्गादिति (७।४।४७) तत्त्वं न भवति । दुनय इत्यादौ उपसर्गादिति (८।४।१४) णत्वं न । असत्त्वेकिम् । पशुः पुरुषः । पशु शब्दः सम्यगर्थे निपातः ॥

## प्रादयः ॥ ५८ ॥

प्रादयोपि निपाताः । असत्त्वइत्येव । पराजयति सेना ॥

## उपसर्गाः क्रियायोगे ॥ ५९ ॥

प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्रणयः । क्रियायोगे किम् । प्रगता नायका अस्मा त्प्रनायको देशः ॥

मरुच्छब्द स्योपसंख्यानम् ॥

मरुद्भि र्दत्तो मरुत्तः । संज्ञा सामर्थ्या दनजन्तादपि तत्त्वम् ॥

श्रच्छब्द स्यापि ॥

श्रद्धा ॥

## गतिश्च ॥ ६० ॥

प्रादयः क्रियायोगे गतिसंज्ञाः स्युः । चकार उपसर्गसंज्ञा समावेशार्थः । प्रकृत्य । चकारः किम् । प्राणितं । अभिषिक्तम् । गतिरनन्तर(६।२।४९)इति प्रकृतिस्वरः । उपसर्गादिति (८।४।१४-८।३।६५) णत्व षत्वेच ॥

### कारिकाशब्द स्योपसंख्यानम् ॥

कारिकाकृत्य ॥

### पुन श्चनसौ छन्दसि ॥

पुन रुत्स्यूतं वासः । उशि ग्दूत श्चनोहितः । गतिरनन्तर (६।२।४९) इति प्रकृतिस्वरः ॥

## ऊर्यादि च्विडाचश्च ॥ ६१ ॥

ऊर्यादय श्च्व्यन्ता डाजन्ताश्चगतिसंज्ञाःस्युः । च्विडाच्साहचर्या दूर्यादीनामपि कृभ्वस्तियोगएव गतिसंज्ञा । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य ॥

## अनुकरणं चानितिपरम् ॥ ६२ ॥

इतिः परो यस्मा त्त दितिपरं । अनुकरणमनितिपरम् क्रियायोगे गतिसंज्ञं स्यात् । खात्कृत्य । अनितिपरं किम् । खादिति कृत्वा निरष्ठीवत् । अगतित्वा द्व्यवहितस्यापि प्रयोगः ॥

## आदरानादरयोः सदसती ॥ ६३ ॥

एतयोः क्रमादेतौ गतिसंज्ञौस्तः । सत्कृत्य । असत्कृत्य । एतयोः किम् । सत् कृत्वाकाण्डंगतः ॥

## भूषणे ऽलम् ॥ ६४ ॥

अस्मिन्नर्थे अयं गतिः । अलंकृत्य । भुषणेकिम् । अलंभुक्त्वा ओदनं गतः ॥

## अन्तरपरिग्रहे ॥ ६५ ॥

गतिसंज्ञः । अन्तर्हत्य । अपरिग्रहेकिम् । अन्तर्हत्वामूषिकांश्येनो गतः । स्वीकृत्येत्यर्थः

अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञावाच्या ॥

अन्तर्धा । अन्तर्धिः । अन्तर्णयति ॥

## कणे मनसी श्रद्धा प्रतिघाते ॥ ६६ ॥

श्रद्धाप्रतिघातो ऽभिलाषनिवृत्तिः । अस्मिन्नर्थे एतौ गतिसंज्ञौस्तः । कणेहत्य, मनोहत्य, पयः पिबति । यावदभिलापनिवृत्ति स्ताव त्पिबतीत्यर्थः । श्रद्धाप्रतिघाते किम् । कणेहत्वा ॥

## पुरो ऽव्ययम् ॥ ६७ ॥

गतिसंज्ञः । पुरस्कृत्य । अव्ययंकिम् । पूः पुरौ परः कृत्वागतः ॥

## अस्तं च ॥ ६८ ॥

गतिसंज्ञम् । अस्तंगत्य सविता पुनरुदेति । अव्यय मित्येव । अ

स्तं कृत्वा । क्षिप्तमित्यर्थः ॥

अच्छ गत्यर्थवदेषु ॥ ६९ ॥

गत्यर्थेषु वदतौ च परतोऽच्छशब्दो गतिः स्यात् । अच्छगत्य । अच्छोद्य । अव्ययमित्येव । जल मच्छं गत्वा ॥

अदो ऽनुपदेशे ॥ ७० ॥

अदश्शब्द स्त्यदादिः । सोऽनुपदेशे गतिसंज्ञः । उपदेशःपरार्थकथनम् । अदः कृत्य । स्वयमेव बुद्ध्या परामृश्ये त्यर्थः । अनुपदेशे किम् । अदः कृत्वा काण्डं गतः । पर स्योपदिश्ये त्यर्थः ॥

तिरो ऽन्तर्धौ ॥ ७१ ॥

गतिसंज्ञः । तिरोभूय । अन्तर्धाये त्यर्थः । अन्तर्धौ किम् । तिरोभूत्वा स्थितः ॥

विभाषा कृञि ॥ ७२ ॥

कृञि परे तिरश्शब्दो वा गतिसंज्ञः । तिरस्कृत्य । तिरःकृत्य । तिरःकृत्वा । अन्तर्धावित्येव । तिरः कृत्वा काण्डं तिष्ठति ॥

उपाजे ऽन्वाजे ॥ ७३ ॥

विभक्तिप्रतिरूपका वेतौ सामर्थ्याधाने वर्तेते । एतौ कृञि वा गती स्तः । उपाजेकृत्य । उपाजेकृत्वा । अन्वाजेकृत्य । अन्वाजेकृत्वा ॥

साक्षात्प्रभृतीनि च ॥ ७४ ॥

कृञि वा गतिसंज्ञानि ॥

साक्षात्प्रभृतिषु च्व्यर्थवचनम् ॥

साक्षात्कृत्य । साक्षात्कृत्वा । लवणंकृत्य । लवणंकृत्वा । लवणं,शीत मुष्ण मुदक मार्द्र मित्येतेषां गतिसंज्ञासंनियोगेन मान्तत्वं निपात्यते ॥

## अनत्याधान उरसिमनसी ॥ ७५ ॥

अत्याधान मुपश्लेषणम् । कृञि परे एतौ वागती स्तः । उरसिकृत्य । उरसिकृत्वा । मनसिकृत्य । मनसिकृत्वा । अनत्याधाने किम् । उरसि कृत्वा पाणिं शेते ॥

## मध्ये पदे निवचनेच ॥ ७६ ॥

कृञि एते वा गतिसंज्ञाः । मध्येकृत्य । मध्येकृत्वा । पदेकृत्य पदेकृत्वा । निवचनेकृत्य । निवचनेकृत्वा । निवचनं वचनाभावः । वाचं नियम्ये त्यर्थः । अनत्याधान इत्येव । हस्तिनः पदेकृत्वा शिरः शेते ॥

## नित्यं हस्ते पाणा वुपयमने ॥ ७७ ॥

उपयमनं दारकर्म । तस्मि न्नेतौ नित्यं गतिसंज्ञौस्तः कृञि । हस्तेकृत्य । पाणौकृत्य । दारपरिग्रहं कृत्वेत्यर्थः । उपयमने किम् । हस्ते कृत्वा कार्षापणं गतः ॥

## प्राध्वं बन्धने ॥ ७८ ॥

कृञि एत न्नित्यं गतिसंज्ञं स्यात्। मान्तमेत दव्यय मानुकूल्ये वर्त ते। त दानुकूल्यं यदा बन्धनहेतुकं तदेयं संज्ञा। प्राध्वंकृत्य। बन्ध नेकिम्। प्राध्वंकृत्वा शकटं गतः॥

## जीविकोपनिषदा वौपम्ये॥ ७९॥

कृञ्येता वौपम्ये नित्यं गतिसंज्ञौस्तः। जीविकाकृत्य। उपनिषत्कृ त्य। जीविकाव त्कृत्वेत्यर्थः। औपम्ये किम्। जीविकां कृत्वा॥

## ते प्रा ग्धातोः॥ ८०॥

ते गत्युपसर्गसंज्ञा धातोः प्रा क्प्रयो ज्याः। तथैवोदाहृतम्॥

## छन्दसि परे पि॥ ८१॥

छन्द स्येते धातोः प्रा क्परे पि स्युः। हन्तिनि मुष्टिना। निहन्ति मुष्टिना॥

## व्यवहिताश्च॥ ८२॥

गत्युपसर्गा श्छन्दसि व्यवहिता अपिस्युः। आमन्द्रै रिन्द्र हरिभि र्याहिमयूररोमभिः। आयाहि॥

## कर्मप्रवचनीयाः॥ ८३॥

अधिका रोऽयम्। गत्युपसर्ग संज्ञापवादः॥

## अनु र्लक्षणे॥ ८४॥

लक्षणे द्योत्ये अनुः कर्मप्रवचनीय संज्ञः स्यात्। शाकल्यस्य संहिता मनु प्रावर्षत्। शाकल्यस्यसंहिता मनुनिशम्य देवः प्रावर्ष दित्ययमर्थः प्रतीयते। निशमनक्रियानिमित्तं संहिताया दृष्टिहेतुत्वम् अनुनाद्योत्यते। हेतौ तृतीयां बाधितु मिदंसूत्रम् ॥

## तृतीयार्थे ॥ ८५ ॥

अनु. कर्मप्रवचनीयः। नदीमन्ववसिता सेना। नद्यासह संबद्धेत्यर्थः ॥

## हीने ॥ ८६ ॥

अपकर्षे द्योत्ये अनु रुक्तसंज्ञः। अनुशाकटायनं वैया करणाः। ततोऽपकृष्टा इत्यर्थः ॥

## उपोधिकेच ॥ ८७ ॥

चा द्धीनेच कर्मप्रवचनीयः। उप खार्यां द्रोणः। यस्मादधिकमिति (२।३।९) सप्तमी। उपशाकटायनं वैयाकरणाः ॥

## अपपरी वर्जने ॥ ८८ ॥

वर्जने एतौ कर्मप्रवचनीयौ स्तः। अपत्रिगर्तेभ्यः, परित्रिगर्तेभ्यो, वृष्टो देवः। पञ्चम्यपाङ्परिभिरिति (२।३।१०) पञ्चमी। वर्जने किम्। ओदनं परिपिञ्चति। अलोपसर्गत्वे षत्वम् ॥

## आङ् मर्यादावचने ॥ ८९ ॥

आङ् सीमाया मुक्तसंज्ञः। वचनग्रहणा दभिविधावपि। आपाटलि

पुलं वृष्टो देवः। पाटलिपुत्रपर्यन्तं तदभिव्याप्यवा वृष्ट इत्यर्थः ॥

## लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥ ९० ॥

एष्वर्थेष्वेते उक्तसंज्ञाः स्युः। लक्षणे। वृक्षं प्रति पर्यनुवा विद्योतते। इत्थं भूताख्याने। भक्तोमातरं प्रतिपर्यनुवा। भागे। यदत्रमां प्रति पर्यनुवास्यात्, त दीयताम्। वीप्सायाम्। वृक्षं वृक्षं प्रति पर्यनुवा सिञ्चति। एषु किम्। परिषिञ्चति। अत्रोपसर्गत्वेनषत्वम्। पञ्चम्यपाङ्परिभिरिति( २।३।१० )अपसाहचर्यात्परि वर्जनार्थो गृह्यत इति लक्षणादौ द्वितीयेव ॥

## अभिरभागे ॥ ९१ ॥

भागवर्जे लक्षणादावभिः कर्मप्रवचनीयः। वृक्षमभि विद्योतते विद्युत्। साधुर्मातरमभि। वृक्षं वृक्षमभिसिंचति। अभागे किम्। यदत्र मामभिस्यात्तद्दीयताम् ॥

## प्रतिः प्रतिनिधि प्रतिदानयोः ॥ ९२ ॥

एतयोः प्रतिः कर्मप्रवचनीयः। प्रद्युम्नः कृष्णात्प्रति। तिलेभ्यः प्रतियच्छति माषान्। प्रतिनिधि प्रतिदानेचेति ( २।३।११ )पञ्चमी ॥

## अधिपरी अनर्थकौ ॥ ९३ ॥

धात्वर्थापेक्षया अनतिरिक्तार्थावेतौ कर्मप्रवचनीयौ स्तः।

ध्यागच्छति। कुतः पर्यागच्छति। अपादानपञ्चम्ये वात्र। गत्युप सर्गसंज्ञाबाधमात्रं प्रयोजनम्॥

## सुः पूजायाम्॥ ९४॥

कर्मप्रवचनीयः। सुसिक्तं भवता। धात्वर्थः स्तूयते। पूजायांकिम्। सुषिक्तं कितवात्र॥

## अति रतिक्रमणे च॥ ९५॥

अतिक्रमणे पूजायांच अतिः कर्मप्रवचनीयः। अतिदेवान् कृष्णः।

## अपिः पदार्थ संभाव नान्ववसर्गगर्हा समुच्चयेषु॥ ९६॥

एष्वर्थेषु द्योत्ये ष्वपिः कर्मप्रवचनीयः स्यात्। सर्पिषोपि स्यात्। अत्रमात्रा विन्दु रित्यादि पदार्थे अपिर्वर्तते। सम्भावनं शक्त्याधि क्यप्रकाशनम्। वृक्षसहस्रमपि सिञ्चेत्। अन्ववसर्गः कामचारा भ्यनुज्ञानम्। अपिसिञ्च। गर्हानिन्दा। धिग्जाल्मं देवदत्त मपि सि ञ्चेत्। समुच्चये। अपि सिञ्च, अपि स्तुहि। अत्रोपसर्गत्वाभावा न्नषत्वम्॥

## अधि रीश्वरे॥ ९७॥

स्वस्वामिभाव सम्बन्धेऽधिः कर्मप्रवचनीयः स्यात्। स्वात् स्वामि नोवा विभक्तिः। अधिपञ्चालेषु ब्रह्मदत्तः। अधि ब्रह्मदत्ते पञ्चा लाः॥

विभाषा कृञि ॥ ९८ ॥

अधि रीश्वरे कृञिवा कर्मप्रवचनीयः । य दत्र मामधि करिष्यति । कर्मप्रवचनीय संज्ञापक्षे गतिसंज्ञा बाधनात् तिङिचोदात्तवतीति (८ । १ । ७१ ) निघातोन ॥

लः परस्मैपदम् ॥ ९९ ॥

लइति षष्ठ्या आदेशा उपस्थाप्यन्ते । लादेशाः परस्मैपदसंज्ञाः स्युः ॥

तङाना वात्मनेपदम् ॥ १०० ॥

तादि नवकः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञाऽपवादः ॥

तिङस्त्रीणि त्रीणि प्रथम मध्यमोत्तमाः ॥ १०१ ॥

तिङ उभयोः पदयोस्त्रय स्त्रिकाःक्रमा देतत्संज्ञाः स्युः । प्रथम मध्य मोत्तमाइति कृतद्वन्द्वाना मेकशेषः । तेन संख्यातानुदेश सिद्धिः ॥

तान्ये कवचनद्विवचनबहुवचनान्येकशः ॥ १०२ ॥

तिङ स्त्रीणित्रीणि वचना न्येकैकश एतत्संज्ञानि स्युः ॥

सुपः ॥ १०३ ॥

सुपोऽपि त्रीणित्रीणि पदानि क्रमा देकवचनादि संज्ञानिस्युः ॥

विभक्तिश्च ॥ १०४ ॥

-सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥

## युष्मद्युपपदे समानाधिकरणेस्थानिन्यपि मध्यमः ॥ १०५ ॥

तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुक्ते अप्रयुक्तेऽपि मध्यमपुरुषः स्यात्। त्वं पचसि। पचसि। समानाधिकरणे किम्। त्वया पच्यते ॥

## प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०६ ॥

मन्योपपदाद्धातो मध्यमः स्यात्। मन्यते श्चोत्तमः। सचैकवत्परिहासे गम्ये। एहि मन्ये ओदनं भोक्ष्यसे नहि भोक्ष्यसे भुक्तः सोऽतिथिभिः। परिहासार्थं भोजनार्थं माकार्थं नास्तीतिवचनमिदम्। प्रहासे किम्। एहिमन्यसे ओदनं भोक्ष्यइति। साधु मन्यसे ॥

## अस्मद्युत्तमः ॥ १०७ ॥

अस्मदि समानाधिकरणे स्थानिन्य प्युत्तमपुरुषः स्यात्। अहं पचामि। पचामि ॥

## शेषे प्रथमः ॥ १०८ ॥

युष्मदस्मद्विपया दन्यत्र प्रथमपुरुषः स्यात्। स पचति ॥

## परः सन्निकर्षः संहिता ॥ १०९ ॥

अति शयितः संनिधि वर्णानां संहिता संज्ञः स्यात्। दध्यत्र ॥

26-9-1895

## अक्ष शलाका सङ्ख्याः परिणा ॥ १० ॥

एते परिणा समस्यन्ते सो ऽव्ययीभावः ।

कितवव्यवहारे ऽन्यथाभावे चायं समासः ॥

पञ्चिकानाम द्यूतं पञ्चभि रक्षैः शलाकाभिर्वाभवति । तत्र यदा सर्वे उत्ताना अवाञ्चोवातदा पातयितु र्जयः । अन्यथा त्वपजयः । अक्षेणेदं नतथा वृत्तं यथा जये अक्षपरि । शलाकापरि । एकपरि । द्विपरि । त्रिपरि ॥

## विभाषा ॥ ११ ॥

अधिकारो ऽयम् ॥

## अपपरिबहिरञ्चवः पञ्चम्या ॥ १२ ॥

एते पञ्चम्या वा समस्यन्ते । सो ऽव्ययीभावः । अपविष्णु संसारः अपविष्णोः । परिविष्णु । परिविष्णोः । वहिर्वनम् । वहिर्वनात् । अतएव पञ्चमी वहिर्योगे ऽपि । प्राग्ग्रामम् । प्राग्ग्रामात् ॥

## आङ् मर्यादाभिविध्योः ॥ १३ ॥

आ एतयो रर्थयोः पञ्चम्या वा समस्यते । आमुक्ति संसारः आ वा मुक्तेः । आकुमारं यशः पाणिनेः । आ कुमारेभ्यः ॥

## लक्षणे नाभिप्रती आभिमुख्ये ॥ १४ ॥

चिह्नवाचिनासह अभिप्रती आभिमुख्यार्थेवा समस्येते ।

यीभावः । अभ्यग्नि शलभाः पतन्ति । अग्निमभि । प्रत्यग्नि । अ
प्रति । लक्षणेन किम् । स्रुघ्नं प्रतिगतः । प्रत्यागतः । प्रतिनिवृत्त
त्यर्थः । अत्रप्रतिगमनंप्रति कर्मत्वेन विवक्षितः स्रुघ्नो नतु लक्षणम्
अभिप्रती इतिकिम् । येनाग्निं निर्गतस्तेन गतः । अत्र येनेत्यस्
अग्निना नसमासः । आभिमुख्ये किम् । अभ्यङ्का गावः । अभि
वो ऽङ्को येषामित्यर्थः । इदमे वाभिमुख्यग्रहणं ज्ञापक मत्र प्रकर
बहुव्रीहिविषये व्ययीभावइति । तेन त्रिमुनि व्याकरणमिति सि
तीति हरदत्तः ॥

## अनुर्यत्समया ॥ १५ ॥

समया समीपम् । अनु र्यस्य तद्वाचि तेनवा समस्यते । सो व्ययीभा
वः । अनुवनं सिंहो गतः । वन स्यानु । अनुः किम् । वनं सम
य त्समयेति किम् । वृक्षमनु विद्योतते । अव्ययं विभक्तीत्येव
द्धे विकल्पार्थं वचनम् ॥

## यस्य चायामः ॥ १६ ॥

आयामो दैर्घ्यम् । अनु र्यस्य तद्वाचि तेन लक्षणेन समस्यते ।
व्ययीभावः । अनुगङ्गं काशी । अत्र गङ्गादैर्घ्येण काशीदैर्घ्यं
समो। आयामः किम् । वृक्षमनु विद्योतते ॥

## तिष्ठद्गुप्रभृतीनिच ॥ १७ ॥

सुविज्ञायाएव निपात्यन्ते । एता न्यव्ययीभावसंज्ञानि स्युः । ति
अनुच

न्ति गावोऽस्मिन् कालइति तिष्ठद्गु । एवं वहद्गु ।

खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेण नयुज्यन्ते । अन्य पदार्थेच वर्तन्ते ।

कारो ऽवधारणार्थः पदान्तारेण समासान्तर निषेधार्थः । तेन प समतिष्ठद्गिवति नभवति ॥

## पारेमध्ये षष्ठ्यावा ॥ १८ ॥

षष्ठ्या वा समस्येते । एदन्तत्वं चानयो रव्ययीभावसंनियोगेन तयते । पक्षे षष्ठीसमासः । गङ्गायाः पारं पारेगङ्गम् । मध्येगङ्ग गङ्गापारम् । गङ्गामध्यम् । महाविभाषया वाक्यमपि ॥

## संख्या वंश्येन ॥ १९ ॥

संतानः । स द्विविधः । विद्यया जन्मनाच । तत्रभवो वं । तद्वाचिना संख्या वा समस्यते । द्वौमुनी वंश्यौ द्विमुनि । व्या स्य त्रिमुनि । जन्मनाच । एकविंशतिभारद्वाजम् ॥

## नदीभिश्च ॥ २० ॥

शाच विशेषाणां ग्रहणम् । नदीविशेषैस्सह संख्या वा व्ययीभावः ॥

समाहारे चाय मिष्यते ॥

द्वेयमुनम् ॥

N

एते समुद

-9-9-180-

## अन्यपदार्थे च संज्ञायाम् ॥ २१ ॥

नदीभिस्सह सुबन्तमन्यपदार्थे समस्यते संज्ञायाम् । सो व्ययीभावः । उन्मत्तगङ्गम् । लोहितगङ्गं देशः । तूष्णींगङ्गम् । शनैर्गङ्गम् देशविशेषसंज्ञाः । अतएवनित्यसमासः । वाक्येन संज्ञा ऽप्रतीतेः । न्यपदार्थेकिम् । कृष्णवेणा । संज्ञायां किम् । शीघ्रगङ्गोदेशः ॥

## तत्पुरुषः ॥ २२ ॥

इतऊर्ध्वं माबहुव्रीहे स्तत्पुरुषाधिकारः । उत्तरपदार्थप्रायोन्यस्य यिकस्य द्योतनाय महासंज्ञा ॥

## द्विगुश्च ॥ २३ ॥

द्विगुश्च तत्पुरुषसंज्ञो भवति । पञ्चराजम् । पञ्चगवम् ॥

## द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २४ ॥

द्वितीयान्तं श्रितादिभि र्वा समस्यते । स तत्पुरुषः । कष्टं श्रितः कष्टश्रितः । कान्तारातीतः । नरकपतितः । ग्रामगतः । हिमात्यस्तः । सुखप्राप्तः । सुखापन्नः ॥

गम्यादे रिष्टिः ॥

ग्रामं गमी ग्रामगमी । ग्रामगामी । अन्नबुभुक्षुः ॥

## स्वयं क्तेन ॥ २५ ॥

स्वयं क्तान्तेन समस्यते । स्वयंकृतम् । स्वयमित्यात्मने त्यर्थः । तेन सामर्थ्याद्द्वितीया नसंबध्यते ॥

## खट्वाक्षेपे ॥ २६ ॥

द्वितीयान्ता खट्वा क्तेन समस्यते निन्दायाम् । स तत्पुरुषः । खट्वारूढो जाल्मः । अविनीत उच्यते । क्षेपे किम् । खट्वा मारूढः । वाक्येन क्षेपाप्रतीते र्नित्यसमासो ऽयम् ॥

## सामि ॥ २७ ॥

तदव्ययं क्तान्तेन समस्यते । सामिकृतम् । अर्ध कृत मित्यर्थः ॥

## कालाः ॥ २८ ॥

द्वितीयान्ताः कालवाचिनः क्तान्तेन समस्यन्ते । अनत्यन्तसंयोगेपि तत्पुरुषः । मासप्रमित श्चन्द्रः । मासंपरिच्छेत्तु मारब्धः प्रतिपच्चन्द्रमा इत्यर्थः ॥

## अत्यन्तसंयोगेच ॥ २९ ॥

कालवाचि द्वितीयान्तं सुपा समस्यते अत्यन्तसंयोगे । मुहूर्तसुखं ॥

## तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३० ॥

तृतीयान्तं सुबन्तं तृतीयान्तार्थकृतगुणेन अर्थेनच समस्यते स तत्पुरुषः । तत्कृतेति लुप्त तृतीयान्तं गुणवचनविशेषणम् । शङ्कुलया खण्डः शङ्कुलाखण्डः । धान्ये नार्थो धान्यार्थः । तत्कृतेनेति किम् । अक्ष्णा काणः । गुणवचने नेतिकिम् । गोभि र्वपावान् ॥

पूर्व सदृश स मोनार्थ कलह निपुण मिश्र श्लक्ष्णैः ॥ ३१ ॥

एभि स्तृतीया समस्यते । मासेन पूर्वः मासपूर्वः । मातृसदृशः । पितृसमः । ऊनार्थ । मापोनः । माषविकलः कार्षापणः । वाक्कलहः । वाङ्निपुणः । गुडमिश्रः । विद्याश्लक्ष्णः ॥

अवरस्येष्टिः ॥

मासावरः ॥

कर्तृकरणे कृता बहुलम् ॥ ३२ ॥

कर्तृ करणवाचि तृतीयान्तं कृदन्तेन बहुलं समस्यते । स तत्पुरुषः । रुद्रेणहातो रुद्रहतः । नखैर्भिन्नो नखभिन्नः । कर्तृकरणे किम् । भिक्षाभि रुषितः । हेतौ (२ । ३ । २३) तृतीया । बहुग्रहणात् दात्रेण लूनवानिति क्तवतुना नसमासः । इहच भवति पादाभ्यां ह्रियते पादहारकः । गळेचोप्यते गळेचोपकः । पादाभ्यामिति पञ्चमी । बाहुळकात् कर्मणि ण्वुल् । अमूर्धमस्तकादिति (६ । ३ । १२) सप्तम्या अलुकि, चुपमन्दायांगतौ, हेतुमण्ण्यन्तात्कर्मणि ण्वुल् ॥

कृत्यै रधिकार्थवचने ॥ ३३ ॥

कर्तृकरणवाचि तृतीयान्तं कृत्यैः समस्यते । स्तुतिर्निन्दा वाऽधिकार्थता । काकपेया नदी । वात च्छेद्यं तृणम् । पूर्वस्यै वार्यं प्रप.

श्वः । अतएव काकपीतेत्यपि भवति ॥

अन्नेन व्यञ्जनम् ॥ ३४ ॥

व्यञ्जनवाचि तृतीयान्त मन्नवाचिना समस्यते । क्षीरेण सिक्त ओदनः क्षीरौदनः । वृत्तौ सिक्तार्थ वृत्तित्वा त्सामर्थ्यम् ॥

भक्ष्येण मिश्रीकरणम् ॥ ३५ ॥

मिश्रीकरणवाचि तृतीयान्तं भक्ष्येण समस्यते । स तत्पुरुषः । गुडेन मिश्रा धानाः गुडधानाः ।

चतुर्थी तद र्थार्थ बलि हित सुख रक्षितैः ॥ ३६ ॥

तदित्यनेन चतुर्थ्यन्तार्थं परामर्शः । चतुर्थ्यन्ता र्थार्थ य त्तद्वाचिना अर्थादिभिश्च चतुर्थी समस्यते । स तत्पुरुषः ॥

तदर्थेन प्रकृतिविकारभावए वेष्टिः ॥

यूपाय दारु यूपदारु । अन्यत्रन । रन्धनाय स्थाली ॥

अर्थेन नित्यसमास स्सर्वलिङ्गताच ॥

द्विजायायं द्विजार्थ स्सूपः । द्विजार्थायवागूः । द्विजार्थं पयः । कुबेर बलिः । गोहितम् । गोसुखम् । गोरक्षितम् ॥

पञ्चमीभयेन ॥ ३७ ॥

पञ्चमी भयेन वासमस्यते । चोराद्भयंचोरभयं ॥

भय भीत भीति भी निर्गत जुगुप्सुभिरितिवाच्यम् ॥

वृकभीतः । वृकभीतिः । वृकभीः । ग्रामनिर्गतः । अधर्मजुगुप्सुः
बहुल ग्रहणानुवृत्त्या एत ल्लाभः ॥

## अपे तापोढ मुक्त पति तापत्रस्तै रल्पशः ॥ ३८ ॥

एभयःपञ्चमी क्त चित्समस्यते । सुखा दपेतः सुखापेतः । कल्पोढः । चक्रमुक्तः । स्वर्गपतितः । तरङ्गापत्रस्तः । अल्पशः कि प्रासादात्पतितः, भोजना दपत्रस्तः, इत्यादौ क्वचिन्न ॥

## स्तोकान्तिक दूरार्थ कृच्छ्राणि क्तेन ॥ ३९ ॥

एतानि पञ्चम्यन्तानि क्तेनसमस्यन्ते । स तत्पुरुषः । स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः । अभ्याशा दागतः । दूरादागतः । विप्रकृष्टा दागतः । कृच्छ्रान्मुक्तः । पञ्चम्याः स्तोकादिभ्य (६ । ३ । २) इत्यलुक् ॥

## सप्तमी शौण्डैः ॥ ४० ॥

सप्तम्यन्तं शौण्डादिभि र्वा समस्यते । बहुवचननिर्देशाद् गणग्रहणम् । अक्षेषु शौण्डः अक्षशौण्डः । अक्षधूर्तः । वृत्तौ सक्तिक्रियापेक्षया ऽधिकरणसप्तमी ॥

## सिद्ध शुष्क पक्व बन्धैश्च ॥ ४१ ॥

एभिः सप्तम्यन्तं समस्यते स तत्पुरुषः । सांकाश्यसिद्धः । छाया

शुण्कः । स्थालीपक्वः । चक्रबन्धः ॥

## ध्वाङ्क्षेण क्षेपे ॥ ४२ ॥

सप्तम्यन्तं ध्वाङ्क्षार्थेन समस्यते निन्दायाम् । तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः । तीर्थवायसः । तीर्थकाकः । कार्येअस्थिर इत्यर्थः । क्षेपेकिम् । तीर्थे ध्वाङ्क्ष स्तिष्ठति ॥

## कृत्यैरृणे ॥ ४३ ॥

सप्तम्यन्तं कृत्यैः ससमस्यते ऋणे गम्ये ॥

यत्प्रत्ययान्ते नैवेष्यते ॥

कृत्यैरिति बहुवचन मुदाहरणभेदाभिप्रायम् । मासे देय मृणं मासदेयम् । संवत्सरदेयम् । ऋणग्रहणं नियोगोपलक्षणार्थम् । पूर्वाह्णेगेयम् । प्रातरध्येयो ऽनुवाकः । ऋणइतिकिम् । मासेदेयाभिक्षा ॥

## संज्ञायाम् ॥ ४४ ॥

सप्तम्यन्तं सुबन्तेन समस्यते संज्ञायाम् । संज्ञात्वान्नित्यसमासः । अरण्येतिलकाः । अरण्येमाषाः । हलदन्तादिति (६ । ३ । ९) सप्तम्या अलुक् ॥

## क्तेनाहोरात्रावयवाः ॥ ४५ ॥

अहरवयवा रात्र्यवयवाश्च सप्तम्यन्ताः क्तेनसमस्यन्ते । स तत्पुरुषः । पूर्वाह्णकृतम् । अपराह्णकृतम् । पूर्वरात्रकृतम् । अपररात्रकृतम् ।

अवयवाः कि ( । दिवावृत्तम् । रात्रौ वृत्त ( । माहुलका ग्रावििष्टृत मित्याद्यपि साधु ॥

तत्र ॥ ४६ ॥

तत्रे त्येतत् क्तान्तेन समस्यते । तत्रकृताम् । एकत्वमेकस्वर्यच ।

क्षेपे ॥ ४७ ॥

सप्तम्यन्तं क्तान्तेन समस्यते क्षेपे गम्ये । अवतप्ते नकुलस्थितं तवैत म चापल मेत त्त्वेत्यर्थः । उदके विशीर्णं । प्रवाहे मूत्रितं । भस्मनि हु म । निष्फलं य त्त देव मुच्यते । तत्पुरुषे कृतीति ( ६ । ३ । १४ ) सप्तम्या अलुक् ॥

पात्रे समितादयश्च ॥ ४८ ॥

एते सप्तमीसमासा निपात्यन्ते क्षेपे । पात्रेसमिताः । पात्रएव समिताः भोजनसमयएव संगताः । नतु कार्यांतरइति निन्दाप्रतीतिः । अत्रयेक्तान्ता स्तेषां पूर्वेणैवसिद्धे युक्तारोह्यादि स्वर (६ । २ । ८१) सिद्ध्यर्थ पाठः । नत्रहि पात्रेसमितादयश्चेति पठ्यते । चकारोऽवधारणार्थः । तेनपरमपात्रेसमिताइति समासान्तरं नस्यात् ॥

पूर्वकालैक सर्व जर त्पुराणनव केवलाः समानाधिकरणे न ॥ ४९ ॥

पूर्वकाले त्यर्थग्रहणम् । पूर्वः कालो यस्य पूर्वकालः । सोपरकालेन

2-10-1895

सामर्थ्यात्समस्यते। एते समानाधिकरणेन समस्यन्ते। स तत्पुरुषः। स्नातानुलिप्तः। दग्धप्ररूढः। एकशाटी। सर्वदेवाः। जरद्गवः। पुराणान्नम्। नवान्नम्। केवलान्नम्। समानाधिकरणेन किम्। एकस्याः शौक्ल्यम्। विशेषणं विशेष्येणेत्येव सिद्धे पूर्वकालादेः निपातार्थं वचनम्। तत्प्रपञ्चएववा ॥

## दिक्संख्ये संज्ञायाम् ॥ ५० ॥

दिक्संख्ये समानाधिकरणेन संज्ञायां समस्येते। पूर्वेषुकामशमी। अपरेषुकामशमी। पञ्चग्रामाः। सप्तर्षयः। नियमार्थमिदम्। संज्ञायामेव। नेह। उत्तरा वृक्षाः। पञ्च ब्राह्मणाः। पूर्वसूत्रमित्यादावचित्वात्समासः ॥

## तद्धितार्थोत्तरपद समाहारेच ॥ ५१ ॥

तद्धितार्थेच विषये उत्तरपदेच परतः समाहारेच वाच्ये दिक्संख्ये एकार्थेन समस्येते। स तत्पुरुषः। पूर्वेण नियमाद्विधि रयम्। पूर्वस्यां शालायां भवः। दिक्पूर्वपदा दसंज्ञायां ञः (४।२।१०२) पौर्वशालः। पूर्वशालाप्रियः। दिक्षु समाहारस्य प्रयोगोनास्ति ॥

## संख्यापूर्वो द्विगुः ॥ ५२ ॥

पूर्वसूत्रोक्त स्त्रिविध स्संख्यापूर्वो द्विगुसंज्ञः स्यात्। पञ्चकपालः। पञ्चगवधनः। पञ्चपूली ॥

## कुत्सितानि कुत्सनैः ॥ ५३ ॥

कुत्सितवचनानि कुत्सनवचनै स्समस्यंते । विशेष्यस्यपूर्वनिपातार्थ वचनम् । वैयाकरणखसूचिः । पृष्टस्सन् यो निष्प्रतिभ स्स उच्यते प्रश्नविस्मरणाय अहो ख मतीव निर्मलमिति सूचयतीत्यर्थः ॥

शब्दप्रवृत्तिनिमित्तकुत्साया मिष्यते ॥

नेह । वैयाकरणश्चोरः । नह्यत्र वैयाकरणत्वं कुत्स्यते । कुत्स किम् । कुत्सितो ब्राह्मणः ॥

## पापाणके कुत्सितैः ॥ ५४ ॥

पाप अणक एते कुत्सितै स्समस्येते । कुत्सनवचने एते । पापनापितः । अणकनापितः ॥

## उपमानानि सामान्यवचनैः ॥ ५५ ॥

उपमानोपमेयैकधर्मवचनै रुपमानानि समस्यन्ते । शस्त्रीव श्यामा शस्त्रीश्यामा । उपमानानिकिम् । देवदत्ता श्यामा । सामान्यवचनैः किम् । गिरिरिवमेघः ॥

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ ५६ ॥

उपमेय मुपमानै र्व्याघ्रादिभिस्समस्यते । स तत्पुरुषः । पुरुषो व्याघ्रइव पुरुषव्याघ्रः । सामान्याप्रयोगेकिम् । पुरुषो व्याघ्रइव शूरः । विशेष्यस्य पूर्वनिपातार्थ मिदंसूत्रम् । व्याघ्रादि राकृतिगण. ॥

विशेषणं विशेष्येण बहुळम् ॥ ५७ ॥

भेदकं भेद्येन समानाधिकरणेन बहुलं समस्यते । स तत्पुरुषः । बहुळोक्तेः कृष्णसर्प इत्यादौ नित्यम् । क्वचिन्न । रामोजामदग्न्यः । क्वचिद्वा । नीलमुत्पलम् । नीलोत्पलम् ॥

पूर्वापर प्रथम चरम जघन्य समान मध्य मध्यम वीराश्च ॥ ५८ ॥

एते समानाधिकरणेन समस्यन्ते । स तत्पुरुषः । पूर्वपुरुषः, अपरपुरुषः, इत्यादि । पूर्व मपश्चोयम् ॥

श्रेण्यादयः कृतादिभिः ॥ ५९ ॥

एते समानाधिकरणैः कृतादिभि स्समस्यन्ते । श्रेण्यादयः पठ्यन्ते । कृतादि राकृति गणः ॥

श्रेण्यादिषु च्व्यर्थवचनम् ॥

अश्रेणयः श्रेणयः कृताः श्रेणिकृताः । च्व्यन्तानांतु परत्वात् नित्यं गतिसमासः । श्रेणीकृताः ॥

क्तेन नञ्विशिष्टे नानञ् ॥ ६० ॥

नञैव यस्य विशेषः, अन्य त्प्रकृत्यादिकं सर्वं समानं, तेन नञ्विशिष्टेन क्तान्तेन समानाधिकरणेन अनञ्विशिष्टं क्तान्तं समस्यते । स तत्पुरुषः । कृतंच दकृतंच कृताकृतम् । ईषत्कृत पीतकृत[illegible]

मुच्यते ॥

आगम विकाराधिक्ये ऽपीष्यते ॥

अशितानशितम् । क्लिष्टा क्लिशितम् । छातोच्छितम् ॥

कृतापकृतादीना मुपसंख्यानम् ॥

कृतापकृतम् । भुक्तविभुक्तम् । पीतविपीतं । गतप्रत्यागतम् । यातानुयातम् । क्रयाक्रयिका । पुटापुटिका । फलाफलिका । मानोन्मानिका । क्रयाक्रयिमेत्यत्राल्पस्ति (५ । ३ । ८५) कप्रत्ययः । उपाभ्यप्येति (६ । ३ । १३७) पूर्वस्य दीर्घः । गोबलीवर्दन्यायेन प्रयोगः । स्त्रीत्वं लोकात् । एवं मग्ने ऽपि ॥

समानाधिकरणाधिकारे शाकपार्थिवादीना
मुत्तरपदलोपश्च ॥

शाकभोजी पार्थिवः शाकपार्थिवः । कुतपप्रधानः सौश्रुतः कुतपसौश्रुतः । अजातौल्वलिः ॥

२ सन्महत् परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ ६१ ॥

एते पूजावचनाः पूज्यमानैः समस्यन्ते । स तत्पुरुषः । सत्पुरुषः, महापुरुष इत्यादि । पूज्यमानैः किम् । उत्कृष्टा गौः कर्दमात् ॥

वृन्दारक नाग कुञ्जरैः पूज्यमानम् ॥ ६२ ॥

एतैः पूजावचनैः पूज्यमानं समस्यते । सतत्पुरुषः । गोवृन्दारकः ।

गोनागः । गोकुञ्जरः । पूज्यमानं किम् । अयं माणवको नागः । मूर्खं इत्यर्थः ॥

## कतरकतमौ जातिपरिप्रश्ने ॥ ६३ ॥

एतौ जातिप्रश्ने वर्तमानौ सुबन्तेन समस्येते । स तत्पुरुषः । कतरः कठः कतरकठः । कतमकठः । जातिपरिप्रश्नएव डतमचो ( ५ । ३। ९३ सू ) विधाना तत्साहचर्यात् डतरस्यापि तदर्थस्यैव ग्रहणे सिद्धे जातिपरिप्रश्नग्रहण मन्यत्रापि डतम जस्तीति ज्ञापनार्थम् । जातिप्रश्नेकिम् । कतरो भवतो देवदत्तः । कतमो भवतां देवदत्तः ॥

## किं क्षेपे ॥ ६४ ॥

किंशब्दः सुबन्तेन समस्यते । किंराजा । किंसखा । किंगौः । किमः क्षेपइति (५ । ४ । ७०) समासान्ताभावः । क्षेपे किम् । को राजा पाटलीपुत्रे ॥

## पोटा युवति स्तोक कतिपय गृष्टिधेनुवशा वेहद्बष्कयणी प्रवक्तृ श्रोत्रिया ध्यापक धुर्तै र्जातिः ॥ ६५ ॥

स्त्रीपुंसलक्षणा पोटा । गृष्टि रेकवार प्रसवा । धेनुः प्रत्यग्रप्रसवा । वशा वन्ध्या । वेहद्गर्भघातिनी । बष्कयणी तरुणवत्सा । एतैर्जाति

स्तस्यते । स तत्पुरुषः । इभ्यपोटा । आढ्ययुवतिः । इभ्याढ्य शब्दयो र्भाष्ये दर्शना ज्जातिविशेषवाचित्वम् । अजातित्वेपिवा मासः । ब्राह्मणपोटा, ब्राह्मणयुवतिरिति तूदाहरणम् । अग्निद् कः । उदश्वित्कतिपयः । गोगृष्टिः । गोधेनुः । गोवशा । गोवेहत् गोबष्कयणी । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । कठ तः । धूर्तग्रहण मकृत्साथम् ॥

## प्रशंसावचनैश्च ॥ ६६ ॥

एतै र्जाति स्समस्यते। स तत्पुरुषः । मतल्लिकादयः प्रसिद्धाः सा वचना इह गृह्यन्ते । गोमतल्लिका । गोप्रकाण्डम् । प्रशस्ता रित्यर्थः । प्रकाण्डादे र्नियतलिङ्गत्वाद् भिन्नलिङ्गेन सामानाधि रण्योपपत्तिः । जातिःकिम् । कुमारी तल्लजः । अत्रासमा श्रपुंवत् ॥

## युवा खलति पलित वलिन जरतीभिः ॥ ६७ ॥

युवन्शब्दः खलत्यादिभिः समानाधिकरणै स्समस्यते । युवाचा सौ खलतिश्च युवखलतिः । युवपलितः । युववलिनः । युवति श्चा सौ जरतीच युवजरती । जरतीभिरिति स्त्रीलिङ्गनिर्देशोज्ञापकः,

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति ॥

तेन युवतिः खलतिः युवखलति रित्यादि । जरद्भिरित्यपि सूत्र पाठाश्रयणात् युवजरन्नित्यपि सिध्यति ॥

## कृत्यतुल्याख्या अजात्या ॥ ६८ ॥

कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्चाजातिवचनेन समस्यन्ते । स तत्पुरुषः । भोज्योष्णम् । पानीयशीतम् । तुल्यश्वेतः । सदृशश्वेतः । अजात्याकिम् । भोज्य ओदनः । प्रतिषेधसामर्थ्याद्विशेषणमित्यपि १।८७) नसमासः ॥

## वर्णो वर्णेन ॥ ६९ ॥

जातिविशेषवाचि वर्णविशेषवाचिना समानाधिकरणेन समस्यते । स तत्पुरुषः । कृष्णसारङ्गः । लोहितसारङ्गः । अवयवद्वारा समुदायमानः कृष्णशब्दः समानाधिकरणः ॥

## कुमारः श्रमणादिभिः ॥ ७० ॥

कुमारशब्दः श्रमणादिभिः समानाधिकरणैः समस्यते । श्रमणा कुलटेत्यादिभिः कुमारीशब्दः, अध्यापकाभिरूपकपण्डितादिभि लिङ्गविशिष्टपरिभाषयोभयलिङ्गः, समस्यतइतिविवेकः । कुमारी श्रमणा कुमारश्रमणा । कमारपण्डितः ॥

## चतुष्पादो गर्भिण्या ॥ ७१ ॥

चतुष्पाज्जातिवाचिनो गर्भिण्या समस्यन्ते । गोगर्भिणी । अजगर्भिणी । जातिरित्येव । कालाक्षीगर्भिणी । चतुष्पादः किम् । ब्राह्मणी गर्भिणी ॥

मयूरव्यंसकादयश्च ॥ ७२ ॥

एते समुदायाएव तत्पुरुषा निपात्यन्ते । मयूर श्चासौ व्यंसकश्च म
रव्यंसकः । व्यंसको धूर्तः । विशेषणस्यापि परनिपातार्थ मिदम्
अत्रकेचि दाख्याततुवन्तसमुदायाः केवलाख्यातसमुदाया श्च
विशेष्यु तत्पुरुषसंज्ञाः पठ्यन्ते । आहर चेलमिति यस्यां क्रिया
सा आहरचेला । आहरवसना । आहरवनिता ॥

आख्यात माख्यातेन क्रियासातत्ये ॥

अश्नीत पिबतेति यस्यां क्रियायां सा अश्नीतपिबता । खादत
दता । लुनीतपुनीता ॥

जहिकर्मणा बहुळ माभीक्ष्ण्ये कर्तरि ॥

जहीत्येत त्कर्मवाचिना समस्यते कर्त र्यभिधेये आभीक्ष्ण्ये गम्य
जहि स्तम्बमितियो वदति स जहिस्तम्बः । इत्यादि । मयूरव्यं
कादि राकृतिगणः । चकारो ऽवधारणार्थः । तेनान्येन समासा
वः । परमोमयूरव्यंसक इति ॥

इतिश्रीमहोपाध्यायश्रीमद्राघवसोमयाजिकुलावतंस श्रीमद्
द्वैत विद्याचार्यश्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य
कृतौ व्याकरणमिताक्षरायां वृत्तौद्वितीयस्या
ध्यायस्य प्रथमः पादः ॥

## पूर्वापराधरोत्तर मेकदेशि नैकाधिकरणे ॥ १ ॥

पूर्वादयो ऽवयवा अवयविना समस्यन्ते । एकं चे द्रव्यम् । स तत्पुरुषः । षष्ठीसमासापवादः । पूर्वः कायस्य पूर्वकायः । अपर कायः । अधरकायः । उत्तरकायः । एकदेशिनाकिम् । पूर्वं नाभेः कायस्य । एकाधिकरणेकिम् । पूर्वच्छात्राणाम् ॥

सर्वेणैकदेशे नाह्नः समासः ॥

सं[illegible] सायेति(६ । ३ । ११०)ज्ञापकात् । मध्याह्नः । सायाह्नः ॥

## अर्धं नपुंसकम् ॥ २ ॥

स[illegible]शवा च्यर्धशब्दः क्लीबे । सच समस्यते । अर्धं पिप्पल्याः अर्धपिप्पली । एकदेशिनेत्येव । अर्धं पशो र्देवदत्तस्य । देवदत्तः स्वामी । नत्वेकदेशो । एकाधिकरण इत्येव । अर्धं पिप्पलीनाम् ॥

## द्वितीय तृतीय चतुर्थ तुर्या ण्यन्यतरस्याम् ॥ ३ ॥

एता न्येकदेशि नैकाधिकरणेन वासमस्यन्ते । स तत्पुरुषः । पक्षेषष्ठीसमासः । द्वितीयं भिक्षायाः द्वितीयभिक्षा । भिक्षाद्वितीयम् । एवं तृतीयादि ॥

तुरीयस्यापीति कौमुद्याम् ॥

एकदेशिनाकिम् । द्वितीयं भिक्षाया भिक्षुकस्य । भिक्षुकेण नसमासः । एकाधिकरणेकिम् । द्वितीयंभिक्षाणाम् ॥

## प्राप्तापन्ने च द्वितीयया ॥ ४ ॥

एते द्वितीयान्तेन समस्येते । विधान सामर्थ्यात् द्वितीयासमासोपि । प्राप्तो जीविकां प्राप्तजीविकः । जीविकाप्राप्तः । आपन्नजीविकः । जीविकापन्नः । प्राप्तापन्ने अचेति च्छेदः । संधि रार्षः प्राप्तापन्नयो रकारश्चांतादेशो भवतीत्यर्थः । तेनप्राप्ता जीविकां प्राप्तजीविका, आपन्ना जीविकाम् आपन्नजीविके स्याकरे ॥

## कालाः परिमाणिना ॥ ५ ॥

परिमाणवद्वाचिना कालाः समस्यन्ते । षष्ठीसमासापवादः । जातस्य मासजातः । द्व्यहजातः । अ त्रोत्तरपदेन परिमाणिना गोः समासवचनमिति (२ । १ । ५१वा) त्रिपदः परि समासः ॥

## नञ् ॥ ६ ॥

नञ् समर्थेन समस्यते । अब्राह्मणः ॥

## ईषदकृता ॥ ७ ॥

ईषदित्येत दकृदन्तेन समस्यते ॥

ईष द्गुणवचनेनेति वाच्यम् ॥

ईषत्कडारः । ईषत्पिङ्गलः । ईषदुन्नतः । ईषद्रक्तः । गुणवचनेनकिम् । ईषद्गार्ग्यः ॥

षष्ठी ॥ ८ ॥

षष्ठ्यन्तं सुबन्तेन समर्थेन समस्यते । (राज्ञः पुरुषः राज पुरुषः ॥

कृद्योगाचषष्ठीसमस्यतइतिवक्तव्यम् ॥

ये: प्रवृश्चनः। प्रतिपदविधानेति ( १० वा । ) वक्ष्यमाणनिषेधापवादः ॥

काः

याजकादिभिश्च ॥ ९ ॥

न्तं याजकादिभिस्सह समस्यते । ) कर्तरिचेति निषेधाप

सं ... द्विजयाजकः । देवपूजकः ॥

ननिर्धारणे ॥ १० ॥

निर्धारणे या षष्ठी सानसमस्यते । नृणां द्विजः श्रेष्ठः ॥

प्रतिपदविधाना षष्ठी नसमस्यतइति वाच्यम् ॥

शेषषष्ठीव्यतिरिक्ता सर्वाप्रतिपदविधाना । सर्पिषोज्ञानम् । ज्ञोऽविदर्थस्येति ( २ । ३ । ५१ ) षष्ठी ॥

पूरण गुण सुहितार्थ सदव्यय
तव्यसमानाधिकरणेन ॥ ११ ॥

पूरणाद्यर्थैस्सदादिभिश्च षष्ठी नसमस्यते । पूरण । सतां पञ्चमः । सतां षष्ठः । गुण । पटस्य शौक्ल्यम् ॥

सदागुणवाचिनो ननिषेधः ॥

चन्दनगन्धः । खारीशतमपि नददाति ॥ - उत्तरपदार्थप्राधान्य मित्यादि भाष्यप्रयोगदर्शनात् गुणेन समासनिषेधो ऽनित्यः । तेन गोविंशतिः, पत्रगौरव मित्यादिसिद्धिः । सुहितं तृप्तिः । फलानां तृप्तः । सत् । चोरस्य द्विषन् । अव्यय । वृक्षस्योपरि । तव्य । द्विजस्यकर्तव्यम् । तव्यता भवत्ये व । द्विज कर्तव्यम् । समानाधिकरणेन । शुकस्य माराविकस्य । मारावो त्याह माराविकः । तदाहेति मा शब्दादिभ्यइति ( ४ । ४ । १ वा ) ठक् । शब्दनक्रियानिषेधक इत्यर्थः । माराविधेति पाठे माराविशब्दं दधातीति माराविधः । राज्ञः पाटलिपुत्रकस्य । सति समासे पूर्वनिपातानियमः स्यात् । यस्तु स्यादेव ॥

## क्तेनच पूजायाम् ॥ १२ ॥

पूजायां विहितक्तेन षष्ठी नसमस्यते । पूजोक्तिरुपलक्षणम् । मतः । राज्ञांबुद्धः । राज्ञां पूजितः । पूजायां किम् । छात्रवासित

## अधिकरणवाचिनाच ॥ १३ ॥

क्तेन षष्ठी नसमस्यते । इद मेषा मासितं गतं भुक्तंवा ॥

## कर्मणिच ॥ १४ ॥

उभयप्राप्तौ कर्मणि षष्ठ्या नसमासः । चित्रं गवां दोहो ऽशिक्षितेन गोपालकेन ॥

## तृजकाभ्यां कर्तरि ॥ १५ ॥

कर्तृषष्ठ्या स्तृजकाभ्यां नसमासः। भवतः शायिका। कर्तर्येव तृज्विधाना त्तद्योगे कर्तृषष्ठी नेति तृजुत्तरार्थः। कर्तरिकिम्। इक्षुभक्षिका ॥

## कर्तरिच्च ॥ १६ ॥

कर्तरि यौ तृजकौ ताभ्यां षष्ठ्या नसमासः। अपां स्रष्टा। वज्रस्य भर्ता। पत्यर्थ भर्तृशब्दस्य याजकादित्वा (२।२।९ सू) त्स मासः। भूभर्ता। सता मर्चकः ॥

## नित्यं क्रीडा जोविकयोः ॥ १७ ॥

नित्यं षष्ठीसमासः। उद्दालकपुष्पभञ्जिका। जोविकायांतु नि[illegible]लवकः। तृजलनास्ति क्रीडाजोविकयोः किम्। ओदनस्य [illegible]कः ॥

## कुगति प्रादयः ॥ १८ ॥

[illegible]दो गतिसंज्ञाः प्रादयश्च समर्थेन नित्यं समस्यन्ते। स तत्पुरु[illegible] प्रादिग्रहण मगत्यर्थम् ॥

कुः पापार्थे ॥

कुपुरुषः। गति। ऊरीकृत्य। प्रादयः।

दुर्निन्दायाम् ॥

दुष्पुत्रः ॥

स्वती पूजायाम् ॥

सुपुरुषः । अतिपुरुष ॥

आङीषदर्थे ॥

आपिङ्गलः । प्रायिकं चैतत् । अन्यत्रापि समासो दृश्यते । कोष्णम् । दुष्कृतम् । सुकृतम् । अतिस्तुतम् । आबद्धम् ॥

प्रादयो गताद्यर्थे प्रथमया ॥

प्रगत आचार्यः प्राचार्यः । प्रान्तेवासी ॥

अत्यादयः क्रान्ताद्यर्थे द्वितीयया ॥

अतिक्रान्तः खट्वा मतिखट्वः ॥

अवादयः क्रुष्टाद्यर्थे तृतीयया ॥

अवक्रुष्टः कोकिलया अवकोकिलः ॥

पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ॥

परिग्लानो ऽध्ययनाय पर्यध्ययनः । अलंकुमारिः ॥

निरादयः क्रान्ताद्यर्थे पञ्चम्या ॥

निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः ।

इवेन विभक्त्यलोपः पूर्वपदप्रकृति स्वरत्वं च ॥

वाससीइव । कन्येइव ॥

कर्मप्रवचनीयानां न समासः ॥

वृक्षमति विद्योतते । स्वती भवत्येव । सुराजा । अतिराजा ॥

गतिमतोदात्तवताच तिङा समासोवाच्यः ॥

अनुव्यचलत् । यत्परियन्ति ॥

## उपपद मतिङ् ॥ १९ ॥

अतिङन्तेन सुबन्त मुपपदं नित्यं समस्यते । स तत्पुरुषः । कुम्भकारः । अतिङन्तेन किम् । एधानाहारको व्रजति । तुमुन् ण्वुलौ क्रियायां क्रियार्थायामिति (३ । ३ । १०) तिङन्त स्योपपदत्वम् । सु... कम् । चर्मकारः । पदत्वा न्नलोपः । सुपे त्यनुवृत्त्यैव सिद्धे ऽतिङ्ग्रहणं ज्ञापकं पूर्वसूत्रे अस्मिंश्च सुपे ति तृतीयान्तं नानुवर्तत इति । तेन गतिकारकोपपदानां कृद्भि स्समासः प्राक्सुबुत्पत्तेः सिध्येत् । अश्वक्रीती ॥

## अमै वाव्ययेन ॥ २० ॥

उपपदसमासो ऽव्यये नामैव स्यात् । स्वादुङ्कारं भुङ्क्ते । अमा किम् । कालो भोक्तुम् । एवेति किम् । यस्मिन् सूत्रे अमेव केवलो विधीयते, नतुक्त्वा, तत्रत्य मुपपदं तेनामा समस्यत इति सूचनार्थम् । तेन अग्रे भोजं । अग्रे भुक्त्वा । अत्रसमासोन ॥

## तृतीयाप्रभृती न्यन्यतरस्याम् ॥ २१ ॥

उपदंश स्तृतीयाया (३।४।४७) मित्यादौ न्युपपदा न्यमा अ न्यतरस्यां समस्यन्ते। मूलकोपदंशं भुङ्क्ते। मूलके नोपदंशम्। अमा किम्। पर्याप्तो भोक्तुम्॥

क्त्वा च॥ २२॥

तृतीयाप्रभृतीनि क्त्वाप्रत्ययेन वा समस्यन्ते। उच्चैः कृत्य। उ च्चैःकृत्वा। तृतीयाप्रभृतीनिकिम्। अलङ्कृत्वा॥

शेषोबहुव्रीहिः॥ २३॥

प्रागुक्तसमासविषया दन्यत बहुव्रीहिःस्यात्। चित्रगुः। शेषःकि म्। उन्मत्तगङ्गम्॥

अनेक मन्यपदार्थे॥ २४॥

अनेकं सुबन्त मन्यपदस्यार्थे वर्तमानं समस्यते। स बहुव्रीहिः॥

अप्रथमाविभक्त्यर्थे चायमिष्यते॥

प्राप्त मुदकं ग्रामं प्राप्तोदको ग्रामः। ऊढ रथो ऽनड्वान्। उपहृत पशू रुद्रः। उद्धृतौदना स्थाली। चित्रगु र्देवदत्तः। वीरपुरुष को ग्रामः। प्रथमार्थेनु वृष्टे देवे गतः। अनेकोक्ते, र्बहूना मपि। सूक्ष्म जटकेशेन। ङ्यापोः संज्ञाच्छन्दसो (६।३।६३) रित्यत्र बहुव्ग्रहणा ज्जटाशब्दस्य ह्रस्वः॥

समानाधिकरणानां बहुव्रीहिरिष्यते॥

नेह। पञ्चभि र्भुक्त मस्य।

अव्ययानांच ॥

उच्चैर्मुखः ॥

सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च ॥

कण्ठेस्थितः कालो यस्य कण्ठेकालः । उष्ट्रमुख मिव मुख मस्य उष्ट्रमुखः ॥

समुदायविकार षष्ठ्याश्चोत्तरपदलोपश्च ॥

केशानां समुदाय श्चूडाऽस्य केशचूडः । सुवर्णस्य विकारो ऽलंकारोस्य सुवर्णालंकारः ॥

प्रादिभ्यो धातुजस्य वहुव्रीहि र्वोत्तरपदलोपश्च ॥

प्रपतितं पर्णं यस्य प्रपर्णः ॥

नञो स्त्यर्थानां वहुव्रीहि र्वोत्तरपदलोपश्च ॥

अविद्यमानः पुत्रोस्य अपुत्रः ॥

अस्तिक्षीरादयश्च ॥

अस्तिक्षीरा ब्राह्मणी । अस्तीत्यस्य निपातत्वा दव्ययाना मित्येव सिद्धे रिदं वार्तिकं व्यर्थम् ॥

## संख्यया ऽव्यया ऽऽसन्नादूराधिकसंख्याः संख्येये ॥ २५ ॥

संख्येयार्थया संख्यया अव्ययादिः समस्यते । स वहुव्रीहिः । उपदशाः । दशानां समीपस्था नवैकादशवा । वहुव्रीहौ संख्येये डच् (५।४।७३) । आसन्नविंशाः । अदूरविंशाः । अधिकत्व

त्वारिंशाः। द्वौत्रयोवा द्वित्राः। संख्यया किम्। पञ्चब्राह्मणाः।
अव्ययादिकिम्। ब्राह्मणाः पञ्च। संख्येये किम्। अधिका विंश
तिर्गवाम्॥

## दिङ्नामा न्यन्तराळे॥ २६॥

दिशां नामानि समस्यन्ते अन्तराळे वाच्ये। स बहुव्रीहिः। द
पूर्वा। तयो रन्तराळ मित्यर्थः। नामोक्त्याग्रूढयाश्रयणा दैन्द्रय
नांन॥

## तत्रतेनेदमिति सरूपे॥ २७॥

तत्रेति सप्तम्यन्ते ग्रहणविषये सरूपेपदे, तेनेति प्रहरणार्थे तृती
न्ते सरूपेपदेच, इदं युद्धमित्यर्थे मिथः समस्येते कर्मव्यतीहारे
बहुव्रीहिः। इतिशब्दा देताव ल्लभ्यते। केशेषु केशेषु गृहीत्वेदं
द्धं प्रवृत्तं केशाकेशि। दण्डादण्डि। इच् कर्मव्यते
(५।४।१२७) इतीच् समासान्तः। सों ऽव्ययम्। अन्ये
पि दृश्यतइति (६।३।१३७) दृशिग्रहणा त्कर्मव्यतीहारे
द्वौ पूर्वपदस्य दीर्घत्व मात्वंवा ऽनचोति ज्ञेयम्। मुष्टी मुष्टि।
ष्टि। अचितु अस्यसि। सरूपेकिम्। हलैश्च मुसलैश्च प्रह
द्धम्॥

## तेनसहेति तुल्ययोगे॥ २८॥

सहेत्येतत् तृतीयान्तेन समस्यते तुल्ययोगे। सबहुव्रीहिः। पुत्रे

ह सपुत्र आगतः । तुल्ययोगे किम् । सहैव दशभिः पुत्रैर्भारं वह
ति गर्दभी । पुत्रेषु विद्यमानेष्वित्यर्थः । तुल्ययोगत्वं प्रायिकम्
अन्यत्रापि दृश्यते । सचर्मकः । सलोमकः ॥

## चार्थे द्वन्द्वः ॥ २९ ॥

अने[illegible]न्तं चार्थे वर्तमानं समस्यते । सद्वंद्वः । समुच्चयान्वाचये
तरे[illegible]समाहारा श्चार्थाः । प्रत्येकमेकक्रिया संबन्ध स्समुच्चयः ।
हरि[illegible]रुं च भजस्वेति । प्रधानाप्रधानक्रियाद्वय संबन्धोऽन्वाचयः।
वटो भिक्षा मट, गां चानय । अन्योन्यापेक्ष यैकक्रियासंबन्ध इतरेत
रयोगः । संहति स्समाहारः । तत्रसमुच्चयान्वाचययोर्न समासः ।
अ[illegible]सामर्थ्यात् । धवखदिरपलाशाः । वाक्त्वचम् । द्वन्द्वाच्चुदषहा
न[illegible]दिति( ५ । ४ । १०६ ) टच्समासान्तः ॥

## उपसर्जनं पूर्वम् ॥ ३० ॥

सम[illegible]से उपसर्जनसंज्ञं प्राक्प्रयोज्यम् । प्रथमानिर्दिष्टं समास उपस
र्जनं( १ । २ । ४३ ) । अव्ययंविभक्तीत्यादि ( २ । १ । ६ ) ।
अधि[illegible]रि कष्टश्रितइत्यादि यथोदाहृतम् ॥

## राजदन्तादिषु परम् ॥ ३१ ॥

एषु पूर्वप्रयोगार्हं परं प्रयोज्यम् । दन्तानां राजा राजदन्तः । वन
स्याग्रेऽग्रे वणम् । निपातनादलुक् । वनंपुरगेत्यादिना (८।४।४)
णत्वम् । धर्मार्थौ । शब्दार्थौ । कामार्थौ ॥

धर्मादिष्वनियमः ॥

अर्थधर्मौ । अर्थशब्दौ । अर्थकामौ ॥

जायाया जंभावदंभावौ वा निपात्यौ ॥

जम्पती । दम्पती । जायापती । येषां पूर्वनिपात व्यभिचार स्ते/स-र्वेराजदन्तादिषु पठिताः ॥

द्वन्द्वे घि ॥ ३२ ॥

द्वन्द्वेघिसंज्ञं पूर्वं स्यात् । पटुगुप्तौ ॥

अनेकप्राप्तावेकस्य नियमोऽनियमः शेषे ॥

पटुशुक्लमृदवः । पटुमृदुशुक्लाः । द्वंद्वेकिम् । विस्पष्टं पटुः विस्पष्टपटुः । सुप्सुपेति (२ । १ । ४) समासः ॥

अजाद्यदन्तम् ॥ ३३ ॥

अजादि य ददन्तं तत् द्वन्द्वे पूर्वं स्यात् । ईश कृष्णौ ॥

बहुष्वनियमः ॥

अश्वरथेन्द्राः । इन्द्राश्वरथाः ॥

घ्यन्ता द्यन्तयो र्घ्यन्तं परम् ॥

इन्द्राग्नी । इन्द्रवायू । तपरःकिम् । अश्वावृषौ । वृषाश्वे

अल्पाच्तरम् ॥ ३४ ॥

अल्पाच्कं द्वंद्वे पूर्वं स्यात् । स्वार्थेपितरबनेन ज्ञाप्यते शिवकेशवौ ॥

द्वन्द्वनियमः ॥

शङ्खदुन्दुभिवीणाः । वीणाशङ्खदुन्दुभयः ॥

ऋतुभानां समानाक्षराणामानुपूर्व्येण पूर्वनिपातः ॥

हेमन्त[illegible]शिशिरवसन्ताः । कृत्तिकारोहिण्यौ । समानाक्षराणां किम् ।

ग्रीष्मव[illegible]न्तौ ॥

य दा[illegible] लघ्वक्षरं पूर्वम् ॥

कुश[illegible]म् ॥

अभ्यर्हितं च ॥

मा[illegible]पितरौ ॥

वर्णानामानुपूर्व्येण पूर्वनिपातः ॥

ब[illegible]णक्षत्रियविट्शूद्राः ॥

भ्रातुर्ज्यायसः ॥

यु[illegible]र्जुनौ ॥

संख्याया अल्पीयस्याः ॥

द्वौ[illegible]च द्वादश ॥

## सप्तमीविशेषणे बहुव्रीहौ ॥३५॥

सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात् । कण्ठेकालः । चित्रगुः ॥

बहुव्रीहौ सर्वनाम संख्ययोः प्राक्निपातः ॥

सर्वश्वेतः । द्विशुक्लः । मिथो ऽनयो स्समासे शब्दपरविप्रतिषेधा त्संख्या पूर्वं निपतेत् । अन्यः ॥

वा प्रियस्य ॥

प्रियगुडः । गुडप्रियः ॥

गड्वादिभ्यः परा सप्तमी वाच्या ॥

गडुकण्ठः । प्रायिकं चैतत् । कण्ठेगडुः ॥

## निष्ठा ॥ ३६ ॥

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । कृतकर्ता । विशेषणत्वस्यविव[illegible]योन त्वादेतद्वचनम् ॥

जातिकालसुखादिभ्यः परा निष्ठा वाच्या ॥

सारङ्गजग्धी । मासजाता । सुखजाता ॥

प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौवा ॥

अस्युद्यतः । दण्डपाणिः । उद्यतासि रित्यादिप्रयोगवशात् [illegible] ॥

## वाऽऽहिताग्न्यादिषु ॥ ३७ ॥

एषु निष्ठा पूर्वं वास्यात् । आहिताग्निः । अग्न्याहितः । जा[illegible]ः । पुत्रजात इत्यादि । आकृतिगणोऽयम् ॥

## कडाराः कर्मधारये ॥ ३८ ॥

कडारादयः कर्मधारये पूर्वं वास्युः । विशेषणत्वा न्नित्ये पूर्वत्वे

सर्वश्वेतः । द्विशुक्लः । मिथो ऽनयो स्समासे शब्दपरविप्रतिषेधा त्संख्या पूर्वं निपतेत् । मन्यः ॥

वा प्रियस्य ॥

प्रियगुडः । गुडप्रियः ॥

गड्वादिभ्यः परा सप्तमी वाच्या ॥

गडुकण्ठः । प्रायिकंचैतत् । कण्ठेगडुः ॥

## निष्ठा ॥ ३६ ॥

निष्ठान्तं बहुव्रीहौ पूर्वंस्यात् । कृतकटं । विशेषणत्वस्यैव त्वादेतद्वचनम् ॥

सुपां ...

रके द्वितीया स्यात् । ...दिभ्यः परा निष्ठा वाच्या

उभ सर्व तसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्विती या ऽम्रे डितान्तेषु ततोन्यत्रापि दृश्यते ॥

उभयतो ग्रामम् । सर्वतो ग्रामम् । धिग्जाल्मम् । उपर्युपरि ग्रा... अध्यधि ग्रामम् । अधोधो ग्रामम् । दृशिग्रहणात्

अभितः परित स्समयानिकषा हा प्रतियोगेऽपि ॥

अभितो ग्राम मित्यादि । बुभुक्षितं न प्रतिभाति किञ्चिद् ॥

## तृतीयाच होश्छन्दसि ॥ ३ ॥

कडार... होः कर्मणि तृतीया वा स्या च्छन्दसि । य वाग्याऽग्निहोत्रं जुहो

12-10-1895

,या स्यात् । शाकल्यसंहिता मनु प्रावर्षत् ॥

१३४ ,धिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ ९

सर्वश्चेतः, नेश्वरार्थेनच कर्मप्रवचनीयेन योगे सप्तमी स्यात् । उ त्तसंख्या हरे गुंणाः । स्वा त्स्त्रमितेवा विभक्तिः । अधिभुविरा . धरामे भूः ॥

मि पञ्च म्यपाङ्परिभिः । १० ॥

एतैः कर्मप्रवचनीयै र्योगे पंचमी स्यात् । अप हरेः, परिहरेः सारः । अपसाहचर्या त्परि वर्जनार्थोगृह्यते । लक्षणादौं तु प परि । आसकलाद् ब्रह्म ॥

प्रतिनिधि प्रतिदानेच यस्मात् ॥ ११

यस्मात् प्रतिनिधिप्रतिदाने स्त स्तत्र कर्मप्रवचनीययुक्ते प [illegible]मीन त् । प्रद्युम्नः कृष्णा त्प्रति । तिलेभ्यः प्रतियच्छति मा

गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्ट मनध्वनि ॥ १२ ॥

गत्यर्थानां कर्म ण्यध्ववर्जिते द्वितीया चतुर्थ्यौ स्तश्चेष्टे ॥ नायत्रा याति । चेष्टायां किम् । मनसा वनं याति । पुरि ग्रा ॥ णम् । पन्थानं याति । मार्गवा । उत्पथगतौ स्य गच्छति । चतुर्थीवेस्थे व वाच्ये द्वितीयाग्रहणं कृ [illegible] इति ॥ ग्रामायगन्ता । ग्रामं गन्ता । आक्रा [illegible]न पथे [illegible]प षष्ठी वाधितु [illegible]न्मतेतु सूत्र मत्याख्यानात्

कडार [illegible]होः कर्मणि तृते

12-10-1895

स्य गन्तेत्य व भवितव्यम् ॥

प्राप्त

णिः

## चतुर्थी संप्रदाने ॥ १३ ॥

दाने चतुर्थी स्यात् । विप्राय गां ददाति । अनभिहित इत्ये
यानीयो विप्रः ॥

त्वांच

र्किंच

### तादर्थ्ये चतुर्थी वाच्या ॥

क्रो . य दारु ॥

### क्लृप्यर्थे संपद्यमाने च ॥

गनाय संपद्यते । कल्पते । जायते ॥

### उत्पातेन ज्ञापिते च ॥

य कपिला विद्युत् ॥

### हितयोगे च ॥

तुः य हितम् ॥

ः फ

## पपदस्यच्च कर्मणि स्थानिनः ॥ १४ ॥

र्थंतसंयो
उपपदं यस्य तस्य स्थानिनः अप्रयुज्यमानस्य कर्म
र्गे किम् ।
। फलेभ्यो याति । क्रियार्थोपपदस्य किम् । प्रविश
स्त क्षिः स्थानी । न तु क्रियार्थोपपदः । कर्मणिकिम् ।
द्वय मध्यस्थटेन । स्थानिनः किम् । फलान्याहर्तुं याति ॥
द्वा भोक्ता ।

## च्च भाववचनात् ॥ १५ ॥

र्थ ये भाववचना घञादय स्तदन्ता च्चतुर्थी स्यात् । यागाय

याति । यष्टुं यातीत्यर्थः । तुमर्थात्किर् । यागः । भावेतिकिम् याजको व्रजति ॥

नमः स्वस्ति स्वाहा स्वधाऽलं वषड्योगाच्च ॥ १६ ॥

एभि र्योगे चतुर्थी स्यात् । हरये नम इत्यादि । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरि रलं प्रभुः समर्थ इत्यादि । आशिषि षष्ठीं बाधितुं चकारः । स्वस्ति गोभ्यो भूयात् ॥

उपपदविभक्तेः कारकविभक्ति र्बलीयसी ॥

नमस्करोति देवान् । नमस्कुर्मो नृसिंहायेत्यादिकं तु तादर्थ्यचतुर्थ्यादिना समाधेयम् ॥

मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ॥ १७ ॥

प्राणि वर्जिते मन्यतेः कर्मणि चतुर्थी वा स्या दनादरे । अनादरः कुत्सा । यदपेक्षया प्रकृष्टा कुत्सा विवक्षिता तत्र चतुर्थी । नञ्विवक्षायाम् । तेन प्रतिषेधयुक्तायां कुत्सायां चतुर्थीविधानं ते । न त्वां तृणाय मन्ये । न त्वां तृणं मन्ये । साम्येतु तृणं मन्ये । अनादरे किम् । वेद त्वां मन्ये । अप्राणिष्विति परित्यज्य

अनावादि ष्विति वाच्यम् ॥

तेन न त्वां श्वानं मन्ये, न त्वां शुनेमन्य इति सिध्यति । अनावादिषु किम् । नत्वा नावं मन्ये । न त्वाऽन्नं मन्ये । नत्वा काकं मन्ये ।

न त्वा शुनं मन्ये । नत्वा सृगालं मन्ये इत्यादि । प्रयोगानुसारा न्नाव्या[?]य. ज्ञेयाः । मन्यति ग्रहणं किम् । न त्वां तृणं मनुमहे ॥

## कर्तृकरणयो स्तृतीया ॥ १८ ॥

अनभिहिते कर्तरि करणेच तृतीयास्यात् । रामेण बाणेन हतो बाली । अनभिहिते किम् । रामः करोति ॥

### प्रकृत्यादिभ्य स्तृतीया ॥

प्रकृत्या ऽभिरूपः । प्रायेण वैयाकरणः । गोत्रेण गार्ग्यः । समेन याति । विषमेण याति । द्विद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून् क्रीणाति ॥

## सहयुक्ते ऽप्रधाने ॥ १९ ॥

स[?]र्थेन युक्ते अप्रधाने तृतीयास्यात् । पुत्रेण सहागतः पिता । एवं साकं सार्थं समं योगेऽपि । विनाऽपि तद्योगंतृतीया । वृद्धोयूनेति(१ २।६[?]) दर्शनात् । अप्रधाने किम् । शिष्येणसहोपाध्यायस्य गौः ॥

## येनाङ्गविकारः ॥ २० ॥

अङ्ग[?]न्दोर्स्वआ धजन्तः । येनाङ्गेन विकृते नाङ्गिनो विकार स्तत स्तृतीया स्यात् । अक्ष्णा काणः । अङ्गिविकार इति किम् । अक्षिविकार मस्य ॥

## इत्थंभूत लक्षणे ॥ २१ ॥

कंचि त्प्रकारं प्राप्त इत्थंभूतः । तल्लक्षणे तृतीया स्यात् । छात्रे णो

पाध्याय मद्राक्षीत् ॥

संज्ञोऽन्यतरस्यां कर्मणि ॥ २२ ॥

संपूर्वस्य जानातेःकर्मणि तृतीया वास्यात् । पित्रा पितरंवा संजा नीते ॥

हेतौ ॥ २३ ॥

कार्यप्रयोजको हेतुः । तद्वाचिन स्तृतीयास्यात् । धनेन कुलम् । फल स्यापि स्वज्ञानद्वारा कार्यभूत क्रिया प्रयोजकत्वा द्धेतुत्वम् । अध्य यनेन वसति । अध्ययनार्थं वसतीत्यर्थः ॥

अकर्त र्यृणे पञ्चमी ॥ २४ ॥

अकर्तृत्वेन विवक्षिता दृणा द्धेतोः पञ्चमी स्यान्न तृतीया । शता द्बद्धः । अकर्तरि किम् । शतेन वन्धितः । शत मृणं वन्धने प्रयो जक कर्तृ ॥

विभाषा गुणेऽस्त्रियाम् ॥ २५ ॥

गुणे हेता वस्त्रीलिङ्गे वा पञ्चमी तृतीये । जाड्येन जाड्याद्वा ब द्धः । गुणे किम् । धनेनकुलम् । अस्त्रियां किम् । बुद्ध्या मुक्तः ॥

षष्ठी हेतु प्रयोगे ॥ २६ ॥

हेतुशब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति

सर्वनाम्न स्तृतीयाच ॥ २७ ॥

हेतुशब्दप्रयोगे सर्वनाम्न स्तृतीयाषष्ठ्यौ स्तः । कस्यहेतोः । केन

हेतुना ॥

निमित्त कारण हेत्वर्थेषु सर्वासां प्रायदर्शनम् ॥

किं निमित्तम् । केननिमित्तेन । कस्मै निमित्ताये त्यादि । एवं किं कारणं, को हेतुः, किं प्रयोजन मित्यादि ॥

## अपादाने पञ्चमी ॥ २८ ॥

अपादाने कारके पञ्चमी स्यात् । ग्रामादायाति । धावतोश्वा त्पतति ॥

ल्यब्लोपे कर्मण्यधिकरणेच ॥

प्रासादा त्प्रेक्षते । आसना त्प्रेक्षते । प्रासाद मारुह्य, आसने उपविश्य, प्रेक्षत इत्यर्थः ॥

प्रश्ना ख्यानयोश्च ॥

कुतः स्त्वम् । नद्याः ॥

यतश्चाध्वकालनिर्माणं तत्रपञ्चमी तद्युक्ता

दध्वनः प्रथमासप्तम्यौ ॥

वनाद् ग्रामो योजनं योजनेवा । कार्तिक्या आग्रहायणी मासे ॥

## अन्यारादि तरर्ते दि क्छब्दाञ्चूत्तर पदाजाहियुक्ते ॥ २९ ॥

एभि र्योगे पञ्चमी स्यात् । अन्यइ त्यर्थग्रहणम् । अन्यः कृष्णात् । भिन्नो रामात् । आरा द्वनात् । इतरो रामात् । ऋते कृष्णात् । दि

स्छन्द । पूर्वो ग्रामात् । शब्द ग्रहणं देशादिवृत्तिभ्योपि दिक्छन्दे भ्योयथा स्यादिति । अथ मस्मा त्पूर्वा वेशः । अञ्चूत्तरपद । प्राग् ग्रामात् । आच् । दक्षिणा ग्रामात् । आहि । दक्षिणाहि ग्रामात् ॥

## षष्ठ्यतसर्थप्रत्ययेन ॥ ३० ॥

एतद्योगे षष्ठी स्यात् । दक्षिणतोग्रामस्य । पुरस्ताद् ग्रामस्य

## एनपा द्वितीया ॥ ३१ ॥

एनब्योगे द्वितीयाषष्ठ्यौ स्तः । दक्षिणेन ग्रामं ग्रामस्यवा ॥

## पृथग्विनानानाभिस्तृतीया ऽन्यतर स्याम् ॥ ३२

एभि र्योगे तृतीया पञ्चमी द्वितीयाः स्युः । पृथ ग्रामेण रामं द्वा । एवं विना नाना ॥

## करणे च स्तोकाल्प कृच्छ्रकतिपय स्यासत्त्ववचनस्य ॥ ३३ ॥

एभ्योसत्त्वार्थेभ्यः करणे तृतीयापञ्चम्यौस्तः । एतेषां धर्ममात्र या मसत्त्ववचनता । स्तोकेन स्तोकाद्वा मुक्तः । एव मल्पे नेत्यादि । असत्त्वेति किम् । स्तोकेन विषेण हतः । करणे किम् क्रयाविशेषणे माभूत् । स्तोकं चलति ॥

## दूरान्तिकार्थेभ्यः षष्ठ्य न्यतरस्याम् ॥ ३४ :

एभि र्योगे षष्ठीपञ्चम्यौ स्तः । दूरं विप्रकृष्टं मन्तिकं निकटं ग्रामाद्वा ॥

16-10-1895

दूरान्तिकार्थेभ्यो द्वितीया च ॥ ३५ ॥

एभ्यो ऽसत्त्ववाचिभ्यः प्रातिपदिकार्थे द्वितीयापञ्चमीतृतीयाः स्युः । ग्रामस्य दूरं दूरा दूरेण निकटं निकटा निकटेनवा । असत्त्वे किम् । दूरः पन्था इत्यादि ॥

सप्तम्यधिकरणे च ॥ ३६ ॥

अधिकरणे सप्तमी स्यात् । चकारा द्दूरान्तिकार्थेभ्यः । कटे आस्ते । ग्रामस्य दूरे अन्तिके वा ॥

क्तस्ये न्विषयस्य ॥

अधीती व्याकरणे ॥

साध्व साधु प्रयोगे च ॥

साधुः कृष्णो मातरि । असाधु र्मातुले ॥

अर्हाणां कर्तृत्वे अनर्हाणा मकर्तृत्वे तद्वैपरीत्ये च ॥

सत्सु तरत्सु असन्त आसते । असत्सु तिष्ठत्सु सन्त स्तरन्ति । असत्सु तरत्सु सन्त स्तिष्ठन्ति ॥

निमित्ता त्कर्मसंयोगे ॥

निमित्तं फलम् । चर्मणि द्वीपिनं हन्ति । कर्मसंयोगे किम् । वेतने न धान्यं लुनाति ॥

यस्य च भावेन भावलक्षणम् ॥ ३७ ॥

यस्य क्रियया क्रियान्तरं लक्ष्यते तत स्सप्तमी स्यात् । गोषु दुह्य मानासु गतः । भावेन किम् । योजटिल स्स भुङ्क्ते । आख्येति कि म् । यो भुङ्क्ते स देवदत्तः ॥

## षष्ठी चानादरे ॥ ३८ ॥

अनादराधिके भावलक्षणे भाववतः षष्ठी सप्तम्यौस्तः । रुदति रुद तोवा प्राव्राजीत् । रुदन्त मनादृत्य लर्थः ॥

## स्वामी श्वराधिपति दायाद साक्षि प्रति भू प्रसूतैश्च ॥ ३९ ॥

एभि र्योगे षष्ठी सप्तम्यौस्तः । गवां स्वामी, गोषु स्वामीत्यादि ॥

## आयुक्त कुशलाभ्यां चासे वायाम् ॥ ४० ॥

आभ्यां योगे षष्ठीसप्तम्यौ स्त स्तात्पर्ये । आयुक्तः कुशलोवा ह रिपूजने हरिपूजनस्यवा । आयुक्तो व्यापृतः । आसेवायां किम् । आयुक्तो गौ श्शकटे ॥

## यतश्च निर्धारणम् ॥ ४१ ॥

जातिगुणक्रियाभि रेकदेशस्य पृथक्करणं निर्धारणं यत स्तत षष्ठीसप्तम्यौ स्तः । नृणां नृषुवा द्विजा श्श्रेष्ठाः । गवां गोषुवा कृष्णा गौ र्बहुक्षीरा । गच्छतां गच्छत्सुवा धावन् शीघ्रः ॥

## पञ्चमी विभक्ते ॥ ४२ ॥

विभागवति निर्धारणाश्रये पञ्चमी स्यात् । पूर्वापवादः । माथुराः पाटलिपुत्रकेभ्य स्सुकुमारतराः ॥

साधुनिपुणाभ्यां मर्चायां सप्तम्यप्रतेः ॥ ४३ ॥

आभ्यां योगे सप्तमी स्यात् । नतु प्रते र्योगे । साधु र्निपुणोवा पितरि रामः । अर्चायां किम् । साधुर्भृत्यो राज्ञः । तत्त्वकथने न ॥

अप्रत्यादेरितिवाच्यम् ॥

साधु र्मातरं प्रति पर्यनुवा ॥

प्रसितोत्सुकाभ्यां तृतीयाच ॥ ४४ ॥

आभ्यां योगे तृतीयासप्तम्यौ स्तः । प्रसितः प्रसक्तः । प्रसित उत्सुको हरौ हरिणावा ॥

नक्षत्रे च लुपि ॥ ४५ ॥

लुबन्ता न्नक्षत्रा त्तृतीया स्यात् । पक्षे अधिकरणत्वा त्सप्तमी । पुष्ये पुष्येणवा गच्छेत् । पुष्ययुक्ते काल इत्यर्थः । लुपि किम् । पुष्ये शनिः । अधिकरण इत्येव । अद्य पुष्यः ॥

प्रातिपदिकार्थ लिङ्ग परिमाण वचन मात्रे प्रथमा ॥ ४६ ॥

अन्वयव्यतिरेकाभ्यां प्रातिपदिका द्यो ऽर्थः प्रतीयते जात्यादिः स प्रातिपदिकार्थः । लिङ्गं स्त्रीत्वादि । परिमाणं खार्यादि । वचनमेकत्वादि । मात्रशब्दस्यप्रत्येकं संबन्धः । प्रातिपदिकार्थमात्रे

संहतौ व्यस्तौ विपर्यस्तौ वा । चोरस्य निहन्ति, प्रहन्ति, प्रणिह न्तिवा । चोरस्योन्नाटयति । क्राथयति । पिनष्टि । हिंसायां किम् । धानाः पिनष्टि । शेषएव । चोरं निहन्ति ॥

## व्यवहृपणो स्समर्थयोः ॥ ५७ ॥

तुल्यार्थयो रनयोः कर्मणि षष्ठी स्यात् । द्यूते क्रयादि व्यवहारे चा नयो स्तुल्यार्थता । शतस्य व्यवहरते, पणतेवा । समर्थयोः किम् । शलाकां व्यवहरति । विक्षिपतीत्यर्थः । ब्राह्मणं पणायति । स्तौती त्यर्थः । शेषएव । शतं व्यवहरति ॥

## दिवस्तदर्थस्य ॥ ५८ ॥

द्यूतव्यवहारार्थस्य दिवः कर्मणि षष्ठी स्यात् । शतस्य दीव्यति । तदर्थस्येति किम् । ब्राह्मणान् दीव्यति ॥

## विभाषोपसर्गे ॥ ५९ ॥

दिव स्तदर्थस्ये त्येव । शतस्य शतंवा प्रतिदीव्यति । उपसर्गे किम् । शतस्य दीव्यति । तदर्थस्य किम् । शलाकां प्रतिदीव्यति ॥

## द्वितीया ब्राह्मणे ॥ ६० ॥

दिवस्तदर्थस्य कर्मणि द्वितीया स्या च्छन्दसि । गां मस्य तदह स्स भायां दीव्येयुः । छन्दसि किम् । शतस्य दीव्यति ॥

## प्रे ष्यब्रु वो र्हविषो देवता स म्प्रदाने ॥ ६१ ॥

प्रेष्येति इष्यते र्लोण्मध्यमैकवचनम् । तत्साहचर्या द्ब्रुविरपि तद्विष

यो ग्राह्यः । अनयोः कर्मणि हविषः षष्ठी स्यात् देवतासंप्रदाने । अग्नये छागस्य वपाया मेदसः प्रेष्यानुब्रूहिवा । अनयोः किम् । अग्नये छागं वपां जुहुधि । हविषः किम् । अग्नये गोमयानि प्रेष्य । देवता किम् । माणवकाय पुरोडाशान् प्रेष्य ॥

प्रस्थितस्य न ॥

इन्द्राग्निभ्यां छागं हवि र्वपां मेदः प्रस्थितं प्रेष्य ॥

चतुर्थ्यर्थे बहुलं छन्दसि ॥ ६२ ॥

चतुर्थ्यर्थे षष्ठी वास्या च्छन्दसि । गोधा कालका दार्वाघाट स्ते वनस्पतीनाम् । वनस्पतिभ्य इत्यर्थः । बहुलं किम् । कृष्णो रात्र्यै ॥

षष्ठ्यर्थे चतुर्थी वाच्या ॥

या खर्वेण पिबति तस्यै खर्वो जायते ॥

यजेश्च करणे ॥ ६३ ॥

बहुलं छन्दसि षष्ठी । घृतस्य यजते । घृतेनयजते ॥

कृत्वोर्थ प्रयोगे कालेऽधिकरणे ॥ ६४ ॥

छन्दसीति निवृत्तम् । कृत्वोर्थानां प्रयोगे कालवाचि न्यधिकरणे षष्ठी स्यात् । पञ्चकृत्वोऽह्नो भुङ्क्ते । द्विरह्नो भुङ्क्ते । कृत्वोर्थग्रहणं किम् । अहनि शेते । प्रयोगग्रहणं किम् । अहनि भुङ्क्ते । अत्र द्वि स्त्रिर्वेति गम्यते । काले किम् । द्विः कांस्यपात्र्यां भुङ्क्ते । अधिकरणे किम् । द्विरह्नो भुङ्क्ते । शेष इत्येव । द्विरहन्यधीते ॥

## कर्तृकर्मणोः कृति ॥ ६५ ॥

कृत्प्रयोगे कर्तरि कर्मणिच षष्ठीस्यात् । भवत श्शायिका । अपां स्र
ष्टा । कर्तृकर्मणोः किम् । शस्त्रेण भेत्ता । कृति किम् । तद्धिते मा
भूत् । कृतपूर्वी कटम् । शेषइति निवृत्तम् । कर्मणो ह्यनुवृत्तौ पुनः
कर्मग्रहणात् ॥

## उभयप्राप्तौ कर्मणि ॥ ६६ ॥

उभयोः प्राप्ति र्यस्मिन् कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो ग
वां दोहो ऽशिक्षितेन गोपालकेन ॥

स्त्रीप्रत्यययो रकाकारयोः प्रयोगेनेतिवाच्यम् ॥

भेदिका बिभित्सा वा रुद्रस्य जगतः ॥

शेषे विभाषा ॥

शेषेस्त्रीप्रत्यये वा । विचित्राहि सूत्रस्य कृतिः पाणिनेः पाणिनि
नावा ॥

केचि दविशेषेण विभाषा मिच्छन्ति ॥

शब्दाना मनुशासन माचार्ये णाचार्यस्यवा ॥

## क्तस्यच वर्तमाने ॥ ६७ ॥

वर्तमानार्थक्तस्य योगे षष्ठी स्यात् ।नलोके त्यादि (२ । ३ । ६९)नि
षेधापवादः । राज्ञां मतः । क्तस्यकिम् । ओदनं पचमानः । वर्त
माने किम् । ग्रामं गतः । नपुंसके भावे क्तस्ययोगे शेषविवक्षायां,

19-10-1895

छात्रस्य हसितम् । कर्तृत्वेतु च्छात्रेण हसितम् ॥

## अधिकरण वाचिनश्च ॥ ६८ ॥

क्तस्ययोगे षष्ठी । इद मेषा मासितं गतं भुक्तंवा । क्तोऽधिकरणे चेति (३ । ४ । ७६) क्तः ॥

## नलोकाव्यय निष्ठा खलर्थ तृनाम् ॥ ६९ ॥

एभि र्योगे नषष्ठी । लादेशाः । कुर्वन्, कुर्वाणः, चकृवान्, चक्राणः, चक्रिः सृष्टिं हरिः । उ । हरिं दिदृक्षुः । अलंकरिष्णु र्वा । उक । दैत्यान् घातुकः ॥

कमेर्भाषाया मनिषेधः ॥

लक्ष्म्याः कामुकः । अव्यय । जगत् सृष्ट्वा । सुखं कर्तुम् ॥

तोसुन् कसुन्नोन ॥

पुरा सूर्य स्योदेतोः । पुराक्रूरस्य विसृपः । निष्ठा । विष्णु र्दैत्यान् हतवान् । विष्णुना दैत्या हताः । खलर्थ । ईषत्करः प्रपञ्चोहरिणा । तृन्निति शतृतृकारस्य तृनो नकारेण प्रत्याहारः । शानन् । सोमं पवमानः । चानश् । आत्मानं मन्द्यमानः । शतृ । वेदमधीयन् । तृन् । कर्ता लोकान् ॥

द्विष श्शतुर्वा ॥

मुरस्य मुरंवा द्विषन् ॥

## अकेनो र्भविष्य दाधमर्ण्य योः ॥ ७० ॥

भविष्य त्यकस्य भविष्यदाधमर्ण्यार्थेनश्चयेगे कर्मणिनषष्ठी। सतः पालको हरि रवतरति। व्रजं गामी। शत मृणं दायी। भविष्यदाधमर्ण्ययोः किम्। यवानां लावकः। अवश्यं कारी कटस्य ॥

## कृत्यानां कर्तरिवा ॥ ७१ ॥

कृत्यानां प्रयोगे कर्तरि वा षष्ठी। मया ममवा सेव्यः शिवः। कतरि किम्। गेयो माणवक स्साम्नाम् ॥

उभयप्राप्तौ कृत्ये नषष्ठी ॥

कष्टव्या ग्रामं शाखा वेवदत्तेन ॥

## तुल्यार्थै रतुलोपमाभ्यां तृतीयान्यतरस्याम् ॥ ७२ ॥

एतै र्योगे तृतीयाषष्ठ्यौ स्तः। कृष्णस्य कृष्णे नवा तुल्य स्सम स्सदृशोवा प्रद्युम्नः। अतुलोपमाभ्यां किम्। तु लोपमावा कृष्णस्य नास्ति ॥

## चतुर्थी चाशि ष्यायुष्य मद्रभद्र कुशल सुखार्थ हितैः ॥ ७३ ॥

आयुष्यार्यादिभि र्योगे चतुर्थीषष्ठ्यौ स्त आशिषि। कृष्णाय कृष्णस्यवा आयुष्यं भूया च्चिरं जीवितं भूयात्। एवं मद्रार्थादिभिः।

आशिषि कि । आयुष्यं देवदत्तस्य रूढम् ॥

इति श्रीमहोपाध्यायश्रीमद्राघवसोमयाजिकुलावतंस श्रीमद्
द्वैत विद्याचार्यश्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य
कृतौ व्याकरणमिताक्षरायां वृत्तौ द्वितीयस्या
ध्यायस्य तृतीयः पादः ॥



## द्विगुरेकवचनम् ॥ १ ॥

द्विगोरर्थस्समाहारे एकवत्स्यात् । पञ्चपूली । द्विगो ( ४ । १ । २१ ) रिति ङीप् ॥

## द्वन्द्वश्च प्राणि तूर्य सेनाङ्गानाम् ॥ २ ॥

प्राण्यङ्गादीनां द्वंद्व एकवत्स्यात् । प्राण्यङ्गे । पाणिपादम् । तूर्याङ्गे । मार्दङ्गिक पाणविकम । सेनाङ्गे । रथिकाश्वारोहम् । समाहार स्यैकत्वा देकत्वे सिद्धे, प्राण्यङ्गादीनां समाहारएव द्वन्द्वः, दधिपयआदीना मितरेतरयोगएव, वृक्षमृगादीना मुभयथे त्येतदर्थ मिदंप्रकरणम् ॥

## अनुवादे चरणानाम् ॥ ३ ॥

चरणाध्यायिनां द्वन्द्व एकवत्स्यादनुवादे गम्ये । ज्ञात ज्ञापन मनुवादः । उदगा त्कठकालापम् । प्रत्यष्ठा त्कठकौथुमम् । कठादीना मुदय प्रतिष्ठयो र्ज्ञातयो र्ज्ञापनटद मुदाहरणम् । अज्ञातयो र्ज्ञापने प्रत्युदाहरणम् । उदगुः कठकालापाः । प्रत्यष्ठुः कठकौथुमाः ।

स्थेणो रद्यतन्यां चेति वाच्यम् ॥

नेह । अनन्दिषुः कठकालापाः । उत्तिष्ठन्ति कठकालापाइति । अद्यतनीति लुङः पूर्वाचार्य संज्ञा ॥

## अध्वर्युक्रतु रनपुंसकम् ॥ ४ ॥

यजुर्वेदविहित सोमयाग वाचिना मनपुंसकानां द्वन्द्वएकवत्स्यात् । अ र्कीश्वमेधवु । साया ह्नातिरात्रम् । यजुर्वेदे किम् । इषुवज्रौ । अनपुं सकं किम् । राजसूय वाजपेयौ । सोमेति किम् । दर्शपूर्ण मासौ ॥

## अध्ययन तोऽविप्रकृष्टाख्यानाम् ॥ ५ ॥

संनिहिताध्ययन प्रवृत्ति निमित्तकानां द्वन्द्व एकव त्स्यात् । पदकक्र मकम् । अत्र पदाध्ययन क्रमाध्ययनयोः प्रवृत्तिनिमित्तयोः संनिधा नम् । अध्ययनतः किम् । पितापुत्रौ । अविप्रकृ ष्टाख्यानां किम् । याज्ञिक वैयाकरणौ । अत्र यज्ञव्याकरणाध्ययनयोः संनिधाने प्रमा णाभावः ॥

## जाति रप्राणिनाम् ॥ ६ ॥

प्राणिवर्ज जातिवाचिनां द्वंद्व एकव त्स्यात् । धानाशष्कुलि । जा तिःकिम् । नन्दक पाञ्चजन्यौ । प्राणिनांतु ब्राह्मणक्षत्रियौ । नत्रि वयुक्त न्यायेन द्रव्यजातीनामेव नियमः । नेह । रूपरसौ । गमना कुञ्चने ॥

द्रव्यमात्रविवक्षायांन ॥

बदरामलके स्तः ॥

## विशिष्टलिङ्गो नदीदेशोऽग्रामाः ॥ ७ ॥

ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां द्वंद्व एकव त्स्यात् । गङ्गाशो णम् । कुरुकुरुक्षेत्रम् । भिन्नलिङ्गानां किम् । गङ्गायमुने । मद्रकेक याः । ग्रामेतु जाम्बव शालूकिन्यौ ॥

## क्षुद्रजन्तवः ॥ ८ ॥

एषां द्वन्द्व एकवत्स्यात् । यूकालिक्षम् । आनकुलात् क्षुद्रजन्तवः ॥

## येषांच विरोध शाश्वतिकः ॥ ९ ॥

नियतविरोधवाचिनां द्वंद्व एकवत् । अश्वमहिषम् । काकोलूकम् । अत्रविभाषा वृक्षेति ( २ । ४ । १२ ) पशुशकुनिद्वंद्वे विकल्पबाधना र्थं श्चकारः ॥

## शूद्राणा मनिरवसितानाम् ॥ १० ॥

अबहिष्कृतानां शूद्राणां द्वंद्व एकवत्स्यात् । रजकतन्तुवायम् । बहि ष्कृतानांतु चण्डाल मृतपाः । त्रैवर्णिकैश्चि ष्शूद्रः । यैर्भुक्तं पात्रं स्मृत्युक्तसंस्कारेण नशुध्यति, ते बहिष्कृताः ॥

## गवाश्व प्रभृतीनिच ॥ ११ ॥

एतानि कृतैकत्वानि साधूनि । गवाश्वम् । दासीदासमित्यादि । ग वाश्वमित्य त्रावङपि विवक्षितः । तेन गोश्वाः, गोश्वमिति पशुविक ल्पएव ॥

## विभाषा वृक्ष मृगतृण धान्य व्यञ्जनपशुशकुन्य श्ववडव पूर्वापराधरोत्तराणाम् ॥ १२ ॥

एषां द्वंद्व एकवद्वा । वृक्षादौ विशेषाणामेव ग्रहणम् । चूताशोकम् चूताशोकौ । रुरुपृषतम् । कुशकाशम् । व्रीहियवम् । दधिघृतम्

गोमहिषम् । शुकबकम् । पूर्वापरम् । अधरोत्तरम् । पक्षे रुरुपृषता वित्यादि ॥

फल सेना वनस्पति मृगशकुनि क्षुद्रजन्तु
तृणधान्यानां बहुप्रकृतिरेव द्वन्द्व एकवत् ॥

बदराणि चामलकानिच बदरामलकम् । द्विप्रकृतौतु बदरामलके । रथिकाश्वारोहौ । चूताशोकौ । रुरुपृषतौ । शुककाकौ । यूकालिक्षे । व्रीहियवौ । कुशकाशौ ॥

## विप्रतिषिद्धं चानधिकरणवाचि ॥ १३ ॥

अद्रव्यार्थानां विप्रतिषिद्धानां द्वन्द्व एकवद्वा । शीतोष्णं शीतोष्णे । विप्रतिषिद्धं किम् । कामक्रोधौ । द्रव्येतु शीतोष्णे उदके ॥

## न दधिपयआदीनि ॥ १४ ॥

एतानि नैकवत्स्युः । दधिपयसी । इध्माबर्हिषी । निपातनाद्दीर्घः । उलूखलमुसले । ऋक्सामे । वाङ्मनसे ॥

## अधिकरणैतावत्त्वे च ॥ १५ ॥

द्रव्यपरिमाणावगमे नैकवद्भावः । दश दन्तोष्ठाः ॥

## विभाषा समीपे ॥ १६ ॥

द्रव्यसंख्यासमीपे गम्ये एकवद्वा । उपदशं दन्तोष्ठम् । उपदशा दन्तोष्ठाः ॥

एकवद्भावे ऽव्ययीभावस्यै वान्यत्र बहुव्रीहेरे वानु
प्रयोगः समीपार्थ इष्यते ॥

## स नपुंसकम् ॥ १७ ॥

यस्यैकवद्भाव इस नपुंसकं स्यात् । तथैं वोदाहृतम् ॥

अकारान्तोत्तरपदो द्विगुःस्त्रिया मिष्यते ॥

पञ्चपूली ॥

आपन्तोवा ॥

पञ्चखट्वम् । पञ्चखट्वी ॥

अनो नलोपश्च वाच स्त्रियाम् ॥

पञ्चतक्षम् । पञ्चतक्षी ॥

पात्राद्यौ न ॥

पञ्चपात्रम् । चतुर्युगम् । त्रिभुवनम् ॥

## अव्ययी भावश्च ॥ १८ ॥

नपुंसकम् । उन्मत्तगङ्गम् । चकारो ऽनुक्तसमुच्चयार्थः ॥

पुण्यसुदिनाभ्या महनः ॥

पुण्याहम् । सुदिनाहम् ॥

पथ स्संख्याव्ययादेः ॥

त्रिपथम् । चतुष्पथम् । षष्ठी समासः । सुपथम् । विपथम् ॥

क्रियाविशेषणाना मेकवचनंश्च ॥

मृदु पचति ॥

22-10-1895

## तत्पुरुषो ऽनञ् कर्मधारयः ॥ १९ ॥

विभाषा सेना सुरे ( २ । ४ । २५ ) त्येत त्सूत्रमालोपयोगीदमत्र वैचित्र्या त्कथम् । नञ् कर्मधारयव्यतिरिक्त स्तत्पुरुषो नपुंसकं स्या दि त्यधिक्रियते । द्विजसेनं । द्विजसेना । तत्पुरुषो नञ् कर्मधारयइ त्येव । दृढसेनो राजा । असेना । परमसेना ॥

## संज्ञायां कन्थोशीनरेषु ॥ २० ॥

कन्थान्त स्तत्पुरुषः क्लीबं स्या त्संज्ञायाम् । साचेत्कन्थोशीनरे भवा । सौशमिकन्थम् । संज्ञायां किम् । वीरणकन्था । उशीनरेषु कि म् । दासि कन्था । परवल्लिङ्गापवादार्थ मिदंनकरणम् ॥

## उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ॥ २१ ॥

उपज्ञायत इत्युपज्ञा । उपक्रम्यतइ त्युपक्रमः । द्वंद्वैकवद्भावः । उपज्ञो पक्रमयो रादे राख्यानेच्छायां तदन्त स्तत्पुरुषः क्लीबं स्यात् । पाणि ने रुपज्ञा पाणिन्युपज्ञं व्याकरणग्रन्थः । ते नादौ कृतइत्यर्थः । नन्द स्योपक्रमः नन्दोपक्रमं द्रोणः । ते नादा वुपक्रान्त इत्यर्थः । उपज्ञो पक्रमं किम् । वाल्मीकि श्लोकाः । तदादिकिम् । देवदत्तोपज्ञो देव दत्तोपक्रमो रथः ॥

## छाया बाहुल्ये ॥ २२ ॥

पूर्वपदार्थबाहुल्ये छायान्त स्तत्पुरुषः क्लीबं स्यात् । शलभानां छा या शलभच्छायम् । बाहुल्ये किम् । कुड्यच्छाया ॥

## सभा राजामनुष्यपूर्वा ॥ २३ ॥

राजामनुष्यपूर्वस्समान्तस्तत्पुरुषः क्लीबं स्यात् । इनसभम् । ईश्वरसभम् ॥

पर्यायस्यैवेष्यते ॥

नेह । राजसभा । अमनुष्यशब्दो रूढ्या रक्षः पिशाचादीनाह । रक्षस्सभम् । राजामनुष्यपूर्वा किम् । चन्द्रगुप्तसभा ॥

## अशालाच ॥ २४ ॥

अशालार्थः समान्तस्तत्पुरुषः क्लीबं स्यात् । स्त्रीसभम् । स्त्रीसंघात इत्यर्थः । अशाला किम् । धर्मसभा । धर्मशालेत्यर्थः ॥

## विभाषा सेना सुरा च्छाया शाला निशानाम् ॥ २५ ॥

एतदन्तस्तत्पुरुषो वा क्लीबं स्यात् । द्विजसेनम् । यवसुरम् । कुड्यच्छाया । गोशालम् । श्वनिशम् । पक्षेद्विजसेनेत्यादि ॥

## परवल्लिङ्गं द्वंद्व तत्पुरुषयोः ॥ २६ ॥

इतरेतरयोगद्वंद्वस्य तत्पुरुषस्यच परवल्लिङ्गं स्यात् । कुक्कुटमयूर्यौ इमे । मयूरी कुक्कुटौ इमौ । तत्पुरुषस्य । अर्धपिप्पली ॥

द्विगुप्राप्तापन्नालंपूर्व गतिसमासेषु न ॥

पञ्चकपालः । प्राप्तजीविकः । आपन्न जीविकः । निष्कौशाम्बिः ॥

पूर्ववदश्ववडवौ ॥ २७ ॥

अत्र पूर्ववल्लिङ्गं स्यात् । अश्वश्च वडवा च अश्ववडवौ । द्वित्व मत्र न्त्वम् । अश्ववडवान् । पक्षेऽएकवद्भावो वक्ष्यते ॥

हेमन्त शिशिरा वहोरात्रे च च्छन्दसि ॥ २८ ॥

एतयो श्छन्दसि पूर्ववल्लिङ्गं स्यात् । हेमन्त शिशिरा वृतूनाम् । अहोरात्रे पार्श्वे । द्वित्व मतन्त्रम् । अहोरात्राः णोक्ताः । छन्दसि किम् । हेमन्तशिशिरे । अहोरात्राविमौ ॥

रात्राह्नाहाः पुंसि ॥ २९ ॥

एते पुंस्येव । पूर्वरात्रः । मध्याह्नः । द्व्यहः ॥

अनुवा कादयश्च ॥

अनुवाकः । शंयुवाकः । सूक्तवाकः ॥

अपथंनपुंसकम् ॥ ३० ॥

अपथम् । अपथानि । तत्पुरुष इत्येव । अपथो देशः ॥

अर्धर्चाः पुंसिच ॥ ३१ ॥

अर्धर्चादयः पुंनपुंसकयोः साधवः । अर्धर्चः । अर्धर्चम् । एवं गोमयः कुतपः कषाय इत्यादि ॥

इदमो ऽन्वादेशे ऽशनुदात्त स्तृतीयादौ ॥ ३२ ॥

उक्तस्य पुनरुक्ति रन्वादेशः । इदमो ऽन्वादेशे ऽशादेशः स्या त्तृतो

यादौ विभक्तौ परतः । सचानुदात्तः । आभ्याम् । साक च्कार्थं वचनम् । इमकाभ्यां रात्रि रथीता, अथो आभ्या मदर प्यधीतम् ॥

## एतद स्त्रतसो स्त्रतसौ चानुदात्तौ ॥ ३३ ॥

अस्या प्य अनुदात्तः स्या त्त्रतसोः परत स्त्रौ चानुदात्ता वन्वादेशे । अतः । अत्र । सर्वानुदात्तं पदम् । एतदो ऽशि त्वशि सिद्धे ऽनुदात्तार्थं वचनम् ॥

## द्वितीया टौ स्स्वेनः ॥ ३४ ॥

द्वितीयायां टौसो श्चेदमेतदो रेनो ऽनुदात्त आदेश स्स्या दन्वादेशे । एनम२ । एनौ२ । एनान२ । एनेन२ । एनयोः२ ॥

नपुंसकैकवचने एनदिति वाच्यम् ॥

एनत् ॥

भिन्नवाक्यए वान्वादेशो नैकस्मिन् वाक्ये ॥

तेनेह न। एत मातं द्विनं विद्यात् ॥

## आर्धधातुके ॥ ३५ ॥

प्यस्तलिपार्थे त्येतत्पर्यन्त मय मधिकारः । आर्धधातुक विवक्षायां वक्ष्यमाणा बथाद्यादेशा ज्ञेयाः । बध्यात् । आर्धधातुके किम् । हन्यात् ॥

## अदो जग्धि र्ल्यप्ति किति ॥ ३६ ॥

अदो जग्ध्यादेश स्स्यात् ल्यपि तादौ किति च प्रत्यये । प्रजग्ध्य । जग्धः । जग्ध्वा । इकार उच्चारणार्थः । तेन नेनुम् । अन्नाणम्

( ४ । ४ । ८९ । ) इति ज्ञापका दजयिति सिध्यति ॥

## लुङ् सनोर्घस्लृ ॥ ३७ ॥

अदो घस्लादेश स्स्या ल्लुङि सनिच । लृदित्त्वा दङ् । अघसत् । जिघत्सति ॥

## अच्युपसंख्यानम् ॥

प्रघसः ॥

## घञपोश्च ॥ ३८ ॥

एतयो रदो घस्लृ स्यात् । घासः । प्रघसः । उपसर्गेऽद (३ । ३ । ५९) इत्यप् ॥

## बहुळं छन्दसि ॥ ३९ ॥

छन्द स्यवे बहुळं घस्लृ स्यात् । घस्तां नूनम् । क्वचिन्न । हविष आत्ताम् । घस्ता मित्यत्र लुङ् । मन्त्रे घसेति ( २ । ४ । ८० ) ले र्लुक् । बहुळं छन्द स्यमाङ्योगे ऽपी ( ६ । ४ । ७५ )त्यडभावः । बहुळग्रहणात् घसिभसोरि ( ६ । ४ । १०० ) त्युपधालोपाभावः ॥

## लिट्य न्यतरस्याम् ॥ ४० ॥

अदो घस्लृ वास्याल्लिटि । जघास । जक्षतुः । आद । आदतुः ॥

## वेञो वयिः ॥ ४१ ॥

वेञो लिटि वा वयि रादेश स्स्यात् । इकार उच्चारणार्थः । उवाय ।

ऊयतुः । ऊयुः । लिटि वयोयइति ( ६ । १ । ३८ ) यस्य न संप्रसारणम् । वश्चास्या ऽन्यतरस्यां कितीति ( ६ । १ । ३९ ) पक्षे वकारः । ऊवतुः । पक्षे ववौ । ववतुः । ववुः । वेञइति (६ । १ । ४० ) न संप्रसारणम् ॥

## हनोवध लिङि ॥ ४२ ॥

हनो वधादेशः स्यादार्धधातुके लिङि । वध्यात् । वध्यास्ताम् ॥

## लुङि च ॥ ४३ ॥

लुङि च हनोर्वधस्स्यात् । वधादेशस्यादन्तत्वान्नोपधावृद्धिः । अवधीत् ॥

## आत्मनेपदेष्वन्यतरस्याम् ॥ ४४ ॥

हनो वधादेशो वास्या त्तङि लुङि । आवधिष्ट । आहत । आङोयमहनइ ( १ । ३ । २८ ) त्यात्मनेपदम् । हनस्सिजिति ( १ । २ । १४ ) कित्त्वम् । अनुदात्तोपदेशेति ( ६ । ४ । ३७ ) नलोपः । ह्रस्वा दङ्गादिति ( ८ । २ । २७ ) सलोपः ॥

## इणो गा लुङि ॥ ४५ ॥

इणो गास्यात् । गातिस्थेति ( २ । ४ । ७७ ) सिचोलुक् । अगात्

## इण्वदिक् ॥

अध्यगात् । लुङीति वर्तमाने पुनर्लुङ्ग्रहणं विकल्पनिरासाय । अ

गायि ॥

णौ गमि रबोधने ॥ ४६ ॥

इणो गमि स्स्या ण्णौ नतु बोधने । इरुच्चारणार्थः । गमयति । बोधने तु प्रत्याययति । इण्वदिक् । अधिगमयति ॥

सनि च ॥ ४७ ॥

इणो गमि स्स्या त्सनि नतु बोधने । जिगमिषति । बोधने तु प्रतीषिषति । अधिजिगमिषति ॥

इङश्च ॥ ४८ ॥

इङो गमिः स्या त्सनि । अधिजिगांसते । अज्झनगमां सनीति (६ । ४ । १६) दीर्घः ॥

गाङ् लिटि ॥ ४९ ॥

इङो गाङ् स्या ल्लिटि । अधिजगे । अधिजगाते । गाङ्कुटादिभ्य इत्य (१ । २ । १) त्रास्यैव ग्रहणार्थ ङकारः ॥

विभाषा लुङ्लृङोः ॥ ५० ॥

इङो गाङ्वास्या ल्लुङ्लृङोः । अध्यगीष्ट । अध्यगीषाताम् । घुमास्थागे (६ । ४ । ६६) तीत्वम् । अध्यैष्ट । अध्यगीष्यत । अध्यैष्यत ॥

णौ च सं श्चङोः ॥ ५१ ॥

इङो गाङ् वास्या त्सन्परे चङ्परे च णौ परतः । अधिजिगापयिष

ति। अध्यापिपयिषति। अध्यजीगपत्। अध्यापिपत् ॥

अस्तेर्भूः ॥ ५२ ॥

अस्ते र्भू आदेश स्स्या दार्धधातुके। भविता। भवितुम्। अनुप्रयोगे ईहामासे स्तत भ्वादेशो नेष्यते ॥

ब्रुवो वचिः ॥ ५३ ॥

ब्रुवो वचि रादेश स्स्या दार्धधातुके। इकार उच्चारणार्थः। उवाच। ऊचे ॥

चक्षिङः ख्याञ् ॥ ५४ ॥

चक्षिङः ख्यात्रादेश स्स्या दार्धधातुके। आख्याता। आख्यातुम् ॥

क्शाञपीष्यते ॥

आक्शाता। आक्शातुम् ॥

वर्जने निषेधः ॥

सचक्ष्याः। वर्जनीया इत्यर्थः ॥

असनयोश्च ॥

नृचक्षा रक्षः। विचक्षण. ॥

बहुलं संज्ञाच्छन्दसो रम पथक गात्रविचक्षणादिषिस्तरार्थम् ॥

वा लिटि ॥ ५५ ॥

२८ मा 1806

चक्षिङः ख्याञ्ख्शाञौ वास्तो लिटि । चख्यौ । चख्ये । चक्शौ । चक्शे । चचक्षे ॥

## अजेर्व्यघञपोः ॥ ५६ ॥

अजेरार्धधातुके वी इत्ययमादेशः स्यात् । नतु घञपोः । प्रवायकः । प्रवयणीयः ॥

वलादावार्धधातुके वेष्यते ॥

प्रवेता । प्राजिता । अघञपोः किम् । समाजः । समजः । समुदोरजः (३ । ३ । ६९) इत्यप्[1] ॥

क्यप्यपि न ॥

समज्या । दीर्घोच्चारणं किम् । प्रवीतः ॥

## वायौ ॥ ५७ ॥

ल्युड्ल्युचोः[2] परतोऽजेर्वा वीः स्यात् । प्रवयणः । प्राजनः ॥

## ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥ ५८ ॥

ण्यादयो गोत्रप्रत्यया गृह्यन्ते । ण्यान्तात् क्षत्रियादार्षात् ञितश्च यून्युत्पन्नयोरणिञोर्लुक् स्यात् । ण्यान्तात्[3] । कुर्वादिभ्यो ण्यः (४ । १ । १५१) । तस्माद्यून्यत इञ् (४ । १ । ९५) । तस्य लुक् । कौरव्यः पिता । कौरव्यः पुत्रः । क्षत्रिय । ऋष्यन्धक

1. 'इत्यपि' वि.
2. 'लुट्लृटोः' इति विपुस्तकस्थोपपाठः
3. इदं विपुस्तके नास्ति.

( ४ । १ । ११४ ) त्यण् । तस्मा द्विनोलुक् । श्वाफल्कः पिता । श्वाफल्कः पुत्रः । आर्य । ऋष्यण् । वासिष्टः पिता । वासिष्टः पुत्रः । श्वितः । वैदः पिता । वैदः पुत्रः । तिका दिभ्यः „फिञ् ( ४ । १ । १५४ ) । तस्मा यूनि माग्दोव्यतोऽण् ( ४ । १ । ८३ ) । तस्यलुक् । तैकायनिः पिता । तैकायनिः पुत्रः । एभ्यः किम् । शिवादिभ्योऽण् ( ४ । १ । ११२ ) । कौहलः पिता । कौहलिःपुत्रः । यूनोतिकिम् । वामरथ्यस्य च्छात्राः वामरथाः । कुर्वादिण्यन्ता त्कण्वादिभ्यो गोत्र ( ४ । २ । १११ ) इत्यण् । तस्य नलुक् । अणिञोः किम् । दाक्षेरपत्यं दाक्षायणः ॥

अब्राह्मणगोत्रमात्राद्युवप्रत्यय स्योपसंख्यानम् ॥

…धि. पिता । बौधिः पुत्रः । एवं जावालिः । औदुम्बरिः । भा… जङ्घिः पिता पुत्रोवा । साल्वावयव ( ४ । १ । १७३ ) लक्षण इञ् । तस्मात्फक् । तस्यलुक् । पैलादिदर्शना त्सिद्धम् ॥

## पैलादिभ्यश्च ॥ ५९ ॥

…यो युवप्रत्ययस्य लुक्स्यात् । पीलायावे ( ४ । १ । ११८ ) ततोऽणोश्चच ( ४ । १ । १५६ ) इति फिञ् । तस्य लुक् । … पैलः पुत्रः । अन्येपैलादय इञन्ताः । तेभ्य इञः मा… ) मिति सिद्धे अप्रागर्थः पाठः । आकृति ग

## इञः प्राचाम् ॥ ६० ॥

प्राचां गोत्रे यइञ् तदन्ता द्युवप्रत्ययस्यलुक्स्यात् । गोत्रविशेषणं प्राग्ग्रहणं नविकल्पार्थम् । पान्नागारे रपत्यं युवा । यञिञोश्चेति (४। १। १०१) फक् । तस्यलुक् । पान्नागारिः पिता पुत्रोवा । प्राचामितिकिम् । दाक्षायणः ॥

## न तौल्वलिभ्यः ॥ ६१ ॥

एभ्य इञः प्राचामि त्युक्तोलुङ्न । तौल्वलायनः ॥

## तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥ ६२ ॥

ते तद्राजाः(४। १। १७४)। ञ्यादय स्तद्राजाः ( ५। ३। ११९ ) तद्राजस्य लुक्स्या त्तत्कृते बहुत्वेनतु स्त्रियाम् । अङ्गाः । वङ्गाः । तद्राजस्य किम् । औपगवः । बहुषुकिम् । आङ्गः । आङ्गौ । तेनैवकिम् । प्रियो वाङ्गो येषां तेप्रियवाङ्गाः । अस्त्रियां किम् । आङ्ग्यस्त्रियः ॥

## यस्कादिभ्यो गोत्रे ॥ ६३ ॥

एभ्यो गोत्रप्रत्ययस्य लुक्स्यात्तत्कृते बहुत्वे । नतुस्त्रियाम् । प्रत्ययविधे रन्यत्र लौकिकं गोत्र मपत्यमात्रंगृह्यते । यस्काः । लह्याः । बहुत्वे किम् । यास्कः । तत्कृतेकिम् । प्रिययास्काः । स्त्रियांतु यास्क्यस्त्रियः । गोत्रे किम् । यास्का श्छात्राः ॥

## य ञिञोश्च ॥ ६४ ॥

एतयो स्तत्कृते बहुत्वे लुक् स्यात् । नतु स्त्रियाम् । गर्गाः । विदाः । बहुत्वे किम् । गार्ग्यः । तत्कृते किम् । प्रियगार्ग्याः । स्त्रियांतु गार्ग्यः स्त्रियः । गोत्र इत्येव । द्वीपादनुसमुद्रं यञ (४।३।१०)। उत्सा दिभ्योऽञ् (४।१।८६)। द्वैप्याः । औत्साः ।

यञादीना मेकस्य द्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् ॥ गार्ग्यस्य गार्ग्ययोर्वा कुलम् गार्ग्यकुलम् । गर्गकुलंवा । वैदस्य वैदयोर्वा कुलं वैदकुलं । विदकुलंवा । यञादीनां किम् । आङ्ग कुलम् । एकस्य द्वयोः किम् । गर्गाणां कुलम् गर्गकुलम् । तत्पुरुषे किम् । गार्ग्यस्य समीप मुपगार्ग्यम् । षष्ठ्याः किम् । परमगार्ग्यः ॥

## अत्रिभृगु कुत्सवसिष्ठ गोत माङ्गिरोभ्यश्च ॥ ६५ ॥

एभ्य स्तद्वत् । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः । बहुष्वेव । आत्रेयः । त्रैनेवेत्येव । प्रियात्रेयाः । स्त्रियां तु आत्रेय्यस्त्रियः ॥

## बह्वच इञः प्राच्य भरतेषु ॥ ६६ ॥

बह्वचो यदपत्यस्य इञः प्राच्यभरतगोत्रोत्पन्नस्य तत्कृते बहुत्वे लुक्स्यात् । पन्नागाराः । भरतेषु । अर्जुनाः । बह्वचः किम् । पैङ्गयः । प्राच्यभरतेषु किम् । बालाकयः । भरतानां प्राच्यत्वेऽपि पुन स्तद्ग्रहण मन्यत्र प्राच्यग्रहणे भरतग्रहणं नेति ज्ञापनार्थम् । तेन इञः प्राचा (२।४।६०)। मिति भरतानां युवप्रत्ययस्य नलुक् । आर्जुनिः पिता । आर्जुनायनः पुत्रः ॥

## न गोपवनादिभ्यः ॥

एभ्यो गोत्रप्रत्ययस्य नलुक् । बिदाद्यन्तर्गणोयम् । गौपवनाः । शैग्रवाः ॥

गोपवनादि प्रतिषेधः प्राग्धरितादेः ॥

हारितः । हारितौ । हरिताः ॥

## तिक कितवादिभ्यो द्वन्द्वे ॥ ६८ ॥

तिकादिभ्यः कितवादिभ्यश्च द्वन्द्वे गोत्रप्रत्ययस्य बहुषुलुक्स्यात् । तैकायनश्च कैतवायनश्च । तिकादिभ्यः फिञ् ( ४ । १ । १५४ ) । तिककितवाः ॥

## उपकादिभ्यो ऽन्यतरस्या मद्वन्द्वे ॥ ६९ ॥

एभ्यो गोत्रप्रत्ययस्य बहुषु वा लुक्स्यात् । द्वन्द्वे चाद्वन्द्वेच विकल्पइति वृत्तावुक्तम् । अत्र भ्रष्टककपिष्ठलाः भ्राष्टकिकापिष्ठलयइति भाष्ये विकल्पोदाहरणात् भ्रष्टककपिष्ठल शब्दस्य तत्र पाठोऽनार्षः । उपकाः । औपकायनाः । लमकाः । लामकायनाः । नडादिभ्यः फक् (४ । १ । ९९) । भ्रष्टकाः । भ्राष्टकयः । कपिष्ठलाः[1] । कापिष्ठलयः ॥

## आगस्त्य कौण्डिन्ययो रगस्तिकुण्डिनच ॥ ७० ॥

---

1. इदं पुस्तकेप्रमादाद्भ्रष्टम्.

एतयो र्गोत्रप्रत्ययस्य बहुषुलुक् स्यात्। प्रकृतयो यथासंख्य मेता वा देशौ स्तः। चः स्वरार्थः। मध्योदात्तः कुण्डिनिशब्दः। कुण्डिनिशब्दाद् गर्गादियञ्। अगस्तयः। कुण्डिनाः। ऋष्यणो गर्गादियञश्च यथाक्रमं लुक्॥

## सुपो धातुप्रातिपदिकयोः ॥ ७१ ॥

एतयो रवयवस्य सुपोलुक् स्यात्। पुत्रीयति। राजपुरुषः॥

## अदिप्रभृतिभ्य श्शपः ॥ ७२ ॥

एभ्य श्शपो लुक् स्यात्। अत्ति। अत्तः॥

## बहुळं छन्दसि ॥ ७३ ॥

छन्दसि शपो वा लुगदादे रन्येभ्यश्च। हन्ति। हनति। अन्येभ्यः। शाध्वम्॥

## यङोऽचिच्च ॥ ७४ ॥

य ङोऽच्प्रत्यये लुक्स्यात्। चकारा दन्यत्रापि बहुळं लुक् स्यात्॥ लोलुवः। पोपुवः। अन्यत्रापि। वावदीति॥

## जुहोत्यादिभ्यः श्लुः ॥ ७५ ॥

एभ्यः शपः श्लुः स्यात्। जुहोति॥

## बहुळं छन्द[illegible] ॥ ७६ ॥

श्लु रित्येव । जुहोत्यादे रपि क्वचिन्न । दाति । अन्येभ्योपि भव ति[1] । जनिमा विवक्ति ॥

## गाति स्था घु पा भूभ्यः सिचः परस्मैपदेषु ॥ ७७ ॥

एभ्य स्सिचो लुक्स्यात् परस्मैपदेषु । अगात् । अस्थात् । अदात् । अधात् । अपात् । अभूत् ॥

गापो र्ग्रहणे नेण्पिवत्यो र्ग्रहणम् ॥

नेह । अगासि नटः । अपासि द्रनम् । परस्मैपदेषु किम् । अगासा तां ग्रामौ देवदत्तेन ॥

## विभाषा घ्राधेट् शाच्छा सः ॥ ७८ ॥

एभ्य स्सिचो वा लुक्स्यात् परस्मैपदेषु । अघ्रात् । अघ्रासीत् । अधात् । अधासीत् । अशात् । अशासीत् । अच्छात् । अच्छासीत् । असात् । असासीत् । परस्मैपदेषु किम् । अघ्रासातां सुमनसौ देव दत्तेन ॥

## तनादिभ्य स्तथासोः ॥ ७९ ॥

एभ्य स्सिचो वा लुक्स्यात् तथासोः परतः । अनुदात्तोपदेशे (६ ४ । ३७) त्यनुनासिकलोपः । अतत । अतनिष्ट । अतथाः । अत निष्ठाः । थासा साहचर्या दात्मनेपदस्य तो गृह्यते । नतु परस्मैप दस्य । अतनिष्ट यूयम् ॥

---

1. 'अन्येभ्योभवति' बि.

मन्त्रे घस ह्वर णश वृदहाद्वृच्कगमि जनिभ्यो लेः ॥ ८० ॥

एभ्यो ले लुँक्स्या च्छन्दसि । सिच इत्यनुवर्तना च्चस्थानी [1] लि रत्र गृह्यते न लि डित्याहुः । अक्ष न्नमोमदन्त । घस्त्ल । गमहने (६ । ४ । ९८) न्युपधालोपः । शासिवसीति (८ । ३ । ६०) षत्वम् । ह्वृकौटिल्ये । माह्वार्मित्रस्य । णश । प्रणट् [2] । वृ । सुरुचो वेन आवः । दह । मान आधक् । आदि त्याकारान्त ग्रहणम् । मापूरणे । आ मा द्यावा पृथिवी । सिपि रूपम् । वृजो वर्जने । महाधने परावक् । कृ । अक्रन् कर्म । गमि । एमा अग्मन् । जनि । अज्ञत । जने रात्मनेपदे प्वनतः (७ । १ । ८३) । उपधालोपः ॥

आमः । ८१ ॥

आमः परस्य ले लुँक्स्यात् । ईहां चक्रे [3] ॥

अव्यया दाप्सुवः ॥ ८२ ।

अव्यया त्परस्यापः स्सुपश्च लुँक्स्यात् । तत्र शालायाम् । कृत्वा ॥

अव्यया दापो लुवचनानर्थकयं लिङ्गा भावात् ।

इतितु वार्तिककारः ॥

नाव्ययीभावा दतोम्त्वपञ्चम्याः ॥ ८३ ॥

1. 'नात्स्थानी वि
2 'प्राणट्' वि. काशिकाया सिद्धातकौ मुद्यात्व प्रणड्मर्त्यस्येत्युदाहृतम्.
3 'ईहाञ्चक्रे' वि.

8-1-1876

अदन्ता दव्ययीभावा त्सुपो नलुक् । तस्य पञ्चमीं विना अमादेशः । उपकुम्भं पश्य । पञ्चम्यास्तु उपकुम्भादागतः । अतः किम् । उप गिरि ॥

तृतीयासप्तम्योर्बहुळम् ॥ ८४ ॥

अदन्ता दव्ययीभावा त्तृतीया सप्तम्यो र्बहुळममभावः स्यात् । उप कुम्भ मुपकुम्भेनवा कार्यम् । उपकुम्भ मुपकुम्भे वा स्थितः ॥ बहुळग्रहणात्

समृद्धि नदीसमास संख्यावयवेभ्य स्सप्तम्या नित्यममभावः । सुमद्रम् । उन्मत्तगङ्गम् । एकविंशति भारद्वाजम् ॥

लुटः प्रथमस्य डारौ रसः ॥ ८५ ॥

लुडादेशस्य प्रथमपुरुषस्य क्रमात्डारौ रस् एते आदेशाः स्युः पद द्वयेपि । कर्ता । कर्तारौ । कर्तारः । एधिता । एधितारौ । एधिता रः । प्रथमस्य किम् । कर्तासि । एधितासे ॥

इतिश्रीमहोपाध्यायश्रीमद्राघवसोमयाजिकुलावतंस श्रीमद् द्वैत विद्याचार्यश्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ व्याकरणमिताक्षरायां वृत्तौद्वितीयस्या ध्यायस्य चतुर्थः पादः ॥

समाप्तोध्यायश्च ॥



तृतीयाध्याय प्रथमपादः



## प्रत्ययः ॥ १ ॥

आ पञ्चमाध्याय समाप्ते वक्ष्यमाणाः प्रत्ययसंज्ञाःस्युः । प्रकृत्युपपदोपाधि विकारागमान् वर्जयित्वा ॥

## परश्च ॥ २ ॥

प्रत्ययः प्रकृतेः परएव प्रयोक्तव्यः ॥

## आद्युदात्तश्च ॥ ३ ॥

प्रत्यय आद्युदात्तः स्यात् ॥

## अनुदात्तौ सुप्पितौ ॥ ४ ॥

सुपः पितश्च प्रत्यया अनुदात्ताः स्युः । नाद्युदात्ताः ॥

## गुप्तिज्किद्भ्यः स्सन् ॥ ५ ॥

एभ्य स्सन् प्रत्यय स्स्या त्स्वार्थे । जुगुप्सते । तितिक्षते । चिकित्सते ॥

गुपादेः क्रमा न्निन्दा क्षमा व्याधि प्रतिघातेषु सन्निष्यतइति वृत्तावुक्तम् । अर्थविशेषे प्रयोगनियमस्य लौकिकत्वा द्विचिकित्सत इत्यादौ संशयेऽपि प्रयोग दर्शनात् अवयवेकृत मात्मनेपद लिङ्गं समुदायस्य विशेषकमिति भगवदुक्तेश्च भाष्या संमत मेतदिति ॥

## मान् बध दान् शान्भ्यो दीर्घं श्चाभ्या
## सस्य ॥६॥

एभ्यः सनप्रत्ययः स्या दभ्यासस्यारस्यच दीर्घः । मीमासते । बीभ
त्सत । दीदासते । शीशासते । उत्तरसूत्रे वाग्रहणस्य सर्वशेषत्वा
त्क्वचिन । मानयतीत्यादि ॥

मानादेः पूजा जिज्ञासा वैरूप्य दान निशामनेषु स ज्ञिष्य
त नान्यत्रे ति वृत्तौ ॥

## धातोः कर्मणः समानकर्तृका
## दिच्छायां वा ॥७॥

ईषिकर्मणो धातो रिषिणैककर्तृका त्सनप्रत्ययो वा स्या दिच्छा
याम् । कर्तुं मिच्छति चिकीर्षति । धातोः किम् । सोपसर्गान्माभू
त् । प्रचिकीर्षत । कर्मणः किम् । गमनेनेच्छति । समानकर्तृका
त्किम् । देवदत्तस्य भोजन मिच्छति यज्ञदत्तः । इच्छायां किम् ।
कर्तुं जानाति[1] । धातो र्विधे रिहार्धधातुकत्वं सनो न पूर्वे ॥

आशङ्कायां स न्वाच्यः ॥

कूलं पिपतिषति । श्वा मुमूर्षति ॥

शैषिका न्मतुबर्थीया च्छैषिको मत्वर्थिकः ॥

सरूपप्रत्ययो नेट् सनन्ता न सनिष्यते ॥

---

1 'क जानाति क कजानाति ख

स्वार्थ सनन्ता त्स्यादेव । जुगुप्सिषते । मीमांसिषते ॥

## सुप आत्मनः क्यच् ॥ ८ ॥

इषिकर्मण एषितुरात्मसंबन्धिनः सुबन्ता दात्मेच्छायां क्यच् प्रत्ययो वास्यात् । पुत्र मात्मन इच्छति पुत्रीयति । सुपः किम् । वाक्या न्माभूत् । महान्तं पुत्रमिच्छति । आत्मनः किम् । राज्ञः पुत्र मिच्छति ॥

मान्ताव्ययेभ्यः क्यच्न ॥

किमिच्छति । उच्चै रिच्छति ॥

छन्दसि परेच्छायामपि क्यच् ॥

मा त्वा वृका अघायवो विदन् ॥

## काम्यच्च ॥ ९ ॥

इषिकर्मण स्सुबन्ता दात्मेच्छायां काम्यच्प्रत्ययो वास्यात् । आ त्मनः[1] पुत्र मिच्छति पुत्रकाम्यति । योगविभाग उत्तरत्र क्यज्मा त्रानुवृत्त्यर्थः[2] । ककारस्य प्रयोजनाभावा न्नेत्संज्ञा । चकारादि त्वाद्वाकाम्यचः ॥

## उपमानादाचारे ॥ १० ॥

उपमाना त्कर्मण स्सुप अचारार्थे क्यच् स्यात् । पुत्रमिवाचरति पुत्रीयति छात्रम् ॥

---

1. 'आत्मने' वि.　　2. 'क्यङ्मात्रानुवृत्त्यर्थः' क. वि.

अधिकरणाच्च ॥

मासादीयति कुट्याम् ॥

## कर्तुः क्यङ् सलोपश्च ॥ ११ ॥

उपमानात्कर्तुः सुबन्ताचारार्थे क्यङ् स्यात् । सांतलोपश्च । श्येन इवाचरति श्येनायते ॥

ओजसोप्सरसोनित्यं पयसस्तु विभाषयासलोपः ।

ओजायते । अप्सरायते । पयायते, पयस्यते ॥

आचारेऽवगल्भक्लीबहोडेभ्यः[1] क्विब्वा ॥

गल्भादेः[2]क्वावपि तङानौ ॥

अवगल्भते, अवगल्भायते । क्लीबते, क्लीबायते । होडते,होडायते[3]

सर्वप्रातिपदिकेभ्यः क्विब्वाऽऽचार इत्येके ॥

अश्वइवाचरति । अश्वति ॥

## भृशादिभ्यो भुव्यच्वे र्लोपश्च हलः ॥ १२ ॥

भृशादिभ्यः च्व्यर्थेभ्यो भवत्यर्थेक्यङ् स्यादच्व्यन्तेभ्यो ऽन्त्य हलो लोपश्च । अभृशो भृशो भवति भृशायते । उन्मनायते । च्व्यन्तस्यतु भृशीभवति ॥

## लोहितादि डाज्भ्यः क्यष् ॥ १३ ॥

1. 'होधेभ्यः' क. 'होदेभ्य.' वि.
2 'वस्त्यादे' व्रि
3. 'होधते, होधायते' क. 'होदते, होदायते' वि.

लोहितादे र्डाजन्ताच्च च्व्यर्थी भ्रवत्यर्थे वाक्यष् स्या न्नतु च्व्यन्तात्। लोहितायति। लोहितायते। पटपटायति। पटपटायते। अत्र लोहितादेव क्यष्, अन्ये भृशादिषु पठनीयाः क्यङर्थं, तेनादिग्रहणं व्यर्थमितिभाष्ये स्थितम्। वृत्तौ त्वादिग्रहणा च्चर्मायति चर्मायत इत्याद्युदाहृत्याकृतिगणइत्युक्तम् ॥

## कष्टाय क्रमणे ॥ १४ ॥

चतुर्थ्यन्ता त्कष्टशब्दा दुनार्जवेर्थे क्यङ् स्यात्। कष्टाय कर्मणे क्रामति कष्टायते ॥

सत्र कक्ष गहनेभ्यः पापचिकीर्षायाम् ॥

सत्रायत इत्यादि ॥

## कर्मणो रोमन्थतपोभ्यांवर्तिचरोः ॥ १५ ॥

आभ्यां कर्मभ्यां कचङ्स्यात्। क्रमेण वर्तिचरो रर्थयोः। रोमन्थं वर्तयति रोमन्थायते गौः ॥

हनु चलनएव ॥

नेह। कीटो रोमन्थं वर्तयति ॥

तपसः परस्मैपदंच ॥

तपश्चरति तपस्यति ॥

## वाष्पोष्मभ्या मुद्वमने ॥ १६ ॥

आभ्यां क्यङ्स्या दुद्वमने। वाष्पमुद्वमति वाष्पायते। ऊष्मायते ॥

## धातो रेकाचो हलादेः क्रियासमभिहारेयङ् ॥ २२ ॥

हलादि र्योधात् रेकाच् तस्मा त्पौनः पुन्ये भृशार्थेच यङ्प्रत्ययः स्यात्। पुनः पुन रतिशयेनवापचति पापच्यते। एकाचः किम्। भृशं जागर्ति। हलादेः किम्। भृश मीक्षते ॥

सूचि सूत्रि मू त्र्य टय र्तच शूर्णा तिभ्यो य इ्वाच्यः ॥

सोसूच्यते। सोसूत्र्यते। मोमूत्र्यते। अटाटयते। अरार्यते। अशा श्यते। ऊर्णोनूयते ॥ भृशं रोचते, भृशं शोभतइत्यत्र यङ्न् ॥

## नित्यं कौटिल्ये गतौ ॥ २३ ॥

गत्यर्था त्कौटिल्यएव यङ्स्या न्न क्रियासमभिहारे। कुटिलं गच्छति जंगम्यते।

## लुप सद चर जप जभ दह दश गृभ्यो भावगर्हायाम् ॥ २४ ॥

एभ्यो धात्वर्थ गर्हायामेव यङ्स्या न्न क्रियासमभिहारे। गर्हितं लुम्पति लोलुप्यते। एवं सासद्यते, चञ्चूर्यते, जञ्जप्यते, जञ्जभ्यते, दन्दह्यते, जेगिल्यते[1]। गर्हायां किम्। साधुजपति। भावे ति किम्। साधनगर्हायां माभूत्। मन्त्रं जपति वृषलः ॥

---

1 'दन्दश्यते' क 'जेगिल्यते' वि

सत्यापपाश रूपवीणा तूल श्लोकसेनालोमत्वच

वर्म वर्ण चूर्ण चुरादिभ्यो णिच् ॥ २५ ॥

एभ्य श्चुरादिभ्यश्च णिच् स्यात् । सत्यमाचष्टे सत्यापयति ।

अर्थवेद सत्याना मापु ग्वाच्यः ॥

अर्थापयति । वेदापयति ।

पाशाद्विमोचने ॥

विपाशयति ॥

रूपा द्दर्शने ॥

रूपयति । वीण योपगायति उपवीणयति । तूलैरनुकरोति अनुतूलयति । श्लोकै रुपस्तौति उपश्लोकयति । सेनया अभियाति अभिषेणयति । लोमान्यनुमार्ष्टि अनुलोमयति । त्वचं गृह्णाति त्वचयति । वर्मणा संनह्यति वर्मयति । वर्णं गृह्णाति वर्णयति । चूर्णै रवध्वंसयति अवचूर्णयति[1] । चुरादेः स्वार्थे चोरयति ॥

हेतुमतिच ॥ २६ ॥

हेतुः प्रयोजकः । तद्व्यापारः प्रेषणादि र्हेतुमान् । तस्मिन् वाच्ये धातो र्णिच् स्यात् । कुर्वन्तं प्रेरयति कारयति ।

तत्करोतो त्युपसंख्यानं सूत्रयत्याद्यर्थम् ॥

सूत्रं करोति सूत्रयति । मन्त्रयति ॥

आख्याना त्कृत स्तदाचष्टे णिच् कृल्लुक् प्रकृति

1. 'रपध्वंसयति अपचूर्णयति' वि

प्रत्यापत्तिःप्रकृतिवच्च कारकम् ॥

कंसवध माचष्टे कंसंघातयति। बलिबन्धनमाचष्टे बलिं बन्धयति। राजागमन माचष्टे राजान मागमयति ॥

दृश्यर्थायां प्रवृत्तौ कृदन्तात्पूर्ववत् ॥

मृगरमण माचष्टे मृगान् रमयति। दृश्य[1] र्थायां किम्। ग्रामे मृगर मण माचष्टे। तत्र श्रोतु र्दर्शनार्थ प्रवृत्ति र्नास्ति ॥

आङोलोपश्च कालात्यन्तसंयोगे मर्यादायाम् ॥

आरात्रिविवास माचष्टे रात्रिं विवासयति ॥

चित्रीकरणे मापि[2] ॥

उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमं संभावयते माहिष्म त्यां सूर्य मुद्गमयति ॥

नक्षत्रयोगे ज्ञि ॥

पुष्ययोगं जानाति पुष्येण योजयति। मघाभि र्योजयति ॥

## कण्ड्वादिभ्यो यक् ॥ २७ ॥

कण्डूञ् इत्यादिभ्यो यक् प्रत्ययः स्यात्। कण्डूरिति प्रातिपदिकम प्यस्ति[3] धातुश्च। एवं सर्वेऽपि कण्ड्वादय उभयरूपाः। तत्रधा त्वधिकारा द्धातुभ्यएव प्रत्ययः। कण्डूयति। कण्डूयते। महिङ्। महीयते[4]इत्यादि ॥

---

1. 'दृश्या वि
2. 'चित्रिकारणे' क वि
3. 'मव्याति' क 'मव्यस्ति' वि
4. दुहिङ् दुहितृय्येत' क वि.

गुपूधूप विच्छि पणिपनिभ्य आयः ॥ २८ ॥

एभ्य आयप्रत्ययः स्या त्स्वार्थे। गोपायति। धूपायति। विच्छायति। पणायति। पनायति।

पणेः स्तुतावेव आयप्रत्ययः ॥

अनुबन्धस्य केवले[1] चरितार्थत्वा दायप्रत्ययान्ता न्नात्मनेपदम् ॥

ऋतेरीयङ् ॥ २९ ॥

ऋति स्सौत्रो घृणार्थः। तस्मा दीयङ् स्या त्स्वार्थे। ऋतीयते ॥

कमे र्णिङ् ॥ ३० ॥

कमे र्णिङ् स्या त्स्वार्थे। कामयते ॥

आयादय आर्धधातुकेवा ॥ ३१ ॥

आर्धधातुक विवक्षाया मायादयो वा स्युः। गोपायिता गोप्ता। अर्तिता। ऋतीयिता। कमिता। कामयिता ॥

सनाद्यन्ता धातवः ॥ ३२ ॥

सनादयः कमेर्णिङन्ताः अन्ते येषां ते धातुसंज्ञाः स्युः। चिकीर्षतीत्या द्युक्ता न्युदाहरणानि ॥

स्यतासी लृलुटोः ॥ ३३ ॥

लृइति लृङ्लृटो र्ग्रहणम्। धातो र्लृलुटोः परयोः क्रमात् स्य तासि

1. 'केवल' क वि

एतौ प्रत्ययौ स्तः । करिष्यति । अकरिष्यत् । श्वः कर्ता ॥

## सि ब्बहुळं लेटि ॥ ३४ ॥

धातोः सिप्प्रत्ययो बहुळं स्याल्लेटि । जोषिपत् ।

सिप् णिद्वा ॥

तारिषत् । नचभवति । पताति दिद्युत्[1] ।

## कास्प्रत्यया दाममन्त्रे लिटि ॥ ३५ ॥

कासृधातोः प्रत्ययान्तेभ्य श्चाम्प्रत्ययः स्याल्लिटि । नतुमन्त्रे । कासामास । कारयामास । मन्त्रेतु कृष्णोनोनाव ।

अनेकाच आम्वाच्यः ॥

चुलुम्पाचकार दरिद्रांचकार ॥

## इजादेश्च गुरुमतोऽनृच्छः ॥ ३६ ॥

इजादि र्यो धातु र्गुरुमान् ऋच्छत्यन्यः तत[2] आम्प्रत्ययः स्याल्लिटि । ईहा चक्रे । इजादेः किम् । ततक्ष । गुरुमतः किम् । इयाज । अनृच्छःकिम् । आनर्छ । आनर्छतुः ।

ऊर्णोते र्न ॥

ऊर्णुनाव ।

## दयायासश्च ॥ ३७ ॥

दय अय आस एभ्य आम् स्या ल्लिटि । दयांचक्रे । अयांचक्रे ।

---

1. विद्युत् वि  2 तस्मात् वि

आसांचक्रे ।

उष विद जागृभ्योऽन्यतरस्याम् ॥ ३८

एभ्यो लिट्याम् वा स्यात् । ओषांचकार । उवोष । विदे रदन्त त्वप्रतिज्ञाना दामि नगुणः । विदांचकार । विवेद । जागरामास । जजागार ॥

भी ह्री भृ हुवां श्लुवच्च ॥ ३९ ॥

एभ्यो लिट्याम् वा स्यात् । आमि श्लाविव कार्यं स्यात् । तच्च द्वित्व मित्वंच । बिभयामास । बिभाय । जिह्रयांचकार । जिह्राय । बिभरांचकार । बभार । जुहवांचकार । जुहाव ॥

कृञ्चानुप्रयुज्यतेलिटि ॥ ४० ॥

आमन्ता द्धातोः कृ अनुप्रयुज्यते लिटि । कृभ्वस्तीत्यतः कृञोद्वितीयेति ञकारेण कृञ् प्रत्याहारस्तेन कृभ्वस्तयो ज्ञेयाः । तत्सामर्थ्या द्वास्ते भूभावोन । पाचयांचकार । पाचयांबभूव । पाचयामास ॥

विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ॥ ४१ ॥

वेत्ते र्लोट्याम्, लोटो लुक्, लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते विदाङ्कुर्वन्तु । प्रथमपुरुष बहुवचने अतन्तम् । विदांकरोतु । विदांकुरुतां । विदांकुरु । विदांकरवाणि[1] ॥

---

1 विदांकरोमीति वि पुस्तकस्थोपपाठः

## अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयांक्रिया द्विदामक्रन्निति च्छन्दसि ॥ ४२ ॥

एते छन्दसि निपात्यन्ते । सदि जनि[1] रमीणां ण्यन्तानां लुङ्यं म् । चिनोतेरपि लुङि द्वित्वकुत्वे । अकरिति चतुर्णामनुप्रयोगः । पुनातेराशीर्लिङ्याम् । क्रियादि त्यनुप्रयोगः । वेत्ते लुङ्याम् । अक्रन्नित्यनुप्रयोगः । अभ्युत्सादया मकः । प्रजनयामकः । चिकयामकः । रमयामकः । पावयांक्रियात् । विदामक्रन् ॥

## च्लिलुङि ॥ ४३ ॥

धातो र्लुङिपरे च्लिप्रत्ययः स्यात् ॥

## च्लेस्सिच् ॥ ४४ ॥

च्ले स्सिजादेशः स्यात् । इचावितौ । अकार्षीत् ।

स्पृश मृश कृष तृप दृपां सिज्वा वाच्यः ॥

अस्पृक्षत् । अस्प्राक्षीत् । अस्पार्क्षीत् । अमृक्षत् । अम्राक्षीत् । अमार्क्षीत् । अकृक्षत् । अक्राक्षीत् । अकार्क्षीत् । अतृपत् । अत्राप्सीत् । अतार्प्सीत् । अदृपत् । अद्राप्सीत् । अदार्प्सीत् ॥

## शलइगुपधा दनिटः क्सः ॥ ४५ ॥

इगुपध श्शलन्तो योऽनिट् तस्मात् च्लेः क्सादेश स्स्यात् । दुह । अधुक्षत् । लिह । अलिक्षत् । शलः किम् । अभैत्सीत्[2] । इगुपधा

1. जन चि
2 अभिक्षत क

त्किम् । अधाक्षीत् । अनिटः किम् । अकोषीत् ॥

## श्लिष आलिङ्गने ॥ ४६ ॥

श्लिषः च्लेः क्सः स्यादालिङ्गनेऽर्थे । आश्लिक्षत्[1] कन्यां देवदत्तः । आलिङ्गने किम् । समाश्लिषत् जतु च काष्ठं च ॥

## न दृशः ॥ ४७ ॥

दृशश्च्लेः क्सो न स्यात् । इरित्त्वादङ् वा । अदर्शत् । अद्राक्षीत् ॥

## णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ४८ ॥

ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङादेशः स्यात् कर्त्रर्थे लुङि । सिचोऽपवादः । अचीकरत् । अशिश्रियत् । अदुद्रुवत् । असुस्रुवत् । कर्तरि किम् । अकारयिषातां देवदत्तेन ॥ णिङभावपक्षे,

कमेश्चङ् वाच्यः ॥

अचकमत । णिङ्पक्षे अचीकमत ॥

## विभाषा धेट्श्व्योः ॥ ४९ ॥

आभ्यां च्लेश्चङ् वा स्यात् । अदधत् । पक्षे विभाषा घ्राधेडिति (२।४।७८) सिचो लुक् । अधात् । अधासीत् । अशिश्वियत् । पक्षे जॄस्तम्भु (३।१।५८) इत्यङ् वा । अश्वत् । अश्वयीत् । कर्तर्येव । अधिषातां गावौ वत्सेन ॥

---

1 अश्लिक्षत् क

## गुपे श्छन्दसि ॥ ५० ॥

आय प्रत्ययाभावपक्षे गुपेश्च्ले श्रङ् वास्या च्छन्दसि । मित्रावरु
णा गृहा नजूगुपतं युवम् ।

## नोनयति ध्वनयत्येलय त्यर्दयतिभ्यः ॥ ५१ ॥

एभ्यो ण्यन्तेभ्य श्चङ्नस्या च्छन्दसि । औनयीत् । अध्वनयीत् ।
ऐलयीत् । आर्दयीत् । लोकेतु औनिनत् । अदिध्वनत् । ऐलिल
त् । आर्दिदत् ॥

## अस्यति वक्ति ख्यातिभ्योऽङ् ॥ ५२ ॥

एभ्यश्च्ले रङ् स्यात् । अस्यतेः पुषादित्वेनैव सिद्धे आत्मनेपदार्थं
ग्रहणम् । आस्थत् । आस्थत । अवोचत् । अख्यत् । कर्तर्येव । प
र्यासिपातां वृक्षौ देवदत्तेन ॥

## लिपिसिचि ह्वश्च ॥ ५३ ॥

एभ्य श्च्ले रङादेश स्स्यात् । अलिपत् । असिचत् । अह्वत् ॥

## आत्मनेपदे ष्वन्यतरस्याम् ॥ ५४ ॥

पूर्वसूत्रोक्तस्य विकल्पः । अलिपत । अलिप्त । असिचत । असि
क्त । अह्वत । अह्वास्त ॥

## पुषादि द्युता द्य्लृदितः परस्मै पदेषु ॥ ५५ ॥

श्यन्विकरण पुषादे र्द्युतादे र्लृदितश्च च्ले रङादेशस्स्या त्परस्मैपदे

पु। अपुषत्। अद्युतत्। अगमत्। तङि तु अद्योतिष्ट ॥

## सर्तिशास्त्यर्तिभ्यश्च ॥ ५६ ॥

एभ्यश्च्लेरङ् स्यात्। असरत्। अशिषत्। आरत्। पृथक्सूत्रकरणं तङ्यपि। समारत ॥

## इरितोवा ॥ ५७ ॥

इरितो धातोश्च्लेरङादेशो वास्यात्परस्मैपदेषु। अभिदत्। अभैत्सीत्। तङि तु अभित्त ॥

## जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ॥ ५८ ॥

एभ्यश्च्लेरङादेशो वा स्यात्। अजरत्। अजारीत्। अस्तभत्। अस्तम्भीत्। अमुचत्। अम्रोचीदित्यादि। अश्वत्। अश्वयीत्। अशिश्वियत्। ग्लुचिग्लुञ्चोरन्यतरोपादानेनैव रूपत्रयसिद्धे रुभयोपादानं व्यर्थमिति भगवदुक्ते ग्लुञ्चिग्रहणसामर्थ्यादङि न लोपो नभवतीति मतमनादेयम् ॥

## कृमृदृरुहिभ्यश्छन्दसि ॥ ५९ ॥

एभ्यश्च्लेरङ् स्याच्छन्दसि। अकरत्। अमरत्। व्यत्ययेन परस्मैपदम्। अदरत्। अरुहत्। अन्तरिक्षादिवमारुहम्। लोके तु अकार्षीदित्यादि ॥

चिण्ते पदः ॥ ६० ॥

पदश्च्ले श्चिणेकवचने तशब्दे परे[1]। अपादि। तेकिम्[2]। अप त्सातान् ॥

दीप जन बुध पूरि तायि प्यायिभ्यो ऽन्यतरस्याम् ॥ ६१ ॥

एभ्यश्च्ले श्चिणादेशो वा स्यात्तेपरे। अदीपि। अदीपिष्ट। अजनि। अजनिष्ट। अबोधि। अबुद्ध। अपूरि। अपूरिष्ट। अतायि। अतायिष्ट। अप्यायि। अप्यायिष्ट ॥

अचः कर्म कर्तरि ॥ ६२ ॥

अजन्तात्कर्मकर्तरि च्ले श्चिण्वा स्यात्तेपरे। अकारि कृतवा कटः स्वयमेव। अचः किम्। अभेदि काष्ठं स्वयमेव। कर्मकर्तरि किम्। अकारि कटो देवदत्तेन ॥

दुहश्च ॥ ६३ ॥

अस्मा च्च्ले श्चिण्वा स्यात्कर्मकर्तरि। अदोहि दुग्धवा गौः स्वयमेव ॥

न रुधः ॥ ६४ ॥

अस्मा चिण् न स्यात्पूर्वविषये। अन्वरुद्ध गौस्स्वयमेव। कर्मकर्त

1 तशब्दे चि

2 पदेतिरूम् इतिविरुद्धकश्चो पपाठः

रीत्येव । अरोधि गौ र्गोपेन ॥

## तपो ऽनुतापे च ॥ ६५ ॥

तप च्लेः श्चिण् न स्या त्कर्मकर्तर्यनुतापे च । अतप्त तप स्तापसः । तपस्तपः कर्मकस्येति (३ । १ । ८८) तापसः कर्मकर्ता । अन्वतप्त पापेन । अत्र न्याय्ये[1] कर्मणि लकारः ॥

## च्चिण् भावकर्मणोः ॥ ६६ ॥

धातो श्च्ले श्चिणादेश स्स्या द्भावकर्मवाचिनि तशब्दे परे । अशायि भवता । अकारि कटः ॥

## सार्वधातुके यक् ॥ ६७ ॥

भावकर्मवाचिनि सार्वधाके परे धातो र्यक्प्रत्यय स्स्यात् । आस्यते भवता । पच्यते ओदनः ।

## कर्तरि शप् ॥ ६८ ॥

कर्त्रर्थे सार्वधातुके परे धातोः शप्प्रत्ययः स्यात् । भवति ॥

## दिवादिभ्य श्श्यन् ॥ ६९ ॥

एभ्यः श्यन्प्रत्ययः स्या त्कर्तरि सार्वधातुके । शपो ऽपवादः । दीव्यति ॥

## वा भ्राश भ्लाश भ्रमु क्रमु क्लमु त्रसि त्रुटि लषः ॥ ७० ॥

1 न्याय्योझातिविपुस्तकस्थोपपाठः

एभ्यः श्यन्वा स्यात् । भ्राश्यते । भ्राशते । भ्लाश्यते । भ्लाशते । भ्रमु इँ वादिकस्य भौवादिकस्यच ग्रहणम् । भ्राम्यति । भ्रम्यति । भ्रमति । क्राम्यति[1] । क्रामति । क्लाम्यति । क्लामति । त्रस्यति । त्रसति । त्रुट्यति । त्रुटति । लष्यति । लषति ॥

## यसोऽनुपसर्गात् ॥ ७१ ॥

अनुपसर्गो यसः श्यन्वा । यस्यति । यसति । अनुपसर्गात्किम् । आयस्यति[2] ॥

## संयसश्च ॥ ७२ ॥

संपूर्वाद्यसः श्यन्वा । संयस्यति । संयसति ॥

## स्वादिभ्यः श्नुः ॥ ७३ ॥

एभ्यः श्नुप्रत्ययः स्यात् । शपोऽपवादः । सुनोति ॥

## श्रुवः शृ च ॥ ७४ ॥

श्रुवः श्नुप्रत्ययः स्याच्छ्रुवः शृभावश्च । शृणोति ॥

## अक्षोऽन्यतरस्याम् ॥ ७५ ॥

अक्षः श्नुप्रत्ययो वा स्यात् । पक्षे शप् । अक्ष्णोति । अक्षति ॥

## तनूकरणे तक्षः ॥७६॥

---

1 क्रम्यति क

2 आयुष्यतिइतिविपुस्तकस्योपपाठ

अस्मात् श्नु र्वास्यात्। तक्ष्णोति, तक्षति, काष्ठम्। तनूकरणे किम्। संतक्षति वाग्भिः॥

## तुदादिभ्यः शः ॥ ७७ ॥

एभ्यः शः स्यात्। शपोऽपवादः। तुदति॥

## रुधादिभ्यः श्नम्॥ ७८ ॥

एभ्यः श्नम्प्रत्ययः स्यात्। रुणद्धि॥

## तनादिकृञ्भ्य उः॥ ७९ ॥

तनादेः कृञश्च उप्रत्ययः स्यात्। तनोति। करोति। तनादित्वेनैव सिद्धे कृञ्ग्रहणं तनादि कार्यान्तराभाव ज्ञापनार्थम्। तेन तनादिभ्य स्तथासोरिति (२।४।७९) कृञो नभवति॥

## धिन्विकृण्व्योर च॥ ८० ॥

आभ्या मुप्रत्ययः स्या दकार श्चान्तादेशः। धिनोति। कृणोति। अल्लोपस्य स्थानिवत्त्वा न्नोपधा गुणः॥

## क्र्यादिभ्यः श्ना ॥ ८१ ॥

एभ्यः श्नाप्रत्ययः स्या न्नशप्। क्रीणाति॥

## स्तन्भु स्तुन्भु स्कन्भु स्कुन्भु स्कुञ्भ्यः श्नुश्च॥ ८२ ॥

स्कुञ् आप्रवणे। अन्ये सौत्राः। एभ्यः श्नुः स्यात् श्नाच। स्त

भ्नोति । स्तभ्नाति । स्तुभ्नोति । स्तुभ्नाति । स्कभ्नोति । स्क
भ्नाति । स्कुभ्नोति । स्कुभ्नाति । स्कुनोति । स्कुनाति ॥

हलः श्नः शानज्झौ ॥ ८३ ॥

हलः परस्य श्नः शानजादेशः स्यात् हौ । गृहाण ॥

छन्दसि शायजपि ॥ ८४ ॥

हलः श्नः शायच् स्यात् शानजपि हौ छन्दसि । गृभाय । मथान॥

व्यत्ययो बहुलम् ॥ ८५ ॥

शबादीनां स्नान्तानां छन्दसि व्यत्ययो वा स्यात् । भेदति । भिन
त्ति ।बहुळग्रहणं सर्वव्यभिचारार्थम् ।

सुप्ति ङुपग्रह लिङ्ग नराणां
काल हलच् स्वर कर्तृ यङांच ।
व्यत्यय मिच्छति शास्त्रकृ देषां
सोऽपिच सिध्यति बाहुळकेन ॥

लिङ्याशिष्यङ् ॥ ८६ ॥

आशीर्लिङिपरत श्छन्द स्यङ् प्रत्ययः स्यात् । मन्त्रं वोचेम ॥
दृशे रग्वाच्यः ॥
पितरंच दृशेयम् ॥

कर्मवत् कर्मणा तुल्यक्रियः ॥ ८७ ॥

कर्मणा तुल्यक्रियः कर्ता कर्मव त्स्यात् । कर्मकारकं यदाकर्तृत्वेन विवक्ष्यते तदा कर्मकार्याणि य गात्मनेपद चिण् चिण्वदिटः स्यु रित्यर्थः । क्रियते अकारि कारिष्यतेवा घटः स्वयमेव । व त्किम् । अकर्मकाश्रयो भावे लो यथा स्यात् । भिद्यते कुसूलेन ॥

लान्त वाच्यः कर्ता कर्मवत् ॥

तेन कुसूलेने त्यत्र द्वितीयान्न । कर्मणेति किम् । असि श्छिन त्ति । स्थाली पचति ॥

एकस्मिन् धातौ कर्मकर्ता कर्मवत् ॥

देनेह्न । पच त्योदनं देवदत्तो, राध्य त्योदनः स्वयमेव ॥

कर्मस्थ भावानां कर्मस्थक्रियाणांच कर्मवद्भावः ॥

कर्मस्थः पचते र्भावः कर्मस्थाच भिदेः क्रिया ।

मासासिभावः कर्तृस्थः कर्तृस्थाच गमेः क्रिया ॥

मास मास्यत इत्यादौ माससंबन्ध्यासिभावो मासासिभावः ॥

## तप स्तपःकर्मकस्यैव ॥ ८८ ॥

तपःकर्मकस्य तपेः कर्ता कर्मव त्स्यात् । तप स्तप्यते तापसः । तपः कर्मकस्य किम् । उत्तपति सुवर्णं सुवर्णकारः । उत्त प्यमानं सुवर्णं सुवर्णकारं वितपति ॥

## न दुह स्नु नमां यक्चिणौ ॥ ८९॥

एषां कर्मकर्तरि यक्चिणौ न । दुग्धे अदुग्ध प्रस्नुते प्रास्नोष्ट वा गौः स्वयमेव । नमते अनंस्तवा दण्डः स्वयमेव ॥

णिश्रन्थि ग्रन्थि ब्रू आत्मनेप दाकर्मकाणां
कर्मकर्तरि यक्किणौ न ॥

कारयते अचीकरतवा कटः स्वयमेव । उत्पुच्छयते उदपुपुच्छतवा गौः स्वयमेव । श्रन्थते अश्रन्थिष्ट, ग्रथ्नीते अग्रन्थिष्ट[1] ब्रूते अवोचतवा श्लोकः स्वयमेव । येषा मकर्मकाणा मात्मनेपदं विहितं, ते यदाऽन्तर्भावितण्यर्था स्सकर्मका स्तदा कर्म कर्तरि यक्चिणो र्निषेधः । विकुर्वते व्यकृषतवा स्वयमेव सैन्धवाः । स्वयमेव पलायन्त इत्यर्थः ॥

## कुषि रजोः प्राचां श्यन् परस्मैपदं च ॥ ९० ॥

अनयोः कर्मकर्तरि श्यनपरस्मैपदे वास्तः । पक्षात्मनेपदापवादः । कुष्यति कुष्यतेवा पादः स्वयमेव । रज्यति रज्यतेवा वस्त्रं स्वयमेव । व्यवस्थित विभाषेयम्[2] । ते नार्धधातुके नस्तः । चुकुषे कोषिषीष्टि कोषिष्यते अकोषिवा पादः स्वमेव । ररञ्जे ररञ्जीष्ट रङ्क्ष्यते अरञ्जिवा वस्त्रं स्वयमेव ॥

## धातोः ॥ ९१ ॥

1 'ग्रन्थग्रन्थसंदर्भे चुरादावा धृषीयौ तयोर्णिजभावपक्षेग्रहण, तथा क्र्यादिष्वपि पठ्येते तयोरपिग्रहणम् । ...। श्रन्थिग्रन्थ्योराधृषीययोः ग्रन्थति ग्रन्थदेवदत्त. । श्रन्थति मेखलाम ॥ ग्रन्थतेगुण स्वयमेव । अग्रन्थिष्ट गुणः स्वयमेव ॥ श्रन्थते मेखला स्वयमेव । अश्रन्थिष्ट मेखला स्वयमेव । क्र्यादिकयोस्तुग्रथ्नीते ग्रन्थः स्वयमेव । श्रथ्नीते मेखलास्वयमेव ॥' इति पद्म ञ्जर्या हरदत्तः ॥

2 कुषिरजोर्व्यवस्थितविभाषेयम्' चि.

आतृतीया ध्यायान्तं वक्ष्यमाणाः प्रत्यया धातोर्ज्ञेयाः । आर्धधा तुकसंज्ञायां (३ । ४ । ११४ सू ।।) धातोरि त्युच्चार्य यो विहितइ त्येतदर्थलाभार्थ मय मधिकारः । शमिधातो ( ३ । २ । १४ ) रित्यतो धातुग्रहणा नुवृत्त्या तदर्थलाभा दिदं सूत्रं व्यर्थम्, कृदुप पदसंज्ञा वासरूपविधयो प्युत्तरत्रै वानुवृत्त्या भविष्यन्ति, नपूर्वत्रे तिस्थित माकरे ।।

## तत्रोपपदं सप्तमीस्थम् ।। ९२ ।।

अस्मिन् धात्वधिकारे कर्मण्यण् (३।२।१) इत्यादौ सप्तमीनिर्दिष्ट मुपपदसंज्ञंस्यात् । कुम्भकारः ।।

## कृदतिङ् ।। ९३ ।।

अस्मिन्नधिकारे तिङ्वर्जः प्रत्ययः कृत्संज्ञः स्यात् । कर्तव्यम् । अतिङ्किम् । जीयात्[1] ।।

## वाऽ सरूपोस्त्रियाम् ।। ९४ ।।

अस्मि अधिकारे असरूपोऽपवाद उत्सर्गस्यवा बाधकः स्यात् स्त्र्यधिकारविहितं वर्जयित्वा । ण्वुल् तृचौ ( ३ । १ । १३३ ) । इगुपध ज्ञा प्री किरः कः ( ३ । १ । १३५ ) । विक्षिपः । विक्षेप कः । विक्षेप्ता ।। असरूपः किम् । गोदः । कम्बलदः । अणः को नित्यं बाधकः[4] ।।

1. 'चीयात्' इति काशिका
2 कर्मण्यण इत्यणः आतोऽनुपसर्गेकः इत्यस्यानित्यबाधकः इत्यर्थः ।

नानु बन्धकृत मसारूप्यम्[1] ॥

अस्त्रियां किम् । चिकीर्षा । क्तिनो नित्यं बाधः[2] ॥

## कृत्याः प्राङ्ण्वुलः[3] ॥ ९५ ॥

ण्वुल्तृचा(३।१।१३३) वित्यतः प्राग्ये प्रत्यया स्ते कृत्यसंज्ञाःस्युः ॥

## तव्यत्तव्यानीयरः ॥ ९६ ॥

धातो रेते प्रत्ययाः स्युः । तरेफौ स्वरार्थौ । कर्तव्यम् । करणीयम् ॥

वसे स्तव्य त्कर्तरि णिच ॥

वास्तव्यः ॥

कर्मकर्तरि केलिमर् वाच्यइति वृत्तौ ॥

भाष्येतु कर्मणी त्युक्तम् । पचेलिमा स्तण्डुलाः ॥

## अचो यत् ॥ ९७ ॥

अजन्ता द्य त्स्यात् । जेयम् । हलन्तानां ण्यद्विधानात्[4]दे ः...... यमे लब्धे अज्ग्रहण म जन्ता भूतपूर्वादपि यथा स्या दित्येवमर्थम् । दित्स्यम् । अतोलोपे आर्धधातुकइति विषयसप्तमी पक्षे इदं भयो

1. परिभाषेयम् । श्याद्व्यधेतिप्रांसण प्रत्ययबाधकोददातिदधात्योर्विभाषेतिणप्रत्ययविकल्पो स्याःज्ञापकः । अन्यथा नुबन्धकृतादसारूप्यादेव चविषयेणोभविष्यतीतिकिं विकल्पेन ॥

2. स्त्रियांक्तिन्नित्यु त्सर्गस्यक्तिनःअप्रत्ययादित्यनेनअपवादत्वान्नित्यंबाध इत्यर्थः ।

3. अयंपाठोवृत्त्यनुरोधीनभाष्यसम्मतं इति हरदत्तमभ्येस्पष्टम् ।

4. ऋहलोर्ण्यत्इत्यनेन ।

जनम् । परस्समोत्वे स्पष्टार्थ मज्ग्रहणम् ॥

तकि चति शसि यति जनीना मुपसंख्यानम् ॥

तक्यं । चत्यं । शस्यं । यत्यं । जन्यं॥

हनो वा वधश्च ॥

वध्यं । घात्यम् ॥

## पो रदुपधात् ॥ ९८ ॥

पवर्गान्ता ददुपधा द्यत्स्यात् । ण्यतोऽपवादः । लप्यं । लभ्यं । पोः किम् । वाक्यं । अदुपधत्किम् । कोप्यं । तपरः किम् । आप्यम् ॥

## शकिसहोश्च ॥ ९९ ॥

यत् । शक्यम् । सह्यम् ॥

## गद मद चर यम श्चानुपसर्गे ॥ १०० ॥

एभ्योऽ नुपसर्गेभ्यो यत्स्यात् । गद्यं । मद्यं । चर्यं । यम्यं । अनुपसर्गे किम् । प्रगाद्यमित्यादि । यमः पूर्वेणैव सिद्धे अनुपसर्गादेवेति नियमार्थं ग्रहणम् ॥

चरे राङ्य गुरौ॥

आचर्यो देशः । गुरौतु आचार्यः ॥

## अवद्य पण्य वर्या गर्ह्य पणित व्यानिरोधेषु ॥ १०१ ॥

एते यथाक्रमं गर्ह्यादिषु यदन्ता निपात्यन्ते । अवद्यं गर्ह्यंचेत् ॥ अनुद्यमन्यत् । वदः सुपि क्यप्च ( ३ । १ । १०६ ) ॥ पण्यं पणितव्यंचेत् । पाण्यमन्यत् । स्तुत्य मित्यर्थः ॥ शतेन वर्या कन्या । अनिरोधश्चेत् । वरितृ नियमाभावो ऽनिरोधः । वृत्या न्या । एतिस्तु शसित्यादिना ( ३ । १ । १०९ ) क्यप् ॥ वर्येति स्त्रीलिङ्गनिर्देशः किम् । वार्या ऋत्विजः । ऋत्विजामपि यष्टुभिर्वरणे नियमाभावः ॥

## वह्यं करणम् ॥ १०२ ॥

करणे वह्यमिति निपात्यते । वह्यं शकटम् । करणं किम् । वाह्य मन्यत् ॥

## अर्यः स्वामि वैश्ययोः ॥ १०३ ॥

ण्यति प्राप्ते यदन्त एतयो र्निपात्यते । अर्यः स्वामी वैश्योवा । ब्राह्मण स्त्वार्यः ॥

स्वामि न्यन्तो दात्तत्वं वाच्यम् ॥

यतो ऽनाव ( ६ । १ । २१३ ) इति बाधनार्थम् ॥

## उपसर्या काल्या प्रजने ॥ १०४ ॥

निपातो ऽयम् । प्राप्तकाला काल्या । समय स्तदस्य प्राप्त ( ५ । १ । १०४ ) मित्यर्थे कालाद्यत् ( ५ । १ । १०७ ) । प्रजनं गर्भग्रहणम् । प्रजने प्राप्तकालाचेत् उपसर्या गौः । उपसार्याऽन्या ॥

## अजर्यं संगतम् ॥ १०५ ॥

नञ् पूर्वाज्जीर्यतेर्यं निपात्यते। संगतं चेत्कर्तृ। संगतं संगमः। नञोर्यतो त्यजर्यं मार्यसंगतम्। संगतं किम्। अजरिता कम्बलः॥

## वदः सुपि क्यप्च ॥ १०६ ॥

अनुपसर्गे सुप्युपपदे वदः क्यब्यतौ स्तः। ब्रह्मोद्यं ब्रह्मवद्यम्। सुपि किम्। वाद्यम्। उपसर्गे तु प्रवाद्यम्॥

## भुवो भावे ॥ १०७ ॥

अनुपसर्गे सुपि भुवः क्यप्स्याद्भावे। ब्रह्मभूयं। ब्रह्मत्वमित्यर्थः। सुपि किम्। भव्यम्। अनुपसर्गे किम्। प्रभव्यम्॥

## हनस्त च ॥ १०८ ॥

सुप्यनुपसर्गे हन्तेः क्यप्स्याद्भावे। तकारश्चान्तादेशः। ब्रह्महत्या। स्त्रीत्वं लोकात्। सुपि किम्। घातः। अनभिधानान्न भावे ण्यत्। अनुपसर्गे किम्। प्रघातः॥

## एतिस्तुशास्वृदृजुषः क्यप् ॥ १०९ ॥

भावे सुप्यनुपसर्ग इति निवृत्तम्। एभ्यः क्यप्स्यात्। इत्यः। स्तुत्यः। शिष्यः। वृत्यः। आदृत्यः। जुष्यः। पुनः क्यब्ग्रहणं[1] मोरावश्यक (३।१।१२५) इति ण्यद्बाधनार्थम्। अवश्य

1. वदस्सुपीत्यतः क्यबित्यनुवर्तमाने पुनः क्यब्ग्रहणमित्यर्थः।

स्तुत्यः । वृङिति वृञ्य्र हणम् । वृङ्स्तु वार्या ऋत्विजः ॥

शंसि दुहि गुहिभ्यो वा ॥

शस्यम् । शंस्यम् । दुह्यम् । दोह्यम् । गुह्यम् । गोह्यम् ॥

आङ्पूर्वा दञ्जे स्संज्ञायाम् ॥

आज्यम् ॥—कथंतर्हि उपेयमिति । ईञो रूपम् । इण स्तु पे त्यमित्येव ॥

## ऋदुपधा च्चाक्लृपि चृतेः ॥ ११० ॥

ऋदुपधाच्च क्यप् स्यात् । वृत्यम् । क्लृपि चृत्योस्तु कल्प्यम् । चर्त्यम् । तपरः किम् । कृतसंशब्दने । ण्यदेव कीर्त्यम् । कीर्तं यते णिजभावपक्षे ण्यत् । ण्यन्ताच्च यता भाव्यम् ॥

पाणौ सृजे र्ण्यत् ॥

पाणिसर्ग्या रज्जुः ॥

समवपूर्वाच्च ॥

समवसर्ग्या ॥

## ई च्चखनः ॥ १११ ॥

खनः क्यप्स्या दीकार श्चान्तादेशः । खेयम् । दीर्घोच्चारणं ये विभाषेति (६।४।४३) पक्षे आत्व बाधनार्थम् । प्रत्ययसं नियोगशिष्टस्य इकार स्यान्तरङ्गत्वा दात्वमाप्स्यभावा द्ध्रस्वविधाव पि नबाधकमि त्याकरे ॥

1 'इगन्तादेशस्य ।' इति हरदत्तः

27-7-36

## भृञोऽसंज्ञायाम् ॥ ११२ ॥

अस्मा त्क्यप्स्या दसंज्ञायाम् । भृत्याः कर्मकराः । संज्ञायांतु भार्यानाम क्षत्रियाः ॥

संपूर्वाद्वा ॥

संभृत्याः । संभार्याः ॥— कर्मणिण्यति भार्याशब्दः ॥

## मृजेर्विभाषा ॥ ११३ ॥

अस्मात् क्यब्वा स्यात् । परिमृज्यः । परिमार्ग्यः ॥

## राजसूय सूर्य मृषोद्य रुच्य कुप्य कृष्ट पच्याऽव्यथ्याः ॥ ११४ ॥

एते क्यपि निपात्यन्ते । राजनि तृतीयान्ते प्रथमान्ते वोपपदे सुनोतेः क्यप् । राज्ञा सूयते राजावा सोतव्यः राजसूयः ॥ सर्तेरुत्वम् । सुवतेर्वा रुडागमः । सरति सुवतेवा सूर्यः ॥ वदस्सुपोति ( ३ । १ । १०६ ) मृषापूर्वस्य यद्बाधनार्थे निपातः । मृषोद्यम् ॥ रोचतेऽसौरुच्यः । गुपेरादेः कत्वंसंज्ञायाम् । कुप्यम् । गोप्य मन्यत् ॥ कृष्टे पच्यन्ते कृष्टपच्याः । कर्मकर्तरि निपातनम् ॥ नव्यथन्ते अव्यथ्याः ॥

## भिद्यो द्ध्यौनदे ॥ ११५ ॥

भिदे रुज्झेश्च कर्तरि क्यप् निपात्यते नदेऽभिधेये । उज्झेर्धत्वंच । भिनत्तीति भिद्यः । उज्झत्युदकमि त्युद्ध्योनदः । अन्यत्र भेत्ता ।

उज्झिता ॥

## पुष्यसिद्धौ नक्षत्रे ॥ ११६ ॥

अधिकरणे क्यबन्त निपातौ वेतौ । पुष्यन्त्यस्मि न्नर्थाः पुष्यः । सिध्यन्त्यस्मिन्निति सिध्यः । नक्षत्रे किम् । पोषणः । सेधनः ॥

## विपूय विनीय जित्या मुञ्ज कल्क हलिषु ॥ ११७ ॥

एते यथाक्रमं मुञ्जाद्यर्थेषु । कर्मणि यति प्राप्ते क्यबन्ता निपात्यन्ते । विपूयो मुञ्जः । विपव्यमन्यत् । विनीयः कल्कः । विनेय मन्यत् । जित्यो हलिः । जेय मन्यत् । महद्धलं हलिः ॥

## प्रत्यपिभ्यां ग्रहे श्छन्दसि ॥ ११८ ॥

क्यप् । प्रतिगृह्यम् । अपिगृह्यम् । छन्दसि किम् । प्रतिग्राह्यम् । अपिग्राह्यम् ॥

## पदास्वैरि बाह्यापक्ष्येषुच ॥ ११९ ॥

एष्वर्थेषु ग्रहेः क्यप् स्यात् । प्रगृह्यम्, अवगृह्यं वापदम् । यस्य प्रगृह्यसंज्ञा अवग्रहोवा क्रियते तदेव मुच्यते । अस्वैरो परवशः । गृह्या इमे । परतन्त्राइत्यर्थः । बाह्यायां ग्रामगृह्यासेना । ग्रामा द्बहिः स्थितेत्यर्थः । स्त्रीलिङ्गनिर्देशा त्पुनपुंसकयोर्न । पक्षेभवः पक्ष्यःदिगादिभ्यो यत् ( ४ । ३ । ५४ ) । पक्ष्योमार्गः । वासुदेवगृह्यः । तत्पक्षाश्रित इत्यर्थः ॥

## विभाषा कृवृषोः ॥ १२० ॥

अभ्यां वा क्यप् । कृत्यम् । कार्यम् । वृष्यम् । वृष्यम् ॥

युग्यंच पत्रे ॥ १२१ ॥

युजेः क्यप् कुत्वंच निपात्यते वाहने । युग्योऽश्वः । गजोवा । योग्यमन्यत् ॥

अमावस्य दन्यतरस्याम् ॥ १२२ ॥

अमापूर्वस्य वसे र्ण्यति वृद्ध्यभवोत्रा निपात्यते । अमा सह वसतोऽस्यां सूर्याचन्द्रमसाविति त्यमा वस्या । अमावास्या । एकदेशविकृत स्यानन्यत्वा दमावास्याचाचे ( ४ । ३ । ३० ) त्यमावस्याशब्दस्यापि दुनणौ सिध्यतः । तित्स्वरितत्वं ( ६ । १ । १८५ ) च । अन्यथा यतोऽनावइ ( ६ । १ । २१३ ) त्याद्युदात्तं स्यात् ॥

छन्दसि निष्टर्क्य देवहूय प्रणीयोन्नीयोच्छिष्य मर्य स्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्य प्रतिषीव्यब्रह्मवाद्य भाव्य स्ताव्यो पचाय्यमृडानि ॥ १२३ ॥

एते छन्दसि निपात्यन्ते । निपूर्वात्कृते र्यदपवादो ण्यत् । आद्यन्तविपर्ययो निस ष्षत्वंच निपात्यते । निष्टर्क्यं चिन्वीत । देवपूर्वात् ह्वयतेः क्यप् । जुहोतेर्वा तुगभावो दीर्घश्च । देवेभ्यो हूयतइति देवहूयः पशुः । प्रोत्पूर्वान्नयतेः क्यप् । प्रणीयः। उन्नीयः । उत्पूर्वाच्छिषेः क्यप् । उच्छिष्यः । मृ स्तृ ध्वृ एभ्योयत् । मर्यः । स्तर्या

स्त्री निर्देशा त्पुंनपुंसकयोर्न । व्यर्यः । खनेर्यत् । ण्यच । खन्यः । खान्यः । देवपूर्वाद्यजे र्यः । देवयज्यो । स्त्रीनिर्देशः प्राग्वत् । आङ्पूर्वात् पृच्छेः क्यप् । आपृच्छ्यः । प्रतिपूर्वा त्सिवः क्यप् पत्वं च । प्रतिषीव्यः । ब्रह्मणि वदे र्ण्यत् । ब्रह्मवाद्यम् । भूस्तौत्योर्ण्यत् । भाव्यः । स्ताव्यः । उपाचिनोते र्ण्यदायौ पृडेचोत्तरपदे ।

उपचाय्यपृडं हिरण्यइति वाच्यम् ॥

उपचेय पृड मन्यत् ॥

ऋहलो र्ण्यत् ॥ १२४ ॥

ऋवर्णान्ता द्धलन्ताच्च धातोर्ण्य त्प्रत्ययः स्यात् । कार्यं । वाक्यम् ॥

ओ रावश्यके ॥ १२५ ॥

उवर्णान्ता ण्ण्यत्स्यादवश्यंभावे द्योत्ये । लाव्यम् । आवश्यकेकिम् । लव्यम् । आवश्यकइत्य स्यानुपपदत्वे ऽपि मयूरव्यंसकादिषु निपातना दवश्यलाव्य मित्यादा वुत्तरपदप्रकृति स्वरत्व मि त्याकरे ॥

आसु युवपि रपि लपि त्रपि चमश्च ॥ १२६ ॥

आङ्पूर्वा त्सुनोते र्यादिभ्यश्चण्यत्स्यात् । यतो ऽपवादः । आसाव्यम् । याव्यम् । वाप्यम् । लाप्यम् । त्राप्यम् । आचाम्यम् । चकारादाम्यम् ॥

आनाय्यो ऽनित्ये ॥ १२७ ॥

ण्यदन्तो यं निपात्यते । अनित्येऽर्थे । आनाय्यो दक्षिणाग्निः । आनेयो न्यः ॥

गार्हपत्ययोनिके दक्षिणाग्ना वेवाय मिष्यते ॥

नदक्षिणाग्निमात्रे पि । तस्यहि योनि र्विकल्प्यते । वैश्यकुलाद्वित्तवतो भ्राष्ट्रा द्गार्हपत्या दाहवनीयाद्वेति ॥

प्रणाय्यो ऽसंमतौ ॥ १२८ ॥

नविद्यते संमतिः पूजा यस्मिन् सोऽसंमतिः । तस्मिन् प्रणाय्यइति निपात्यते । प्रणाय्य श्चोरः । प्रणेयोन्यः । ज्येष्ठाय पुत्राय पिता ब्रह्म ब्रूया त्प्रणाय्या यान्तेवासिन इत्यादौ क्वचि त्पूजितेऽपि बाहुळका द्भवति ॥

पाय्य सांनाय्य निकाय्य धाय्या मान हविर्निवास सामिधेनीषु ॥ १२९ ॥

पाय्यादयो यथक्रमं मानादिषु निपात्यन्ते । माङोण्य दादेःपश्च निपात्यते । पाय्यं मानं । मेय मन्यत् । संपूर्वा न्नयते र्ण्यदायादेशा द्रुपसर्गदीर्घत्वंच । सांनाय्यं हविः । संनेय मन्यत् । रूढित्वा द्धविर्विशेषे पयस्येव । निपूर्वा च्चिनोते र्ण्यदाया वादिकत्वंच । निकाय्यो निवासः । निचेय मन्यत् । धाञोण्यत् । धाय्या सामिधेनी । साच ऋग्विशेषः । धेय मन्यत् । रूढिशब्दत्वा दसामिधेन्यामपि क्वचित्प्रयोगः । धाय्याः शंसतीति ॥

क्रतौ कुण्डपाय्य संचाय्यौ ॥ १३० ॥

निपातावेतौ । तृतीयान्त कुण्डपूर्वात्पिबतं रधिकरणे यण्कौ निपा त्येते । कुण्डैः पीयते ऽस्मिन् सोमइति कुण्डपाय्यः । संपूर्वा च्चिनो ते र्ण्यदायौ । संचीय तेऽस्मिन् सोमइति संचाय्यः क्रतुः । क्रलौकि म् । कुण्डपानं । संचेयम् ॥

## अग्नौ परिचा य्योपचाय्य समूह्याः ॥ १३१ ॥

अग्नावेते निपात्यन्ते । पर्युपपूर्वा चिनोते र्ण्यदायादेशौ । परिचाय्यं चिन्वीत । उपचाय्यम् । संपूर्वा द्वहे र्ण्यति संप्रसारण दीर्घत्वे । स मूह्यं चिन्वीत । अग्नौकिम् । परिचेयम् । उपचयम् । संवाह्यम् ॥

## चित्याग्नि चित्येच ॥ १३२ ॥

निपातावेतौ । चित्योग्निः । अग्निचयन मग्निचित्या । भावेऽर्थस्त्यप् स्तुक्चनिपात्यते । तेनान्तोदात्तत्वंभवति । अग्नावेव । चयमन्यत् ॥

## ण्वुल् तृचौ ॥ १३३ ॥

धातो रेतौ प्रत्ययौस्तः । कारकः । कर्ता ॥

## नन्दिग्रहि पचादिभ्यो ल्युणि न्यचः ॥ १३४ ॥

त्रिभ्यो गणेभ्य स्त्रयः प्रत्ययाः क्रमा त्स्युः । नन्द्यादिभ्यो ल्युः । नन्दनः । ग्रहयादिभ्यो णिनिः । ग्राही ।पचादिभ्योऽच् । पचः । पचादि राकृतिगणः ॥

## इगुपधज्ञा प्रीकिरः कः ॥ १३५ ॥

इगुपधेभ्यो ज्ञादिभ्यश्च कः स्यात् । क्षिपः । बुधः । जानातीतिज्ञः

प्रीणातीति प्रियः। किरतीति किरः। पचादित्वादेव, मेघः, इत्यादि।

आत श्चोपसर्गे ॥ १३६ ॥

उपसर्गेउपपदे आदन्ता त्कः स्यत्। णापवादः। प्रस्थः। सुग्लः॥

पा घ्रा ध्मा धेट् दृशः शः ॥ १३७ ॥

एभ्यः शः स्यादुपसर्गे। उत्पिबः। उज्जिघ्रः। उद्धमः। उद्धयः। उत्पश्यः।

अनुपसर्गे पीव्यते।

पश्यः॥

जिघ्रते स्संज्ञायां न

व्याघ्रः॥

अनुपसर्गा ल्लिम्पविन्दधारिपारि वेद्युदेजिचेति स्साति साहिभ्यश्च ॥ १३८ ॥

एभ्योऽनुपसर्गेभ्यः शप्रत्ययः स्यात्। धार्यादयो ण्यन्ताः। लिम्पः। विन्दः। धारयः। पारयः। वेदयः। उद्वेजयः। चेतयः। साति स्सौत्रो धातुः। सातयः। साहयः। अनुपसर्गात्किम्। प्रलिपः।

नौलिम्पेः संज्ञायाम्॥

निलिम्पा नाम देवाः॥

गवादिषु विन्दे स्संज्ञायाम्॥

गोविन्दः। अरविन्दम्॥

## ददाति दधात्यो र्विभाषा ॥ १३९ ॥

शप्रत्ययः । पक्षेऽण् ददः । दायः । दधः । धायः । अनुपसर्गादि
व मदः ॥

## ज्वलिति कसन्तेभ्यो णः ॥ १४० ॥

इति र धर्थः । ज्वलादिभ्यः कसन्तेभ्यो वा णः स्यात् । पक्षे पचा
द्यच् । ज्वलः । ज्वालः। चालः । चलः। अनुपसर्गादिव। मज्वलः॥

तनोते र्णो वाच्यः ॥

अवतानः ॥

## श्याऽऽद्व्यधा स्रु सं स्र्वती णवसावहृलिह श्लिष श्वसश्च ॥ १४१ ॥

अनुपसर्गा द्वेतिच निवृत्तम् । श्यैङ आदन्ता द्व्यधादेश्चणप्रत्ययः
स्यात् । श्यैङ् स्यत्यो रातश्चोपसर्गइति ( ३ । १ । १३६ ) बाधना
र्थं ग्रहणम् । अवश्यायः । दायः । व्याधः । आस्रावः । संस्रावः
अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ॥

## दुन्यो रनुपसर्गे ॥ १४२ ॥

आभ्यां णः स्यात् । दुनोतीतिदावः । नयतीतिनायः । अनुपसर्गेकि
म् । मदवः । मणयः । पचाद्यच् (३ । १ । १३४) ।

## विभाषा ग्रहः ॥ १४३ ॥

णः । पक्षेऽच् । ग्राहः । ग्रहः ॥

भव्रतेश्च ॥

भावः । भवः ।

गेहेकः ॥ १४४ ॥

गेहे वाच्ये ग्रहेः कस्स्यात् । गृहम् । तात्स्थ्या त्ताच्छब्ध्यम् । गृहा दाराः ।

शिल्पिनि ष्वुन् ॥ १४५ ॥

धातोः ष्वुनप्रत्ययः स्या च्छिल्पिनि वाच्ये ॥

नृति खनि रञ्जिभ्यए वेष्यते ॥

नर्तकः । नर्तकी । खनकः । रजकः । रजकस्येतिभाष्येप्रयोगादनुनासिक लोपः ॥

गस्थकन् ॥ १४६ ॥

गायतेः थकनप्रत्ययः स्या च्छिल्पिनि । गाथकः ॥

ण्युट्च ॥ १४७ ॥

गायते शिशल्पिनि ण्युट् स्यात् । गायनः ॥

हश्च व्रीहि कालयोः ॥ १४८ ॥

जहाते र्जिहोतेश्च ण्युटप्रत्ययः स्यात् व्रीहौकालेच वाच्ये । हायना नाम व्रीहयः । हायनो वत्सरः ॥

प्रुसृल्व स्समभिहारे वुन् ॥ १४९ ॥

एभ्यो वुन् स्या त्क्रिया समभिहारे । प्रवकः । सरकः । लवकः ।

साधुकारिणोप्यते ॥

समभिहाराभावे पि सत्यपि तस्मिन् दुष्टकारिणिन ॥

आशिषिच ॥ १५० ॥

आशिषि गम्यमानायां धातो र्वुन् स्यात् । जीवतात् । जीवकः नन्दकः । भवकः ॥

इतिश्रीमहोपाध्याय श्रीमद्राघवसोमयाजिकुलावतंस श्रीमद् द्वैत विद्याचार्यश्रीमत्तिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ व्याकरणमिताक्षरायां वृत्तौ तृतीया ध्यायस्य प्रथमः पाद ॥

## कर्मण्यण् ॥ १ ॥

त्रिविधं कर्म । निर्वर्त्यं विकार्यं प्राप्यंच । सत्रत्र कर्मण्युपपदे धातो रण् स्यात् । निर्वर्तंचम् । कुम्भकारः । विकार्यं । काण्डंलुनातीति काण्डलावः । प्राप्यम् । वेद मधीते वेदाध्यायः । ग्रामंगच्छति, आदित्यं पश्यति, हिमवन्तं शृणोतीत्य त्रानभिधाना न्नभवति । अनभिधानं चाप्तोपदेशात् ज्ञेयम् ।

शीलि कामि भिक्षाचरिभ्योणः पूर्वपदप्रकृति स्वरत्वंच ॥

मांसशीला । मांसकामा । मांसभक्षा । कल्याणाचारा । णोक्त्या ङीप् नभवति ॥

ईक्षिक्षमिभ्यांच ॥

सुख प्रतीक्षा । वहुक्षमा ॥

अकारा दनुपपदा त्कर्मोपपदो विप्रतिषेधेन ॥

ओदनपाचः ॥

## ह्वा वा मश्च ॥ २ ॥

ह्वेञ् स्पर्धायां शब्देच । वेञ् तन्तुसन्ताने । माङ्माने शब्देच । एभ्यः कर्मण्युपपदे अण् स्यात् । कापवादः । स्वर्गह्वायः । तन्तु

चायः। धान्यमायः ॥

आतो ऽनुपसर्गे कः ॥ ३ ॥

अनुपसर्गेभ्य आदन्तेभ्यः कर्मण्युपपदे कः स्यात्। अणोपवादः। गोदः। अनुपसर्गइतिकिम्। वडवा संदायः ॥

सुपिस्थः ॥ ४ ॥

सुप्युपपदे तिष्ठतेः कस्स्यात्। कूटस्थ इत्यादि ॥ सुपीतियोगविभागः कर्त्रर्थः। द्वाभ्यां पिबतीति द्विपः ॥ ततःस्थो भावार्थः। आखू नामस्थान माखूत्थं वर्तते ॥

तुन्दशोकयोः परिमृजापनुदोः ॥ ५ ॥

एतयोः कर्मणो रुपपदयोः परिमृजापनुदोःकः स्यात्। तुन्दपरिमृजः। अलसइष्टिः। तुंदपरिमर्जो न्यः। शोकापनुदः। सुखाहर्तैव। शोकापनोदो ऽन्यः ॥

मूलविभुजादिभ्यश्च ॥

मूलानि विभुजतीति मूलविभुजो रथः। नखमुचानि धनूंपि। काकगुहा स्तिला इत्यदि। आकृति गणोऽयम् ॥

प्रे दाज्ञः ॥ ६ ॥

सोपसर्गार्थोऽयम्। सर्वप्रदः। पथिप्रज्ञः। प्रइतिकिम्। गोसंदायः॥

समिख्यः ॥ ७ ॥

गां संचष्टे गोसंख्यः । पशु संख्यः ॥

गापोष्टक् ॥ ८ ॥

गायतेः पिबतेश्च टक् स्यात् । काणवादः । सामगः । सामगी ॥

सुराशीध्वोः पिबतेः ॥

सुरापः। शीधुपः । एतयोः किम् । क्षीरपा ब्राह्मणी। अनुपसर्गइत्ये व । सामसंगायः ।

बहुळंछंदसि ॥

सुरापी । सुरापा ॥

हरते रनुद्यमनेऽच् ॥ ९ ॥

हरतेः कर्मण्युपपदे अच्प्रत्ययः स्यात् । कवचहरः उत्क्षेपणेतु भारहारः ।

अच्प्रकरणे शक्ति लाङ्ग लांङ्कुश यष्टि तोमर घट घटी धनुष्षु ग्रहे रुपसंख्यानम् ॥

शक्तिग्रह इत्यादि ।

सूत्रेच धार्यर्थे ॥

सूत्रग्रहः । सूत्रं धारयती त्यर्थः । सूत्रग्राहोन्यः ॥

वयसिच ॥ १० ॥

वयसि गम्यमाने हरतेः कर्मण्युपपदे अच्स्यात् । उद्यमनार्थ आरम्भः । यदुद्यमनं क्रियमाणं संभाव्यमानंवा वयो गमयति तत्रायं वि

धिः । कवचहरः क्षत्रियकुमारः ॥

## आङि ताच्छील्ये ॥ ११ ॥

आङ्पूर्वा द्धरतेः कर्म ण्युपपदे अच्स्यात् ताच्छील्ये । ताच्छील्यं तत्स्वभावता । पुष्पाहरः । पुष्पाहरणे फलनिरपेक्षा प्रवृत्ति रित्यर्थः। ताच्छील्य इतिकिम् । भाराहारः ॥

## अर्हः ॥ १२ ॥

अस्मा त्कर्म ण्युपपदे अच् स्यात् । स्त्रियां विशेषः । पूजार्हा ब्राह्मणी ॥

## स्तम्ब कर्णयो रमि जपोः ॥ १३ ॥

स्तम्ब कर्णयो रुपपदयोः रमि जपो रच् स्यात् । अकर्मकत्वा त्कर्मणीति नसंबध्यते ॥

क्रमेण हस्ति सूचकयो रिष्टिः ॥

स्तम्बेरमतइति स्तम्बेरमो हस्ती । कर्णेजपतीति कर्णेजपः सूचकः । तत्पुरुषे कृतिबहुळमिति (६ । ३ । १४) सप्तम्या अलुक् । हस्तिसूचकयोः किम् । स्तम्बे रन्ता । कर्णेजपिता ॥

## शमिधातो स्संज्ञायम् ॥ १४ ॥

शम्युपपदे धातुमात्रा दच् संज्ञायां । शङ्करः । शम्भवः । पुनर्धातु ग्रहणं कृञोहेत्वादिषु टबाधनार्थम् । शङ्करानाम प्रव्राजिका ।

## अधिकरणे शेतेः ॥ १५ ॥

अच् । खे शेतइति खशयः ॥

पार्श्वादि ष्वुपसंख्यानम् ॥

पार्श्वाभ्यां शेते पार्श्वशयः । उदरशयः । पृष्ठशयः ॥

दिग्धसहपूर्वाच्च ॥

दिग्धेन सह शेते दिग्धसहशयः ॥

उत्तानादिषु कर्तृषु ॥

उत्तान श्शेते उत्तानशयः । अवमूर्धशयः ।

गिरौड श्छन्दसि ॥

गिरिशः ।

चरेष्टः ॥ १६ ॥

अधिकरणे चरे ष्टः स्यात् । कुरुचरः । कुरुचरी ॥

भिक्षासेनादायेषुच ॥ १७ ॥

एषु चरे ष्टः स्यात् । भिक्षाचरः । सेनाचरः । आदायचरः ॥ कथं सहचरः सहचरीति । पचादिषुचरडिति पठ्यते । सुप् सुपेति (२॥१॥४) समासः ॥

पुरोऽग्रतोऽग्रेषु सर्तेः ॥ १८ ॥

एषु सर्तेः ष्टः स्यात् । पुरस्सरः । अग्रतस्सरः । अग्रेसरः । एत्वं निपातनात् । अग्रसरमितितु वाहुळका त्समर्थनीयत् ॥

पूर्वे कर्तरि ॥ १९ ॥

अस्मिन् सर्ते टः स्यात् । पूर्वस्सरतीति पूर्वसरः । कर्तरीतिकिम् । पूर्वं* सरतीति पूर्वसारः ।

कृञोहेतु ताच्छील्यानुलोम्ये पु ॥ २० ॥

एषु गम्येषु कर्मणि कृञ टः स्यात् हेतौ । विद्यायशस्करो । ताच्छील्ये । श्राद्धकरः । आनुकूल्ये । वचनकरः । एषु किम् । कुंभकारः ॥

दिवा विभा निशा प्रभा भास्कारा न्तनन्ता दि बहु नान्दी किं लिपि लिवि बलि भ क्तिकर्तृ चित्र क्षे त्र संख्या जङ्घा बा ह्वहर्यत्त द्धनु ररुष्पु ॥ २१ ॥

दिवादि पूपपदेषु कृञष्टः स्या दहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । प्रभाकरः । भास्करः । सत्वं निपातनात् । कारकरः । अन्तकरः । अनन्तकरः । आदिकरः । बहुकरः । नान्दीकरः । किंकरः । लिपिकरः । लिविकरः । बलिकरः । भक्तिकरः । कर्तृकरः । चित्रकरः । क्षेत्रकरः । संख्या । एककरः । द्विकरः । जङ्घाकरः । बाहुकरः । अहस्करः । सत्वंपूर्ववत् । यत्करः तत्करः । धनुष्करः । अरुष्करः ॥

किं य त्त द्बहुषु कृञोऽच् ॥

किंकरा । यत्करा । तत्करा । बहुकरा । किंकरीत्यपिकेचित् ॥

* 'पूर्वं' क

## कर्मणि भृतौ ॥ २२ ॥

कृञ ष्टः स्यात् । कर्मकरः । भृताविति किम् । कर्मकारः ॥

## न शब्दश्लोक कलहगाथावैर चाटुसूत्र मन्त्र पदेषु ॥ २३ ॥

एषु करोते ष्टो न स्या द्धे त्वादौ । शब्दकारः । पद्कारः ॥

## स्तम्बशकृतोरिन् ॥ २४ ॥

अनयोः कृञ इन् स्यात् ॥ क्रमेणव्रीहिवत्सयोरिष्टिः ॥ स्तम्बकरि र्व्रीहिः। शकृत्करिर्वत्सः । अनयोःकिम् । स्तम्बकारः । शकृत्कारः॥

## हरते र्दृ तिनाथयोः पशौ ॥ २५ ॥

दृति नाथयोः कर्मणो हरतेरिन् स्यात् पशौ कर्तरि । दृतिहरिः । नाथहरिः पशुः । पशौ किम् । दृतिहारः । नाथहारः ॥

## फलेग्रहिरात्म म्भरिश्च ॥ २६ ॥

इन्नन्ता वेतौ निपात्येते । फलानि गृह्णातीति फलेग्रहिः । एत्वं निपातनाद् । आत्मानं बिभर्तीति आत्मंभरिः । नुम् निपातनात् । चात् । फलग्रहिः । कुक्षिम्भरिः ॥

## छन्दसिवनसनरक्षि मथाम् ॥ २७ ॥

एभ्यः कर्मण्यपपदे इन् स्याच्छन्दसि । ब्रह्मवनिं त्वा । गोसनिं यौं

पथिरक्षी[1] । द्विवचनान्त मिदम् । हरिर्मथोनाम् ॥

## एजेः खश् ॥ २८ ॥

एजृकम्पने । ण्यन्तादस्मात् खश् स्यात् । जनमेजयः । जनान् कम्पयतीत्यर्थः ॥

वातादिष्वजादीनामुप सङ्ख्यानम् ॥

वातमजा मृगाः । शुनिन्धयः । खित्यनव्ययस्येतिह्रस्वः । तिलन्तुदः । शर्धञ्जहामापाः[2] ओहाक् । शपश्श्लुः । श्लाविति द्वित्वम् ॥

## नासिकास्तनयोर्ध्माधेटोः ॥ २९ ॥

एतयोः खश् स्यात् । नासिकन्धमः । ह्रस्वमुमौ । स्तनन्धयः । स्तनशब्दस्य परनिपात सामर्थ्यान्नासिकंधय इत्यपीष्यते । धेटट्टित्वात् स्तनन्धयी ॥

## नाडीमुष्ट्योश्च ॥ ३० ॥

एतयोरुपपदयो र्ध्माधेटोः खश्स्यात् । नात्र सङ्ख्यातानुदेशः । नाडिन्धमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः । चात् । घटिन्धमः । घटिन्धयः । खारिन्धमः । खारिन्धयः । खरिन्धमः । खरिन्धयः । खरीगर्भी । वातन्धमः । वातन्धयः ॥

## उदिकूलेरुजिवहोः ॥ ३१ ॥

उत्पूर्वयोः कूलोपपदयोः रुजिवहोः खश्स्यात् । कूलमुद्रुजः । कूल

1 'गोसनि दधिरक्षी' क वि. 2 'शर्धञ्जहामृगा' क वि.

मुद्गहः ॥

## वहाभ्रे लिहः ॥ ३२ ॥

एतदुपपदस्य लिहः खश्स्यात्। वहंस्कन्धप्रदेशं लेढीति वहंलिहोगौः। अभ्रंलिहोवायुः ॥

## परिमाणेपचः ॥ ३३ ॥

परिमाणं प्रस्थादि। तस्मिन् उपपदेपचेः खश् स्यात्। प्रस्थं पचा स्थाली। खारिंपचः कटाहः ॥

## मितनखेच ॥ ३४ ॥

पचेः खश्। मितम्पचाब्राह्मणी। नखम्पचायवागूः ॥

## विध्वरुषोस्तुदः ॥ ३५ ॥

विधुंतुदः। अरुन्तुदः। अरुर्द्विषदितिमुम्। संयोगान्तलोपः ॥

## असूर्यललाटयोर्दृशितपोः ॥ ३६ ॥

यथाक्रम मेतदुपपदयो रेतयोः खश्स्यात्। असूर्यम्पश्या राजदाराः। पाघ्राध्मेत्यादिनापश्यादेशः। गुप्तिविषयमेतत्। कदाचिद्दर्शने ऽपिभवति। ललाटन्तपस्सूर्यः ॥

## उग्रम्पश्ये रम्मदपाणिन्धमाश्च ॥ ३७ ॥

एतेनिपात्यन्ते। उग्रं पश्यती त्युग्रंपश्यः। इरया माद्यतीतीरम्म

दः। निपातनाच्छयनभावः। पाणयोध्मायन्ते ऽत्रेति। पाणिन्धमाः पन्थानः ॥

## प्रियवशेवदःखच् ॥ ३८ ॥

एतदुपपदस्य वदः खच् स्यात्। प्रियंवदः। वशंवदः ॥

### खचिगमेस्सुप्युपसङ्ख्यानम् ॥

मितङ्गमोहस्ती ॥

### विहायसो विहच ॥

विहङ्गमः ॥

### खचडित् ॥

विहङ्गः ॥

### डेच[2]विह ॥

विहगः ॥

## द्विषत्परयोस्तापेः ॥ ३९ ॥

एतदुपपदस्य तापेः खच् स्यात्। तापेरितिचौरादिक भौवादिकयोर्ग्रहणम्। द्विषन्तं तापयतीति द्विषन्तपः। आरुर्द्विष( ६ । ३ । ६७) दितिमुम्। संयोगान्तलोपः। परन्तपः। द्वितकारकनिर्देशात् स्त्रियांन। द्विषतीतापः ॥

## वाचियमोव्रते ॥ ४० ॥

1 'यत्रेति' क. चि.

2 'डेचेति ॥ विहाय. शब्द' पूर्वांद् मेरन्येष्वपिदृश्यतइतिडप्रत्यये सति विहादेश ॥' इति कैयटः.

वाक्पूर्वाद्यमः खच्स्यात् । व्रतेगम्यमाने । वाचंयमः । वाचंयमपुरन्दरौचेति (६ । ३ । ६९) निपातनादमन्तत्वम् । व्रतेकिम् । वाग्यामः ॥

## पूस्सर्वयोर्दारिसहोः ॥ ४१ ॥

खच् । पुरंदार यतोतिपुरन्दरः । निपातनादम् । सर्वंसहः ॥

भगेचदारेः ॥

भगन्दरः ॥

## सर्वकूलाभ्रकरीषेषु कषः ॥ ४२ ॥

एषुकषः खच् सर्वङ्कषः । कूलङ्कषः अभ्रङ्कषः । करीषङ्कषः ॥

## मेघर्तिभयेषुकृञः ॥ ४३ ॥

एषुकृञःखच् । मेघंकरः । ऋतिंकरः । भयंकरः ॥

भयेतदन्तस्यापि ॥

अभयंकरः ॥

छन्दसिशिवंकरइत्यपिपदमञ्जर्याम् ॥

## क्षेमप्रियमद्रेणच ॥ ४४ ॥

चात्खच् । क्षेमंकरः । क्षेमकारः । प्रियंकरः । प्रियकारः । मद्रंकरः मद्रकारः ॥ वेतिवक्तव्ये ऽणग्रहणंहेत्वादिषुटबाधार्थम् ॥

## आशिते भुवः करणभावयोः ॥ ४५ ॥

आशितेसुपिभुवः सच् स्यात् करण भावयोः । आशितोभवत्यनेन आशितंभवओदनः । भावे,आशितस्यभवनमाशितं भवो [1]वर्तत ॥

## संज्ञायां भृत् वृजिधारिसहितपिदमः ॥ ४६ ॥

यथासम्भवं कर्मसुपो रुपपदयोरेतेभ्यः खच् स्यात् संज्ञाविपये । विश्वंभराभूः । रथंतरंसाम । पतिंवराकन्या । शत्रुंजयोहस्तो । युगंधरः । शत्रुंसहः । शत्रुं तपः । अरिंदमः । सञ्ज्ञायांकिप् । कुटुंबभारः ॥

## गमश्च ॥ ४७ ॥

खचसंज्ञायाम् । सुतंगमः ॥

## अन्तात्यन्ताध्वदूरपारसर्वानन्तेपुड़ः ॥ ४८ ॥

एपुगमेर्डः स्यात् । डित्वसामर्थ्याट्टिलोपः । अन्तगः । अत्यन्तगः । अध्वगः । दूरगः । पारगः । सर्वगः । अनन्तगः ॥

डो ऽन्यत्रापिदृश्यतइतिवक्तव्यम् ॥

सर्वत्रगः । पन्नगः ॥

उरसोलोपश्च ॥

उरगः ॥

सुदुरोरधिकरणे ॥

सुखेनगच्छंत्यस्मि न्निति सुगः । दुर्गः ॥

निसोदेशे ॥

1 'आशित भववर्तते'इति कादीकर

निर्गोदेशः ॥ —नगरगः । स्त्र्यगारगः । ग्रामगः । गुरुतल्पगः । इत्यादि ॥

## आशिषिहनः ॥ ४९ ॥

आशिषिगम्यमानायां हन्तेर्डः स्यात् कर्मण्युपपदे । शत्रुंवध्यात् शत्रुहः ॥

दारावाहनो ऽणन्त स्यचटः संज्ञायाम् ॥

दार्वा हन्तीति दार्वाघाटः ॥

चारौवाटः ॥

चार्वाघाटः । चार्वाघातः ॥

कर्मणिसमिच ॥

वर्णसंघाटः । वर्णसंघातः ॥ पदसंवाटः । पदसंघातः ॥

## अपेक्लेशतमसोः ॥ ५० ॥

अपपूर्वाद्धन्तेः क्लेशतमसोरुपपदयोर्डः स्या दनाशिष्यपि । क्लेशापहः पुत्रः । तमोपहः सूर्यः ॥

## कुमारशीर्षयोर्णिनिः ॥ ५१ ॥

हन्तेर्णिनिः स्यादताच्छील्ये ऽपि । कुमारघाती । शीर्षघाती । निपातनाच्छीर्षभावः ॥

## लक्षणेजायापत्योष्टक् ॥ ५२ ॥

एतयोः कर्मणोर्हन्ते ष्टक् स्यात्लक्षणवति कर्तरि । जायाघ्नो ब्राह्मणः । जायामरण हेतुलिङ्गयुक्त इत्यर्थः । पतिघ्नोवृषलो ॥

## अमनुष्यकर्तृकेच ॥ ५३ ॥

अमनुष्यकर्तृके धात्वर्थे हन्तेः कर्मण्युपपदे टक् स्यात् । पतिघ्नीपाणिरेखा । वातघ्नं तैलमित्यादि । अमनुष्यकर्तृक इतिकिम् । आखुघातः शूद्रः । कृतघ्नइतितु मूलविभूजादित्वात् । चोरघातोहस्तोत्पादो वा हल्कादण् ॥

## शक्तौहस्तिकवाटयोः ॥ ५४ ॥

हन्तेष्टक् स्यान्मनुष्य कर्तृकेऽपि । हस्तिनंहन्तुं शक्तः, हस्तिघ्नः । कवाटघ्नोमनुष्यः । शक्तौकिम् । विषेणहस्तिनं हन्तिहस्तिघातः ॥

## पाणिघताडघौशिल्पिनि ॥ ५५ ॥

शिल्पिनि कर्तर्येतौ निपात्येते । टकि घत्वटिलोपौ निपातनात् । शिल्पिनिकिम् । पाणिघातः । ताडघातः ॥

राजघइतिकेचित् ॥

## आढ्यसुभगस्थूल पलितनग्नान्धप्रियेषुच्व्यर्थे ष्वच्वौ कृञः करणेख्युन् ॥ ५६ ॥

च्व्यर्थेष्वच्व्यन्तेषुकृञःकरणे ख्युनस्यात् । अनाढ्य माढ्यं कुर्वन्त्यनेनआढ्यंकरणम् । प्रियंकरण मित्यादि । च्व्यर्थेष्वितिकिम् । आढ्यंतैलनकुर्वन्ति, अभ्यञ्जयन्तीत्यर्थः । अच्वावितिकिम् । आढ्यीकुर्वन्त्यनेन[1] । प्रतिषेधस्योत्तरार्थ स्वकथनादाढ्यीकरण[2] मिति

[1] 'आढ्यी कुर्वन्त्यनेन कवि.  [2] 'आढ्यीकरण' क- चि ·

ल्युटा भाव्यमेवेति कैयटः ॥

## कर्तरि भुवः खिष्णुच्खुकञौ ॥ ५७ ॥

आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु सुबन्तेषु भुवः कर्तरि कारके एतौ स्तः । आढ्यंभविष्णुः । आढ्यंभावुकः । प्रियंभविष्णुः । प्रियंभावुक इत्यादि । च्व्यन्ते आढ्यीभविता ॥

## स्पृशोनुदके क्विन् ॥ ५८ ॥

अनुदके सुपि स्पृशः क्विन् स्यात । घृतस्पृक् । क्विन्प्रत्ययस्येति कुत्वम् । उदके तूदकस्पर्शः ॥

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ५९ ॥

आद्याः पञ्च क्विन्नन्ता निपात्यन्ते । तेभ्यः क्विन्विधीयते । ऋतौ यजतीति ऋत्विक्, रूढि रेषा । दधृक्, धृषः क्विन्द्वित्व मन्तोदात्तत्वं च निपात्यते । सृजेः कर्मणि क्विन् अम्च निपात्यते, स्रक् । दिशेः कर्मणि क्विन् दिशन्त्येतामिति दिक् । उत्पूर्वात् ष्णिहेः क्विनुपसर्गान्तलोपः षत्वं च निपात्यते, उष्णिक् । अञ्चेः सुप्युपपदे क्विन्, प्राङ् प्रत्यङ् उदङ्, उगिदचामिति नुम्, हल्ङ्यादिसंयोगान्तलोपौ । युजिक्रुञ्चोः केवलयोः युङ् युञ्जौ युञ्जः, क्रुङ् क्रुञ्चौ क्रुञ्चः, नलोपाभावो निपातनात् ॥

## त्यदादिषु दृशो ऽनालोचने कञ्च ॥ ६० ॥

त्यदादिषूपपदेषु दृशे रनालोचनार्थात् कञ् । चात् क्विन् । त्यादृक्, त्यादृशः । तादृक्, तादृशः ।

समानान्ययोश्च ।

सदृक्, सदृशः । अन्यादृक्, अन्यादृशः ।

दृशेः क्सः ।

सदृक्षः । अन्यादृक्षः । तादृक्षः । अनालोचने किन् । तं पश्यतीति तद्दर्शः ॥

## सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजा मुपसर्गेऽपि क्विप् ॥ ६१ ॥

कर्मग्रहणं स्पृशोनुदक इत्यतःप्रभृति न व्याप्रियते । एषां सुप्युपसर्गे च क्विप्स्यात् । उपसर्गग्रहणमन्यत्र सुब्ग्रहण उपसर्गग्रहणं न, स्पृशोनुदक इत्यादाविति ज्ञापयति । अन्तरिक्षसत् । उपसत् । उपनिषत् । सूते रादादिकस्य ग्रहणम्, अण्डसूः । मित्रद्विट् । प्रद्विट् । मित्रध्रुक्, मित्रध्रुट्, वाद्रुहेति घत्वम् । गोधुक् । युजिर् योगे, युजसमाधौ अश्वयुक् । विद ज्ञाने, विद विचारणे, विद सत्तायाम् । त्रयाणां ग्रहणम् । वेदवित् । काष्ठभित् । रज्जुच्छित् । शत्रुजित् । ग्रामणीः । राट् । स्वराट् ॥

## भजो ण्विः ॥ ६२ ॥

अर्धभाक् । उपसर्गेऽपि । प्रभाक् ॥

## छन्दसि सहः ॥ ६३ ॥

उपसर्गेऽपि ण्विः । तुरापाट् ॥

## वहश्च ॥ ६४ ॥

छन्दसि ण्विः स्यात् । प्रष्ठवाट् । दित्यवाट् ॥

## कव्यपुरीषपुरीष्येषु ञ्युट् ॥ ६५ ॥

एषूपपदेषु छन्दसि वहेर्ञ्युट् स्यात् । कव्यवाहनः । पुरीषवाहनः । पुरीष्यवाहनः ॥

## हव्येऽनन्तःपादम् ॥ ६६ ॥

अस्मिन्नुपपदे छन्दसि वहेर्ञ्युट् स्यात् । अनन्तःपादं चेद्धविर्वर्तते । अग्निश्च हव्यवाहनः । अनन्तःपादइति किम् । हव्यवाडग्निरजरः पिता नः ॥

## जनसनखनक्रमगमो विट् ॥ ६७ ॥

एभ्यश्छन्दसि विट् स्यात्सुप्युपसर्गे च । अप्सु जायतइत्यब्जाः । गां सनोतीति गोषाः, सनोतेरन (८।३।१०८) इति पत्वम् । विषं खनतीति विषखाः । दधि क्रामतीति दधिक्राः । अग्रे गच्छतीत्यग्रेगाः । सप्तम्या अलुक् । सर्वत्र विड्वनोरनुनासिकस्या (६।४।४१) दित्यात्वम् ॥

## अदोऽनन्ने ॥ ६८ ॥

छन्दसीति निवृत्तम् । अदेः सुप्युपपदे विट् स्यात् । सस्यमत्तीति सस्यात् । अनन्नइति किम् । अन्नादः । अकारादनुपपदादिति बाधित्वा छन्दस्यजिष्यते । अन्नादइत्यन्नआदः ॥

## क्रव्ये च ॥ ६९ ॥

अस्मिन्नुपपदे अदेर्विट् स्यात् । क्रव्यात् । पूर्वेणैव सिद्धे वासरूपसाधनार्थमिदं वचनम् । तेन पक्षे अण्न । क्रव्यादइति तु कृत्तविकृत्त

पूर्वादण्, तस्य च पृषोदरादित्वात्क्रव्यभावः। अर्थभेदाच्च नानर्थक्यम् ॥

दुहः कब्घश्च ॥ ७० ॥

दुहेः सुप्युपपदे कप् स्यात्। घश्चान्तादेशः। कामदुघा धेनुः ॥

मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ ७१ ॥

एते समुदाया एव निपात्यन्ते। एतेभ्यो मन्त्रे ण्विनिः स्यात्। श्वेता एनं वहन्ति, श्वेतवा इन्द्रः। उक्थानि शंसतीत्युक्थशा यजमानः। पुरो दाशन्त्येनमिति पुरोडाः। दाशृ दाने। अलाक्षणिकं सर्वं निपातनात्।

श्वेतवाहुक्थशास्पुरोडाशवयाजां डस्पदान्तइति वाच्यम्। श्वेतवोभ्याम्। अपदान्तेतु श्वेतवाहौ ॥

अवे यजः ॥ ७२ ॥

मन्त्रे ण्विन् स्यात्। अवयाः ॥

विजुपे छन्दसि ॥ ७३ ॥

यजेर्विच् स्यात्। उपपदे। दृशिग्रहणस्यैवायं प्रपञ्चः ॥

आतो मनिन्क्वनिब्वनिपश्च ॥ ७४ ॥

सुप्युपसर्गे चोपपदे आदन्ताद्धेते स्युश्छन्दसि। चाद्विच्। अश्वत्थामा। पृषोदरादित्वात्सस्य तः। क्वनिप्, सुधीवा। वनिप्, भूरिदावा। विच्, कीलालपाः ॥

अन्येभ्यो ऽपि दृश्यन्ते ॥ ७५ ॥

धात्वन्तरादपि मनिनादयो यथाप्रयोगं स्युः । मनिन्, सुशर्मा । क्वनिप्, प्रातरित्वा, इण्गतौ, तुक्, प्रातरित्वानौ । वनिप्, विजावा, जनीप्रादुर्भावे, विड्वनोरित्यात्वम् । विच्, रेडसि पर्ण न वेः, रिषहिंसायाम् । अवेर्निरुपपदादपि । धीवा । पीवा ॥

क्विप्च ॥ ७६ ॥

सर्वस्माद्धातोः क्विप् स्यात्सर्वत्र । उखायाः स्रंसते उखास्रत् । पर्णध्वत् । वाहाद्भ्रश्यते वाहाभ्रट्, अन्येषामिति दीर्घः । स्रंसुध्वंसुभ्रंशुअधःपतने ॥

स्थः क च ॥ ७७ ॥

सुप्युपसर्गे च तिष्ठतेः कः । चात्क्विप् । सुपि स्थइत्येव के सिद्धे शमिधातोरित्यच्बाधनार्थं पुनर्वचनम् । शंस्थः । शंस्थाः । अत्र क्विपि लुप्ते प्रत्ययलक्षणेन घुमास्थेति प्राप्तमीत्वं भाष्यकारवचनान्न भवति ॥

सुप्यजातौ णिनिस्ताच्छील्ये ॥ ७८ ॥

अजातौ सुप्युपदे धातोर्णिनिः स्यात् ताच्छील्ये गम्यमाने । उष्णभोजी । जातौ तु ब्राह्मणानामन्त्रयिता । ताच्छील्यइति किम् । कदाचिदुष्णं भुंक्ते । पुनः सुब्ग्रहणमुपसर्गार्थम् । उदासारिण्यः । प्रत्यासारिण्यः । काशिकायां सुब्ग्रहणमुपसर्गनिवृत्त्यर्थमित्युक्त्वा उदासारिण्यइत्यादावुपसंख्यानं कृतम् । तद्भाष्यविरोधाद्गौरवाच्चचिन्त्यम् । अताच्छील्येपि क्वचित्, साधुकारिसाधुदायिब्रह्मवादिनः ॥

## कर्तर्युपमाने ॥ ७९ ॥

कर्तृवाचिन्युपमान उपपदे धातोर्णिनिः स्यात् । उष्ट्र इव क्रोशति उष्ट्रक्रोशी । जात्यताच्छील्यार्थमिदम् । कर्तरि किम् । जलमिव घृतं पिबति । उपमाने किम् । उष्ट्रः क्रोशति ॥

## व्रते ॥ ८० ॥

सुप्युपदे धातोर्णिनिः स्यात् व्रते गम्यमाने । स्थण्डिलशायी । अश्राद्धभोजी । व्रते किम् । स्थण्डिले शेते कदा चित् ॥

## बहुलमाभीक्ष्ण्ये ॥ ८१ ॥

सुप्युपदे धातोर्णिनिः स्यादाभीक्ष्ण्ये गम्यमाने । कषायपायिणो गान्धाराः । बहुलवचनात् कुल्माषखादइत्यत्र न ॥

## मनः ॥ ८२ ॥

मन्यतेर्दैवादिकस्य ग्रहणम् । सुप्युपदे मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ॥

## आत्ममाने खश्च ॥ ८३ ॥

आत्ममाने वर्तमानान्मन्यतेः सुप्युपपदे खश् स्याच्चाण्णिनिः । आत्मानं पण्डितं मन्यते पण्डितंमन्यः । पण्डितमानी । आत्ममान इति किम् । दर्शनीयमानी देवदत्तो यज्ञदत्तस्य ॥

## भूते ॥ ८४ ॥

वर्तमाने लडिति पर्यन्तमधिकारोयम् ॥

## करणे यजः ॥ ८५ ॥

करणे उपपदे यजेर्णिनिः स्यात् भूते । सोमेनेष्टवान् सोमयाजी । भूते किम् । सोमेन यजते ॥

## कर्मणि हनः ॥ ८६ ॥

णिनिः । पितृव्यघाती । कुत्सितएव । नेह । चोरं हतवान् ॥

## ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ८७ ॥

एषु कर्मसूपपदेषु हन्तेः क्विप् । [ब्रह्मादिष्वेव हन्ते] रेव भूतएव क्विवेवेति नियमचतुष्टयं स्थितम् ॥

## बहुलं छन्दसि ॥ ८८ ॥

हन्तेः क्विप् । मातृहा । क्वचिन्न । मित्रघातः ॥

## सुकर्मपापमन्त्रपुण्येषु कृञः ॥ ८९ ॥

स्वादिषु कर्मसूपपदेषु कृञः क्विप् । सोः कर्मणा न सम्बन्धः । सुकृत् । कर्मकृत् । इत्यादि । अत्र कालोपपदप्रत्ययविषयस्त्रिविधो नियमः । धातोरनियमः । भाष्यकृत् ॥

## सोमे सुञः ॥ ९० ॥

कर्मणि क्विप् । सोमसुत् । अत्रापि धातूपपदकालप्रत्ययविषयश्चतुर्धा नियमः ॥

## अग्नौ चेः ॥ ९१ ॥

क्विप्। अग्निचित्। अत्रापि चतुर्धा नियमः ॥

कर्मण्यग्न्याख्यायाम् ॥ ९२ ॥

कर्मण्युपपदे चेः कर्मणिकारकेऽपि क्विप् स्यादग्न्याख्यायाम्। श्येन इव चीयते श्येनचित्। अग्न्यर्थःइष्टकाचयः श्येनचित् ॥

कर्मणीनिर्विक्रियः ॥ ९३ ॥

विपूर्वात् क्रीणातेः कर्मण्युपपदे इनिः स्यात्। पुनः कर्मग्रहणात् कुत्सायामेव। सोमविक्रयी। नेह। धान्यविक्रायः ॥

दृशेः क्वनिप् ॥ ९४ ॥

कर्मण्युपपदे दृशेः क्वनिप् स्यात्। मेरुदृश्वा। अन्येभ्योऽपिदृश्यन्त इत्येव क्वनिपि सिद्धे पुनर्वचनं प्रत्ययान्तरबाधनार्थम्। परलोकं दृष्टवानिति निष्ठा भवत्येव ॥

राजनि युधि कृञः ॥ ९५ ॥

राजनि कर्मण्युपपदे एतयोः क्वनिप् स्यात्। युध्यतिरन्तर्भावितण्यर्थः, सकर्मकः। राजयुध्वा। राजकृत्वा ॥

सहे च ॥ ९६ ॥

क्वनिप्। सहयुध्वा। सहकृत्वा ॥

सप्तम्यां जनेर्डः ॥ ९७ ॥

सप्तम्यन्त उपपदे जनेर्डः स्यात्। मन्दुरायां जातवान्, मन्दुरजः ॥

## पञ्चम्यामजातौ ॥ ९८ ॥

जनेर्डः । बुद्धेर्जातः, बुद्धिजः । संस्कारजः । आजाताविति किम् । अश्वाज्जातः ॥

## उपसर्गे च संज्ञायाम् ॥ ९९ ॥

जनेर्डः । प्रजाः ॥

## अनौ कर्मणि ॥ १०० ॥

अनुपूर्वाज्जनेः कर्मण्युपपदे डः । पुमांसमनुजाता पुमनुजा ॥

## अन्येष्वपि दृश्यते ॥ १०१ ॥

जनेर्डः । द्विर्जाताः, द्विजाः ॥ श्लो ॥ मातुरग्रे विजननं द्वितीयं मौञ्जिबन्धनम् । तत्रास्य माता सावित्री पितात्वाचार्य उच्यते ॥ ब्राह्मणजोधर्मः । धात्वन्तरादपि । परितःखनतीति परिखा । दृशिग्रहणादन्यत्रापि यथाप्रायोगं ज्ञेयम् ॥

## निष्ठा ॥ १०२ ॥

धातोः क्तक्तवतू स्तो भूते । भाविनी संज्ञा अत्र । भुक्तम् । भुक्तवान् ।

अदिकर्मण्यपि ॥

प्रकृतः कटं देवदत्तः ॥

## सुयजोर्ङ्वनिप् ॥ १०३ ॥

सुत्वा, सुत्वानौ । यज्वा, यज्वानौ । षुञ् अभिषवे ॥

## जीर्यतेरतृन् ॥ १०४ ॥

जॄष् अस्य अतृन् स्यात्। जरन्, जरन्तौ, जरन्तः। वासरूपेण निष्ठा च। जीर्णः। जिर्णम्। जीर्णवान्॥

## छन्दसि लिट्॥ १०५॥

भूते। अहगुं सूर्यमुभयतो ददर्श। अधातुसम्बन्धार्थमिदम्॥

## लिटः कानज्वा॥ १०६॥

अग्निं चिक्यानः। भाष्ये 'न वानेन विहितस्यादेशवचना' दित्यादिना ऽनन्तरस्य लिटः नित्यं कानजादेशः। छन्दसि लिट्श्रवणं च छन्दसि लुङ्लङ्लिटिति विहितस्य। लिट्ग्रहणमत्र प्रत्ययान्तरत्वशङ्कानिरासार्थम्। वावचनं चोत्तरार्थमिति स्थितम्॥ काशिकायांतु पुनर्लिट्ग्रहणं लिट्मात्रस्यादेशार्थम्। वावचनं च लादेशेषु वासरूपविधिर्नास्तीत्यस्य बाधनार्थमिति स्थितम्॥

## क्वसुश्च॥ १०७॥

छन्दसि लिटः क्वसुः स्यात्। पपिवान्। वस्वेकाजितीट्। आतो लोप इटीत्यालोपः। अत्रापि भाष्यकाशिकयोः पूर्वोक्तैव व्यवस्था॥

## भाषायां सदवसश्रुवः॥ १०८॥

एभ्यो लिटः क्वसुः। उपसेदिवान् कौत्सः पाणिनिम्। उपासदत्। उपासीदत्। उपससाद॥ अनूषिवान्। अन्ववात्सीत्। अन्ववसत्। अनूवास॥ उपशुश्रुवान्। उपाश्रौषीत्। उपाशृणोत्। उपशुश्राव॥ लुङ्लङ्विषयेपि परस्तादनुवृत्त्या भवति॥

## उपेयिवाननाश्वाननूचानश्च ॥ १०९ ॥

एते निपात्यन्ते । उपपूर्वादिणः परस्य लिटः क्वसुरादेशः । वस्वेका जिति नियलभ्येट्प्रतिषेधाभावश्च निपातनादेव । उपेयिवान् । यद्वा अभ्यासदीर्घत्वे कृते ई इ वस् इति स्थिते हलि यणादेशो नि पात्यते । इट् तु वस्वेकाजित्वेवसिद्धः । बहुलानुवृत्त्या समीयिवान्, ईयिवानित्यपि । वानुवृत्तेः उपेयाय । परस्तादनुवृत्त्या उपागात्, उपैदित्यपि ॥ नञ् पूर्वादश्नातेः क्वसुरिडभावश्च । अनाश्वान् । अशभोजने लिटि क्वसुः द्विर्वचनम् । अतआदेरिति दीर्घः । नलोपो नञः । तस्मान्नुडचि । नाशीत् । नाश्नात् । नाश ॥ अनुपूर्वा द्वचेः कर्तरि कानच् । अनूचानः । लिट् संप्रसारणादि । अन्ववोचत् । अ न्वब्रवीत् । अनूवाच । ब्रुवोवचिः,वचपरिभाषणे । द्वयोरपि ग्रहणम् ॥

## लुङ् ॥ ११० ॥

भूतेर्थे धतोर्लुङ्स्यात् । अकार्षीत् । आगमाम घोषात् इत्यत्रानद्यत नत्वाविवक्षायां लङ् विषयेपि भवेत् ।

वसेर्लुङ् रात्रिशेषे जागरणसन्ततौ ॥

क्वभवानुषितः, अमुत्रावात्सम् । अजागरणे तु अमुत्रावसम् ॥

## अनद्यतने लङ् ॥ १११ ॥

दिवसः सकलः, अतिक्रान्तायाश्च रात्रेश्चतुर्थयाम,आगामिन्याश्च प्र थमो यामः । एषो ऽद्यतनः । नास्त्यद्यतनो यस्मिन् भूते काले तस्मि न् धातोर्लङ् स्यात् । केचित् प्रहराष्टकमद्यतनं वर्णयन्ति, तद्रात्रि शेष इत्यादिभाष्याननुगुणम् । अकरोत् ।

परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् ॥
अरुणद्यवनः साकेतम् । परोक्षे किम् । उदगादादित्यः । लोकविज्ञा
तइति किम् । चकार कटं देवदत्तः । प्रयोक्तुर्दर्शनविषयइति किम् ।
जघान कंसं किल वासुदेवः ॥

## अभिज्ञावचने लृट् ॥ ११२ ॥

स्मरणपर्यायोपपदे ऽनद्यतने लृट् स्यात् । लङोपवादः । अभिजा
नासि स्मरसि वा कृष्ण वने वत्स्यामः ॥

## न यदि ॥ ११३ ॥

यद्योगे उक्तं न । अभिजानासि देवदत्त यद्वने अवसाम ॥

## विभाषा साकाङ्क्षे ॥ ११४ ॥

यद्योगे अयोगे वोक्तार्थे लृड्वा स्याल्लक्ष्यलक्षणसम्बन्धे प्रयोक्तुरा
कांक्षायाम् । अभिजानासि देवदत्त काश्मीरेषु वत्स्यामस्तत्रौदनं
भोक्ष्यामहे । वासोलक्षणम् । भोजनं लक्ष्यम् । पक्षे लङ् । एवं य
द्योगे ॥

## परोक्षे लिट् ॥ ११५ ॥

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट्स्यात् । चकार । उत्तमपुरुषे चैचि
त्र्यात्पारोक्ष्यम् । सुप्तो ऽहं किल विललाप ॥

अत्यन्तापह्नवे लिट् ॥

नाहं कलिंगं जगाम ॥

## हशश्वतोर्लङ्च ॥ ११६ ॥

आभ्यां योगे लिड्विषये लङ्। चाल्लिट्। इति हाकरोत्, चकार वा। शश्वदकरोत्, चकार वा॥

## प्रश्ने चासन्नकाले॥ ११७॥

आसन्नकाले पृच्छ्यमाने लिड्विषये लङ्। चाल्लिट्। अगच्छत्किम्। जगाम किम्। आसन्नेति किम्। कंसं जघान किल। पञ्चवर्षाभ्यन्तरमासन्नकालः॥

## लट् स्मे॥ ११८॥

स्मयोगे लिड्विषये लट्। न लिट्। यजति स्म युधिष्ठिरः॥

## अपरोक्षे च॥ ११९॥

भूतानद्यतनापरोक्षेऽपि स्मयोगे लट्। एवं स्मोपाध्यायः कथयति॥

## ननौ पृष्टप्रतिवचने॥ १२०॥

ननुयोगे भूतसामान्ये लट् स्यात् पृष्टप्रतिवचने। अकार्षीः किम्, ननु करोमि भोः॥ अत्यन्तासन्नकाले चायं प्रयोग इष्यते। तत्र क्रियाजनितश्रमादिदर्शनेन क्रियावर्तमानत्वविवक्षायां वर्तमाने लडित्यनेनैव सिद्धेरशिष्यमिदमिति स्थितमाकरे॥

## नन्वोर्विभाषा॥ १२१॥

आभ्यां योगे उक्तार्थे लड्वा। अकार्षीः किम्, न करोमि, नाकार्षम्। अहं नु करोमि, अहं न्वकार्षम्॥

## पुरि लुङ्चास्मे॥ १२२॥

पुरीति सप्तमी । आतःति योगविभागादालोपः । पुराशब्दयोगे भूतानद्यतने लङ् लटौ वा स्तः । पक्षे लिङ् लङौ । वसन्तीह पुरा छात्राः । अवात्सुः, अवसन्, ऊषुर्वा । अस्मे किम् । यजति स्म पुरा ॥

## वर्तमाने लट् ॥ १२३ ॥

आरब्धापरिसमाप्तक्रियोपलक्षिते काले धातोर्लट् स्यात् । भवति । अन्यवर्तमानत्वाधारोपेण पर्वतादौ तिष्ठतीत्यादिप्रयोगः ॥

## लटः शतृशानचावप्रथमासमानाधिकरणे ॥

लटः शतृशानचौ वा स्तः । व्यवस्थितश्च विकल्पः । कौर्वतः । कुर्वत्तरः । कुर्वद्रूपः । पचमानरूपः । कुर्वत्कल्पः । पचन् । पठन् । इत्यादि । व्यवस्थितत्वादिह न । पचतितराम् । ज्वलतितरामित्यादि । अप्रथमेति तु नित्यार्थम्, अप्रथमान्तेन समानाधिकरणे नित्यमेवेति । पचन्तं पश्य । पचता देवदत्तेन कृतमित्यादि । प्रथमासमानाधिकरणे तु विकल्पः । देवदत्तः पचन्, पचति, पचमानः, पचत इत्यादि । वाग्रहणस्यैवायं प्रपञ्चः ॥

## सम्बोधने च ॥ १२५ ॥

लटः शतृशानचौ स्तः प्रथमासमानाधिकरणे । हे पचन्, पचमान । वाप्रपञ्च एवायम् ॥

## लक्षणहेत्वोः क्रियायाः ॥ १२६ ॥

अनयोर्वर्तमानाद्धातोः लटः शतृशानचौ स्तः । तौ चेल्लक्षणहेतू क्रियाविषयौ । शयाना भुञ्जते यवनाः । शयनं लक्षणं भोजनक्रिया

याः ॥ हेतौ । अधीयानोवसति । वासे ऽध्ययनं हेतुः । नन्वोर्विभाषेत्यतो विभाषा ऽनुवर्तते । व्यवस्थितविकल्पश्चायम् । तेनाधीतइति वसतीत्यत्र शानच् न । अतएव हेतुहेतुमतोर्लिङित्यत्र भाष्यम्—'इतियोगे च सद्विधि' रिति । लक्षणहेत्वोरिति किम् । पठति । क्रियाया इति किम् । यःकम्पते सोऽश्वत्थः । यदुत्प्लवते तल्लघु । क्रमेण द्रव्यगुणौ प्रति हेतुत्वं न क्रियायाः । तिष्ठन् मूत्रयति । गच्छन् भक्षयति । शयाना वर्धते दूर्वा । आसीनं वर्धते बिसमित्यादयोप्येतत्सूत्रं विलक्ष्या(?) भाष्ये उक्ताः। सन्। अस्ति । विद्यमानः । अधीते । अधीयानः । जुहोति । जुह्वत् ॥

माङ्याक्रोशे ॥

मापचन् , मापचमान इत्यादिकमपि व्यवस्थितवानुवृत्त्या भवति ॥

## तौ सत् ॥ १२७ ॥

तौ शतृशानचौ सत्संज्ञकौ स्तः । ताविस्युक्तेः शतृशानच्मात्रस्य सत्संज्ञा । ब्राह्मणस्य कुर्वन् , कुर्वाणः । करिष्यन् , करिष्यमाणः। न नु मां ब्राह्मणस्य कुर्वन्तं पश्य, कुर्वाणं पश्य । अत्र भूते लटः शतृशानचौ भाष्ये व्यक्तौ ॥

## पूङ्यजोः शानन् ॥ १२८ ॥

अनयोः शानन् प्रत्ययः स्यात् । पवमानः । यजमानः । नलोकाव्ययसूत्रे तृन्निति शतृलकारेण तृनोनकारेण प्रत्याहारग्रहणात्, सोमं पवमान इत्यादौ षष्ठीप्रतिषेधः ॥

द्विषः शतुर्वा ॥

मुरं द्विषन् । मुरस्य द्विषन् ॥

## ताच्छील्यवयोवचनशक्तिषु चानश् ॥ १२९ ॥

एषु गम्यमानेषु धातोश्चानश् स्यात् । ताच्छील्ये, कतीह मण्डयमानाः । वयोवचने, कवचं पर्यस्यमानाः, असुक्षेपणे दिवादिः । वचनग्रहणं स्पष्टार्थम् । शक्तौ, भारं वहमानाः ॥

## इङ्धार्योः शत्रकृच्छ्रिणि ॥ १३० ॥

अकृच्छ्रः सुखसाध्योधात्वर्थः । सोऽस्तीति अकृच्छ्री । तस्मिन् कर्तरि अनयोः शतृस्यात् । अधीयन् पारायणम् । धारयन्नुपनिपदम् । अकृच्छ्रिणि किम् । कृच्छ्रेणाधीते धारयति वा ॥

## द्विषो ऽमित्रे ॥ १३१ ॥

अमित्रे कर्तरि द्विषः शतृस्यात् । द्विषन् = शत्रुः । अमित्रइति किम् । द्वेष्टि पतिं भार्या ॥

## सुञोयज्ञसंयोगे ॥ १३२ ॥

यज्ञसंयुक्ते ऽभिषवे सुञः शतृस्यात् । सुन्वन्तः सत्रिणः । संयोगग्रहणादृत्विक्षु न । यज्ञइति किम् । सुरां सुनोति । संयोगग्रहणादेव स्टः शतृशानचावित्यप्यप्रधाने न ॥

## अर्हः प्रशंसायाम् ॥ १३३ ॥

यरा(?) अर्हन्निह भवान् पूजाम् । प्रशंसायां किम् । अर्हति चोरो वधम् ॥

## आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥ १३४ ॥

शब्दत्रयेण धात्वर्थ उच्यते । अभिविधावाङ् । इत ऊर्ध्वं आ क्विप इति क्विबन्ता वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु ज्ञेयाः ॥

## तृन् ॥ १३५ ॥

सर्वस्माद्धातोस्तृन् स्यात्तच्छीलादिषु कर्तृषु । तच्छीले, कर्ता कटान् । तद्धर्मणि, मुण्डयितारः श्राविष्ठायनाः । श्राविष्ठायनागोत्रविशेषाः । साधुकारिणि, कर्ता रथम् ॥

तृन्विधावृत्विक्षु चानुपसर्गस्य ।

होता पोता । अनुपसर्गस्य किम् । प्रतिहर्ता । तृजेव ।

नेषतिर्धात्वन्तरम् ।

नेष्टा ।

त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च ॥

त्वष्टा । अनिट्त्वमित्यग्रेतनस्यापि शेषः ।

क्षदेश्च युक्ते ।

क्षत्ता द्वाररक्षणादावधिकृतो युक्तः(?) ।

छन्दसि तृच ।

क्षत्तृभ्यः संग्रहीतृभ्यः । सर्वत्र स्वरे विशेषः ॥

## अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ॥ १३६ ॥

एभ्य इष्णुच् स्यात्तच्छीलादिषु । अलङ्करिष्णुः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः ।

अपत्रपिष्णुः । वर्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः । येऽत्र सोपपदास्तेभ्यस्तत एव नान्योपपदात् । ये निरुपपदास्तेषु यथादर्शनं प्रत्ययः ॥

## णेश्छन्दसि ॥ १३७ ॥

ण्यन्तादिष्णुच् । धारयिष्णवः ॥

## भुवश्च ॥ १३८ ॥

इष्णुच् छन्दसि । भविष्णुः । प्रभविष्णुः । भ्राजिष्णुरित्यादिकं तु भाषायां, निरङ्कुशत्वात्कवीनाम् । चकारात् भ्राजिष्णुरेति लोकेऽप्युदाहृतं काशिकायाम् । तत्तु भाष्यानुक्तम् ॥

## ग्लाजिस्थश्च क्स्नुः ॥ १३९ ॥

एभ्योभुवश्च क्स्नुः स्यात् । ग्लास्नुः । जिष्णुः । क्ङितीत्यत्र गस्यापि निर्देशान्न गुणः । स्थास्नुः, गित्वात् घुमास्थागेतीत्वं न । भूष्णुः । श्र्युकःकितीत्यत्र गस्य निर्देशादिट् न ।

दंशेश्छन्दसि ।

दंक्ष्णवः पशवः ॥

## त्रसिगृधिधृषिक्षिपेः क्नुः ॥ १४० ॥

एभ्यः क्नुः स्यात् । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ॥

## शमित्यष्टाभ्यो घिनुण् ॥ १४१ ॥

शमादिभ्योऽष्टाभ्यः घिनुण् स्यात् । उकारउगित्कार्यार्थः । शमिनि

तरा । शमिनीतरा , शमिनौ । शमिनः इत्यत्र उगिल्लक्षणो नुम् झ लन्तत्वान्न भवति । काशिकायांतूकार उच्चारणार्थइत्युक्तम् । तत्र शमिनितरा । अत्र नित्यमेव ह्रस्वः । तत् भाष्यविरुद्धम् । शमी । तमी । श्रमी । दमी । भ्रमी । क्षमी । क्लमी । प्रमादी । ताच्छीलिकेषु वासरूपविधिर्नास्तीत्यस्य प्रायिकत्वा दुन्मादीत्यपि ॥

संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ॥ १४२ ॥

एभ्योघिनुण् स्यात् । सम्पर्की । पृचीसम्पर्कइति रुधादिकस्यैव ग्रहणम्, अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । देवृदेवने भूवादिरेव । संज्वारी । परीक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती । येऽत्र सोपसर्गास्तेभ्यउपसर्गान्तरान्न । अकर्मकादेव घिनुण् । नेह । संपृणक्ति शाकम् ॥

वौ कषलसकत्थस्रम्भः ॥ १४३ ॥

विपूर्वेभ्यएतेभ्यो घिनुण् स्यात् । विकाषी । विलासी । विकत्थी । विस्रम्भी ॥

अपे च लषः ॥ १४४ ॥

घिनुण् । अपलापी । चाद्विलापी ॥

## प्रे लपसृद्रुमथवदवसः ॥ १४५ ॥

प्रपूर्वेभ्य एभ्यो घिनुण् । प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी । प्रवादी । प्रवासी ॥

## निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरट परिवादिव्याभाषासूयोवुञ् ॥ १४६ ॥

एभ्योवुञ् स्यात् । निन्दकः । हिंसकः । क्लेशकः । खादकः । विनाशकः । एतेषां ण्यन्तानाम् । परिक्षेपकः । परिराटकः । परिवादकः । ण्यन्तस्य । व्याभाषकः । असूयकः । कण्ड्वादिः । ण्वुलैवसिद्धे वुञ् वचनं ताच्छीलिकेषु वासरूपेण तृजादयो न भवन्तीति ज्ञापयति ॥

## देविक्रुशोश्चोपसर्गे ॥ १४७ ॥

वुञ् । परिदेवकः । ण्यन्तो देविः । व्याक्रोशकः । उपसर्गे किम् । देवयिता । क्रोष्टा ॥

## चलनशब्दार्थादकर्मकाद्युच् ॥ १४८ ॥

चलनार्थाच्छब्दार्थाच्च युच् स्यात् । चलनः । शब्दनः । अकर्मकात्किम् । पठिता विद्याम् ॥

## अनुदात्तेतश्च हलादेः ॥ १४९ ॥

हलादेरनुदात्तेतो युच् स्यात् । वर्तनः । वर्धनः । अनुदात्तेदिति

क्कित् । भविता । हलादेरिति किम् । एधिता । अकर्मकादित्येव । वसिता वस्त्रम् , वसआच्छादने ॥

## जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ॥ १५० ॥

एभ्योयुच् । जु इति सौत्रोगत्यर्थः, जवनः । चङ्क्रमणः । दन्द्रमणः । यङन्तौ । सरणः । गर्धनः । ज्वलनः । शोचनः । लषणः । पतनः । पदनः । पदेरनुदात्तत्वादनुदात्तेदित्येव युचि सिद्धे लषपतेति वक्ष्यमाणोकञा च वासरूपेण समावेशे सिद्धे पुनः पदिग्रहणं ताच्छीलिकेषु ताच्छीलिकावासरूपेण न भवन्तीति ज्ञापयति । अलङ्करिष्णुः । तृन्न भवति, अलङ्कर्तेति । प्रायिकं चैतत् । विकत्थनः । घिनुण्विषये युच् ॥

## क्रुधमण्डार्थेभ्यश्च ॥ १५१ ॥

युच् । क्रोधनः । रोषणः । मण्डार्थेभ्यः। मण्डनः । भूषणः ॥

## न यः ॥ १५२ ॥

यान्तात् युच् न । क्नूयिता । क्नूयीशब्दे ॥

## सूददीपदीक्षश्च ॥ १५३ ॥

एभ्योयुच् न । अनुदात्तेदिति प्राप्तं निषिध्यते । सूदिता । दीपिता । दीक्षिता । तृन् । ताच्छीलिकेषु ताच्छीलिकावासरूपेण न भवन्तीत्युक्तम् । ततश्च नमिकम्पीति रेण दीपोयुजभावे सिद्धे पुनर्दीपिग्रहणं ज्ञे

ण युचः समावेशं ज्ञापयति । कम्रा, कमना युवतिरित्याकरे स्थितम् । काशिकायां तु ताच्छीलिकेष्वित्यादिमायिकत्वमेव ज्ञाप्यते तेन विकत्थनइत्यादि सिद्धम् । भाष्यमप्येतत्परमेवेति स्थितम् । मधुसूदन इति तु नन्द्यादित्वात् ॥

लषपतपदस्थाभूवृषहनकमगमशॄभ्यउकञ् ॥ १५४ ॥

एभ्य उकञ् स्यात् । अपलाषुकः । प्रपातुकः । पादुकः । उपस्थायुकः । प्रभावुकम् । वार्षुकः पर्जन्यः । घातुकः । कामुकः । गामुकः । शारुकं तीक्ष्णम् ॥

जल्पभिक्षकुट्टलुण्टवृङः षाकन् ॥ १५५ ॥

एभ्यः षाकन् । जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । वराकी ॥

प्रजोरिनिः ॥ १५६ ॥

प्रपूर्वाज्जवतेरिनिः स्यात् । प्रजवी । प्रजविनौ ॥

जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ॥

एभ्य इनिः । जयी । दरी । क्षयी । विश्रयी । इण्, अत्ययी । वमी । अव्यथी । अभ्यमी । परिभवी । प्रसवी ॥

स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्यआलुच् ॥ १५८

एभ्य आलुच् स्यात् । स्पृहयालुः । गृहयालुः । पतयालुः । एते चुरादावदन्ताः । दयालुः । निद्रालुः । तन्द्रालुः । नितन्पूर्वो द्राधातुः ।

तदोनान्तत्वं निपातनात् । श्रद्धालुः ।

शीङोऽपि ॥

शयालुः ॥

दाधेट्सिशदसदोरुः ॥ १५९ ॥

एभ्योरुः स्यात् । दारुः । धारुर्वत्सो मातरम् । नलोकेत्यलोकारस्यापि निर्देशात्तदन्तविधिनाऽत्र षष्ठ्यभावः । सेरुः । शद्रुः । सद्रुः ॥

सृघस्यदः क्मरच् ॥ १६० ॥

एभ्यः क्मरच् । सृमरः । घस्मरः, घसिः सकर्मकत्वेऽन्तरम् । अद्मरः ॥

भञ्जभासमिदो घुरच् ॥ १६१ ॥

एभ्यो घुरच् । भङ्गुरम् । भासुरम् । मेदुरम् । भञ्जेः कर्मकर्तर्येव प्रत्ययः, स्वभावात् ॥

विदिभिदिच्छिदेः कुरच् ॥ १६२ ॥

एभ्यः कुरच् । विदुरः । विद ज्ञान इत्यस्यैव । भिदुरः । छिदुरः । भिदिछिदोः कर्मकर्तर्येव ॥

इण्नश्जिसर्तिभ्यः क्वरप् ॥ १६३ ॥

एभ्यः क्वरप् । इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः ॥

गत्वरश्च ॥ १६४ ॥

निपात्यते । गमेर्मलोपः क्वरप् च ॥

जागुरूकः ॥ १६५ ॥

जागर्तेरूकः स्यात् । जागरूकः ॥

यजजपदशां यङः ॥ १६६ ॥

एतेभ्यो यङन्तेभ्य ऊकः स्यात् । यायजूकः । जञ्जपूकः । दन्दशूकः ॥

नमिकम्पिस्म्यजसकमिहिंसदीपो रः ॥ १६७ ॥

एभ्योरः स्यात् । नम्रः । कम्प्रः । स्मेरः । अजस्रम् । जसुमोक्षणे नञ्पूर्वः । कम्रा कन्या । हिंस्रः । दीप्रः ॥

सनाशंसभिक्ष उः ॥ १६८ ॥

सनन्तादाशंसेर्भिक्षेश्च उः स्यात् । चिकीर्षुः । आशंसुः । [आङः] शसिइच्छायामित्यस्यैव ग्रहणम् । भिक्षुः ॥

विन्दुरिच्छुः ॥ १६९ ॥

एतौ निपात्येते । विदेर्ज्ञानार्थकस्य इषेरिच्छार्थकस्यैवेह ग्रहणम् । नुम्छत्वे निपातनात् । छन्दसि भिन्दव इति वर्णव्यत्ययाद्भवति ॥

क्याच्छन्दसि ॥ १७० ॥

क्य इतिक्यच् क्यप् क्यङां ग्रहणम् । क्यान्तादुः स्या च्छन्दसि । मित्रयुः । मंस्वेदयुः । सुम्नयुः । कण्ड्वादियकोऽपि ग्रहणम् । तेन भुरण्युस्तुरण्युरित्यपि सिद्धमिति केचित् ॥

आदृगमहनजनः किकिनौ लिट् च ॥ १७१ ॥

आदन्ता ऋकारान्ता द्गम्यादिभ्यश्च किकिनौ स्तश्छन्दसि । लिड् वच

तौ स्तः । दकार उच्चारणार्थः । तेन ऋदन्तादपि । पपिः सोमम् । ततु रिः । जगुरिः । जग्मिः । जघ्निः । जज्ञिः । असंयोगाल्लिट् किदित्येव सिद्धे किकिनोः कित्त्वमृच्छत्यॄतामिति गुणप्रतिषेधार्थम् । ततुरिः ।

उत्सर्गश्छन्दसि किकिनौ ।

सेदिः । नेमिः ।

भाषायां धाञ्कृसृजनिगमिनमिभ्यः ।

दधिः । चक्रिः । सस्रिः । जज्ञिः । नेमिः ।

सहिवहिचलिपतिभ्यो यङन्तेभ्यो भाषायाम् ।

सासहिः । वावहिः । चाचलिः । पापतिः । अत्र नीग्निपातनाम्न भवति ॥

क्रुकन्नपि ।

भीरुकः ॥

## स्वपितृषोर्नजिङ् ॥ १७२ ॥

छन्दसीति निवृत्तम् । अनयोर्नजिङ्स्यात् । स्वप्नक्, स्वप्नजौ । तृष्णक्, तृष्णजौ ॥

धृषेश्च ॥

धृष्णक् ॥

## शॄवन्द्योरारुः ॥ १७३ ॥

एतयोरारुः स्यात् । शरारुः । वन्दारुः ॥

## भियः क्रुक्लुकनौ ॥ १७४ ॥

भियएतौ स्तः । भीरुः । भीलुकः ।

## स्थेशभासपिसकसो वरच् ॥ १७५ ॥

एभ्योवरच् स्यात् । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । विकस्वरः ॥

यश्च यङः ॥ १७६ ॥

यामापणे । यङन्ताद्वरच् । यायावरः ॥

भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ॥ १७७ ॥

एभ्यस्तच्छीलादिषु कर्तृषु क्विप् स्यात् । विभ्राट् । भाः, भासौ । धूः, धुरौ । विद्युत् । ऊर्क्, ऊर्जौ । पूः, पुरौ । जूः, दीर्घनिपातनात्, जुवौ, जुवः । ग्रावस्तुत्, ग्रावस्तुतौ ॥

अन्येभ्योऽपिदृश्यते ॥ १७८ ॥

क्विप् तच्छीलादिषु कर्तृषु । युक् । भित् ।

क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च ।

वाक् । शब्दप्राट् । आयतस्तूः । कटप्रूः । जूः । श्रीः । जूस्तुपूर्वसूत्रेणैवसिद्धः । दीर्घवचनसामर्थ्याद्वचिप्रच्छयोर्न संप्रसारणम् ।

द्युतिगमिजुहोतीनां द्वे च ।

दिद्युत् । जगत् ।

जुहोतेर्दीर्घश्च ।

जुहूः ।

दॄभयइत्यस्य ह्रस्वश्च द्वे च ।

दद्दत् ।

ध्यायतेः संप्रसारणं च ।

धीः । दृशिग्रहणस्यैवायं प्रपञ्चः ॥

भुवः संज्ञान्तरयोः ॥ १७९ ॥

संज्ञायामन्तरे च गम्यमाने भवतेः क्विप्। मित्रभूर्नाम कश्चित्। प्रतिभूः। मध्यस्थएव नान्यत्रान्तरे क्विप्॥

## विप्रसंभ्योड्वसंज्ञायाम्॥ १८० ॥

एभ्यो भुवः डुः स्यात्। विभुः। प्रभुः। संभुः। असंज्ञायां किम्। भूर्नामकश्चित्।

मितद्व्वादिभ्यश्च।

मितंद्रवतीति मितद्रुः। शंभुः॥

## धः कर्मणि ष्ट्रन्॥ १८१ ॥

कर्मणि कारके धः ष्ट्रन् स्यात्। धयन्ति दधति वा एनामिति धात्री॥

## दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे॥

एभ्यः करणे कारके ष्ट्रन् स्यात्। दान्त्यनेनेति दात्रम्, दाल्लवन इत्यस्यैव। नेत्रम्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्त्रम्। दंष्ट्रा। नद्ध्री। दंशेरनुनासिकलोपनिर्देशेन क्वितोऽन्यत्रापि नलोपोज्ञाप्यते। तेन दशनमित्यपि सिद्धम्॥

## हलसूकरयोः पुवः॥ १८३ ॥

पूङ् पूञोः करणे कारके ष्ट्रन् स्यात्। तच्चेत्करणं हलसूकरयोरवयवः। हलस्य पोत्रम्। सूकरस्य पोत्रम्। मुखमित्यर्थः॥

## अर्तिलूधूसूखनसहचरइत्रः॥ १८४ ॥

एभ्यः करणे कारके इत्रः स्यात्। अरित्रम्। लवित्रम्। धवित्रम्।

सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ॥

## पुवः संज्ञायाम् ॥ १८५ ॥

पूङ्पूञोः करणे कारक इत्रः स्यात् संज्ञायाम् । दर्भःपवित्रम् ॥

## कर्तरि चर्षिदेवतयोः ॥ १८६ ॥

पुव इत्रः स्यात् करणे ऋषौ कर्तरि च देवतायाम् । पूयते ऽनेनेति पवित्रोयमृषिः । देवतायाम् । अग्निः पवित्रम् । ऋषिर्वेदः ॥

## ञीतः क्तः ॥ १८७ ॥

ञीतःक्तः स्याद्वर्तमाने । भूतापवादः । ञिमिदा । मिन्नः ॥

## मतिबुद्धिपूजार्थेभ्यश्च ॥ १८८ ॥

मत्याद्यर्थेभ्यःक्तः स्याद्वर्तमाने । मतिरिच्छा । मतः । बुद्धः । पूजितइत्यादि ॥ ज्ञातइति भूतेपिभवति ॥ तेनेत्यधिकारे उपज्ञात इतितद्धितविधानात् ॥ सुरैःपूजित इतितु चिन्त्यम् ॥ क्तस्यच वर्तमानइति षष्ठीविधानात् ॥ चादन्यत्रापि ॥ शीलितोरक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि । रुष्टः । रुषितः । अभिव्याहृतः । हृष्टः । तुष्टः । कान्तः । संयतः ॥ उद्यतः । भविष्यति कष्टशब्दः । अमृतः । सुप्तः । शयितः । आशितः । लिप्तः । इत्यादयो वर्तमान ज्ञेयाः ॥

इति तृतीयस्याध्यायस्य द्वितीयः पादः ॥

——— * ———

## उणादयोबहुलम् ॥ १ ॥

वर्तमाने धात्वर्थे संज्ञायां विषये उणादयोबहुलं स्युः। बहुलग्रहणा द्न्यत्रापि प्रकृतिप्रत्ययादिकल्पनया यथाप्रयोगं शब्दाऊह्याः ॥

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

## भूतेऽपि दृश्यन्ते ॥ २ ॥

उणादयः। वृत्तं तदिति वर्त्म। दृशिग्रहणं प्रयोगानुसारार्थम् ॥

## भविष्यति गम्यादयः ॥ ३ ॥

गम्यादयोभविष्यति साधवः। ग्रामंगमी। आगामी। प्रतिग्राही। प्रस्थायी। प्रतिबोधी। योगी। प्रतियायी। भावी॥ अनद्यतन इति योगविभागाल्लुड् विषयेऽपि॥ ग्रामं श्वो गमी ॥

## यावत्पुरानिपातयोर्लट् ॥ ४ ॥

आभ्यां निपाताभ्यां योगे भविष्यति लट् स्यात्। यावद्भुङ्क्ते। पुराभुङ्क्ते। निपातयोः किम्। यावद्दास्यते तावद्भोक्ष्यते। करणभूतया पुरा यास्यति। अनद्यतने लुडित्यत्रैतदनुवर्तनात्, यावत् श्वोभुङ्क्ते, पुरा श्वोभुङ्क्ते, इत्यपि सिद्धम् ॥

## विभाषा कदाकर्ह्योः ॥ ५ ॥

आभ्यां योगे भविष्यति लड्वा स्यात्। कदा कर्हि वा भुङ्क्ते, भोक्ष्यते, भोक्ता वा। परस्तादनुवृत्त्या लुट् ॥

## किंवृत्ते लिप्सायाम् ॥ ६ ॥

विभक्त्यन्तं डतरडतमान्तं च किमो रूपं किंवृत्तम्। तद्योगे भविष्यति वा लट् लिप्सायाम्। कतरं कतमं वा भवान् भोजयति भोजयिष्यति भोजयिता वा। लिप्सायां किम्। कः पाटलिपुत्रं गमिष्यति॥

## लिप्स्यमानसिद्धौ च॥ ७ ॥

लिप्स्यमानेनान्नादिना स्वर्गादेः सिद्धौ गम्यायां भविष्यति लट् वा स्यादकिंवृत्तेऽपि। योऽन्नं ददाति दास्यति दाता वा स स्वर्गं याति यास्यति याता वा॥

## लोडर्थलक्षणे च॥ ८ ॥

लोडर्थस्य प्रैषादेर्लक्षणक्रियावचनाद्धातोर्भविष्यति लड्वा स्यात्। आशंसायामपि के चित्। उपाध्यायश्चेदायात्यायास्यत्यायाता वा त्वं छन्दोऽधीष्व। उपाध्यायागमनमध्ययनप्रैषस्य लक्षणम्॥

## लिङ् चोर्ध्वमौहूर्तिके॥ ९ ॥

ऊर्ध्वं मुहूर्तादिवऊर्ध्वमौहूर्तिकः। अतएव निपातनात्समासोत्तरपदवृद्धी। ऊर्ध्वमौहूर्तिके भविष्यति लोडर्थलक्षणक्रियावचनाद्धातोर्लिङ्वा स्यात्। पक्षे यथाप्राप्तम्। मुहूर्तस्योपरि उपाध्यायश्चेदागच्छेदागच्छत्यागमिष्यत्यागन्ता वा त्वं छन्दोऽधीष्व। यद्यप्यूर्ध्वमौहूर्तिकेऽनद्यतनत्वं दुर्लभं तथाप्यनद्यतने लुडित्यत्र योगविभागात्तत्र चैतदनुवर्तनादागन्तेति सिध्यतीति काशिकाकृदाशयः॥

## तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ॥ १० ॥

क्रियार्थायां क्रियायामुपपदे भविष्यति धातो स्तुमुन् ण्वुलौ स्तः। आसितुमासकोवा सव्रजति। क्रियायां किम्। भिक्षिष्यइत्यस्यज टाः। क्रियार्थायां किम्। धावतस्ते पतिष्यति दण्डः। ण्वुलतृचा वित्यनेनैव भविष्यत्यपि वासरूपेण ण्वुलि सिद्धे पुनर्वचनं क्रियार्थायां क्रियायामुपपदे वासरूपेण तृजादयो न भवन्तीति। तेन कर्ता व्रजतीत्यादिना न भवितव्यम् ॥

## भाववचनाश्च ॥ ११ ॥

क्रियार्थायां क्रियायामुपपदे भविष्यति भावधिकारविहिताः स्युः। पूर्वसूत्रज्ञापितस्य वाधनार्थमिदं वचनम्। पाकाय व्रजति। भूतये व्रजतीत्यादि। वचनग्रहणात्प्रकृत्यन्तरान्नभवति। तुमर्थाच्चेति ज्ञापकादेवात्र वासरूपसद्भावशिष्योयं योग इति नव्याः ॥

## अण्कर्मणिच्च ॥ १२ ॥

भविष्यति धातोरण् स्यात् कर्मणि क्रियार्थायां क्रियायां चोपपदे। चकारउपपदसमुच्चयार्थस्तेनप्रत्येकमुपपदत्वे न स्यात्। वचनग्रहणानुवृत्त्यैव कर्मण्यणि सिद्धे पुनः कर्मग्रहणं कादिवाधनार्थम्। गोदायोव्रजति। सुरापायोव्रजति। वासरूपविधर्नास्तीति ज्ञापनस्य क्रियार्थायां क्रियायां तृजादिविषयतया ऽत्र वासरूपेण ण्वुल् भवत्येव। एधानाहारको व्रजति। अपवादत्वात् ण्वुलं वाधतइति तु चिन्त्यम् ॥

## लृट् शेषेच्च ॥ १३ ॥

क्रियार्थोपपदादन्यत्र भविष्यति लृट्स्याद्यात्तत्रापि । करिष्यामि । करिष्यामीति व्रजति । केचित्तु सामान्येन लृड्विधाने ऽपि वासरूपेण क्रियार्थोपपदेऽपि लृट् सिद्ध इति शेषग्रहणं चिन्त्यप्रयोजनमिति वदन्ति । तदेतत् लृडपि तृजादिरिति वदन् भगवान्न मृष्यति । भगवतश्चायमाशयः। अकेनोरिति ज्ञापकात्स्वात्मनि वृत्तिविरोधाद्वा एधानाहरको व्रजतीत्यत्र ण्वुल्सम्भवात्सामान्यापेक्षमेव ज्ञापकमिति ॥

## लृटः सद्वा ॥ १४ ॥

लटः शतृशानचावितिवत् प्रत्ययोत्तरपदादौ सर्वत्रायं विधिः । व्यवस्थितवात्वात् प्रथमासमानाधिकरणे विकल्पः । वक्ष्यन् । वक्ष्यते । वक्ष्यमाणः । अन्यत्र सम्बोधनादौ नित्यम् । हेवक्ष्यन् । वक्ष्यन्तं पश्येत्यादि ॥

## अनद्यतने लुट् ॥ १५ ॥

भविष्यत्यनद्यतने लुट् स्यात् । श्वोभोक्ता । अनद्यतनइति योगविभागः । अनद्यतने लृटः सद्वा । श्वोग्निनाधास्यमानेन । विधानसामर्थ्यादेव तद्विषये लृडपि । परिदेवने गम्ये क्वचिदद्यतनेपि लुड्दूरात् । इयं नु कदा गन्ता, यैवं पादौ निदधाति । अयं नु कदा ऽध्येता, य एव मनभियुक्त इति ॥

## पदरुजविशस्पृशोघञ् ॥ १६ ॥

पश्योपचस्यात्सर्वकाले । पादः । रोगः । वेशः । स्पर्शः ॥ रोगइ ष्ठिः ॥ अन्यत्रपचाद्यच् । स्वरे विशेषः ॥

## सृ स्थिरे ॥ १७ ॥

स्थिरे कर्तरि सर्तेर्घञ्[1]। चन्दनसारः। कालान्तरस्थायी-स्थिरः। स्थिरे किम्। सर्ता॥

अस्थिरेऽपि क्वचित्[2]॥

अतीसारो[3] व्याधिः। अन्तर्भावितण्यर्थोऽत्र सर्तिः। विसारो मत्स्यः। सारो बलम्। अत्राप्यन्तर्भावितण्यर्थः॥

## भावे ॥ १८ ॥

धातुमात्राद् घञ् स्याद् भावे। लिंगसंख्ये न तन्त्रम्। पाकः। पाकौ। पचनम्। पक्तिः॥

## अकर्तरि च कारके संज्ञायां ॥ १९ ॥

अकर्तरि कारके संज्ञायां घञ् स्यात्। प्रासीदन्त्यस्मिन् इति प्रासाद इत्यादि। कर्तरितु बिभर्तीति भर्ता। असंज्ञायां तु कर्तव्यः कटः।

चादसंज्ञायामपि क्वचित्।

को भवता दायो दत्तः। को भवता लाभो लब्धः। अकर्तरीति पर्युदासपक्षे कारकग्रहणं न कर्तव्यम्। इत ऊर्ध्वं कृत्यल्युट इति पर्यंतं भावे अकर्तरि कारक इति द्वयमनुवर्तते॥

## परिमाणाख्यायां सर्वेभ्यः ॥ २० ॥

---

१ सूत्रे सृ इति लुप्तविभक्तिकम्।

२ कौमुद्यादिषु 'व्याधिमत्स्यबलेष्विति वाच्यम्' इति वार्तिकं दृश्यते।

३ रुधिरादिकमतिशयेन सारयतीत्यर्थः।

परिच्छित्तौ गम्यायां सर्वेभ्यो धातुभ्यो घञ् स्याद्। एक-तण्डुलनिचायः१।

सर्वेभ्य इति धातुविशेषणाद् प्रकृत्याश्रितावजपादेव बा-ध्यते नार्थाश्रितः क्तिन् ॥

एकातिलोच्छ्रितिः। द्वे स्तुती। परिमाणाख्यायां किम्। निश्चयः॥

दारजारौ कर्तरि णिलुक्च ॥

दारयन्तीति दाराः। जरयन्तीति जाराः।

करणे वा ॥

दीर्यते तैर्दाराः। जीर्यते तैर्जाराः॥

इङश्च ॥ २१ ॥

घञ् स्यात्। अचोपवादः। अध्यायः॥

अपादाने स्त्रियां घञ् तदन्ताच्च वा ङीप् ॥

उपेत्यास्या अधीयते उपाध्यायी। उपाध्याया वा।

शॄ वायुवर्णनिवृतेषु।

शारो वायुः। शारा वर्णः। चित्रम्। शारो निवृतं। आवरणम्॥

उपसर्गे रुवः ॥ २२ ॥

घञ् स्यात्। अपोऽपवादः। संरावः। उपसर्गे किम्। रवः॥

समि युद्रुदुवः ॥ २३ ॥

एभ्यो घञ् स्यात्। संयावः। संद्रावः। संदावः। समि किम्। प्रयवः॥

श्रिणीभुवोऽनुपसर्गे ॥ २४ ॥

---

१ निचीयते राशीक्रियत इति निचायः।

एभ्यो घञ् स्यात् । आयः । नायः । भावः । अनुपसर्गे किम् । प्रश्रयः । नय इत्यपि बाहुलकात् । प्रभाव इतितु प्रकृष्टो भाव इति प्रादिसमासः ॥

वौ क्षुश्रुवः ॥ २५ ॥

घञ् । विक्षावः । विश्रावः । वौ किम् । प्रश्रवः ॥

अवोदोर्नियः ॥ २६ ॥

आभ्यामुत्तरस्य नियो घञ् । अवनायः । उन्नायः१ ॥

प्रे द्रुस्तुस्रुवः ॥ २७ ॥

एभ्यो घञ् । प्रद्रावः । प्रस्तावः । प्रस्रावः । प्र इति किम् । स्रवः ॥

निरभ्योः पुल्वोः ॥ २८ ॥

एतयोर्घञ् । यथाक्रममुपसर्गसम्बन्धः । निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेषः । अभिलावः । निरभ्योः किम् । पवः लवः । पूइति पूङ्पूञोर्ग्रहणम् ॥

उन्न्योर्ग्रः ॥ २९ ॥

गॄ शब्दे, गॄ निगरणे, एतयोर्घञ् । उद्गारः । निगारः । उन्नयोः किम् । गरः ॥

कॄ धान्ये ॥ ३० ॥

कॄविक्षेपे अस्मात् घञ् स्याद्धान्यविषयश्चेद्धात्वर्थः । उन्नयोरित्येव । उत्कारः निकारो२ वा धान्यस्य । धान्ये किम् । भैक्षोत्करः ॥

१ अधऊर्ध्वनयनविषयकं शब्दद्वयं क्रमेण ॥
२ विक्षेपार्थे शब्दद्वयम् ॥

यज्ञे समि स्तुवः ॥ ३१ ॥

संपूर्वात् स्तौतेर्घञ् स्यात् । संस्तुवंत्यस्मिन् देशे छंदोगा इति संस्तावो देशः । यज्ञे किम् । संस्तवः१ ॥

प्रस्त्रोऽयज्ञे ॥ ३२ ॥

स्तृञ् । प्रपूर्वादस्मात् घञ् स्यादयज्ञे । मणिप्रस्तारः । अ-यज्ञे किम् । बर्हिष्प्रस्तरः२ ॥

प्रथने वावशब्दे ॥ ३३ ॥

प्रथने गम्ये विपूर्वात् स्तृणातेर्घञ् स्याच्चेद् प्रथनमशब्दविषयः । प्रथनं विस्तीर्णता । पटस्य विस्तारः । प्रथने किम् । तृणस्य विस्तरः । अशब्दे किम् । विस्तरो वचसाम् ॥

छन्दोनाम्नि च ॥ ३४ ॥

छंदोनामावयवभूतात् स्तृणातेर्घञ् स्यात् । विष्टारपंङ्क्तिश्छन्दः । प्रस्तारपङ्क्तिः । आस्तारपङ्क्तिः । संस्तारपङ्क्तिरित्यादि३ । विष्टारपङ्क्त्यादयः शब्दाः छन्दोनामानि । तदवयवस्तार इति । छन्दः शब्दो गायत्र्यादिपरः ॥

उदि ग्रहः ॥ ३५ ॥

उत्पूर्वाद्ग्रहेर्घञ् स्यात् । अपोऽपवादः । उद्ग्राहः ।

छन्दसि निपूर्वादपि ॥

उद्ग्राभं च निग्राभं च ॥

---

१ परिचयः । २ प्रस्तरो मुष्टिविशेषः ॥
३ काशिकारादयोऽत्र वावित्यनुवर्तयन्ति । तेषां संस्तारपंक्तिरित्याद्युदाहरणम् ।

समि मुष्टौ ॥ ३६ ॥

मुष्टिरंगुलिसंनिवेशः । संपूर्वाद्ग्रहेर्घञ् स्यान्मुष्टौ । मल्लस्य-संग्राहः । दृढमुष्टिरित्यर्थः । मुष्टौ किम् । संग्रहो धान्यस्य ॥

परिन्योर्नीणोर्द्यूताभ्रेषयोः ॥ ३७ ॥

यथाक्रमं परिन्योः परयोर्नीणोर्घञ् स्याद्यथाक्रमं द्यूताभ्रेषयोः । यथाप्रस्तकरणमभ्रेषः । परिणायः । द्यूतमित्यर्थः । न्यायः । यथाप्राप्तमित्यर्थः । द्यूताभ्रेषयोः किम् । परिणयः । न्ययः ॥

परावनुपात्यय इणः ॥ ३८ ॥

परिपूर्वादिणो घञ् स्यादनुपात्यये । अनुपात्ययः क्रमप्राप्तस्यानतिपातः परिपाटी । तव पर्यायः । मम पर्यायः । अनुपात्यय इति किम् । कालस्य विपर्ययः । अतिपात इत्यर्थः ॥

व्युपयोः शेतेः पर्याये ॥ ३९ ॥

आभ्यां शेतेर्घञ् स्यात्पर्याये । तव विशायः । तव राजोपशायः । राजानमुपशाययितुं पर्याय इत्यर्थः । अनुपात्यय इत्यनुवृत्त्यैव सिद्धौ पुनः पर्यायग्रहणादयं परमप्यभिविधाविनुणं बाधते । पर्याये किम् । विशयः[1] ॥

हस्तादाने चेरस्तेये ॥ ४० ॥

हस्तादाने गम्यमाने चेर्घञ् स्यात् न तु चेच्चौर्यं भवति । हस्तादानशब्देन प्रत्यासन्नमादेयमुच्यते । फलप्रचायः । हस्ता-

---

१ संशयः ।

दाने किम् । वृक्षशिखरे फलप्रचयः । अस्तेये किम् । फलप्रचयश्चौर्येण ॥

निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥ ४१ ॥

एष्वर्थेषु चिनोतेर्घञ् स्यात् । चस्य च कः । उपसमाधानं राशीकरणम् । तच्च धात्वर्थविशेषणम् । अन्यानि तु प्रत्ययार्थस्य । निवासे चिखल्लिनिकायः । चिखल्लिर्जनपदविशेषः । चितौ आकायमग्निं चिन्वीत । शरीरे अनित्यकायः । उपसमाधाने गोमयनिकायः ॥

सङ्घे चानौत्तराधर्ये ॥ ४२ ॥

समूहे वाच्ये चिनोतेर्घञ् स्याच्चस्य च कः । भिक्षुनिकायः । अनौत्तराधर्ये किम् । सूकरनिचयः । यदा स्तनपानायोत्तराधरभावेन शेरते तदेतत् प्रत्युदाहरणम् । प्राणिसंघ एव । नेह । प्रमाणसमुच्चयः ।

कर्मव्यतीहारे णच् स्त्रियाम् ॥ ४३ ॥

कर्मव्यतीहारे गम्ये धातोर्णच् स्यात् भावे स्त्रीलिङ्गे । णचः स्त्रियामञ् । व्यावक्रोशी । स्त्रियां किम् । व्यतिपाकः । बाधकविषयेपि क्वचित् । व्यावचोरी । व्यावचर्ची[१] । क्वचन्न । व्यतीक्षा । व्यतीहा । व्यावक्रुष्टिरिति तु भवति । एतत्सर्वं कृतो बहुलमिति वचनाद्भवति ॥

---

१ उदाहरणद्वयेऽपि ण्यासश्रन्थो युजिति युचः प्राप्तिः । यद्वा व्यावचर्चीत्यत्र गुरोश्च हल इत्यकारप्रत्ययः प्राप्तः ॥

अभिविधौ भाव इनुण् ॥ ४४ ॥

धात्वर्थस्य कात्स्न्र्येन सम्बन्धोऽभिविधिः । तस्मिन् गम्यमाने धतोर्भावे इनुण् स्यात् । सांराविणम् । इनुणन्तात्स्वार्थिकोऽण् ॥ इनुणन्तं नपुंसकम् । अभिविधौ किम् । संरावः । भाव इत्यनुवर्तमाने पुनर्भावग्रहणं वासरूपवाधनार्थम् ।

ल्युटा तु समावेश इष्यते ॥

सांकुटीम् । संकुटनम् ॥

आक्रोशेऽवन्योर्ग्रहः ॥ ४५ ॥

इनुण् नानुवर्तते । अवनिपूर्वात् ग्रहेर्घञ् स्यादाक्रोशे । अपोऽपवादः । अवग्राहः विग्राहो[1]वा वृषल ते भूयात् । आक्रोशे किम् । अवग्रहः[2] पदस्य । निग्रहश्चोरस्य ॥

प्रे लिप्सायां ॥ ४६ ॥

प्रपूर्वात् ग्रहेर्घञ् स्याल्लिप्सायां गम्यमानायाम् । पात्रप्रग्राहेण चरति भिक्षुः । लिप्सायां किम् । प्रग्रहः ॥

परौ यज्ञे ॥ ४७ ॥

परिपूर्वात् ग्रहेर्घञ् स्याद्यज्ञे । उत्तरपरिग्राहः । यज्ञे किम् । परिग्रहः देवदत्तस्य ॥

नौ वृ धान्ये ॥ ४८ ॥

निपूर्वयोर्वृङ्वृञोर्घञ् स्याद्धान्ये । अपोऽपवादः । नीवारा व्रीहयः । धान्ये किम् । निवरा कन्या । अत्र अजभ्यां स्त्रीख-

---

१ इदं पदद्वयं बाधार्थकम् ॥ २ छेदविशेष इत्यर्थः ॥

छाना विमतिषेधेनेति माप्तः किन्तु बाहुलकाश्च भवति ॥

उदि श्रयतियौतिपूद्रुवः ॥ ४९ ॥

उत्पूर्वेभ्य एतेभ्यः घञ् स्यात् । अजपोरपवादः । उच्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः । समुच्छ्रय इति तु बहुलग्रहणादार्षत्वाद्वा साधुः ॥

विभाषाऽङि रुप्लुवोः ॥ ५० ॥

आङ्पूर्वयोरेतयोर्घञ् वा स्यात् । आरावः । आरवः । आप्लावः । आप्लवः ॥

अवे ग्रहो वर्षप्रतिबन्धे ॥ ५१ ॥

अवपूर्वाद्ग्रहेर्घञ् वा स्याद्वर्षप्रतिबन्धे । अवग्राहः अवग्रहो वा देवस्य । दैविको वृष्टिप्रतिबन्ध इत्यर्थः । वर्षप्रतिबन्धे किम् । अवग्रहः पदस्य ॥

प्रे वणिजां ॥ ५२ ॥

प्रपूर्वाद्ग्रहेर्घञ् वा स्याद्वणिक्संबन्धिनि वाच्ये । तुला प्रगृह्यतेऽनेन सूत्रेण तुलाप्रग्राहः । तुलाप्रग्रहो वा । वणिजां किम् । प्रग्रहः देवदत्तस्य ॥

रश्मौ च ॥ ५३ ॥

प्रपूर्वाद् ग्रहेर्घञ् वा स्याद् रश्मौ । रश्मिरिति रथादौ पश्वादिनियमनरज्जुरिह गृह्येत न तु चन्द्रादिसंबन्धि । अनभिधानात् । प्रग्राहः प्रग्रहो वा ॥

वृणोतेराच्छादने ॥ ५४ ॥

प्रपूर्वात् वृणोतेर्घञ् वा स्यात् । प्रावारः प्रवरः । आच्छादने किम् । प्रवरा गौः । प्रशस्तेत्यर्थः ॥

परौ भुवोऽवज्ञाने ॥ ५५ ॥

परिपूर्वात् भवतेर्घञ् वा स्यात् । परिभावः । परिभवः । अवज्ञाने किम् । सर्वतो भवनम् परिभवः ॥

एरच् ॥ ५६ ॥

इवर्णान्तादच् स्याद्भावे अकर्तरि च कारके । घञोऽपवादः । चयः । अयः । जयः ।

अज्विधौ भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् ॥

भयम् । वर्षम् । वृषभो वर्षणादिति भगवत्प्रयोगात् वर्षणमित्यपि भवति ॥ कल्पादिभ्यः प्रतिषेधः[1] । कल्पः । अर्थः । मन्त्रः । ण्यन्तेभ्योऽचि प्रतिषिद्धे घञेव । स्वरे विशेषः ।

जवसवौ छन्दसि वक्तव्यौ ॥

अपि प्राप्तेऽज्विधिः । स्वरभेदः ॥

ऋदोरप् ॥ ५७ ॥

ऋकारान्तेभ्य उवर्णान्तेभ्यश्चाप् स्यात् । घञोऽपवादः । कॄ । करः । गॄ । गरः । शॄ । शरः । स्तु । स्तवः । लू । लवः । दकार उच्चारणार्थः । तेन ह्रस्वेऽपि उवर्णे भवति ॥

ग्रहवृदृनिश्चिगमश्च ॥ ५८ ॥

एभ्योऽप् स्यात् । घञोऽ(घञचोर)पवादः । ग्रहः । वरः । दरः । निश्चयः । गमः । निश्चिग्रहणं स्वरार्थम् । हस्तादान इत्यनेन निश्चाय इत्यपि ॥

---

१ इदं ग्रन्थान्तरेषु नोपलभ्यते ।

वशिरण्योश्च ॥

अप् । वशनं वशः । रणन्त्यस्मिन्निति रणः ।

घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ॥

भावः कर्तृवर्जितं च कारकं घञर्थः । प्रतिष्ठन्तेऽस्मिन् धान्यादिकमिति प्रस्थः । प्रस्नान्त्यस्मिन्निति प्रस्नः । प्रपिबन्त्यस्यां प्रपा । अविध्यन्त्यनेनेत्याविधः । विघ्नन्ति तस्मिन् मनांसि विघ्नः । आयुध्यन्ते तेनायुधम् ॥

उपसर्गेऽदः ॥ ५९ ॥

उपसर्गे उपपदे अत्तेरप् स्यात् । प्रघसः । उपसर्गे किम् । घासः ॥

नौ ण च ॥ ६० ॥

निपूर्वादत्तेर्णः स्यात् चादप् । न्यादः । निघसः ॥

व्यधजपोरनुपसर्गे ॥ ६१ ॥

एतयोरप् स्यान्न तूपसर्गे । व्यधः । जपः । अनुपसर्गे किम् । आव्याधः । उपजापः ॥

स्वनहसोर्वा ॥ ६२ ॥

आभ्यामब्वा स्यात् । स्वनः । स्वानः । हसः । हासः । अनुपसर्ग इत्येव । प्रस्वानः । प्रहासः ॥

यमः समुपनिविषु च ॥ ६३ ॥

समादिषु यमेर्वाऽप् स्यात् चादनुपसर्गेऽपि । संयमः । संयामः । उपयमः । उपयामः । नियमः । नियामः । वियमः । वियामः । अनुपसर्गे । यमः । यामः ॥

नौ गदनदपठस्वनः ॥ ६४ ॥

निपूर्वेभ्य एतेभ्यो वाऽप् स्यात् । निगदः । निगादः । इत्यादि ॥

क्वणो वीणायां च ॥ ६५ ॥

निपूर्वात् क्वणतेर्वाऽप् स्यात् । निक्वणः । निक्वाणः । अनुपसर्गादपि । क्वणः । क्वाणः । वीणाग्रहणमन्योपसर्गार्थम् । प्रक्वणा वीणा । प्रक्वाणा वीणा । एषु किम् । अतिक्वाणः ॥

नित्यं पणः परिमाणे ॥ ६६ ॥

पण व्यवहार इत्यस्मादप् नित्यं स्यात् परिमाणे गम्ये । मूलकपणः । शाकपणः । परिमाण इति मूलकादीनां संव्यवहारार्थं यो मुष्टिबन्धस्तस्येदं ग्रहणम् । परिमाणे किम् । पाणः ॥

मदोऽनुपसर्गे ॥ ६७ ॥

अप् स्यात् । विद्यामदः । अनुपसर्गे किम् । उन्मादः ॥

प्रमदसंमदौ हर्षे ॥ ६८ ॥

एतौ निपात्येते । हर्षे किम् । प्रमादः । संमादः ॥

समुदोरजः पशुषु ॥ ६९ ॥

समुत्पूर्वस्याजेरप् स्यात् पशुषु । समजः । पशूनां समूह इत्यर्थः । उदजः । पशूनां प्रेरणमित्यर्थः । पशुषु किम् । समाजः । उदाजः ॥

अक्षेषु ग्लहः ॥ ७० ॥

अयं निपात्यते । अक्षस्य ग्लहः । ग्रहेर्लत्वं निपात्यते । अक्षेषु किम् । ग्रहः । ग्लहिः प्रकृत्यन्तरमित्यन्ये ॥

प्रजने सर्तेः ॥ ७१ ॥

सर्तेरप् स्यात् प्रजने। प्रजनः प्रथमं गर्भग्रहणम्। पशूनामुपसरः॥

ह्वः संप्रसारणं च न्यभ्युपविषु ॥ ७२ ॥

न्यादिपूर्वात् ह्वयतेः संप्रसारणमप् च। निहवः। अभिहवः। उपहवः। विहवः। एषु किम्। प्रह्वायः॥

आङि युद्धे ॥ ७३ ॥

आङो ह्वेञः संप्रसारणमप् च। आहूयन्ते अस्मिन्नित्याहवः संग्रामः। युद्धे किम्। आह्वायः॥

निपानमाहावः ॥ ७४ ॥

(आङ्पूर्वस्य ह्वयतेः संप्रसारणमप् वृद्धिश्चोदकाधारश्चेद्वाच्यः। आहावस्तु निपानं स्यादुपकूपजलाशये॥)

भावेऽनुपसर्गस्य ॥ ७५ ॥

(अनुपसर्गस्य ह्वयतेः संप्रसारणमप् च स्याद्भावे। हवः॥)

हनश्च वधः ॥ ७६ ॥

अनुपसर्गाद्धन्तेरप् स्यात् भावे, हन्तेश्च वधादेशः, स चान्तोदात्तः। चोराणां वधः। भावे किम्। घातः। अनुपसर्गे किम्। प्रघातः। चकारस्य प्रत्ययेन सम्बन्धात् घञपि। घातः॥

मूर्तौ घनः ॥ ७७ ॥

मूर्तिः काठिन्यं। तस्मिन् वाच्ये हन्तेरप् स्यात्तस्य च घन इत्यन्तोदात्त आदेशः। मेघघनः। घनं दधीत्यत्र धर्मशब्देन धर्म्युच्यते॥

अन्तर्घनो देशे ॥ ७८ ॥

अन्तःपूर्वाद्धन्तेरप् घनश्चान्तोदात्त आदेशो देशे वाच्ये । अन्तर्घनः । वाह्लि(ही)केषु देशविशेष उच्यते । केचिदन्तर्घण इति पठन्ति ॥

अगारैकदेशे प्रघणः प्रघाणश्च ॥ ७९ ॥

प्रपूर्वस्य हन्तेरेतौ निपात्येते अगारैकदेशे वाच्ये । द्वारप्रकोष्ठको बाह्यः अगारैकदेश इष्यते ॥

उद्घनोऽत्याधानम् ॥ ८० ॥

अत्याधाने उद्घन इति निपात्यते । यस्मिन् काष्ठेऽन्यानि स्थापयित्वा तक्ष्यन्ते स उच्यते । उद्घातोऽन्यः ॥

अपघनोऽङ्गम् ॥ ८१ ॥

अङ्गे अपघन इति निपात्यते । अपहन्यत इत्यपघनः पाणिः ॥

करणेऽयोविद्रुषु ॥ ८२ ॥

एषु हन्तेः करणे अप् स्यात् घनादेशश्च । अयो हन्यतेऽनेनेत्ययोघनः । विघनः । द्रुघनः । द्रुघण इत्यपि केचित् ॥

स्तम्बे क च ॥ ८३ ॥

स्तम्बे उपपदे हन्तेः करणे कः स्याच्चावप् तत्र च घनादेशः । स्तम्बघ्नः । स्तम्बघनः । स्त्रियान्तु स्तम्बघ्ना स्तम्बघना स्तम्बहतिः स्तम्बहननी इति भवति ॥

परौ घः ॥ ८४ ॥

परिपूर्वाद्धन्तेः करणे अप् स्यात् घश्चादेशः । परिहन्यतेऽनेनेति परिघः ॥

उपघ्न आश्रये ॥ ८५ ॥

आश्रयः सामीप्यम् । अस्मिन्नुपघ्न इति निपात्यते । पर्वतोपघ्नः । उपघातोऽन्यः ॥

संघोद्घौ गणप्रशंसयोः ॥ ८६ ॥

एतयोर्यथाक्रममेतौ निपात्येते । संघः पशूनाम् । उद्घो मनुष्यः । प्रशस्त इत्यर्थः । संघातोऽन्यः ॥

निघो निमितम् ॥ ८७ ॥

निमितमिति उच्चायाविना साम्यमुच्यते । अत्र निघ इति निपात्यते । निर्विशेषं हन्यन्ते ज्ञायन्ते इति निघा वृक्षाः ॥

ड्वितः क्त्रिः ॥ ८८ ॥

डु इत्यस्यासौ ड्वित् । तस्मात् क्त्रिः स्यात् । डुपचष् पाके । पाकेन निर्वृत्तं पक्त्रिमम् । डुकृञ् । कृत्रिमम् । क्त्रेर्मम्नित्यमिति केवलक्त्र्यन्तस्य प्रयोगाभावः ॥

ट्वितोऽथुच् ॥ ८९ ॥

टु इत् यस्य तस्मादथुच् स्यात् । वेपथुः । श्वयथुः ॥

यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ९० ॥

एभ्यो नङ् स्यात् । यज्ञः । याच्ञा । यत्नः । विश्नः । प्रश्नः । प्रश्ने चासन्नकाल इति ज्ञापकात् प्रच्छेः संप्रसारणाभावः । रक्ष्णः ॥

स्वपो नन् ॥ ९१ ॥

स्वपो नन् स्यात् । स्वप्नः ॥

उपसर्गे घोः किः ॥ ९२ ॥

उपसर्गपूर्वात् घोः किः स्यात् । आतो लोपः । निधिः । विधिः ॥

कर्मण्यधिकरणे च ॥ ९३ ॥

कर्मण्युपपदेऽधिकरणे कारके घोः किः स्यात् । जलं धीयतेऽस्मिन्निति जलधिः । उदधिः । अकर्तरीत्यधिकारादेव सिद्धेऽधिकरणग्रहणं कारकान्तरनिवृत्त्यर्थम् ॥

स्त्रियां क्तिन् ॥ ९४ ॥

भावादौ धातोः क्तिन् स्यात् स्त्रियाम् । घञादीनामपवादः । कृतिः । चितिः । भूतिः ।

क्तिन्नाबादिभ्यः ॥

गुरोश्च हल इत्यस्यापवादः । आप्तिः । राद्धिः । दीप्तिः । स्रस्तिः । ध्वस्तिः । आबादेराकृतिगणत्वात् लब्धिरित्यपि ।

श्रुयजिस्तुभ्यः करणे ॥

श्रूयतेऽनयेति श्रुतिः । इष्टिः । स्तुतिः ।

ग्लाज्याहाभ्यो निः ॥

ग्लानिः । ज्यानिः । हानिः ।

ऋकारान्तेभ्यो ल्वादिभ्यश्च क्तिन्निष्ठावत् ॥

कीर्णिः । लूनिः । पूनिः ।

संपदादिभ्यः क्विप् ॥

संपत् । विपत् । क्तिन्नपि । सम्पत्तिः । विपत्तिः ॥

स्थागापापचो भावे ॥ ९५ ॥

एभ्यो भावे क्तिन् स्यात् स्त्रियाम् । अङोऽपवादः । उपस्थितिः । उपगीतिः । संपीतिः । पक्तिः । भावग्रहणमर्थान्तरनिरासार्थम् । पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरा-

निति न्यायेन विभाषाख्यानेत्याविना ण्वुलिञौ भवत एव । कां स्मायिकाम् । कां स्मायिम् ॥

मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ॥ ९६ ॥

पंचमीस्थाने प्रथमा । एभ्यो भावे क्तिन् स्यात् स्त्रियां स चोदात्तो मन्त्रे । सामान्येन क्तिनि सिद्धे उदात्तार्थं वचनम् । भाषायामाद्युदात्तः । वृष्टिः । इष्टिः । पक्तिः । मतिः । वित्तिः । भूतिः । वीतिः । रातिः ॥

ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ॥ ९७ ॥

मन्त्र इति निवृत्तम् । भावे स्त्रियां क्तिन्नन्ता उदात्ताश्चैते निपात्यन्ते । अवतेर्ज्वरत्वरेत्यूठ् । ऊतेः स्वरार्थं निपातः । यौतेः यूतिः । जीवतेर्जूतिः । दीर्घत्वं निपातनात् । स्यतेः सातिः । निपातनाद्यतिस्यतीतीत्त्वाभावः । सनोतेर्वा कृतात्त्वस्य स्वरार्थं निपातनम् । हन्तेर्नस्य इत्वं हिनोतेर्वा गुणो निपात्यते । हेतिः । कीर्तयतेः कीर्त्तिः । युचोऽपवादः ॥

व्रजयजोर्भावे क्यप् ॥ ९८ ॥

एतयोर्भावे क्यप् स्यात् स्त्रियाम् स चोदात्तः । क्तिनोऽपवादः । व्रज्या । इज्या ॥

संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ॥९९॥

भाव इति न संबध्यते । एभ्यः संज्ञायां क्यप् स्यात् स्त्रियां स चोदात्तः । समजन्त्यस्यामिति समज्या सभा । संज्ञत्वात् वीभावाभावः । न हि वीभावे सति संज्ञा गम्यते१ । निषद्या ।

(१) २।४।५६ सूत्रे'क्यप्यपि न' इति वार्तिकं दृश्यते ।

आपणः। निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः। मन्यतेऽनयेति मन्या। विद्यते गृह्यतेऽनयेति विद्या। सूयते सोमोऽस्याम् इति सुत्याऽभिषवदिवसः। शय्यतेऽस्यामिति शय्या। भरणं भृत्या जीविका। संज्ञाग्रहणादधिकाराभावेऽपि भाव एव प्रत्ययः। तेन भार्येति सिद्ध्यति। ईयते गम्यतेऽनयेति इत्या॥

कृञः श च॥ १००॥

भावे कृञः शः स्यात् क्यप् च। क्रिया। कृत्या। क्तिन्नपि। कृतिः॥

इच्छा॥ १०१॥

इषेर्भावे स्त्रियां शः यगभावश्च निपात्यते। क्तिनोऽपवादः। एषणमिच्छा॥

परिचर्यादीनामपि निपातनम्॥

परिचरणं परिचर्या। सृ। परिसर्या। गुणो निपातनात्। मृग। चौरादिकोऽदन्तः। अतो लोपाभावो निपातनात्। मृगया। अटाट्या। द्विर्वचनाभ्यासदीर्घौ निपातनात्॥

जागर्तेरकारो वा॥

जागर्या। जागरा॥

अ प्रत्ययात्॥ १०२॥

प्रत्ययान्ताद्धातोरकारप्रत्ययः स्यात् स्त्रियां भावे। क्तिनोऽपवादः। चिकीर्षा। पुत्रीया॥

गुरोश्च हलः॥ १०३॥

गुरुमान् हलन्तो यस्तस्मादः स्यात् स्त्रियाम्। ईहा। ऊहा। गुरोः किम्। भक्तिः। हलः किम्। नीतिः॥

पिद्भिदादिभ्योऽङ् ॥ १०४ ॥

षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ् स्यात् । जृष् । जरा । त्रपूष् । त्रपा । भिदादिभ्यः । भिदा विदारणे । भित्तिरन्या । छिदा द्वैधीकरणे । छित्तिरन्या । आरा शस्त्र्याम् । आर्तिरन्या । अत्राङा सहोपसर्गादितीति वृद्धिः । धारा प्रपाते । धृतिरन्या । हारा । कारा ज्योतिषि । आरादौ गुणे कृते दीर्घत्वं निपात्यते । लेखा । गुणो निपातनात् । लस्य रो वा । रेखा । चुदेर्ह्रस्वं दीर्घश्च । चूडा । गुहा गिर्योषध्योः । गूढिरन्या । क्रपेः संप्रसारणं च । कृपा । श्रद्धा । मेधा ॥

चिन्तिपूजिकथिकुम्बिचर्चश्च ॥ १०५ ॥

एते ण्यन्ता एव सर्वे गृह्यन्ते । एभ्योऽङ् स्यात् स्त्रियाम् । युचोऽपवादः । चिन्ता । पूजा । कथा । कुम्बा । चर्चा । चार्थुजपि । चिन्तना ॥

आतश्चोपसर्गे ॥ १०६ ॥

उपसर्गपूर्वेभ्य आदन्तेभ्योऽङ् स्यात् स्त्रियाम् । क्तिनोऽपवादः । उपधा ॥

श्रदन्तरोरुपसर्गवद्वृत्तिः ॥

श्रद्धा । अन्तर्धा ॥

ण्यासश्रन्थो युच् ॥ १०७ ॥

ण्यन्तानामासश्रन्थोश्च युच् स्यात् । आपवादः । भावना । आसना । श्रन्थना । अस्त्रियामिति प्रतिषेधश्च यत्रोत्सर्गापवादौ द्वावपि स्त्र्यधिकारविहितौ तत्रैव । तेन वासरूपेण

ण्यत्सम्भवाद्वास्या इत्यपि सिद्धम् ॥

घट्टिवन्दिविदिभ्यश्च ॥

घट्टना । वन्दना । वेदना । घटनेत्यपि ॥

इषेरनिच्छार्थस्य ॥

अन्वेषणा ॥

परेर्वा ॥

पर्येषणा । परीष्टिः ॥

रोगाख्यायां ण्वुल्बहुलम् ॥ १०८ ॥

धातोः स्त्रियां बहुलं ण्वुल् स्यात् रोगाख्यायाम् । प्रच्छर्दिका । क्वचिन्न । शिरोऽर्तिः ॥

धात्वर्थनिर्देशे ण्वुल् ॥

शायिका । आसिका ॥

इक्श्तिपौ धातुनिर्देशे ॥

वाहिः । पचतिः । क्वचिन्न । मनः ॥

वर्णात्कारः ॥

अकारः । इकारः । क्वचिन्न । अस्य च्वौ ॥ संघाताच्च क्वचित् ॥ एवकारः ॥

रादिफः ॥

रेफः । रकार इत्यपि ॥

मत्वर्थाच्छः ॥

मत्वर्थीयः । मतुवर्थीय इत्यपि ॥

इणजादिभ्यः ॥

आजिः । आदिः ॥

इञ् वपादिभ्यः ॥

वापिः । वासिः । वादिः ॥

इक् कृष्यादिभ्यः ॥

कृषिः । किरिः । गिरिः ॥

संज्ञायाम् ॥ १०९ ॥

संज्ञायां धातोर्ण्वुल् स्यात् स्त्रियाम् । उद्दालकपुष्पभञ्जिका । सालभञ्जिका ॥

विभाषाऽऽख्यानपरिप्रश्नयोरिञ् च ॥ ११० ॥

प्रश्ने उत्तरे च गम्यमाने धातोरिञ् स्यात् चात् ण्वुल् । विभाषाग्रहणादन्योऽपि यथाप्राप्तं स्त्रियाम् । कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षीः । सर्वां कारिकां क्रियां कृत्यां कृतिमकार्षम् । इत्यादि ज्ञेयम् ॥

पर्यायार्हर्णोत्पत्तिषु ण्वुच् ॥ १११ ॥

एषु गम्यमानेषु धातोर्ण्वुच् स्यात् स्त्रियाम् । पर्यायः परिपाटी । भवतः शायिका । अर्हे । अर्हति भवान् पयःपायिकाम् । ऋणे । इक्षुभक्षिकां मह्यं धारयसि । उत्पत्तौ । ओदनभोजिका उदपादि । वेत्येव । चिकीर्षोत्पद्यते । चः स्वरार्थः ॥

आक्रोशे नञ्यनिः ॥ ११२ ॥

नञ्पूर्वाद्धातोः स्त्रियामनिः स्यादाक्रोशे गम्ये । क्तिन्नाद्यपवादः । आक्रोशः शापः । अकरणिस्ते वृषल भूयात् । आक्रोशे किम् । अकृतिर्देवदत्तस्य । नञि किम् । मृतिस्ते वृषल ॥

## कृत्यल्युटो बहुलम् ॥ ११३ ॥

भावे अकर्तरि स्त्रियामित्यादि निवृत्तम् । कृत्या ल्युट् च बहुलमर्थेषु स्युः । स्नान्त्यनेनेति स्नानीयम् । दीयतेऽस्मै दानीयो विप्रः । ल्युडपि । अपसिच्यत इत्यपसेचनम् । बहुलग्रहणात् कृन्मात्रस्यार्थान्तरेऽपि यथाप्रयोगं वृत्तिः । पादाभ्यां ह्रियते पादहारकः । गलेचोपकः ॥

## नपुंसके भावे क्तः ॥ ११४ ॥

धातोर्भावे क्तः स्यान्नपुंसके । हसितम् । स्मितम् ॥

## ल्युट् च ॥ ११५ ॥

नपुंसके भावे । शयनम् । आसनम् ॥

## कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् ॥ ११६॥

येन संस्पृश्यमानस्य कर्तुः शरीरसुखं जायते तस्मिन् कर्मण्युपपदे नपुंसके भावे धातोर्ल्युट् स्यात् । नित्योपपदसमासार्थं वचनम् । ओदनभोजनं सुखम् । कर्मणि किम् । तूलिकाया उत्थानं सुखम् । संस्पर्शात्किम् । अग्निकुण्डस्योपासनं सुखम् । कर्तुः किम् । गुरोः स्नापनं सुखम् । शरीरेति किम् । पुत्रस्य परिष्वजनं सुखम् । मानसप्रीतिरत्र । सुखं किम् । कण्टकानां मर्दनं दुःखम् । सर्वत्रासमासः प्रत्युदाहरणे ॥

## करणाधिकरणयोश्च ॥ ११७ ॥

एनयोरभिधेययोर्धातोर्ल्युट् स्यात् । घञपवादः । इध्मप्रव्रश्चनः । अधिकरणे । गोदोहनी ॥

पुंसि संज्ञायां घः प्रायेण ॥ ११८ ॥

करणेऽधिकरणे च धातोर्घः स्यात् पुंसि संज्ञायाम् । दन्तच्छदः । अधिकरणेऽपि । एत्य तस्मिन् कुर्वन्तीत्याकरः । पुंसि किम् । प्रसाधनम् । संज्ञायां किम् । प्रहरणो दण्डः ॥

गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ ११९ ॥

एते घान्ता निपात्यन्ते पूर्वस्मिन्नर्थे । हलश्चेति घञोऽपवादः । गावश्चरन्त्यस्मिन्निति गोचरः । संचरः । वहत्यनेन वहः । व्रजः । व्यजः । निपातनाद्वीभावो न । एत्यैतस्मिन् पणन्त इत्यापणः । निगच्छन्त्यस्मिन्निति निगमः । चात्कषः निकषः । प्रायग्रहणेनैव सिद्धेरशिष्योऽयं योग इत्याकरे ॥

अवे तॄस्त्रोर्घञ् ॥ १२० ॥

अवपूर्वयोरेतयोः करणाधिकरणयोर्घञ् स्यात् संज्ञायाम् । अवतारः । अवस्तारः । प्रायेणानुवृत्त्या असंज्ञायामपि । अवतारो नद्याः ॥

हलश्च ॥ १२१ ॥

हलन्तात् पुंसि संज्ञायां करणाधिकरणयोर्घञ् स्यात् । घापवादः । लेखः । वेदः । मार्गः । अपामार्गः ॥

अध्यायन्यायोद्यावसंहाराधारावायाश्च ॥ १२२ ॥

एते पुंसि संज्ञायां घञन्ता निपात्यन्ते । अधीयते एत्यास्मिन्नित्यध्यायः । नीयतेऽनेनेति न्यायः । उद्युवन्त्यनेन उद्यावः । संह्रियते अनेनेति संहारः । आध्रियन्तेऽस्मिन्नित्याधारः । आवयन्त्यस्मिन्नित्यावायः । चादवहारः ॥

उदङ्कोऽनुदके ॥ १२३ ॥

उत्पूर्वादञ्चतेर्घञ् निपात्यते अनुदके। तैलमुदच्यते उद्ध्रियते अस्मिन्निति तैलोदङ्कः, घृतोदङ्कः, चर्मादि। अनुदके किम्। उदकोदञ्चनः। हलश्चेत्यनेनैवात्र घञ्सिद्धः प्रायवचनेन च गोदोहनः प्रसाधनः इत्यत्रेवोदकोदञ्चन इत्यत्रापि घञभावसिद्धेश्चाशिष्योऽयं योग इत्याकरे ॥

जालमानायः ॥ १२४ ॥

आङ्पूर्वान्नयतेः करणे घञ् निपात्यते जालं चेद्वाच्यम्। आनीयन्ते मत्स्या अनेनेत्यानायो मत्स्यानाम् ॥

खनो घ च ॥ १२५ ॥

खनतेः करणाधिकरणयोर्घः स्यात् घञ् च। आखनः। आखानः।

खनो डडरेकेकवकाः ॥

आखः। आखरः। आखनिकः। आखनिकवकः ॥ खनो घ चेत्यत्र घित्करणसामर्थ्यादन्यत्रापि घः। तेन भगः पदम् खलः इत्यादि सिद्धम् ॥

ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ १२६ ॥

ईषदादिष्वेतदर्थेषु उपपदेषु धातो खल् स्यात्। कृच्छ्रं दुःखम्। तद्दुरो विशेषणम्। अकृच्छ्रं सुखम्। तदितरयोः। ईषत्करः। दुष्करः। सुकरः। एषु किम्। कृच्छ्रेण कार्यः। एतदर्थेषु किम्। ईषत्कार्यः। अत्र मनागर्थे ईषच्छब्दः ॥

अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलजौ विप्रतिषेधेन ॥

चितिः। कृतिः। खल्। ईषच्चयः। सुलवः। अन। च-

यनः । लवनः । खल् । इपद्भेदा । अज । सक्तुधानी ॥

कर्तृकर्मणोश्च भूकृञोः ॥ १२७ ॥

कर्तृकर्मणोरीपदादिपूर्वयोर्यथाक्रममुपपदयोः भूकृञोः खल् स्यात् । यथासंख्यमिति सूत्रे कर्तृकर्मणोर्यथासंख्यं भगवता निराकृतम् । च्व्यर्थवृत्तित्वाङ्गीकारे सामर्थ्यादेव यथासंख्यसिद्धिरिति तु प्रतिभाति । चादुपपदसमुच्चयः । खित्त्वसामर्थ्याद् कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमित्याश्रयणे बाहुलकाद्वा ईषदादीनामेव कर्तृकर्मपूर्वत्वम् । न कर्तृकर्मणोरीषदादिपूर्वत्वम् । *अनाढ्येन भवता ईषदाढ्येन शक्यं भवितुम् ईषदाढ्यंभवं भव*ता । दुराढ्यंभवम् । स्वाढ्यंभवम् । अनाढ्यः आढ्यः क्रियते सुखेन ईषदाढ्यंकरः । दुराढ्यंकरः । स्वाढ्यंकरः ॥

कर्तृकर्मणोश्च्व्यर्थयोरेव ॥

नेह । आढ्येन सुभूयते ॥

आतो युच् ॥ १२८ ॥

ईषदादिपूर्वादादन्ताद्युच् स्यात् । खलोऽपवादः । कर्तृकर्मणोरिति न स्वर्यते । ईषत्पानः दुष्पानः सुपानः सोमः ॥

छन्दसि गत्यर्थेभ्यः ॥ १२९ ॥

ईषदादिष्वेभ्यः छन्दसि युच् स्यात् । खलोपवादः । सूपसदनम् ॥

अन्येभ्योऽपि दृश्यते ॥ १३० ॥

छन्दसि युच् । सुवेदनाम् ।

भाषायां शासियुधिदृशिधृषिमृषिभ्यः ॥

दुःशासनः। दुर्योधनः। दुर्दर्शनः। दुर्धर्षणः। दुर्मर्षणः॥

## वर्तमानसामीप्ये वर्तमानवद्वा॥ १३१॥

समीपमेव सामीप्यम्। स्वार्थेऽपि ष्यञ् अनेन ज्ञाप्यते। वर्तमानसामीप्ये भूते भविष्यति वा वर्तमानवत् प्रत्यया वा स्युः। वर्तमाने ल( ३।२।१२३ )डित्यारभ्य उणादयो बहुल( ३।३।१ )मिति पर्यन्तं वर्तमाने ये उक्ताः तेषामत्र विधानम्। कदा आगतोऽसि। अयमागच्छामि, अयमागमं वा। कदा गमिष्यसि। एष गच्छामि, गमिष्यामि वा। एवं पचमानः अलङ्करिष्णुरित्यादि। सामीप्ये किम्। वर्षेण गमिष्यति॥

## आशंसायां भूतवच्च॥ १३२॥

भविष्यति काले भूतवच्चाद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम्। देवश्चेद्वर्षति, अवर्षीत्, वर्षिष्यति वा, एते वयं धान्यं वपामः, अवाप्स्म, वप्स्यामो वा। सामान्यातिदेशे विशेषानतिदेशाल्लङ्लिटौ न॥

## क्षिप्रवचने लृट्॥ १३३॥

क्षिप्रपर्यायोपपदे भविष्यति लृट् वा स्यादाशंसायाम्। पूर्वापवादः। वृष्टिश्चेत्त्वरितमाशु शीघ्रं वा आयास्यति क्षिप्रं वप्स्यामः। नेति वाच्ये लृड्उक्तिर्लुटो बाधार्था, श्वः शीघ्रं वप्स्यामः॥

## आशंसावचने लिङ्॥ १३४॥

आशंसापर्यायोपपदे भविष्यति लिङ् वा स्यान्न भूतवत्। गुरुश्चेदुपेयात्तदाशंसे अधीयीय। क्षिप्रवचनेपि परत्वाल्लिङ्। आशंसे क्षिप्रमधीयीय॥

नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ॥ १३५ ॥

क्रियायाः सातत्ये सामीप्ये वा गम्यमाने अनद्यतनवत् प्रत्ययो न स्यात् । यावज्जीवमन्नमदात्, दास्यति वा । सामीप्ये, येयं पूर्णमासी गता तस्यामुपाध्यायोऽग्नीनाधित, आगामिन्यामाधास्यते वा । अत्र लङ्लुटौ न ॥

भविष्यति मर्यादावचनेऽवरस्मिन् ॥ १३६ ॥

भविष्यति मर्यादावचने अवरस्मिन् भागेऽनद्यतनवत् प्रत्ययो न स्यात् । योयमध्वा गन्तव्य आ पाटलिपुत्रात् तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून् पास्यामः । मर्यादावचने किम् । योयं निरवधिको गन्तव्यः तस्यावरस्मिन् द्विरन्नं भोक्तास्महे । अवरस्मिन् किम् । योयमा पटलिपुत्राद्गन्तव्यस्तत्र यत्परं कौशाम्ब्यास्तत्र भोक्तास्महे ॥

कालविभागे चानहोरात्राणाम् ॥ १३७ ॥

कालमर्यादाविभागे सत्यवरस्मिन् भागे भविष्यत्यनद्यतनवत् प्रत्ययो न स्यात् न चेदहोरात्रसम्बन्धिविभागः । योऽयं संवत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्राध्येष्यामहे । प्रत्युदाहरणं पूर्ववत् ज्ञेयम् । अनहोरात्राणां किम् । योयं मास आगामी तस्य योऽवरः पञ्चदशरात्रः, योऽयं त्रिंशद्रात्र आगामी तस्य योऽवरोऽर्धमासः, योयं त्रिंशद्रात्र आगामी तस्य योऽवरः पञ्चदशरात्रः तत्राध्येतास्महे । सर्वथाऽहोरात्रप्रवेशे प्रतिषेधः ॥

परस्मिन् विभाषा ॥ १३८ ॥

अनन्तरोक्तविषये परस्मिन् विभागेऽनद्यतनवत् प्रत्ययो

वा न स्यात्। योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्या-स्तत्राध्येष्यामहे । अध्येतास्महे । परस्मिन् कालेऽहोरात्रप्र-तिषेधादौ प्रत्युदाहरणे पूर्ववत् अनद्यतनप्रत्ययो ज्ञेयः ॥

लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ १३९ ॥

हेतुहेतुमद्भावादि लिङ्निमित्तम् । तत्र भविष्यति लृङ् स्यात् कुतश्चित् क्रियाया अनिष्पत्तौ गम्यायाम् । सुवृ-ष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत् ॥

भूते च ॥ १४० ॥

उताप्योः समर्थयो(३।३।१५२)रित्यादिलिङ्निमित्ते भूते लृङ् स्यात् क्रियाया अनिष्पत्तौ । यद्यहमैष्यम्, उताभोक्ष्ये । अप्यभोक्ष्ये । न भुक्तवान् ॥

वोताप्योः ॥ १४१ ॥

वा आ उताप्योः। उताप्यो( ३।३।१५२ )रिति यावत् भूते लिङ् निमित्ते लृङ् क्रियातिपत्तौ वेत्यधिक्रियते ॥

गर्हायां लडपिजात्वोः ॥ १४२ ॥

आभ्यां योगे लट् स्यात् कालत्रये गर्हायाम् । कालवि-शेषप्रत्ययापवादः । अपि जायां त्यजसि । जातु गणिकामाद-त्से । अत्र लिङ्निमित्ताभावात् लृङ् न । वर्तमानत्वविवक्षयैव लडित्यशिष्योयं योग इत्याकरे ॥

विभाषा कथमि लिङ् च ॥ १४३ ॥

कथमा योगे कालत्रयेपि वा लिङ् चाल्लट् गर्हायाम् । कथं धर्मं त्यजेः त्यजसि वा । पक्षे कालत्रयेऽपि लकाराः । अत्र भविष्यति नित्यं लृट्, भूते वा ॥

## किंवृत्ते लिङ्लृटौ ॥ १४४ ॥

किंवृत्तयोगे गर्हायामेतौ स्तः कालत्रयेपि । सर्वलापवादः । कः कतरो वा वृषलं याजयेत् याजयिष्यति वा । लृङ् प्राग्वत् ॥

## अनवक्लृप्त्यमर्षयोरकिंवृत्तेपि ॥ १४५ ॥

गर्हायामिति निवृत्तम् । किंवृत्तेऽकिंवृत्तेपि लिङ्लृटौ स्तः सम्भावनामर्षयोः कालत्रयेपि । सर्वलकारापवादः । न सम्भावयामि न मर्षये वा भवान् हरिं निन्देत् । कः कतरो वा निन्देन्निन्दिष्यति वा । क्रियातिपत्तौ लृङ् प्राग्वत् ॥

## किंकिलास्त्यर्थेषु लृट् ॥ १४६ ॥

किंकिलशब्दे विशिष्टे उपपदे अस्त्यर्थे चोपपदे अनवक्लृप्त्यमर्षयोर्लृडेव स्यात्कालत्रयेऽपि । न श्रद्दधे न मर्षये वा किं किल त्वं शूद्रान्नं भोक्ष्यसे अस्ति भवति विद्यते वा । शूद्रीं गमिष्यसि । लिङ्निमित्ताभावात् लृङत्र न ॥

## जातुयदोर्लिङ् ॥ १४७ ॥

आभ्यां योगे कालत्रये लिङ् स्यादनवक्लृप्त्यमर्षयोः ॥

यदायद्योर्योगे च ॥

जातु यद् यदि यदा वा त्वादृशो हरिं निन्देत् नावकल्पयामि न मर्षयामि वा । लृङ् प्राग्वत् ॥

## यच्चयत्रयोः ॥ १४८ ॥

आभ्यां योगे पूर्ववत् । यच्च यत्र वा त्वमेवं कुर्याः न श्रद्दधे न मर्षये वा । लृङ् प्राग्वत् ॥

गर्हायां च ॥ १४९ ॥

अनवक्लृप्त्यमर्षयोरिति निवृत्तम् । यच्चयत्रयोर्गर्हायां लिङेव स्यात् । यच्च यत्र वा त्वं शूद्रं याजयेः अन्याय्यम् । लृङ् प्राग्वत् ॥

चित्रीकरणे च ॥ १५० ॥

यच्च यत्र वा त्वं शूद्रं याजयेश्चित्रमेतत् ॥

शेषे लृडयदौ ॥ १५१ ॥

यच्चयत्राभ्यामन्येन यदिवर्जेन योगे लृडेव स्यात् कालत्रये चित्रीकरणे । अश्चर्यमन्धो नामेशं द्रक्ष्यति । अत्र लृङ् न । अयदौ किम् । आश्चर्यं यदि न भुञ्जीत ॥

उताप्योः समर्थयोर्लिङ् ॥ १५२ ॥

आभ्यां तुल्यार्थाभ्यां योगे लिङ् स्यात् कालत्रये । सर्वलकारापवादः । बाढार्थे तुल्यार्थताऽनयोः । उतापि वा हन्यात् कामं शिवः । इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यं लृङ् ॥

कामप्रवेदनेऽकच्चिति ॥ १५३ ॥

स्वाभिप्रायाविष्करणेऽर्थे लिङ् स्यात् कालत्रये । सर्वलकारापवादः । कामो मे भुञ्जीत भवान् । अकच्चिति किम् । कच्चिज्जीवति ॥

संभावनेऽलमिति चेत्सिद्धाप्रयोगे ॥ १५४ ॥

अलमर्थेन प्रौढ्या सम्भावनेऽर्थे लिङ् स्यात्सिद्धश्चेदलमो-

ऽप्रयोगः । सर्वलकारापवादः । अपि गिरिं शिरसा भिन्द्यात् । अलमोऽप्रयोगे किम् । अलं कृष्णो हनिष्यति । भूतेऽपि लृङ् नित्यम् ॥

विभाषा धातौ सम्भावनवचनेऽयदि ॥ १५५ ॥

सम्भावनेऽर्थे धातावुपपदे प्रागर्थे लिङ् स्यात् न तु यच्छब्दे । पूर्वेण नित्ये प्राप्तेऽनेन विकल्प्यते । सम्भावयामि भुञ्जीत भवान् भोक्ष्यते वा । अयदि किम् । सम्भावयामि यद्भुञ्जीत भवान् ॥

हेतुहेतुमतोर्लिङ् ॥ १५६ ॥

हेत्वर्थे हेतुमदर्थे च लिङ् स्यात् । शिवं नमेच्चेत् सुखं यायात् । पक्षे लृट् । भविष्यत्येव । नेह । हन्तीति पलायते । व्यवस्थितविकल्पत्वादत्र शतृशानचौ न ॥

इच्छार्थेषु लिङ्लोटौ ॥ १५७ ॥

एतदर्थेषूपपदेषु धातोरेतौ स्तः । सर्वलकारापवादः । वेति केचित् ॥ इच्छामि भुञ्जीत भवान्, भुंक्तां वा ॥

कामप्रवेदने वाच्यम् ॥

नेह । इच्छन् करोति ॥

समानकर्तृकेषु तुमुन् ॥ १५८ ॥

इच्छार्थेषु समानकर्तृकेषूपपदेषु धातोस्तुमुन् स्यात् । भोक्तुमिच्छति । समानकर्तृकेषु किम् । देवदत्तं भुञ्जानमिच्छति ॥

लिङ् च ॥ १५९ ॥

समानकर्तृकैरिच्छार्थैर्योगे लिङ् स्यात्। भुञ्जीयेतीच्छति। क्रियातिपत्तौ लृङ्॥

इच्छार्थेभ्यो विभाषा वर्तमाने॥ १६०॥

एभ्यो लिङ् वा स्याद्वर्तमाने। इच्छेत्। इच्छति। वष्टि। उश्यात्॥

विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्॥१६१॥

विधिः प्रेरणम्। निमन्त्रणं नियोगकरणम्। आमन्त्रणं कामचारकरणम्। अधीष्टः सत्कारपूर्वव्यापारः। संप्रश्नः संप्रधारणम्। याच्ञा प्रार्थना। एष्वर्थेषु धातोर्लिङ् स्यात्। सर्वलकारापवादः। यागं कुर्यात्। इह भुञ्जीत भवान्। इहासीत भवान्। पुत्रमध्यापयेद्भवान्। किं भो वेदमधीयीत उत तर्कम्। भोजनं लभेय। यथाक्रमेणोदाहरणानि॥

लोट् च॥ १६२॥

उक्तेऽर्थे लोट् स्यात्। कटं करोत्वित्यादि विध्यादिपूदाहार्यम्॥

प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च॥ १६३॥

एषु गम्येषु कृत्याः स्युर्लोट् च। कामचारानुज्ञाऽतिसर्गः। भवता कटः कर्तव्यः। भवान् कटं करोतु वा। प्रेषितो, भवानतिसृष्टः, प्राप्तस्ते कालो वा॥ लिङप्यत्रेति केचित्॥ प्राक् स्यधिकाराद्वासरूपविधिरिति कृत्वा विधानार्थं कृत्यग्रहणमित्याकरे। काशिकायां तु स्याधिकारादूर्ध्वं वासरूपविधिरनित्य इत्यनेन ज्ञाप्यते इति स्थितम्॥

## लिङ् चोर्ध्वमौहूर्तिके ॥ १६४ ॥

प्रैषादिषु गम्येषु ऊर्ध्वमौहूर्तिके लिङ् स्यात्। पक्षे यथाप्राप्तम्। मुहूर्तादूर्ध्वं कटः कर्तव्यो भवता, कार्यः, भवान् कटं कुर्यात्, करोतु वा। प्रेषितः, अतिसृष्टः, प्राप्तः कालो वा ते॥

## स्मे लोट् ॥ १६५ ॥

प्रैषादौ ऊर्ध्वमौहूर्तिके स्मयोगे लोट् स्यात्। पूर्वापवादः। मुहूर्तस्योपरि भवान् कटं करोतु स्म॥

## अधीष्टे च ॥ १६६ ॥

स्मयोगे अधीष्टे लोट् स्यात्। लिङोऽपवादः। पुत्रमध्यापयतु स्म भवान्॥

## कालसमयवेलासु तुमुन् ॥ १६७ ॥

एषूपपदेषु धातोस्तुमुन् स्यात्। कालो भोक्तुं समयो वेला वा। अर्थग्रहणमत्र। पर्यायोपादानं तु निमित्तकारणहेतुष्वितिवत् प्रपञ्चार्थमिति वदन्ति। प्रैषाद्यनुवर्तनात् कालः पचति भूतानीत्यत्र तुमुन् न। कालो भोजनस्येत्यत्राप्यत एव नेति भगवदाशयः। काशिकायान्तु वासरूपेण ल्युडुक्तः॥

## लिङ् यदि ॥ १६८ ॥

यद्योगे कालादिषु धातोर्लिङ् स्यात्। तुमुनोऽपवादः कालो यद्भुञ्जीत भवान् समयो वेला वा॥

## अर्हे कृत्यतृचश्च ॥ १६९ ॥

यथासम्भवं कर्तरि गम्यमाने वाच्ये चार्हे कृत्यतृचौ स्तः

चालिङ् । भवता कन्या वोढव्या । भवान् कन्याया वोढा, कन्यां वहेद्वा । ऽऽयधिकारादूर्ध्वं वासरूपाभावात् कृत्यतृज्ग्रहणम् ॥

आवश्यकाधमर्ण्ययोर्णिनिः ॥ १७० ॥

एतयोर्णिनिः स्यात् । अवश्यंकारी । मयूरव्यंसकादित्वत्समासः । आधमर्ण्ये । शतंदायी । आवश्यकाधमर्ण्ययोरिति प्रत्ययार्थकर्तृविशेषणं नोपपदम् ॥

कृत्याश्च ॥ १७१ ॥

उक्तेऽर्थे कृत्याः स्युः । भवताऽवश्यं कर्तव्यः । आधमर्ण्ये । भवता निष्को दातव्यः । भावकर्मणोर्विहितकृत्यानां कर्तरि प्रसङ्गभावात् भव्यादि(३।४।६८)सूत्रोक्ता एवात्रोदाहरणमिति वदन्ति ॥

शकि लिङ् च ॥ १७२ ॥

शक्तौ वर्तमानाद्धातोर्लिङ् स्यात् चात् कृत्याः । भवता भारो वोढव्यः । भवान् भारं वहेत् । भवानिह शक्तः ॥ लोडप्यत्रेति केचित् ॥ सिन्धुमपि शोषयाणि ॥

आशिषि लिङ्लोटौ ॥ १७३ ॥

आशिषि धातोरेतौ स्तः । चिरं जीव्यात्, जीवतु भवान् ॥

क्तिच्क्तौ च संज्ञायाम् ॥ १७४ ॥

आशिषि धातोः क्तिच्क्तौ स्तः संज्ञायाम् । क्तोक्तिः क्तिचा वाधा मा भूदिति । तनुतात् सातिः । भवतात्

भूतिः । क्तः । देवा एनं देयासुः देवदत्तः । यज्ञदत्तः ॥

माङि लुङ् ॥ १७५ ॥

माङ्योगे धातोर्लुङ् स्यात् । सर्वलकारापवादः । मा कार्षीत् । माङ्व्यतिरिक्तोऽपि माऽस्ति । तेन मा भवत्विसावि सिद्धम् ॥

स्मोत्तरे लङ् च ॥ १७६ ॥

स्मोत्तरे माङि लङ् स्यात् चाल्लुङ् । मास्म करोत् । मास्म कार्षीत् ॥

इति तृतीयस्याध्यायस्य तृतीयः पादः ॥



## धातुसम्बन्धे प्रत्ययाः ॥ १ ॥

धात्वर्थसम्बन्धो धातुसम्बन्धो विशेषणविशेष्यभावः । तस्मिन् सत्ययथाकाला अपि प्रत्ययाः साधवः । अग्निष्टोमयाज्यस्य पुत्रो भविता । भावि कृत्यमासीत् । [अ]प्राधान्यात् भावीत्यादिविशेषणस्यैव तत्कालत्वम् । न तु विशेष्यस्य । प्राधान्यात् । क्रियाया एव च विशेष्यत्वम् । तेन विशेषणकालत्वं क्रियाया न भवति । प्रत्ययाधिकारे प्रत्ययग्रहणमधात्वधिकारविहितस्यापि परिग्रहार्थम् । तेन गोमानासीत्, गोमान् भवितेत्यादि सिद्धम् । अग्निष्टोमयाजीति भूत एव प्रत्ययो भविष्यत्कालसम्बन्धाच्च कार्यार्थमर्यादया भविष्यत्ता गम्यते शाटकं वयेत्यादिवत् आरभ्यमाणे हि भावि कृत्यमासीदित्यत्र पौनरुक्त्यं च स्यादिति सूत्रमिदं प्रत्याख्यातमाकारे ॥

## क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः॥ २॥

पौनःपुन्ये भृशार्थे वा धातोर्लोट् स्यात्तस्य च लोटः सर्वतिङ्विषये हिस्वौ स्तस्तध्वंभाविनस्तु वा कालत्रये । लमात्रापवादः । हिः परस्मैपदे । स्व आत्मनेपदे । क्रियासमभिहाराभिव्यक्तौ लोडन्तं द्वित्वमपेक्षते । लुनीहि लुनीहीत्येवायं लुनाति । लुनीतः । लुनन्ति । लुनासि । लुनीथः । लुनीथ । यद्वा लुनीत लुनीतेति लुनीथ । लुनामि । लुनीवः लुनीमः । लुनीहि लुनीहीत्येवायं लविष्यतीत्यादि सर्वत्रोदाहार्यम् । अधीष्वाधीष्वेत्येवायमधीते । अधीयते ।

अधीषे । अधीयाथे । अधीध्वे । यद्वा । अधीध्वमधीध्वमित्यधीध्वे । अधीये इत्यादि । यङ् तु स्वयमेव शक्तत्वाद् द्वित्वं नापेक्षते । लोलूयस्वेति लोलूयते इत्यादि ज्ञेयम् ॥

## समुच्चयेऽन्यतरस्याम् ॥ ३ ॥

अनेकक्रियान्वय(ऽध्या)हारे उक्तं वा स्यात् । भ्राष्ट्रमट मठमट खदूरमटेत्येवायमटति । अटतः । अटन्तीत्यादि । भ्राष्ट्रमटति मठमटति खदूरमटतीत्येवायमटतीति वा । कारकभेदेन क्रियाया नानात्वम् । व्याकरणमधीष्व छन्दोऽधीष्व निरुक्तमधीष्वेत्येवाधीते । एवं भूतभविष्यतोर्मध्यमोत्तमयोश्चोदाहार्यम् ॥

## यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥ ४ ॥

पूर्वस्मिन् लोड्विधाने यस्माद् लोडुक्तः सोऽनुप्रयोज्यः । तथैवोदाहृतम् । धातुसम्बन्धे प्रत्ययविधानादनुप्रयोगे सिद्धे नियमार्थमिदम् ॥

## समुच्चये सामान्यवचनस्य ॥ ५ ॥

समुच्चये लोड्विधौ सामान्यवचनस्यानुप्रयोगः । तथैवोदाहृतम् । प्रत्याख्यातमेतद्भगवता तत्त्वैवानुसन्धेयम् ॥

## छन्दसि लुङ्लङ्लिटः ॥ ६ ॥

धातुसम्बन्धे सर्वकाले छन्दस्येते वा स्युः । अकरम् । अग्रहीत । अग्रामभार ॥

## लिङर्थे लेट् ॥ ७ ॥

छन्दसि लिङर्थे लेड्वा स्यात् । कारिषत् ॥

उपसंवादाशङ्क्योश्च ॥ ८ ॥

एतयोर्गम्यमानयोश्छन्दसि लेट् स्यात् । उपसंवादः ममेदं कुरु तवेदं दास्यामीत्यादिपणबन्धः । कारणात्कार्यानुमानमाशङ्का । अहमेव पशूनामीशै । मदग्रा एव ग्राह्या गृह्यन्तै । मद्देवत्यानि पात्राण्युच्यान्तै । अशङ्कायाम् । नेत् जिह्मायन्तो नरकं पताम । जिह्मं कुटिलम् । क्यच् दीर्घत्वं च च्छान्दसम् । जिह्माचरितेन नरकपात आशङ्क्यते ॥

तुमर्थेसेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ॥ ९ ॥

छन्दसि तुमर्थ एते स्युः । अत्र तुमर्थग्रहणसामर्थ्यात्तुमर्थो भाव एव । स च साध्यावस्थितः घञ्वाच्यस्तु सिद्धावस्थित इति भेदः । से । सेन् । वक्षे । असे । असेन् । क्रत्वे दक्षाय जीवसे । क्से । प्रेषे । कसेन् । श्रियसे । अध्यै । अध्यैन् । आचारध्यै । कध्यै । कध्यैन् । आहुवध्यै । श्रियध्यै । शध्यै । शध्यैन् । पिबध्यै । सहमादयध्यै । तवै । पातवै । तवेङ् । सूतवे । तवेन् । गन्तवे । सर्वत्र प्रत्ययद्वयकथनं स्वरार्थम् ॥

प्रयै रोहिष्यै अव्यथिष्यै ॥ १० ॥

एते तुमर्थे छन्दसि निपात्यन्ते । प्रपूर्वस्य यातेः कै प्रत्ययः । प्रयै । रुहेरिष्यै प्रत्ययः । रोहिष्यै । नञ् पूर्वस्य व्यथेरिष्यै । अव्यथिष्यै ॥

दृशे विख्ये च ॥ ११ ॥

एतौ तुमर्थे छन्दसि निपात्येते ॥

शकि णमुल्कमुलौ ॥ १२ ॥

शक्नोतौ उपपदे छन्दसि तुमर्थे धातोरेतौ स्तः। विभाजं नाशक्नुवन्। विभक्तुम्। अवलुपं नाशक्नुवन्। अवलोप्तुम्॥

ईश्वरे तोसुन्कसुनौ ॥ १३ ॥

ईश्वर उपपदे छन्दसि तुमर्थे एतौ स्तः। ईश्वरोऽभिचरितोः। अभिचरितुम्। ईश्वरो वितृदः। वितर्दितुम्॥

कृत्यार्थे तवैकेन्केन्यत्वनः ॥ १४ ॥

भावकर्मणोरेते स्युश्छन्दसि। तवै। अन्वेतवै। अन्वेतव्यम्। केन्। नावगाहे। नावगाहितव्यं। केन्य। दिदृक्षेण्यः। दिदृक्षितव्यः। त्वन्। कर्त्वम्। कर्तव्यम्। सयादि(३।४।९)सूत्रे तवैविधानं कारकान्तरे द्रष्टव्यम्। भावेऽनेनैव विहितत्वात्॥

अवचक्षे च ॥ १५ ॥

अवपूर्वाच्चक्षिङ एश् निपात्यते छन्दसि कृत्यार्थे। नावचक्षे। नाख्यातव्यम्॥

भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ॥ १६ ॥

कृत्यार्थ इति निवृत्तम्। भावो लक्ष्यते येन तस्मिन् वर्तमानेभ्यः स्थादिभ्यश्छन्दसि तुमर्थे तोसुन् स्यात्। आ संस्थातोर्वेद्यां सीदन्ति। आ समाप्तेः सीदन्तीत्यर्थः। सदने समाप्तिर्लक्षणम्। इण्। पुरा सूर्यस्योदेतोराधेयः। कृञ्। पुरा वत्सानामपाकर्तोरास्ते। वदि। पुरा प्रवदितोरग्नौ होत-

व्यम् । चरि । पुरा प्रचरितोराग्नीध्रे होतव्यम् । हु । आ होतोरप्रमत्तस्तिष्ठति । तमि । आ तमितोस्तिष्ठति । जनि । आ जनितोः सम्भवामि ॥

सृपितृदोः कसुन् ॥ १७ ॥

भावलक्षणे एतयोश्छन्दसि तुमर्थे कसुन् स्यात् । पुरा क्रूरस्य विसृपो विरप्शिन् । पुरा जर्तृभ्य आतृदः ॥

अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ॥ १८ ॥

छन्दसि भावलक्षण इति निवृत्तम् । प्रतिषेधवाचिनोरेतयोरुपपदयोः क्त्वा वा स्यात् तुमर्थे । अलं कृत्वा । खलु कृत्वा । प्रतिषेधयोः किम् । अलङ्कारः ॥

उदीचां माङो व्यतिहारे ॥ १९ ॥

व्यतिहारे वर्तमानात् माङः क्त्वा वा स्यात् । अपमित्य याचते । अपूर्वकालार्थमिदम् । याचित्वा मयते इत्यपि । कृतात्वस्य मेङो ग्रहणं नानुबन्धकृतमनेजन्तत्वमिति ज्ञापयति । तेन दाप्ग्रहणे दैपोऽपि ग्रहणम् ॥

परावरयोगे च ॥ २० ॥

परेण पूर्वस्यावरेण च परस्य योगे गम्यमाने धातोः क्त्वा स्यात् । अप्राप्य नदीं पर्वतः । परनदीयोगेन पर्वतो विशिष्यते । अतिक्रम्य पर्वतं नदी । अवरपर्वतयोगेन नदी विशिष्यते । इदं च शब्दशक्तिस्वभावाल्लभ्यम् ॥

## समानकर्तृकयोः पूर्वकाले ॥ २१ ॥

समानकर्तृकयोः पूर्वकाले वर्तमानाद्धातोः क्त्वा स्यात्। भुक्त्वा व्रजति। द्वित्वमतन्त्रम्। स्नात्वा पीत्वा भुक्त्वा व्रजति। समानकर्तृकयोः किम्। भुक्तवति ब्राह्मणे व्रजति देवदत्तः। पूर्वकाले किम्। व्रजति जल्पति च। मुखं व्यादाय स्वपिति, निमील्य हसतीत्यत्रापि स्वप्नहासयोः व्यादाननिमीलनानन्तरमपि सम्भवात् पूर्वकाल एव प्रत्ययः। वासरूपेण लडपि। आस्यते भोक्तुम्। इदमेव भगवद्वचनं ज्ञापकं स्त्र्यधिकारादूर्ध्वमपि वासरूपोऽस्तीति। यदाऽऽसेः क्त्वा तदा भुजो लडादय एव न तुमुन् अनभिधानात् आसित्वा भुङ्क्ते इत्याद्याकारे॥

## आभीक्ष्ण्ये णमुल् च ॥ २२ ॥

समानकर्तृकयोः पूर्वकाले आभीक्ष्ण्ये च वर्तमानाद्धातोर्णमुल् चात् क्त्वा। आभीक्ष्ण्ये द्वित्वम्। भोजं भोजं व्रजति। भुक्त्वा भुक्त्वा व्रजति॥

## न यद्यनाकाङ्क्षे ॥ २३ ॥

यद्योगे क्त्वाणमुलौ न स्तः वाक्यं चेदनाकाङ्क्षम्। पूर्वोक्तः क्त्वाप्यनेन निषिध्यते। यदयं भुङ्क्ते ततः पठति। अनाकाङ्क्षे किम्। यदयं भुक्त्वा व्रजति॥

## विभाषाऽग्रेप्रथमपूर्वेषु ॥ २४ ॥

आभीक्ष्ण्य इति नानुवर्तते। अप्राप्तविभाषेयम्। अग्रादियोगे क्त्वाणमुलौ वा स्तः। अग्रे भोजं प्रथमं भोजं पूर्वं भोजं व्रजति। अग्रे भुक्त्वा प्रथमं भुक्त्वा पूर्वं भुक्त्वा व्रजति।

पक्षे अग्रे भुङ्क्ते ततो व्रजतीत्यादि। अत्र वासरूपेण लडादिसम्भवे पुनर्विभाषाग्रहणं क्त्वाणमुलौ यत्र सह विधीयेते तत्र वासरूपविधिर्नास्तीति ज्ञापयति। तेनाभीक्ष्ण्ये लडादयो न भवन्तीति। उपपदसमासोऽत्र न भवति। अमैवाव्यये(२।२।२०) नेत्यत्रैवकारेणामैव यत्तुल्यविधानमुपपदं तेन समासो नान्येनेति तत्र स्थितम्। अग्रादीनां क्त्वयाऽपि सह विधानेनामैव विधानाभावात्॥

## कर्मण्याक्रोशे कृञः खमुञ् ॥ २५ ॥

कर्मण्युपपदे कृञः खमुञ् स्यादाक्रोशे। चोरङ्कारमाक्रोशति। चोरोऽसीत्येवमाक्रोशतीत्यर्थः॥

## स्वादुमि णमुल् ॥ २६ ॥

स्वाद्वर्थेषूपपदेषु समानकर्तृकयोः पूर्वकाले कृञः णमुल् स्यात्। स्वादुङ्कारं भुङ्क्ते। स्वादुमिति मान्तनिपातनमीकाराभावार्थम्। च्व्यन्तस्य च मार्थम्। [आस्वाद्वीं] स्वाद्वीं कृत्वा भुङ्क्ते। स्वादुङ्कारम्। अस्वादु स्वादु कृत्वा स्वादुङ्कारम्। वासरूपेण क्त्वापि। स्वादुं कृत्वा। तुमर्थाधिकाराद्व्ययकृतो भावे एव। अनभिहित(२।३।१)इत्यत्र प्रसज्यप्रतिषेधात् स्वादुङ्कारं भुङ्क्ते देवदत्त इत्यत्र तृतीया न॥

## अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ॥ २७ ॥

एषूपपदेषु कृञो णमुल् स्यात् सिद्धश्चेत्करोतेरप्रयोगः। नन्वप्रयुज्यमानस्य कथं प्रत्ययविधिः। एवं तर्हि अन्यथा भुङ्क्ते इत्यादिना योर्थस्तच्चेत्करोति सहितेनाप्युच्यते तत्रायं विधिः। तत्र चातिरिक्तार्थाभावात्सिद्धाप्रयोग इत्युक्तम्।

अन्यथाकारं भुङ्क्ते । एवङ्कारम् । इत्थंकारम् । सिद्धाप्रयोगः किम् । अन्यथा कृत्वा शिरो भुङ्क्ते ॥

यथातथयोरसूयाप्रतिवचने ॥ २८ ॥

एतयोरुपपदयोः कृञो णमुल् स्यादसूयाप्रतिवचने गम्ये । यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तवानेन । असूयाप्रतिवचने किम् । यथा कृत्वाहं भोक्ष्ये । सिद्धाप्रयोग इत्येव । तथा कृत्वाहं शिरो भोक्ष्ये किं तवानेन ॥

कर्मणि दृशिविदोः साकल्ये ॥ २९ ॥

साकल्यविशिष्टे कर्मण्युपपदे एतयोर्णमुल् स्यात् । कन्यादर्शं वरयति । यां पश्यति तां सर्वां वरयतीत्यर्थः । ब्राह्मणवेदं भोजयति । यं जानाति तं सर्वं भोजयतीत्यर्थः । साकल्ये किम् । ब्राह्मणं दृष्ट्वा भोजयति ॥

यावति विन्दजीवोः ॥ ३० ॥

यावत्युपपदे एतयोर्णमुल् स्यात् । यावद्वेदं भुङ्क्ते । यावज्जीवमधीते ॥

चर्मोदरयोः पूरेः ॥ ३१ ॥

एतयोः कर्मणोः उपपदयोः पूरयतेर्णमुल् स्यात् । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते ॥

वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ ३२ ॥

कर्मण्युपपदे पूरयतेर्णमुल् स्यादस्योलोपो वा वर्षप्रमाणे गम्ये । गोष्पदपूरं वृष्टो देवः । गोष्पदप्रम् । अस्य किम् । उप-

पदस्य मा भूत् । मूषिकाविलपूरम् । गोष्पदप्रमेणेत्यादिविभ-क्त्यन्तरदर्शनेन मा पूरणे इत्यस्यैव कमत्ययान्तस्य गोष्पदप्र-मिति रूपमिति लोपश्चास्यान्यतरस्यामिति न कर्तव्यमित्याकरे॥

चेले क्नोपेः ॥ ३३ ॥

चेलार्थेषु कर्मसूपपदेषु क्नूयी शब्दे(उन्दे)इत्यस्मात् ण्यन्तात् णमुल् स्यात् वर्षप्रमाणे गम्ये । चेलक्नोपं वस्त्रक्नोपं वसन-क्नोपं वृष्टो देवः ॥

निमूलसमूलयोः कषः ॥ ३४ ॥

एतयोः कर्मवाचिनोरुपपदयोः कषः णमुल् स्यात् । नि-मूलकाषं कषति । समूलकाषं कषति । समूलं कषतीत्यर्थः ॥

शुष्कचूर्णरूक्षेषु पिषः ॥ ३५ ॥

एषु कर्मसूपपदेषु पिषो णमुल् स्यात् । शुष्कपेषं पिनष्टि । चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि ॥

समूलाकृतजीवेषु हन्कृञ्ग्रहः ॥ ३६ ॥

यथासंख्यं समूलादिषु कर्मसूपपदेषु हनादेर्णमुल् स्यात् । समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति ॥

करणे हनः ॥ ३७ ॥

करणे उपपदे हन्तेर्णमुल् स्यात् । पाणिघातं वेदिं हन्ति । पाणिना हन्तीत्यर्थः । हिंसार्थानां च समानकर्मकाणाम्(३।४।४८)-मित्यस्मात् पूर्वविप्रतिषेधेन हिंसार्थस्यापि हन्तेरनेनैव णमु-लिष्यते नित्यसमासार्थम् ॥

## स्नेहने पिषः ॥ ३८ ॥

स्नेह्यते येन स्नेहनम् । तद्वाचिनि करणे उपपदे पिषो णमुल् स्यात् । उदपेषं पिनष्टि । तैलपेषं पिनष्टि । तैलेन पिनष्टीत्यर्थः ॥

## हस्ते वर्तिग्रहोः ॥ ३९ ॥

हस्तवाचिनि करणे उपपदे वर्तयतेर्ग्रहेश्च णमुल् स्यात् । हस्तेन वर्तयति । हस्तवर्तं वर्तयति । करवर्तम् । हस्तग्राहं गृह्णाति । करग्राहम् ॥

## स्वे पुषः ॥ ४० ॥

स्ववाचिनि करणे उपपदे पुषः णमुल् स्यात् । आत्मीयज्ञातिधनवचनः स्वशब्दः । स्वपोषं पुष्णाति । धनपोषम् । विशेषस्यापि ग्रहणम् । गोपोषम् । पितृपोषम् ॥

## अधिकरणे बन्धः ॥ ४१ ॥

अधिकरणवाचिन्युपपदे बन्धो णमुल् स्यात् । चक्रबन्धं बध्नाति । चक्रे बध्नातीत्यर्थः ॥

## संज्ञायाम् ॥ ४२ ॥

बध्नातेर्णमुल् स्यात्संज्ञायाम् । मयूरिकाबन्धं बध्नाति । अधिकरणे बन्धः संज्ञायामित्येक एव योगः, तेन ग्रामबन्ध इत्यत्र णमुल् न, अन्यथासंज्ञायामुपमाने कर्मणि च (३।४।४५)-सेत्र णमुलित्याकरे । असंज्ञार्थं पूर्वयोगः अनधिकरणार्थं द्वितीयः ग्रामबन्ध इत्यत्र तु वासरूपेण घञ् इति हरदत्तः । तत्त्वाकरविरोधात् ग्रामबन्ध इत्यत्र पक्षे णमुलसङ्गाच चिन्त्यम् ॥

कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ ४३ ॥

कर्तृवाचिनोर्जीवपुरुषयोरुपपदयोर्यथासंख्यं नशिवहोर्णमुल् स्यात् । जीवनाशं नश्यति । जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषो वहतीत्यर्थः । कर्त्रोः किम् । जीवेन नष्टः । पुरुषेणोढः ॥

ऊर्ध्वे शुषिपूरोः ॥ ४४ ॥

कर्तृवाचिन्यूर्ध्वे उपपदे एतयोर्णमुल् स्यात् । ऊर्ध्वशोषं शुष्यति । ऊर्ध्वं शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वं पूर्यते इत्यर्थः ॥

उपमाने कर्मणि च ॥ ४५ ॥

उपमीयते येन तदुपमानम् । उपमाने कर्मण्युपपदे चात्कर्तरि धातोर्णमुल् स्यात् । सुवर्णनिधायं निहितः । सुवर्णमिव निहितः । कर्तर्यपि । अजकनाशं नष्टः । अजक इव नष्टः ॥

कषादिषु यथाविध्यनुप्रयोगः ॥ ४६ ॥

निमूलसमूलयोः कषः (३।४।३४) इत्यारभ्य कषादयः । तेषु यस्मात् णमुलुक्तः स एवानुप्रयोज्यः । धातुसम्बन्धे प्रत्ययविधानान्नियमार्थमिदम् । तथैवोदाहृतम् ॥

उपदंशस्तृतीयायाम् ॥ ४७ ॥

तृतीयान्त उपपदे उपपूर्वस्य दंशेर्णमुल् स्यात् । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशम् । तृतीयाप्रभृतीन्यन्यतरस्या(२।२।२१)मित्युपपदसमासविकल्पः । क्रियाभेदे सर्वत्रास्मिन् प्रकरणे घासरूपेण क्त्वापि । मूलकेनोपदश्य भुङ्क्ते ॥

## हिंसार्थानां च समानकर्मकाणाम् ॥ ४८ ॥

तृतीयान्त उपपदे अनुप्रयोगेण समानकर्मकाणां हिंसार्थानां णमुल् स्यात् । दण्डताडं गाः चालयति । दण्डेन ताडम् । समानकर्मकाणां किम् । चोरं दण्डेन ताडयित्वा गाश्चालयति ॥

## सप्तम्यां चोपपीडरुधकर्षः ॥ ४९ ॥

सप्तम्यन्ते तृतीयान्ते चोपपद उपपूर्वेभ्य एतेभ्यो णमुल् स्यात् । पार्श्वोपपीडं शेते । पार्श्वयोरुपपीडम् । पार्श्वाभ्यामुपपीडम् । व्रजोपरोधं गाः स्थापयति । व्रजे उपरोधम् । व्रजेनोपरोधम् । पाण्युपकर्षं धानाः संगृह्णाति । पाणौ उपकर्षम् । पाणिनोपकर्षम् । कर्षतेर्भ्वादिकस्य ग्रहणम् ॥

## समासत्तौ ॥ ५० ॥

समासत्तिः सन्निकर्षः । तस्मिन् गम्यमाने तृतीयासप्तम्योर्धातोर्णमुल् स्यात् । हस्तग्राहं युध्यन्ते । हस्तेषु ग्राहम् । हस्तैर्ग्राहम् । अत्यन्तं सन्निकृष्यन्त इत्यर्थः ।

## प्रमाणे च ॥ ५१ ॥

तृतीयासप्तम्योरुपपदयोः प्रमाणे गम्ये धातोर्णमुल् स्यात् । अङ्गुलोत्कर्षं काष्ठं भिनत्ति । अङ्गुल उत्कर्षम् । अङ्गुलेनोत्कर्षम् । आयामो दैर्घ्यं च प्रमाणम् । अङ्गुलेन परिच्छिद्य भिनत्तीत्यर्थः ॥

## अपादाने परीप्सायाम् ॥ ५२ ॥

अपादाने उपपदे धातोर्णमुल् स्यात्परीप्सायां गम्यायाम् । शय्योत्थायं धावति । शय्याया उत्थाय । परीप्सायां

किम् । आसनादुत्थाय गच्छति ॥

द्वितीयायां च ॥ ५३ ॥

द्वितीयान्त उपपदे धातोर्णमुल् स्यात् परीप्सायाम् । यष्टिग्राहं युध्यन्ते । यष्टिं ग्राहम् ॥

स्वाङ्गेऽध्रुवे ॥ ५४ ॥

अध्रुवस्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्णमुल् स्यात् । भ्रूविक्षेपं कथयति । भ्रुवं विक्षेपम् । अध्रुवे किम् । उत्क्षिप्य शिरः कथयति । यस्मिन्नङ्गे छिन्ने प्राणी न म्रियते तदध्रुवम् ॥

परिक्लिश्यमाने च ॥ ५५ ॥

परिक्लिश्यमाने स्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्णमुल् स्यात् । परिक्लेशः सर्वतो बाधनम् । उरःप्रतिपीडं युध्यन्ते । कृत्स्नमुरः पीडयन्तो युध्यन्त इत्यर्थः ॥

विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥ ५६ ॥

द्वितीयान्त उपपदे विश्यादिभ्यो णमुल् स्यात् व्याप्यमाने आसेव्यमाने च गम्ये । क्रियया साकल्येन द्रव्यस्याभिसम्बन्धो व्याप्तिः । क्रियापौनःपुन्यमासेवा । गेहानुप्रवेशमास्ते । समासस्यैव शक्तत्वान्नित्यवीप्सयोरिति द्विर्वचनं न । असमासपक्षे व्याप्यमाने द्रव्ये द्विर्वचनम्, आसेव्यमाने च क्रियायाम् । गेहं गेहमनुप्रवेशम् । गेहमनुप्रवेशमनुप्रवेशम् । गेहप्रपातम् । गेहप्रपादम् । गेहावस्कन्दम् । असमासे पूर्ववत् । व्याप्यमानासेव्यमानयोः किम् । गेहं प्रविश्य भुङ्क्ते । आ-

भीक्ष्ण्ये णमुल्चे(३।४।२२)त्येवाभीक्ष्ण्ये णमुलि सिद्धे पाक्षिकसमासार्थमिदं वचनम् ॥

अस्यतितृषोः क्रियान्तरे कालेषु ॥ ५७ ॥

क्रियाव्यवधायके वर्तमानयोरेतयोः कालवाचिषु कर्मसूपपदेषु णमुल् स्यात् । द्व्यहात्यासं गाः पाययति । अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः । द्व्यहतर्षम् । एतयोः किम् । द्व्यहमुपोष्य भुङ्क्ते । क्रियान्तरे किम् । अहरत्यस्येषून् गतः । कालेषु किम् । योजनमत्यस्य गाः पाययति ॥

नाम्न्यादिशिग्रहोः ॥ ५८ ॥

द्वितीयान्ते नामशब्द उपपदे आदिशेर्ग्रहश्च णमुल् स्यात् । नामादेशमाचष्टे । नामग्राहम् ॥

अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ॥५९॥

अव्यये उपपदे कृञ एतौ स्तः अयथाभिप्रेताख्याने गम्ये । ब्राह्मण पुत्रस्ते जात इति केनचिन्नीचैरुक्ते ब्राह्मणः प्रतिवदति । किं तर्हि वृषल नीचैःकृत्याचक्षे । नीचैः कृत्वा । नीचैः कारम् । प्रियमुच्चैर्वक्तव्यम् । नीचैराख्याने अयथाभिप्रेतत्वम् । अयथाभिप्रेताख्याने किम् । उच्चैः कृत्वाऽऽचष्टे पुत्रस्ते जात इति । वासरूपेण क्त्वासिद्धावपि समासार्थं क्त्वाग्रहणम् । णमुल्ग्रहणं द्वयोरुत्तरत्रानुवृत्त्यर्थम् ॥

तिर्यच्यपवर्गे ॥ ६० ॥

तिर्यच्युपपदे कृञः क्त्वाणमुलौ स्तः अपवर्गे गम्ये । अ-

पवर्गः फलप्राप्तिः। तिर्यक्कृत्य गतः। तिर्यक्कृत्वा। तिर्यक्कारम्। समाप्य गत इत्यर्थः। अपवर्गे किम्। तिर्यक्कृत्वा काष्ठं गतः॥

## स्वाङ्गे तस्प्रत्यये कृभ्वोः॥ ६१॥

तसन्तात्स्वाङ्गादेतयोः क्त्वाणमुलौ स्तः। पृष्ठतःकृत्य गतः। पृष्ठतः कृत्वा। पृष्ठतःकारम्। पृष्ठतोभूय। पृष्ठतो भूत्वा। पृष्ठतोभावम्। स्वाङ्गे किम्। सर्वतः कृत्वा। तसिति किम्। मुखीकृत्य। प्रत्यये किम्। मुखे तस्यति मुखतः कृत्वा॥

## नाधार्थप्रत्यये च्व्यर्थे॥ ६२॥

नार्थधार्थप्रत्ययान्ते च्व्यर्थ उपपदे कृभ्वोः क्त्वाणमुलौ स्तः। अनाना नानाकृत्य गतः। नाना कृत्वा। नानाकारम्। विनाकृत्य। नानाभूय। नानाभूत्वा। नानाभावम्। विनाभूय। धार्थे। द्विधाकृत्य। द्विधाकारम्। द्विधाभूय। द्विधाभावम्। द्वैधंकृत्य। प्रत्यये किम्। पृथक्कृत्वा गतः। च्व्यर्थे किम्। नाना कृत्वा काष्ठानि गतः॥

## तूष्णीमि भुवः॥ ६३॥

क्त्वाणमुलौ। तूष्णींभूय तूष्णींभावं तिष्ठति। भुवो ग्रहणं कृञ्निवृत्त्यर्थम्॥

## अन्वच्यानुलोम्ये॥ ६४॥

अस्मिन्नुपपदे भुवः क्त्वाणमुलौ स्त आनुकूल्ये। अन्वग्भूयान्वग्भूत्वान्वग्भावं वाऽऽस्ते। आनुलोम्ये किम्। अन्वग्भूत्वा॥

शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्॥६५॥

शकादिषु अस्त्यर्थेषु चोपपदेषु धातोस्तुमुन् स्यात् भावे। अक्रियार्थोपपदार्थ आरम्भः। शक्नोति भोक्तुम्। धृष्णोति अस्ति भवति विद्यते वा भोक्तुमित्यादि॥

पर्याप्तिवचनेष्वलमर्थेषु ॥ ६६ ॥

अलमर्थविशिष्टेषु पर्याप्तिवचनेषूपपदेषु धातोस्तुमुन् स्यात्। पर्याप्तो भोक्तुम्। अलं भोक्तुम्। पर्याप्तिवचनेषु किम्। अलं भुक्त्वा। अलमर्थेषु किम्। पर्याप्तं भुङ्क्ते। पूर्वसूत्रे शकिग्रहणमनलमर्थम्॥

कर्तरि कृत् ॥ ६७ ॥

अनिर्दिष्टार्थाः कृतः कर्तरि स्युः। कारकः। कर्ता॥

भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा॥६८॥

एते कर्तरि वा निपात्यन्ते। पक्षे तयोरेव कृत्यक्तखलर्थाः(३।४।७०) इति भावकर्मणोः। भवत्यसौ भव्यः। भव्यमनेन वा। गायत्यसौ गेयः। प्रवक्त्यसौ प्रवचनीयो गुरुः। उपतिष्ठत्यसावुपस्थानीयो गुरोः शिष्यः। जायतेऽसौ जन्यः। आप्लवते आप्लाव्यः। आपतत्यसौ आपात्यः। पक्षे भावकर्मणोर्यथासम्भवम्॥

लः कर्मणि च भावे चाकर्मकेभ्यः ॥ ६९ ॥

लकाराः सकर्मकाद्धातोः कर्मणि कर्तरि चाकर्मकात् भावे कर्तरि च स्युः। गम्यते ग्रामो देवदत्तेन। गच्छति ग्रामं

देवदत्तः । अकर्मकात् । आस्यते देवदत्तेन । अस्ते देवदत्तः । सकर्मकात् भावे न ॥

तयोरेव कृत्यक्तखलर्थाः ॥ ७० ॥

कृत्याः क्तश्च खलर्थाश्च भावकर्मणोरेव स्युः । अकर्मकात् भावे सकर्मकात्कर्मण्येव । भोक्तव्य ओदनः । शयितव्यं भवता । क्तः । पण्ड(वन्दि)त ईशः । आसितमीशेन । खलर्थः । ईषत्करः कटो भवता । भावे । इषदाढ्यंभवं भवता ॥

आदिकर्मणि क्तः कर्तरि च ॥ ७१ ॥

आदिकर्मणि यः क्तः स कर्तरि स्याच्चात् भावकर्मणोः । आदिक्रियाक्षण आदिकर्म। तस्मिन्भूते विवक्षिते निष्ठे(३।२।१०२)- ति विहितस्यायमर्थनिर्देशः । प्रकृतः कटं देवदत्तः। पक्षे सुगमम् ॥

गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्य-

तिभ्यश्च ॥ ७२ ॥

गत्यर्थेभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च क्तः कर्तरि स्यात् चात् भावकर्मणोः । ग्रामं गतः । अकर्मक । आसितो भवान् । उपश्लिष्टो गुरुं भवान् । उपशयितो गुरुं भवान् । उपस्थितो गुरुम् । उपासितो गुरुम् । अनूषितो गुरुम् । अनुजातो माणवको माणविकाम् । आरूढो वृक्षम् । अनुजीर्णो वृषलीं देवदत्तः । पक्षे । गतो ग्रामो देवदत्तेन । देवदत्तेन गतमित्यादि । श्लिषादयः सोपसर्गाः सकर्मका इति पृथगुपादानम् ॥

## दाशगोघ्नौ संप्रदाने ॥ ७३ ॥

एतौ संप्रदाने निपात्येते । कर्तरि कृ(३।४।६८)तोऽपवादः । दाशृ दाने । पचाद्यच् । दाशन्ति तस्मै दाशः । आगताय तस्मै दातुं गां घ्नन्ति गोघ्नोऽतिथिः । टगत्र निपात्यते । गोरालम्भनमातिथ्यादौ विहितम् । अनभिधानाद्वत्सादिर्नोच्यते । अतस्त्रापि गोहनने पाचकादिवद्योग्यतया तद्व्यपदेशोऽतिथ्यादिषु ॥

## भीमादयोऽपादाने ॥ ७४ ॥

एते अपादाने निपात्यन्ते । उणादय एते । उत्तरसूत्रेण पर्युदासे प्राप्त इद निपातनम् । भीमः । भीष्मः । भयानकः । वहः । रुचः । खरुः । चरुः । भूमिः । रजः । संस्कारः । संक्रन्दनः । प्रपतनः । समुद्रः । स्रुचः । स्रुक् । दृष्टिः । रक्षः । शङ्कुः । स्रुकः । स्रुखः । खलतिः ॥

## ताभ्यामन्यत्रोणादयः ॥ ७५ ॥

संप्रदानापादानाभ्यामन्यत्रोणादयः स्युः । कृत्त्वात्कर्तरि प्राप्ते कर्मादावपि विधीयते । कृष्यतेऽसौ कृषिः । तन्यते तन्तुः ॥

## क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ॥७६॥

अकर्मकेभ्यो गत्यर्थेभ्योऽभ्यवहारार्थेभ्यश्च यः क्तः सोऽधिकरणे स्याच्चाद्यथाप्राप्तम् । तत्र अकर्मकेभ्यः कर्तृभावाधिकरणेषु । गत्यर्थेभ्यः कर्तृकर्मभावाधिकरणेषु । प्रत्यवसानार्थेभ्यः कर्मभावाधिकरणेषु । इदमेषामासितं गतं भुक्तं वा । भावकर्मकर्तृषु प्राग्वत् ज्ञेयम् । भुक्ता ब्राह्मणाः पीता गाव इत्यर्शआदित्वादच् भुक्तमस्यास्तीति ॥

लस्य ॥ ७७ ॥

ल इति दशलकाराणां सामान्यग्रहणम् । अधिकारोऽयम् ॥

तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ॥ ७८ ॥

एते लस्यादेशाः स्युः ॥

टित आत्मनेपदानां टेरे ॥ ७९ ॥

टितो लस्यात्मनेपदस्य टेरेत्वं स्यात् । पचते । तादिनाऽऽत्मनेपदस्य विशेषितत्वात् पचमान इत्यत्रैत्वं न ॥

थासः से ॥ ८० ॥

टितो लस्य थासः से स्यात् । पचसे ॥

लिटस्तझयोरेशिरेच् ॥ ८१ ॥

लिडादेशयोस्तझयोः क्रमात् एश् इरेच् एतौ स्तः । पेचे । पेचिरे ॥

परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ॥ ८२ ॥

लिटस्तिबादिनवानां णलादयो नवादेशाः क्रमात् स्युः । बभूवेत्यादि ॥

विदो लटो वा ॥ ८३ ॥

विद ज्ञाने । अस्माल्लटः परस्मैपदानां णलादयो वा स्युः । वेद । वेत्तीत्यादि ॥

ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ ८४ ॥

ब्रूञ् । अस्माल्लटस्तिबादिपञ्चानां णलादिपञ्चादेशा वा

स्युर्ब्रुव आहादेशश्च । आह । आहतुः । आहुः । आत्थ । आहथुः । ब्रवीति ॥

लोटो लङ्वत् ॥ ८५ ॥

लोटो लङ्वत्कार्यं स्यात् । तामादयः सलोपश्च । पचताम् । पचतम् । पचाव । पचाम ॥

एरुः ॥ ८६ ॥

लोडादेशानामिकारस्य उः स्यात् । पचतु । पचन्तु ॥

सेर्ह्यपिच्च ॥ ८७ ॥

लोटः सेर्हिः स्यादपिच्च सः । लुनीहि ॥

वा छन्दसि ॥ ८८ ॥

छन्दसि हिरपिद्वा स्यात् । युयोधि । यु मिश्रणे । बहुलं छन्दसीति (२।४।७५) श्लुः । गुणः । अभ्यस्तश्च (६।४।१०३)-ति धिः । प्रीणीहि ॥

मेर्निः ॥ ८९ ॥

लोटो मेर्निः स्यात् । पचानि ॥

आमेतः ॥ ९० ॥

लोट एत आम् स्यात् । पचताम् । पचेताम् । पचन्ताम् ॥

सवाभ्यां वामौ ॥ ९१ ॥

लोट एतः सवाभ्यां परस्य क्रमाद् व अम् एतौ स्तः । पचस्व । पचध्वम् ॥

आडुत्तमस्य पिच्च ॥ ९२ ॥

लोडुत्तमस्याडागमः स्यादुत्तमश्च पित्। करवाणि। करवाव। करवाम॥

एत ऐ ॥ ९३ ॥

लोडुत्तमस्यैत ऐ स्यात्। आमोऽपवादः। करवै। करवावहै। करवामहै। पचावेदमित्यत्र गुणस्य बहिरङ्गत्वादैत्वं न॥

लेटोऽडाटौ ॥ ९४ ॥

लेटः अडाटावागमौ स्तः। जोषिषत्। पताति॥

आत ऐ ॥ ९५ ॥

लेट्सम्बन्धिन आताम् आथाम् इत्येतयोरात ऐ स्यात्। मन्त्रयैते। मन्त्रयैथे। विधानसामर्थ्यादाटो न। पताति॥

वैतोन्यत्र ॥ ९६ ॥

लेट एत ऐ वा स्यदात ऐ इत्येतद्विषयं वर्जयित्वा। ईशै। क्वचिन्न। दधसे। अन्यत्र किम्। मन्त्रयैते॥

इतश्च लोपः परस्मैपदेषु ॥ ९७ ॥

लेटः परस्मैपदेष्विकारस्य लोपो वा स्यात्। तारिषत्। पताति॥

स उत्तमस्य ॥ ९८ ॥

लेट उत्तमसकारस्य लोपो वा स्यात्। करवाव। करवावः॥

नित्यं ङितः ॥ ९९ ॥

ङिल्लकारोत्तमसकारस्य नित्यं लोपः स्यात्। अकरवाव। अकरवाम॥

इतश्च ॥ १०० ॥

ङितो लस्य परस्मैपदेष्विकारस्य लोपः स्यात् । अभवत् ॥

तस्थस्थमिपां तान्तन्तामः ॥ १०१ ॥

ङितस्तसादिचतुर्णां तामादयः क्रमात् स्युः । अभवताम् । अभवतम् । अभवत । अभवम् ॥

लिङः सीयुट् ॥ १०२ ॥

लिङादेशस्य सीयुडागमः स्यात् । भवेत । भवेयाताम् । भविषीष्ट । भविषीयास्ताम् ॥

यासुट् परस्मैपदेषूदात्तो ङिच्च ॥ १०३ ॥

लिङः परस्मैपदानां यासुडागमः स्यात्स चोदात्तो ङिच्च । सीयुटोऽपवादः । उदात्तवचनमागमानुदात्तत्वं ज्ञापयति । ङिद्वचनं च लाश्रयङित्त्वं नादेशानामिति । भूयात् ॥

किदाशिषि ॥ १०४ ॥

आशिषि लिङो यासुट् कित्स्यात् । जागर्तेर्गुणार्थं वच्यादीनां संप्रसारणार्थं कित्त्वोक्तिः । जागर्यात् । उच्यात् ॥

झस्य रन् ॥ १०५ ॥

लिङो झस्य रन् स्यात् । भवेरन् ॥

इटोऽत् ॥ १०६ ॥

लिङादेशस्येटोऽत्स्यात् । भविषीय । तकार उच्चारणार्थः । तेन न विभक्तौ तुस्मा(१।३।४) इतीत्संज्ञाप्रतिषेधो न ॥

## सुट् तिथोः ॥ १०७ ॥

लिङस्तकारथकारयोः सुडागमः स्यात्। भविषीष्ट। भविषीष्ठाः। तथयोरयमागमः। सीयुट् तु लिङः। तेन भिन्नविषयत्वादनेन तस्य बाधनं न ॥

## झेर्जुस् ॥ १०८ ॥

लिङो झेर्जुस् स्यात्। भवेयुः ॥

## सिजभ्यस्तविदिभ्यश्च ॥ १०९ ॥

एभ्यो ङित्सम्बन्धिनो झेर्जुस् स्यात्। सिच्। अकार्षुः। अभ्यस्त। अबिभयुः। विदि। अविदुः ॥ वेत्तेर्लङो वेति केचित् ॥ अविदन् ॥

## आतः ॥ ११० ॥

सिज्लुक्यादन्तादेव झेर्जुस् स्यात्। सिजनुवृत्त्या आत्सिजुभयपरत्वे लब्धे एकदोभयपरत्वासम्भवात्सिज्लुकि प्रत्ययलक्षणेन सिच्परत्वं लभ्यते। अधुः। आदन्तादेव किम्। अभूवन् ॥

## लङः शाकटायनस्यैव ॥ १११ ॥

आतो लङो झेर्जुस् वा स्यात्। अयुः। अयान्। ङित इति वर्तमाने लङ्ग्रहणमातिदेशिकलङ्व्यावृत्त्यर्थम्। यान्तु। सिजभ्यस्तेऽपि न। बिभ्यतु ॥

## द्विषश्च ॥ ११२ ॥

अस्माल्लङो झेर्जुस् वा स्यात्। अद्विषुः। अद्विषन् ॥

तिङ् शित्सार्वधातुकम् ॥ ११३ ॥

तिङः शितश्चैतत्सञ्ज्ञाः स्युः । स्वपिति ॥

अर्धधातुकं शेषः ॥ ११४ ॥

तिङ्शिद्भ्योऽन्यो धातोर्विहितः प्रत्यय एतत्सञ्ज्ञः स्यात् । लविता । धातोः किम् । मीमांसते ॥

लिट् च ॥ ११५ ॥

लिडादेशस्तिङ् शिद् चार्धधातुकसञ्ज्ञः स्यात् । पेचिथ । आददे । लङः शाकटायनस्यैव(३।४।१११)त्येवकारानुवृत्त्या संज्ञासमावेशो न ॥

लिङाशिषि ॥ ११६ ॥

आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् । भविषीष्ट ॥

छन्दस्युभयथा ॥ ११७ ॥

तिङ्शित्सार्वधातुक(३।४।११३)मित्यारभ्य यदुक्तं तच्छन्दस्युभयमपि भवति । वर्धतु । वर्धयन्त्विति प्राप्ते अर्धधातुकत्वाण्णिलोपः । स्वस्तये । क्तिनः सार्वधातुकत्वादस्तेर्भूभावाभावः ॥

इति मिताक्षरायां तृतीयस्याध्यायस्य चतुर्थः पादः ।
समाप्तश्चाध्यायः ॥

---

## ङ्याप्प्रातिपदिकात् ॥ १ ॥

आपञ्चमाध्यायान्तमयमधिकारः । ङीति ङीप्ङीष्ङीनां सामान्यग्रहणम् । आबिति टाप्डाप्चापाम् । इत ऊर्ध्वं वक्ष्यमाणाः ङ्यन्तादाबन्तात् प्रातिपदिकाच्च ज्ञेयाः ॥

## स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङ-सोसांङ्योस्सुप् ॥ २ ॥

ङ्याप्प्रातिपदिकादेते स्युः । गोपी । रमा । रामः । इत्यादि ॥

## स्त्रियाम् ॥ ३ ॥

अधिकारोऽयम् । प्रकृत्यर्थविशेषणं चैतत् । स्त्रियां यत् प्रातिपदिकं तस्मात् स्वार्थे टाबादयः । अजा । स्त्रियां किम् । अजः ॥

## अजाद्यतष्टाप् ॥ ४ ॥

अजादिभ्योऽकारान्ताच्च टाप् स्यात् स्त्रियाम् । आबिति सामान्योक्त्यर्थः पः । तद्विघातार्थष्टः । अन्यथैकानुबन्धकपरिभाषयाऽनेकेतोर्डाप्चापोराबित्यनेनाग्रहणं स्यात् । अजाद्युक्तिर्जात्यादिलक्षणङीषादिप्रतिषेधार्था । अजा । एडका । कोकिला । चटका । अश्वा । मूषिका । इति जातिः । बाला ।

होढा। पाका। वत्सा। मन्दा। विलाता। अत्र यथ:। अतः। सर्वा॥

हलन्ताद्वा॥

वाचा। वाक्। दिशा। दिक्। क्रुञ्चा। उष्णिहा। देवविशा। अतः किम्। सोमपाः॥

शूद्रा चामहत्पूर्वा जातिः॥

शूद्रा। जातिः किम्। शूद्रस्य स्त्री शूद्री। अमहत्पूर्वेति किम्। महाशूद्री। महाशूद्रशब्द अभीरजातिवचनः। अमहत्पूर्वेति निषेधेनास्मिन्प्रकरणे तदन्तविधिर्ज्ञाप्यते। तेनातिधीवरीत्यादि सिद्धम्। अजादिगतस्त्रीत्वे टाब्विधानात्पञ्चाजीत्यत्र न। पूर्वापहाणा। अपरापहाणा। निपातनाद् णत्वम्॥

सम्भस्त्राजिनशणपिण्डेभ्यः फलात्॥

संफलेत्यादि॥

श्वेताच्च॥

श्वेतफला॥

त्रेश्च॥

त्रिफला॥ एकफलेति केचित्॥

सदच्काण्डमान्तशतैकेभ्यः पुष्पात्॥

सत्पुष्पा प्राक्पुष्पा। प्रत्यक्पुष्पेत्यादि॥

मूलान्नञः॥

अमूला। पाककर्ण(४।१।६४)त्यादिङीषोपवादः। ज्येष्ठा। कनिष्ठा। मध्यमा। अत्र पुंयोगे। दंष्ट्रा। अजादिमध्य एवैते सर्वे पठनीया इत्येतत्परं सर्वमिदं वार्तिकम्॥

ऋन्नेभ्यो ङीप् ॥ ५ ॥

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात् । कर्त्री । राज्ञी ॥

उगितश्च ॥ ६ ॥

उगिदन्तात् स्त्रियां ङीप् स्यात् । भवती । अतिभवती । विदुषी । उगिदचा(७।१।७०)मित्यत्रांचुग्रहणेन इह शास्त्रे उगित्कार्यम् धातोश्चेदञ्चतेरेवेति नियमादुगिद्धातोर्न ङीप् । उखास्रत् । अञ्चतेस्तु प्रतीचीत्यादि ॥

वनो र च ॥ ७ ॥

वन्नन्तात् स्त्रियां ङीप् स्यात् रेफश्चान्तादेशः । धीवरी ॥

वनो न हशः ॥

राजयुध्वा स्त्री ॥

छन्दसि बहुलम् ॥

यज्वरीरिषः । यज्वनोरिषः ॥ णान्ताद्धातोर्वनो ङीब्रौ वेसेके ॥ अवावरी । अवावा ॥

पादोऽन्यतरस्याम् ॥ ८ ॥

पाच्छब्दान्तात् स्त्रियां ङीब्वा स्यात् । द्विपदी । द्विपात् ॥

टाबृचि ॥ ९ ॥

ऋचि वाच्यायां पादन्तात् टाप् स्यात् स्त्रियाम् न ङीप् । द्विपदा ऋक् । ऋचि किम् । द्विपदी स्त्री ॥

न षट्स्वस्रादिभ्यः ॥ १० ॥

षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च स्त्रीप्रत्ययमात्रं न स्यात् ।

पञ्च। स्वसा। दुहिता। ननान्दा। याता। माता। तिस्रः। चतस्रः॥

मनः॥ ११॥

मन्नन्ताद् स्त्रियां न ङीप्। सीमा। सीमानौ॥ अन् इन् अस् मन् इत्येतैरर्थवद्भिरनर्थकैश्च तदन्तविधिः॥ अतिमहिमा। अतिमहिमानौ। अत्रेमनिचोऽर्थवत्त्वं न मनः॥

अनो बहुव्रीहेः॥ १२॥

अन्नन्ताद् बहुव्रीहेः स्त्रियां न ङीप्। सुपर्वा। सुपर्वाणौ। बहुव्रीहेः किम्। अतिराज्ञी। समासान्तविधेरनित्यत्वात्तत्र टच् न॥

डाबुभाभ्यामन्यतरस्याम्॥ १३॥

मन्नन्तादन्नन्तबहुव्रीहेश्च स्त्रियां डाप् वा स्याद्। सीमा। सीमे। सीमाः। सीमानौ। सीमानः। बहुराजा। बहुराजे। बहुराजाः। बहुराजानौ। बहुराजानः। अन उपधालोपिन(४।१।२८) इति पक्षे बहुराज्ञी। बहुराज्ञ्यौ। बहुराज्ञ्यः। बहुश्वा। बहुयुधा। विधिनिषेधाभ्यामेव विकल्पसिद्धौ अन्यतरस्यांग्रहणं बहुव्रीहौ वनो र च(४।१।७)त्यस्यापि विकल्पार्थम्। बहुधीवा। बहुधीवरी॥

अनुपसर्जनात्॥ १४॥

अधिकारोऽयम्। यदित ऊर्ध्वं वक्ष्यति टिड्ढाणि(४।१।१५)त्यादि अनुपसर्जनात्तद्वेदितव्यम्। कुरुचरी। अनुपसर्जनात्किम्। बहुकुरुचरा। जातेर्ङीप्(४।१।६३)। बहुकुक्कुटा। अस्मिन्प्रकरणे तदन्तविधिर्ज्ञापितः उपसर्जनाद् प्रतिषिध्यते। प्रधानेन तदन्त-

विधिर्भवत्येव। नगरकारी। नचात्र कृद्ग्रहणपरिभाषयैव सिद्धम्। तद्धितस्याप्यणः सम्भवात्॥

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपूख्युनाम् ॥ १५ ॥

टिदादिभ्योनुपसर्जनेभ्यः स्त्रियां ङीप् स्यात्। कुरुचरी। अनुबन्धकत्वाल्लुटः पचमानेत्यत्र न। ल्युडादिषु टित्करणसामर्थ्याद् भवति। करणी। आगमटित्त्वं न निमित्तं ट्युट्युलौ तुट्चे(४।३।२३)ति लिङ्गात्। ढ। सौपर्णेयी। अण्। कुम्भकारी। औपगवी। णेपि क्वचित्। चौरी। तापसी। क्वचिन्न। दाण्डा। मौष्टा। अञ्। औत्सी। द्वयसच्। ऊरुद्वयसी। दघ्नच्। ऊरुदघ्नी। मात्रच्। ऊरुमात्री। तयप्। पञ्चतयी। ठक्। आक्षिकी। ठञ्। लावणिकी। कञ्। तादृशी। क्वरप्। इत्वरी। ख्युन्। अढ्यंकरणी॥

नञ्स्नञीकक्तरुणतलुनानाम्॥

स्त्रैणी। पौंस्नी। शाक्तीकी। तरुणी तलुनी युवा। अवयोऽर्थमन्त्ययोर्ग्रहणम्॥

यञश्च ॥ १६ ॥

यञन्तात् स्त्रियां ङीप् स्यात्। गार्गी॥

अनपत्याच्च॥

द्वीपे भवा द्वैप्या॥

प्राचां ष्फ तद्धितः ॥ १७ ॥

यञन्तात् स्त्रियां ष्फो वा स्यात् स च तद्धितसंज्ञः। कृत्तद्धितेति(१।२।४६)प्रातिपदिकसंज्ञायां षिद्गौरेति(४।१।४१)

ङीप्। गार्ग्यायणी। गार्गी। उत्तरसूत्रे सर्वत्र ग्रहणस्येहापकर्षाद्वावय्याचापं(४।२।७८)बाधित्वा प्राचां ष्फः। आवट्यायनी॥

## सर्वत्र लोहितादिकतन्तेभ्यः ॥ १८ ॥

लोहितादिभ्यः कतशब्दपर्यन्तेभ्यो यञन्तेभ्यः स्त्रियां ष्फः स्यात्सर्वेषां मतेन। लोहितादिर्गर्गाद्यन्तर्गणः। कतन्त इति शकन्ध्वादित्वात्पररूपम्। पूर्वेण विकल्पे प्राप्ते नित्यार्थमिदं वचनम्। लौहित्यायनीत्यादि॥

शाकलशब्दः कतकण्वयोर्मध्ये पठनीयः॥

कतन्त इत्यत्र बहुव्रीहिः। तत्पुरुषश्च कतस्यान्तः समीपभूत इति। तेन शाकल्यायनीति ष्फः सिद्धः। कण्वादिभ्यो गोत्र(४।२।१११)इत्यत्रापि बहुव्रीहितत्पुरुषौ कण्व आदिर्येषां कण्वस्यादिरिति। तेन शाकल्यस्यच्छात्राः शाकला इत्यपि सिद्धम्॥

## कौरव्यमाण्डूकाभ्यां च ॥ १९ ॥

आभ्यां स्त्रियां ष्फः स्यात्। कुर्वादिभ्यो ण्यः(४।१।१५१)। ढक् च मण्डूकात् (४।१।११९)। यथाक्रमं टाब्ङीपोरपवादः। कौरव्यायणी। माण्डूकायनी॥

आसुरेश्च॥

आसुरायणी॥

दीपिकेषु इञश्च(४।२।११२)त्यणि प्राप्ते आसुरेश्छ इष्यते॥ आसुरिणा प्रोक्त आसुरीयः कल्पः। कौरवी सेनेति तु तस्येदमिति विवक्षायामणि कृते स्यात्॥

## वयसि प्रथमे ॥ २० ॥

प्रथमवयोवाचिनोऽदन्तात् स्त्रियां ङीप् स्यात्। कुमारी॥

वयस्यचरम इति वाच्यम्।

चिरण्टी। चरमे तु वृद्धा। अतः किम्। शिशुः। कन्यायाः कनीन चे(४।१।११६)ति ज्ञापकात् कन्याया न। रूढ्या वयोवाचित्वमिह विवक्षितम्। नेह। उत्तानशया। लोहितपादिका॥

द्विगोः॥ २१॥

द्विगुसमासात् स्त्रियां ङीप् स्यात्। पञ्चपूली॥

अपरिमाणबिस्ताचितकंबल्येभ्यो न तद्धितलुकि॥ २२॥

अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोस्तद्धितलुकि न ङीप्। द्विवर्षा। बिस्तादीनां परिमाणार्थं ग्रहणम्। द्विबिस्ता। द्व्याचिता। द्विकम्बल्या। अध्यर्धे(५।१।२८)ति ठगादेर्लुक्। परिमाणात्तु आढकी। तद्धितलुकि किम्। समाहारे मा भूत्। पञ्चाश्वी॥

काण्डान्तात् क्षेत्रे॥ २३॥

काण्डान्तात् द्विगोस्तद्धितलुकि न ङीप् क्षेत्रे वाच्ये। द्वे काण्डे प्रमाणमस्याः द्विकाण्डा। प्रमाणे लो द्विगोर्नित्य-(५।२।३७वा)मिति द्वयसचो लुक्। क्षेत्रे किम्। द्विकाण्डी रज्जुः॥

पुरुषात् प्रमाणेऽन्यतरस्याम्॥ २४॥

प्रमाणवाचिपुरुषान्तात् द्विगोस्तद्धिलुकि वा ङीप्। द्विपुरुषा। द्विपुरुषी। परिमाणे किम्। द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा। तद्धित लुकि किम्। द्विपुरुषी॥

बहुव्रीहेरूधसो ङीष्॥ २५॥

ऊधसन्ताद्बहुव्रीहेः स्त्रियां ङीप् स्यात्। ऊधसोऽनङि-

(५।४।१३१)ति समासान्ते कृते अनो बहुव्रीहे(४।१।१२)रिति डाप्प्रतिषेधयोरपवादः। पीनोध्नी। अन उपधालोपिन(४।१।२८) इत्यस्याप्ययमपवाद इष्यते। समासान्तश्च स्त्रियामेव। नेह। महद् ऊधो यस्यासौ महोधाः पर्जन्यः॥

## सङ्ख्याव्ययादेर्ङीप् ॥ २६ ॥

एतदादेरूधसन्ताद् बहुव्रीहेः स्त्रियां ङीप् स्याद्। द्व्यूध्नी। सूध्नी। संख्याव्ययाभ्यामिति वाच्ये आदिग्रहणाद् द्विविधोध्नी त्रिविधोध्नीति सिद्धम्॥

## दामहायनान्ताच्च ॥ २७ ॥

सङ्ख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च स्त्रियां ङीप् स्याद्। द्विदाम्नी। अत्र डाब्विकल्पप्रतिषेधेषु नित्यार्थं वचनम्॥

हायनान्ताद्वयस्येव ङीप् णत्वं च त्रिचतुर्भ्यां हायनस्येति॥

त्रिहायणी। चतुर्हायणी। वयसि किम्। चतुर्हायना शाला॥

## अन उपधालोपिनोऽन्यतरस्याम् ॥ २८ ॥

अन्नन्ताद्बहुव्रीहेरुपधालोपिनो ङीब्वा स्याद्। बहुराज्ञी। पक्षे डाबुभाभ्या(४।१।१३)मित्यत्रैतद्व्रयमुदाहृतम्। अनः किम्। बहुमत्स्या। उपधालोपिनः किम्। सुपर्वा॥

## नित्यं संज्ञाछन्दसोः ॥ २९ ॥

अन्नन्ताद् बहुव्रीहेरुपधालोपिनः स्त्रियां नित्यं ङीप् स्याद् संज्ञाछन्दसोः। विकल्पापवादः। सुराज्ञी नाम ग्रामः। छन्दसि। पञ्चदाम्नी गाय॥

## केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥ ३० ॥

एभ्यः स्त्रियां ङीप् स्यात् संज्ञायां छन्दसि च । केवली । मामकी । भागधेयी । पापी । उतापरीभ्यः । समानी । आर्यकृती । सुमङ्गली । भेषजी । संज्ञाछन्दसोरन्यत्र टाप् प्रत्युदाहरणम् । अणन्ता(४।१।१५)दित्येव सिद्धे मामकग्रहणं नियमार्थं मामकशब्दात्संज्ञाछन्दसोरेवेति । नेह । मामिका बुद्धिः ॥

## रात्रेश्चाजसौ ॥ ३१ ॥

जस्विषयादन्यत्र रात्रेर्ङीप् स्यात् संज्ञायां छन्दसि च । रात्री । रात्रीभिः । अजसौ किम् । रात्रयः ॥

अजसादिष्विति वाच्यम् ॥

रात्रिम् । रात्र्य इति तु कृदिकारादक्तिनः, सर्वतोऽक्तिन्नर्थादेके (ग-सू-४-१-४५) इति ङीष् ॥

## अन्तर्वत्पतिवतोर्नुक् ॥ ३२ ॥

एतयोर्नुगागमः स्यात् स्त्रियाम् । नान्तत्वान्ङीप् । अन्तर्वदित्यत्र मतुप् निपात्यते । अन्तःशब्दस्याधिकरणप्रधानत्वेनास्तिना सामानाधिकरण्याभावात् । पतिवदित्यत्र मतोर्वत्वम् । गर्भिण्यां जीवत्पत्यां चैतान्निष्येते । अन्तर्वत्नी गर्भिणी । पतिवत्नी जीवत्पतिः । अन्यत्रान्तरस्यामस्ति । पतिमती भूमिः । अन्तर्वतीति केचित् प्रत्युदाहरन्ति । तत्र मतुप् चिन्त्यः ॥

छन्दसि नुग्वा ॥

अन्तर्वती । अन्तर्वत्नी । पतिवती । पतिवत्नी ॥

## पत्युर्नो यज्ञसंयोगे ॥ ३३ ॥

पत्युर्नोन्तादेशः स्यात् स्त्रियां यज्ञसंयोगे । नान्तत्वात् ङीप् । पत्नी । अन्यत्र ग्रामस्य पतिः स्त्री । वृषलपत्नीत्युपमानात् ॥

## विभाषा सपूर्वस्य ॥ ३४ ॥

पत्यन्तप्रातिपदिकस्य सपूर्वस्यानुपसर्जनस्य स्त्रियां नोन्तादेशो वा स्यात् । दृढपतिः । दृढपत्नी । असमासविभाषेयम् । अयज्ञसंयोगत्वात् । सपूर्वस्य किम् । पतिः स्त्री ॥

## नित्यं सपत्न्यादिषु ॥ ३५ ॥

एषु पत्युर्नो नित्यं स्यात् । सपत्नी । समान । एक । वीर । पिण्ड । श्व । भ्रातृ । भद्र । पुत्र । समानादिष्विति वक्तव्ये सपत्नीग्रहणं समानस्य सभावार्थम् ॥ दासाच्छन्दसि ॥ दासपत्नी ॥

## पूतक्रतोरै च ॥ ३६ ॥

अस्य स्त्रियामै अन्तादेशो ङीप् च । पूतक्रतायी । त्रय एते योगाः पुंयोगप्रकरणे द्रष्टव्याः । पुंयोगादन्यत्र पूतक्रतुः स्त्री ॥

## वृषाकप्यग्निकुसितकुसिदानामुदात्तः ॥ ३७ ॥

एषामुदात्त ऐ आदेशो ङीप् च स्त्रियाम् । वृषाकपायी-त्यादि । पुंयोग इत्येव । वृषाकपिः स्त्री ॥

## मनोरौ वा ॥ ३८ ॥

मनोः स्त्रियां ङीप् स्यादौकारश्चान्तादेश ऐ च उदात्तः । वेति द्वयं विकल्प्यते । सन्नियोगशिष्टो ङीप् च । तेन

वैशम्पम्। मनोः स्त्री मनावी मनायी मनुः। मनुशब्द आद्युदात्तः॥

वर्णादनुदात्तात्तोपधात्तो नः॥ ३९॥

अनुदात्तान्तात्तोपधाद्वर्णवाचिनः स्त्रियां ङीप् वा स्यात्तकारस्य च नः। एता। एनी। श्येता। श्येनी। वर्णात्किम्। प्रकृता। अनुदात्तात्किम्। श्वेता। घृतादित्वा(फि १।२१)दन्तोदात्तः। तोपधात्किम्। अन्यतो ङीष्(४।१।४०)। अत इत्येव। शितिः स्त्री॥

पिशङ्गाच्च॥

पिशङ्गी। उत्तरसूत्रेण ङीषि प्राप्ते वचनम्॥

असितपलितयोर्न॥

असिता। पलिता॥

छन्दसि क्नमेक इच्छन्ति॥

असिक्नी। पलिक्नी॥ भाषायामपि केचित् क्नमिच्छन्ति॥ तत् भगवता नोक्तम्। अवदातशब्दस्य विशुद्धवाचित्वान्न ङीप्। अवदाता॥

अन्यतो ङीष्॥ ४०॥

वेति निवृत्तम्। तोपधादन्यतो वर्णवाचिनोऽनुदात्तात् स्त्रियां ङीप् स्यात्। स्वरे भेदः। सारङ्गी। शबली। वर्णात्किम्। खट्वा। अनुदात्तात्किम्। कपिला॥

षिद्गौरादिभ्यश्च॥ ४१॥

षिद्भ्यो गौरादिभ्यश्च स्त्रियां ङीष् स्यात्। नर्तकी। शिल्पिनि ष्वुन्। गौरी॥

जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥ ४२ ॥

जानपदादिभ्य एकादशभ्यो यथासंख्यं वृत्त्याद्येकादशार्थेषु ङीप् स्यात्। जानपदी वृत्तिश्चेत्। अन्यत्रौत्सर्गिकत्वाद् ङीप्। जानपदी। स्वरे विशेषः। कुण्डी अमत्रं चेत्। कुण्डाऽन्या। मनुष्यत्वाचिकुण्डशब्दस्य जातिलक्षणो ङीष् भवत्येव। कुण्डीयं न गोलकीति। गोणी आवपनं चेत्। गोणाऽन्या। स्थली अकृत्रिमा चेत्। स्थलाऽन्या। भाजी श्राणा चेत्। नागी स्थौल्यं चेत्। [नागान्या।] काली वर्णश्चेत्। [ कालान्या। ] नीली अनाच्छादनं चेत् ॥

ओषधौ प्राणिनि चेष्यते ॥

नीली ओषधिर्गौर्वा ॥

संज्ञायां वा ॥

नीला। नीली। कुशी अयोविकारश्चेत्। कामुकी मैथुनेच्छा चेत्। इच्छावत्युच्यते। कबरी केशवेशश्चेत् ॥

शोणात् प्राचाम् ॥ ४३ ॥

ङीप्। शोणी। शोणा ॥

वोतो गुणवचनात् ॥ ४४ ॥

गुणवचनादुदन्तात् स्त्रियां ङीप् वा स्यात्। पट्वी। पटुः। उतः किम्। शुचिः स्त्री। गुणवचनात्किम्। आखुः ॥

आद्युदात्ताद् गुणवचनात् ॥

ङीप्। वस्वी। वसुः ॥

खरुसंयोगोपधान्न ॥

खरुः। पाण्डुः ॥

बव्हादिभ्यश्च ॥ ४५ ॥

एभ्यो ङीष् वा स्यात् स्त्रियाम्। बव्ही। बहुः। पद्धती। पद्धतिरित्यादि ॥ इतः प्राण्यङ्गात् ॥ कृदिकारादक्तिनः ॥ सर्वतोऽक्तिन्नर्थादित्येके ॥ दर्विः। दर्वी। अक्तिनः किम्। वुद्धिः ॥

नित्यं छन्दसि ॥ ४६ ॥

बव्हादिभ्यः स्त्रियां नित्यं ङीष् स्यात् छन्दसि। बव्ही ॥

भुवश्च ॥ ४७ ॥

भव्य(नित्यं) छन्दसि ङीष्। विभ्वी। प्रभ्वी। विप्रसंभ्य(३।२।१८०) इति डुः। उत इत्यनुवर्तनात्स्वयम्भूः। भोरिति वक्तव्ये भुव इति सौत्रो निर्देशः ॥

पुंयोगादाख्यायाम् ॥ ४८ ॥

या पुमाख्या पुंयोगात् स्त्रियां वर्तते ततः ङीष् स्यात्। गणकी ॥

गोपालिकादीनां न ॥

गोपालिका। पशुपालिका ॥

सूर्याद्देवतायां चाप् ॥

सूर्यस्य स्त्री देवता सूर्या। अन्या सूरी ॥

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ ४९ ॥

इन्द्रादेः स्त्रियां ङीप् स्यादानुक् चागमः । इन्द्राणीत्यादि । अनुकैव सिद्धे आनुग्विधानसामर्थ्याद् मृडाणीति केचित् ॥

हिमारण्ययोर्महत्त्वे ॥

महद्धिमं हिमानी । अरण्यानी ॥

यवाद्दोषे ॥

यवानी ॥

यवनाल्लिप्याम् ॥

यवनानी । तस्येद(४।३।१२०)मित्यणो बाधको ङीप् ॥

मातुलोपाध्यायाभ्यां वा ॥

मातुलानी । मातुली । उपाध्यायानी । उपाध्यायी वा ॥

आचार्यादणत्वं च ॥

आचार्यानी ॥

अर्यक्षत्रियाभ्यां वा स्वार्थे ॥

अर्याणी । अर्या । क्षत्रियाणी । क्षत्रिया । पुंयोगे तु ङीपेव । अर्यी । क्षत्रियी । आर्येति क्वचिद्वार्तिकपाठः ॥

मुद्गलाच्छन्दसि लिच्च ॥

मुद्गलानी ॥ सूर्याणीति केचित् ॥

क्रीतात्करणपूर्वात् ॥ ५० ॥

क्रीतान्तात्करणपूर्वात् प्रातिपदिकात् स्त्रियां ङीप् स्यात् । वस्त्रक्रीती । क्वचिन्न । धनक्रीता ॥

क्तादल्पाख्यायाम् ॥ ५१ ॥

करणपूर्वात् क्तान्तादल्पाख्यायां ङीष् स्यात् स्त्रियाम् । अभ्रलिप्ती द्यौः । लघ्वामेघेत्यर्थः(?) । वृत्तौ गतार्थत्वादल्प शब्दस्याप्रयोगः । अल्पाख्यायां किम् । चन्दनानुलिप्ता ॥

बहुव्रीहेश्चान्तोदात्तात् ॥ ५२ ॥

क्तान्तात् बहुव्रीहेरन्तोदात्तात् स्त्रियां ङीष् स्यात् । ऊरुभिन्नी ॥

जातान्तान्न ॥

दन्तजाता ॥

बहुनञ्सुकालसुखादिपूर्वाच्च न ॥

बहुकृता । अकृता । सुकृता । मासयाता । सुखयाता । दुःखयाता ॥

पाणिगृहीती भार्यायाम् ॥

पाणिगृहीताऽन्या ॥

अस्वाङ्गपूर्वपदाद्वा ॥ ५३ ॥

अस्वाङ्गादेः क्तान्तात् बहुव्रीहेरन्तोदात्तात् स्त्रियां वा ङीष् । पलाण्डुभक्षिती । पलाण्डुभक्षिता । सुरापीती । सुरापीता । अन्तोदात्तात्किम् । वस्त्रच्छन्ना ॥

बहुलं संज्ञाछन्दसोः ॥

प्रवद्धविलूना । प्रवद्धविलूनी । प्रवद्धा चासौ विलूना चेति विग्रहः ॥

## स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ५४ ॥

वाऽपतिरिक्तं निवृत्तम् । स्वाङ्गं यदुपसर्जनमसंयोगोपधं तदन्तात् स्त्रियां ङीप् वा स्यात् । चन्द्रमुखी । चन्द्रमुखा । अतिकेशी । अतिकेशा । स्वाङ्गात्किम् । बहुयवा । उपसर्जनात्किम् । अशिखा । असंयोगोपधात्किम् । सुगुल्फा ॥

अङ्गगात्रकण्ठेभ्यस्त्विष्यते ॥

स्वङ्गी । स्वङ्गा इत्यादि ॥

अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।
अतत्स्थं तत्र दृष्टं चेत्तेन चेत्तत्तथायुतम् ॥

बहुस्वेदा । द्रवत्वात् । सुज्ञाना । अमूर्तत्वात् । सुमुखा शाला । अप्राणिस्थत्वात् । सुशोभा । विकारजत्वात् । सुकेशी सुकेशा रथ्या । अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात् । सुस्तनी सुस्तना प्रतिमा । प्राणिसदृशेपि स्थितत्वात् ॥

## नासिकोदरोष्ठजंघादन्तकर्णशृङ्गाच्च ॥ ५५ ॥

स्वाङ्गाच्चोपसर्जनादित्येव । नासिकाद्यन्तात् स्त्रियां वा ङीप् । सुनासिकी । सुनासिकेत्यादि । संयोगोपधबह्वच्लक्षणप्रतिषेधयोरेवायमपवादः । सहनञ्विद्यमानेति(४।१।५७) प्रतिषेधो भवत्येव । पुरस्तादपवादन्यायात् । अनासिका ॥

पुच्छाच्च ॥

कल्याणपुच्छा । कल्याणपुच्छी ॥

कबरमणिविषशरेभ्यो नित्यम् ॥

कबरपुच्छीत्यादि ॥

उपमानात् पक्षपुच्छाभ्याम् ॥

उलूकपक्षी उलूकपुच्छी सेना ॥

## न क्रोडादिबह्वचः ॥ ५६ ॥

क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीप् । कल्याणक्रोडा । खुर । गुल्फ । वाला । उखा । शफ । गुदम् । भग । घोणा । इत्यादि । आकृतिगणोयम् । पृथुजघना ॥

## सहनञ्विद्यमानपूर्वाच्च ॥ ५७ ॥

एतत्पूर्वात् स्वाङ्गान्न ङीप् । सकेशा । अनासिका । विद्यमानोदरा । पूर्वग्रहणं किम् । विद्यमानं मुखमस्य विद्यमानमुखः । कल्याणो विद्यमानमुखोऽस्याः । कल्याणविद्यमानमुखी । पूर्वग्रहणस्य स्त्रियां विद्यमानस्य प्रातिपदिकस्य विशेषणत्वं संपद्यत इति अत्र प्रतिषेधाभावः । अत एवात्र प्रतिषेधः । विद्यमानकल्याणमुखा ॥

## नखमुखात्संज्ञायाम् ॥ ५८ ॥

न ङीष् । शूर्पणखा । गौरमुखा । असंज्ञायां तु ताम्रनखी । चन्द्रमुखी ॥

## दीर्घजिह्वी चच्छन्दसि ॥ ५९ ॥

अत्र ङीष् निपात्यते । संज्ञायामित्येव । दीर्घजिह्वाऽन्या ।

## दिक्पूर्वपदान् ङीप् ॥ ६० ॥

दिक्पूर्वपदात् ङीष्विषये ङीप् वा स्यात् । प्राङ्मुखी । पक्षे टाप् । प्राङ्मुखा । इह च न । प्राग्गुल्फा । प्राक्क्रोडा । प्रग्जघना ॥

## वाहः ॥ ६१ ॥

ङीप् न स्मर्यते । वाहन्तात् स्त्रियां ङीप् स्यात् । भारौही॥

सख्यशिश्वीति भाषायाम् ॥ ६२ ॥

एतौ निपात्येते भाषायाम् । भाषाग्रहणं नित्यार्थम् । छन्दस्यपि क्वचिद् भवति ॥

जातेरस्त्रीविषयादयोपधात् ॥ ६३ ॥

जातिवाचि यन्न च स्त्रियां नियतविषयमयोपधं ततः स्त्रियां ङीप् स्यात् । मृगी । ब्राह्मणी ॥ गोत्रचरणावपि जातिरिष्यते ॥ गोत्रमपत्यमात्रम् । चरणशब्देन शाखाध्यायिनो गृह्यन्ते । नाडायनी । चारायणी । कठी । कलापी । जातेः किम् । मुण्डा । स्त्रीविषयात्तु मक्षिका । योपधात्तु क्षत्रिया ॥

गवयहयमुकयमत्स्यमनुष्याणां न निषेधः ॥

गवयीत्यादि ॥

पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ॥ ६४ ॥

एतदुत्तरपदात् जातिवाचिनः स्त्रीविषयादपि ङीप् स्यात् । ओदनपाकी । शङ्कुकर्णी । सालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोवाली । ओदनपाक्यादयः संज्ञाशब्दा यथाकथंचिद्व्युत्पाद्याः ॥

इतो मनुष्यजातेः ॥ ६५ ॥

इदन्तान्मनुष्यजातेः स्त्रियां ङीप् स्यात् । अवन्ती । दाक्षी । इतः किम् । विट् । मनुष्यजातेः किम् । तित्तिरिः । पुनर्जातिग्रहणं योपधार्थम् । औदमेयी ॥

इञ उपसङ्ख्यानमजात्यर्थम् ॥

सुतङ्गमेन निर्वृत्ता सौतङ्गमी । वुञ्छणादिसूत्रेण(४।२।८०) इञ्॥

ऊङुतः ॥ ६६ ॥

उदन्तान्मनुष्यजातेरूङ् स्यात् । कुरूः । अयोपधादित्येव । अध्वर्युः स्त्री ॥

अप्राणिजातेश्चारज्ज्वादीनामिति वाच्यम् ॥

कर्कन्धूः । प्राणिजातेस्तु धेनुः । रज्ज्वादेस्तु रज्जुः । हनुः ॥

बाह्वन्तात्संज्ञायाम् ॥ ६७ ॥

ऊङ् । भद्रबाहूः । संज्ञायां किम् । वृत्तबाहुः ॥

पङ्गोश्च ॥ ६८ ॥

पङ्गूः ॥

श्वशुरस्योकाराकारयोर्लोपश्च ॥

श्वश्रूः ॥

ऊरूत्तरपदादौपम्ये ॥ ६९ ॥

ऊर्वन्तात् स्त्रियामूङ् स्यादौपम्ये गम्ये । करभोरूः ॥

संहितशफलक्षणवामादेश्च ॥ ७० ॥

संहिताद्यादेरूर्वन्तात् स्त्रियामूङ् स्यादनौपम्येऽपि । संहितोरूः । इत्यादि ॥

सहितसहाभ्याम् ॥

सहितोरूः । सहोरूः ॥ तन्वादेर्वेति केचित् ॥ तनुः । तनूः । चञ्चुः । चञ्चूः ॥

कद्रुकमण्डल्वोश्छन्दसि ॥ ७१ ॥

ऊङ् । कद्रूः । कमण्डलूः ॥

गुग्गुलुमधुजतुपतयालूनां च ॥

गुग्गुलूरित्यादि। गुग्गुल्वादीनां छन्दसि व्यत्ययेन स्त्रीत्वम् ॥

संज्ञायाम् ॥ ७२ ॥

कद्रुकमण्डल्वोरूङ् स्यात् संज्ञायां भाषायामपि। कद्रूः। कमण्डलूः ॥

शार्ङ्गरवाद्यञो ङीन् ॥ ७३ ॥

शार्ङ्गरवादेरञन्ताच्च जातिवाचिनः स्त्रियां ङीन् स्यात्। शार्ङ्गरवी। कापटवी। इत्यादि। बैदी। और्वी। जातिवाचिनः किम्। बैदस्य स्त्री बैदी। स्वरे भेदः ॥ नृनरयोर्वृद्धिश्च ॥ नारी ॥

यङश्चाप् ॥ ७४ ॥

यङन्तात् स्त्रियां चाप् स्यात्। आम्बष्ठ्या। कारीषगन्ध्या ॥

षाद् यञश्चाप् ॥

शार्कराक्ष्या। पौतिमाष्या। गौकक्ष्या। गर्गादियञ(४।१।१०५)न्ता एते ॥

आवट्याच्च ॥ ७५ ॥

अस्मात् चाप्। आवट्या। गर्गादियञन्त(४।१।१०५) आवटयशब्दः। प्राचां ष्फ(४।१।१७) इत्यत्र सर्वत्रग्रहणापकर्षादावट्यायनीत्यपि स्यात् ॥

तद्धिताः ॥ ७६ ॥

इत ऊर्ध्वमापञ्चमाध्यायान्तं ये प्रत्ययास्ते तद्धितसंज्ञाः स्युः ॥

यूनस्तिः ॥ ७७ ॥

युवन्शब्दात् तिः स्यात् स्त्रियाम्। ङीपोऽपवादः। युवतिः ॥

## अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥ ७८ ॥

गोत्रे यावणिञावनार्षौ तदन्तयोः प्रातिपदिकयोः गुरूपोत्तमयोः स्त्रियां ष्यङादेशः स्यात् । निर्दिश्यमानस्यादेशा भवन्तीति अणिञोरेवादेशः । उत्तमशब्दः स्वभावात्त्रिप्रभृतीनामन्त्यमक्षरमाह । तत्समीपमुपोत्तमम् । गुरु उपोत्तमम् यस्य तत् गुरूपोत्तमं प्रातिपदिकम् । करीषस्येव गन्धो यस्य करीषगन्धिः। तस्यापत्य(४।१।९२)मित्यण् । तस्य ष्यङादेशः । यङश्चाप्(४।१।७४)।कारीषगन्ध्या । कौमुदगन्ध्या । वराहस्यापत्यम् । अत इञ्(४।१।९५)। तस्य ष्यङादेशः । चाप् । वाराह्या । अणिञोः किम् । ऋतभागस्यापत्यम् । विदाद्यञ्(४।१।१०४)। आर्तभागी । अनार्षयोः किम् । वासिष्ठी । गुरूपोत्तमयोः किम् । औपगवी । गोत्रे किम् । कान्यकुब्जी । अत्र पारिभाषिकस्यैव गोत्रस्य ग्रहणं न तु लौकिकस्य [इति] स्थितम् ॥

## गोत्रावयवात् ॥ ७९ ॥

गूयन्ते शब्द्यन्ते अनेन स्वसन्तानप्रभवा इति सन्तानस्य संज्ञाकारी गोत्रशब्देनेह गृह्यते । अवयवशब्दोऽप्रधानवचनः । कर्मधारयश्च समासः । निपातनाद्विशेषणस्य परनिपातः । तत्र प्रवराध्यायपठितानां मुख्यङ्गोत्रत्वम् । ये त्वादिपुरुषाः श्रुतशीलादिसम्पन्ना अपत्यसन्तानप्रसिद्धिहेतवः पुणिकादयः तेषां प्रवराध्यायापाठादप्रधानगोत्रत्वम् । तेभ्यः गोत्रे विहितयोरणिञोः स्त्रियां ष्यङादेशः स्यात् । अगुरूपोत्तमार्थ आरम्भः । पुणिकस्यापत्यं गोत्रं स्त्री पौणिक्या । हौ(भौ)णिक्या । मौखर्या(र्या) । येषामनन्तरापत्येऽपीष्यते दैवदत्त्या याज्ञदत्त्येत्यादि क्रौड्यादिषु(४।१।८०)ते द्रष्टव्याः ॥

## क्रौड्यादिभ्यश्च ॥ ८० ॥

एभ्यः ष्यङ् स्यात् स्त्रियाम्। अगुरूपोत्तमार्थः अनन्तरार्थश्चारम्भः। क्रौड्येत्यादि ॥

## दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डेविद्धिभ्योऽन्यतरस्याम् ॥ ८१ ॥

एषां ष्यङादेशो वा स्यात् स्त्रियाम्। गोत्र इति निवृत्तम्। अनन्तरे अप्राप्तो गोत्रे नित्यप्राप्तश्च विकल्प्यते। पक्षे इतो मनुष्यजातेरिति(४।१।६५) ङीप्। दैवयज्ञ्या। दैवयज्ञी। शौचिवृक्ष्या। शौचिवृक्षी। सात्यमुग्र्या। सात्यमुग्री। काण्डेविद्ध्या। काण्डेविद्धी। कण्ठेविद्धिभ्य इत्यपि क्वचित् पाठः ॥

## समर्थानां प्रथमाद्वा ॥ ८२ ॥

प्राग्दिशो विभक्ति(५।३।२)रिति यावत्तावदयमधिकारः। तस्यापत्यम्(४।१।९२) तेन रक्तं रागात्(४।२।१) तत्र भवः (४।३।५३) इत्यत्र समर्थानां मध्ये प्रथमानिर्दिष्टादेव प्रत्यया विकल्पेन स्युः। प्राथम्यं च लक्षणे। उपगोरपत्यं औपगवः। समर्थानां किम्। कम्बल उपगोरपत्यं चैत्रस्य। प्रथमात्किम्। देवदत्तोऽपत्यमस्येति देवदत्तशब्दान्मा भूत्। पक्षे वाक्यमपि। उपगोरपत्यमिति। पूर्वसूत्रादन्यतरस्यामनुवृत्तेः समासोऽपि। उपग्वपत्यमिति ॥

## प्राग्दीव्यतोऽण् ॥ ८३ ॥

तेन दीव्यती(४।४।२)त्यतः प्राग्येर्थास्तेष्वपवादविषयमुत्सृज्याण् स्यात्। तस्यापत्यम्(४।१।९२)। औपगवः ॥

अश्वपत्यादिभ्यश्च ॥ ८४ ॥

एभ्यः प्राग्दीव्यतीयेष्वर्थेषु अण् स्यात् । पत्युत्तरपदण्यस्यापवादः । आश्वपतम् । अश्वपति । शतपति । धनपति । गणपति । राष्ट्रपति । कुलपति । गृहपति । पशुपति । धान्यपति । धर्मपति । सभापति । प्राणपति । क्षेत्रपति ॥

दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ ८५ ॥

दित्यादिभ्यः पत्यन्ताच्च प्राग्दीव्यतीयेषु ण्यः स्यात् । अणोऽपवादः । दैत्यः । आदित्यः । प्राजापत्यम् । सैनापत्यम् ॥

यमाच्च ॥

याम्यम् ॥

वाङ्मतिपितृमतां छन्दसि ॥

वाच्यम् । मात्यम् । पैतृमत्यम् ॥

पृथिव्या ञाञौ ॥

पार्थिवा । पार्थिवी ॥

देवस्य यञञौ ॥

दैव्यम् । दैवम् ॥

वहिषष्टिलोपो यञ् च ॥

वाह्यम् ॥

ईकक् च ॥

वाहीकम् ॥

ईकञ् छन्दसि ॥

वाहीकः । स्वरे भेदः । टिलोपवचनमव्ययानां भमात्रे टिलोप इत्यस्यानित्यत्वज्ञापनार्थम् । तेनारातीय इत्येवमादि सिद्धम् ॥

स्थाम्नोऽकारः ॥

अश्वत्थामः ॥

लोम्नोऽपत्ये बहुषु ॥

उडुलोमाः । शरलोमाः । बहुषु किम् । औडुलोमिः ॥

सर्वत्र गोरजादिप्रसङ्गे यद्वाच्यः ॥

गव्यम् । अजादिप्रसङ्गे किम् । गोमयम् । गोरूप्यम् । सर्वत्र किम् । प्राग्दीव्यतोऽन्यत्रापि । गवा चरति गव्यः ॥

ण्याद्योऽर्थविशेषलक्षणादणपवादात् पूर्वविप्रतिषेधेन ॥

दितेरपत्यं दैत्यः । स्त्र्यलक्षणो(४।१।१२२) ढगत्र न । वनस्पतीनां समूहो वानस्पत्यम् । अचित्तहस्तीति(४।२।४७) ठगत्र न । अर्थविशेषलक्षणात्किम् । अर्थसामान्यलक्षणो भवत्येव । उष्ट्रपतिर्नाम पत्रम् । तस्येदमौष्ट्रपतम् । पत्राध्वर्युपरिषदश्चे(४।३।१२३)त्यञ् भवति न तु ण्यः । कृदिकारादक्तिन इति ङीपि ढकि सति दैतेय इत्यपि स्यात् । लिङ्गविशिष्टपरिभाषा चानित्या । इदं तु भगवता नोक्तम् ॥

## उत्सादिभ्योऽञ् ॥ ८६ ॥

एभ्यः प्राग्दीव्यतीयेष्वञ् स्यात् । अणस्तदपवादानां च बाधकः । औत्सः । धैनवम् । तदन्तस्यापि । आधैनवम् ॥

ग्रीष्मादच्छन्दसि ॥

ग्रैष्मम् । अच्छन्दसि किम् । त्रिष्टुप् ग्रैष्मी । छन्दश्चेह वृत्तं न वेदः ॥

## स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ८७ ॥

धान्यानां भवन(५।२।१)इत्यतः प्राग्येऽर्थास्तत्र स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः । स्त्रीषु भवं स्त्रीणां समूहः स्त्रीभ्य आगतमित्यादि स्त्रैणम् । एवं । पौंस्नं । स्त्रियाः पुंव(६।३।३४)दिति निर्देशात् वत्यर्थे न । स्त्रीवत् । पुंवत् ॥

## द्विगोर्लुगनपत्ये ॥ ८८ ॥

द्विगोर्निमित्तं यस्तद्धितोऽनपत्यार्थः प्राग्दीव्यतीयस्तस्य लुक् स्यात् । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः । द्वौ वेदावधीते द्विवेदः । अनपत्ये किम् । द्वैदेवदत्तिः । द्विगोर्निमित्तं किम् । पञ्चकपालस्येदं पाञ्चकपालम् । प्राग्दीव्यतीयः किम् । द्वैपारायणिकः । पञ्चकपाल्यां संस्कृत इति वाक्यमेव । अनभिधानात् पञ्चकपालीशब्दात्तद्धितो न । अविरविकन्यायेन(?) पञ्चकपालशब्दात्तु भवति । पञ्चकपालः । अजादिप्रत्ययस्यैव लुक् । नेह । पञ्चगर्गरूप्यम् । पञ्चगर्गमयम् ॥

## गोत्रेऽलुगचि ॥ ८९ ॥

यस्कादिभ्यो गोत्र इति प्रकरणे येषां गोत्रप्रत्ययानां लुगुक्तः तेषामजादौ प्राग्दीव्यतीये विषये लुक् न स्यात् । गर्गाणां छात्राः गार्गीयाः । आत्रेयीयाः । गोत्रे किम् । कुवलस्येदं कौवलम् । बादरम् । अचि किम् । गर्गेभ्य आगतं गर्गरूप्यम् । प्राग्दीव्यतीये किम् । गर्गेभ्यो हितं गर्गीयम् ॥

गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् ॥

बिदानामपत्यं युवा बैदः । बैदौ । बैदशब्दादत इञि(४।१।९५) ण्यक्षत्रियार्षे(२।४।५८)ति लुकि रूपमिदम् ॥

एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि ॥

बैदस्य बैदयोर्वा अपत्यं बहवो माणवकाः बिदाः । न ह्यत्राञ् बहुषूत्पन्नः ॥

## यूनि लुक् ॥ ९० ॥

प्राग्दीव्यतीये अजादौ प्रत्यये विवक्षिते अनुत्पन्न एव युवप्रत्ययस्य लुक् स्यात् । तस्य लुकि यो यतः प्राप्नोति स

ततो भवति। फांटाहृतस्यापत्यं फांटाहृतिः। तस्यापत्यं युवा। फांटाहृतिमिमताभ्यां(४।१।१५०)मिति ण्यः। फांटाहृतः। तस्य छात्रा इति विवक्षिते ण्यस्य लुकि इञन्तादिञश्चे(४।२।११२)त्य णेव। फांटाहृताः। अन्यथा वृद्धाच्छः(४।२।११४) स्यात्। अचि किम्। फांटाहृतरूप्यम्। प्राग्दीव्यतीये किम्। फांटाहृतीयम्॥

## फक्फिञोरन्यतरस्याम्॥ ९१॥

प्राग्दीव्यतीये अजादौ विवक्षिते यूनि विहितयोरेतयोर्वा लुक् स्यात्। गार्ग्यायणस्य छात्राः। गर्गादिभ्यो यञ्(४।१।१०५) यञिञोश्चे(४।१।१०१)ति फक्। गार्ग्यायणः। तस्य छात्राः गार्गीयाः। गार्ग्यायणीयाः। शिवादिभ्योऽण्(४।१।११२)। यास्कः। तस्यापत्यं युवा। अणो द्व्यचः(४।१।१५६)इति फिञ्। यास्कायनिः। तस्य छात्राः। यास्कीयाः। यास्कायनीयाः॥

## तस्यापत्यम्॥ ९२॥

तस्येति षष्ठीसमर्थादपत्येऽर्थे यथायथमणादयः स्युः। उपगोरपत्यमौपगवः। आश्वपतः॥

## एको गोत्रे॥ ९३॥

अपत्यं पौत्रप्रभृति गोत्रम्(४।१।१६२)। अस्मिन्विवक्षिते मूलप्रकृतेरेव प्रत्ययोत्पत्तिः स्यात्। उपगोः औपगवः। नियमाभावे औपगविरिति स्यात्॥

## गोत्राद्यून्यस्त्रियाम्॥ ९४॥

यून्यपत्ये विवक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययः स्यान्न तु

मूलप्रकृत्यनन्तरयुवभ्यः स्त्रियां च न युवसंज्ञा । गर्गस्यापत्यं युवा गार्ग्यायणः । दाक्षायणः । अस्त्रियां किम् । गोत्रप्रत्यय एव दाक्षिः ॥

अत इञ् ॥ ९५ ॥

अदन्तादपत्ये इञ् स्यात् । अणोऽपवादः । दाक्षिः । शेषविवक्षायामणि सति दाशरथ इति सिध्यति ॥

बाह्वादिभ्यश्च ॥ ९६ ॥

एभ्योऽपत्य इञ् स्यात् । बाहविः । औपबिन्दविः । आकृतिगणोऽयम् । यत्र विशिष्टशब्दोपादानेन कार्यं विधीयते तत्र अभिव्यक्तपदार्था इति न्यायेन प्रसिद्धेष्वेव । न याहच्छिकेषु । बाहुर्नाम कश्चित् । तस्यापत्यं बाहवः । श्वशुरो नाम कश्चित् । श्वाशुरिः । यत्र भर्त्ता । एवं मातृस्वसा । अजननीवाचकत्वात् षत्वं न । यत्तु सामान्येन विहितं अत-इञि(४।१।९५)त्यादि तदाधुनिकेष्वपि भवति । दैवदत्तिरिति ॥

सुधातुरकङ् च ॥ ९७ ॥

सुधातुरिञ् स्यादपत्ये अकङ् चादेशः । सौधातकिः ॥

व्यासवरुडनिषादचण्डालबिम्बानां च ॥

वैयासकिरित्यादि । स्वार्थकन्नन्तानामेषामव्यविकन्यायेन(?) सकन्नन्तात् प्रत्ययः, कन्‌रहितैर्वाक्यमेव, बाह्वादेराकृतिगण-त्वाद्दण्वर्णां बाधित्वा व्यासशब्दादिञिति वार्तिकं न कर्तव्य-मिति स्थितम् ॥

गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ ९८ ॥

गोत्रापत्ये विवक्षिते कुञ्जादिभ्यः च्फञ् स्यात् । इञोऽपवादः ।

ञ्यातच्फञोरस्त्रियाम्(७।३।११३)। कौञ्जायन्यः। ब्राध्नायन्यः। अत्र एकवचनद्विवचनयोर्ञित्स्वर एव। कौञ्जायना इत्यत्र बहुवचने चित्स्वर एवेति स्थितम्। गोत्रे किम्। कुञ्जस्यापत्यमनन्तरः कौञ्जः। शिवादिभ्योऽण्(४।१।११२)इति यावत्तावद्गोत्राधिकारः॥

## नडादिभ्यः फक्॥ ९९॥

एभ्यो गोत्रे फक् स्यात्। नाडायनः। चारायणः। आमुष्यायणः। अदःशब्दस्य सविभक्तिकस्य पाठसामर्थ्याद्विभक्तेर्लुक् न। शलङ्कुशब्दस्य शलङ्कादेशः। शालङ्कायनः। पैलादिषु शालङ्किरिति पाठात् इञप्यत्र। शालङ्किः। गोत्रे किम्। नाडिः॥

## हरितादिभ्योऽञः॥ १००॥

हरितादिर्विदाद्यन्तर्गणः। गोत्रप्रत्ययान्तात् प्रत्ययविधानसामर्थ्यात् उत्तरार्थमनुवर्तमानमपि गोत्रग्रहणमिह न संबध्यते। हरितादिभ्योऽञन्तेभ्यः यूनि अपत्ये फक् स्यात्। हारितायनः॥

## यञिञोश्च॥ १०१॥

गोत्रे यौ यञिञौ तदन्ताद्यूनि फक् स्यात्। गार्ग्यायणः। दाक्षायणः॥

## शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु॥ १०२॥

शरद्वच्छुनकदर्भेभ्यः फक् स्यात् यथासङ्ख्यं भार्गवादिषु गोत्रापत्येषु। शारद्वतायनः भार्गवश्चेत्। शारद्वतोऽन्यः। शौनकायनः वात्स्यश्चेत्। शौनकोऽन्यः। दार्भायणः आग्राय-

पश्चेत् । वार्भिरन्यः । वार्भिरिति वाह्वादेराकृतिगणत्वादिञ् । शरद्वच्छुनकयोर्बिदाद्यञ् ॥

द्रोणपर्वतजीवन्तादन्यतरस्याम् ॥ १०३ ॥

एभ्यो गोत्रे फग्वा स्यात् । द्रौणायनः । द्रौणिः । पार्वतायनः । पार्वतिः । जैवन्तायनः । जैवन्तिः । द्रौणायन इत्यनन्तरापत्येऽपि प्रयोगस्तूपचारात् ॥

अनृष्यानन्तर्ये बिदादिभ्योऽञ् ॥ १०४ ॥

विदादिभ्यो गोत्रेऽञ् स्यात् ये पुनर्विदादिष्वनृषिशब्दाः पुत्रादयस्तेभ्योऽनन्तरे । वैदः । और्वः । पुत्रस्यानन्तरापत्यं पौत्रः । दौहित्रः । नानान्द्रः ॥ परस्त्रीशब्दस्य परशवादेशश्च ॥ परस्त्रिया अपत्यम् पारशवः । ब्राह्मणस्य शूद्रायामूढायामुत्पन्नः । सा च जातितः परस्त्री । यस्तु परभार्यायामुत्पन्नः पारस्त्रैणेयः सः ॥

गर्गादिभ्यो यञ् ॥ १०५ ॥

एभ्यो गोत्रे यञ् स्यात् । गार्ग्यः । वात्स्यः । जामदग्न्यो रामः, पाराशर्यो व्यासः इत्यनन्तरेऽपि आरोपात् प्रयोगः । ऋष्यणा तु भाव्यम् । जामदग्नः, पाराशर इति ॥

मधुबभ्रोर्ब्राह्मणकौशिकयोः ॥ १०६ ॥

एतयोः गोत्रे यञ् स्यात् क्रमेण ब्राह्मणे कौशिके च वाच्ये । माधव्यो ब्राह्मणश्चेत् । माधवोऽन्यः । बाभ्रव्यः कौशिकश्चेत् । बाभ्रवोऽन्यः ॥

कपिबोधादाङ्गिरसे ॥ १०७ ॥

कपिबोधाभ्यां गोत्रे ( यञ् स्यात् । काप्यः । बौध्यः ।

आङ्गिरसे किम। कापेयः। बौधिः॥)

वतण्डाच्च ॥ १०८ ॥

(आङ्गिरस इत्येव। वातण्ड्यः। गर्गादिषु शिवादिषु च पाठात् यञणोः प्राप्तयोराङ्गिरसे यञेवेति नियमार्थं सूत्रम्। अनाङ्गिरसे तु) उभयत्र पाठादुभयम्। वातण्ड्यः। वातण्डः॥

लुक् स्त्रियाम् ॥ १०९ ॥

वतण्डाद्यञो लुक् स्यादांगिरस्यां स्त्रियाम्। लुकि शार्ङ्गरवादित्वात् ङीन्। वतण्डी। आङ्गिरसे किम्। वातण्ड्यायनी। शिवाद्यणि तु वातण्डी। ऋषित्वात् ष्यङत्र न॥

अश्वादिभ्यः फञ् ॥ ११० ॥

आङ्गिरस इति निवृत्तम्। एभ्यो गोत्रे फञ् स्यात्। आश्वायनः। आश्मायनः। येऽत्र गणे गोत्रप्रत्ययान्ताः पठ्यन्ते वैल्यादयः तेभ्यः सामर्थ्याद्यूनि प्रत्ययः। वैल्यः। वृद्धेत्कोसलेति(४।१।१७१)ञ्यङन्तः। विलिर्नाम राजर्षिः। आनडुह्यः। गर्गादियञन्तः। आत्रेयः। इतश्चानिञ(४।१।१२२)इति ढगन्तः॥

भार्गात्त्रैगर्ते ॥ १११ ॥

भर्गशब्दात् त्रैगर्ते अपत्यविशेषगोत्रे फञ् स्यात्। भार्गायणः। त्रैगर्ते किम्। भार्गिरन्यः॥

शिवादिभ्योऽण् ॥ ११२ ॥

गोत्र इति निवृत्तम्। एभ्योऽपत्ये अण् स्यात्। इञादीनामपवादः। शैवः। तक्षन्शब्दोऽत्र पठ्यते। कारिलक्षणमुदीचामि-

अ(४।१।१५३) बाधितुम्। ण्यस्तु भवत्येव। ताक्षण्यः। गङ्गाशब्दस्य तिकादिफिञा शुभ्रादिढका च समावेशार्थं पाठः। गाङ्गः। गाङ्गायनिः। गाङ्गेयः॥

अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ॥११३॥

नदीमानुषीनामभ्योऽवृद्धाभ्योऽपत्ये अण् स्यात्। ढकोऽपवादः। यमुनाया अपत्यं यामुनः। इरावत्या ऐरावतः। नार्मदः। मानुषीभ्यः। चिन्तिताया अपत्यं चैन्तितः। शैक्षितः। अवृद्धाभ्यः किम्। चान्द्रभाग्या अपत्यं चान्द्रभागेयः। वासवदत्तेयः। नदीमानुषीभ्यः किम्। सौपर्णेयः। तन्नामिकाभ्यः किम्। शोभनाया अपत्यं शौभनेयः॥

ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥ ११४ ॥

ऋष्यादिभ्योऽपत्ये अण् स्यात्। ऋषयो वसिष्ठादयः प्रसिद्धाः। अन्धकादयस्तु वंशाख्यया। वासिष्ठः। वैश्वामित्रः। अन्धक। श्वाफल्कः। रान्धसः। वृष्णि। वासुदेवः। आनिरुद्धः। कुरु। नाकुलः। साहदेवः। मध्येऽपवादन्यायेन इञ एवायमपवादः। अत्र्यादिभ्यस्तु ढगादयः परत्वात् स्युरेव। आत्रेयः। इतश्चानिञ(४।१।१२२) इति ढक्। जातसेनो नाम ऋषिः। तस्मात् सेनान्तलक्षणो ण्यः। जातसेन्यः। उदीचामिञ्(४।१।१५३) जातसेनिः। उग्रसेनो नामान्धकः। औग्रसेन्यः। विष्वक्सेनो नाम वृष्णिः। वैष्वक्सेन्यः। भीमसेनो नाम कुरुः। भैमसेन्यः॥

मातुरुत्संख्यासम्भद्रपूर्वायाः ॥ ११५ ॥

सङ्ख्यादिपूर्वाया मातुरपत्येऽण् स्यादुच्चान्तादेशः। द्वैमातुरः। षाण्मातुरः। सांमातुरः। भाद्रमातुरः। स्त्रीलिङ्गनिर्दे-

शादिह न । संमिमीतेऽसौ संमाता तस्यापत्यं सांमात्रः ॥

कन्यायाः कनीन च ॥ ११६ ॥

कन्याया अपत्ये अण् स्यात् कनीनादेशश्च । कानीनः कर्णः ॥

विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ॥ ११७ ॥

विकर्णादिभ्यो यथासङ्ख्यं वात्स्यादिष्वपत्येष्वण् स्यात् । वैकर्णो वात्स्यः । वैकर्णिरन्यः । शौङ्गो भारद्वाजः । शौङ्गिरन्यः । छागल आत्रेयः । छागलिरन्यः । शुङ्गशब्दमन्ये स्त्रीलिङ्गं पठन्ति सूत्रे । तत्र शौङ्गेय इति प्रत्युदाहरणम् ॥

पीलाया वा ॥ ११८ ॥

तन्नामिकाणो बाधको द्व्यचः(४।१।१२१)इति ढक् । तस्मिन्प्राप्ते पक्षे अण् विधीयते । पैलः । पैलेयः ॥

ढक् च मण्डूकात् ॥ ११९ ॥

अस्मात् ढक् चादण् च । तेन त्रैरूप्यम् । माण्डूकेयः । माण्डूकः । माण्डूकिः ॥

स्त्रीभ्यो ढक् ॥ १२० ॥

स्त्रीप्रत्ययान्तेभ्योऽपत्ये ढक् स्यात् । सौपर्णेयः । वैनतेयः । प्रत्ययग्रहणादिह न । ऐडविडः । पृथा । पार्थः । उशिक् । औशिजः । दरत् । दारदः । शुभ्रादित्वाद्भ्रमावेयः । तैखाभ्रेयः ॥

वडवाया वृषे वाच्ये ॥

वडवाया वृषः वाडवेयः । अपत्ये अणेव । वाडवः ॥

अण् क्रुञ्चाकोकिलात् स्मृतः ॥

कुञ्जाया अपत्यं कौञ्जः । कौकिलः । ढकोऽपवादः ॥

द्व्यचः ॥ १२१ ॥

द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक् स्यात् । तन्नामिकाणोऽपवादः । दत्ताया अपत्यं दात्तेयः । गौप्तेयः । द्व्यचः किम् । यामुनः ॥

इतश्चानिञः ॥ १२२ ॥

स्त्रीभ्य इति निवृत्तम् । इकारान्तादनिञन्तात् द्व्यचोऽपत्येऽर्थे ढक् स्यात् । आत्रेयः । इतः किम् । दाक्षिः । अनिञः किम् । दाक्षायणः । द्व्यचः किम् । मरीचेरपत्यं मारीचः ॥

शुभ्रादिभ्यश्च ॥ १२३ ॥

एभ्योऽपत्ये ढक् स्यात् । यथायोगमिञादीनामपवादः । शौभ्रेयः । आकृतिगणोयम् । तेन पाण्डवेयः गाङ्गेयः इत्यादि ॥

विकर्णकुषीतकात्काश्यपे ॥ १२४ ॥

आभ्यां काश्यपेऽपत्यविशेषे ढक् स्यात् । वैकर्णेयः । कौषीतकेयः । काश्यपे किम् । वैकर्णिः । कौषीतकिः ॥

भ्रुवो वुक् च ॥ १२५ ॥

भ्रुवोऽपत्ये ढक् स्यात् वुक् चागमः । भ्रौवेयः ॥

कल्याण्यादीनामिनङ् ॥ १२६ ॥

एषामपत्ये ढक् स्यादिनङ् चादेशः । काल्याणिनेयः । सौभागिनेयः ॥

## कुलटाया वा ॥ १२७ ॥

कुलान्यटतीति निपातनात्पररूपम् । अस्या अपत्ये ढक् स्यादिनङ् चादेशो वा स्यात् । कौलटिनेयः । कौलटेयः । या सुशीलापि भिक्षादिलिप्सया कुलान्यटति तस्या इह ग्रहणम् । दुश्शीलायास्तु क्षुद्राभ्यो वेति(४।१।१३१) परत्वात् भवत्येव । कौलटेरः ॥

## चटकाया ऐ(कादै)रक् ॥ १२८ ॥

अस्मादैरक् स्यादपत्ये । चटकायाश्चटकस्य वा अपत्यं चाटकैरः ॥

लुक् स्त्रियाम् ॥

चटकायाश्चटकस्य वा अपत्यं स्त्री चटका ॥

## गोधाया ढ्रक् ॥ १२९ ॥

अस्या अपत्ये ढ्रक् स्यात् । गौधेरः । शुभ्रादित्वाद्गौधेयः ॥

## आरगुदीचाम् ॥ १३० ॥

गोधाया अपत्ये आरक्वा स्यात् । गौधारः । रकैव सिद्धे आरक्करणादन्यत्रापि । जाडारः । पाण्डारः ॥

## क्षुद्राभ्यो वा ॥ १३१ ॥

शीलहीनां अङ्गहीना च क्षुद्रा । क्षुद्राभ्योपत्ये ढ्रक् वा स्यात् । ढकोपवादः । दासेरः । दासेयः । काणेरः । काणेयः ॥

## पितृष्वसुश्छण् ॥ १३२ ॥

अस्मादपत्ये छण् स्यात् । अणोऽपवादः । पैतृष्वस्रीयः ॥

ढकि लोपः ॥ १३३ ॥

पितृष्वसुरन्त्यलोपः स्यात् ढकि । अत एव ज्ञापकाद्ढक् । पैतृष्वसेयः ॥

मातृष्वसुश्च ॥ १३४ ॥

छण् ढग्लोपश्च । मातृष्वस्रीयः । मातृष्वसेयः ॥

चतुष्पाद्भ्यो ढञ् ॥ १३५ ॥

चतुष्पाद्वाचकादपत्ये ढञ् स्यात् । अणाद्यपवादः । कामण्डलेयः । शौ(शौं)तिवाहेयः । जांववेयः ॥

गृष्ट्यादिभ्यश्च ॥ १३६ ॥

एभ्योऽपत्ये ढञ् स्यात् । गार्ष्टेयः । कौक्षे(द्रे)यः । अचतुष्पचाद्र्नोऽत्र गृष्टिः ॥

राजश्वशुराद्यत् ॥ १३७ ॥

आभ्यामपत्ये यत् स्यात् । राजन्यः । श्वशुर्यः ॥

राज्ञोऽपत्ये जाताविष्टिः ॥

राजनोन्यः । वैश्यः शूद्रो वा ॥

क्षत्राद्घः ॥ १३८ ॥

अपत्ये । क्षत्रियः ॥ जाताविष्टिः । क्षात्रिरन्यः ॥

कुलात्खः ॥ १३९ ॥

कुलात्तदन्ताच्चापत्ये खः स्यात् । कुलीनः । आढ्यकुलीनः । उत्तरसूत्रे पूर्वपदप्रतिषेधात्तदन्तविधिरत्र लभ्यते ॥

अपूर्वपदादन्यतरस्यां यड्ढकञौ ॥ १४० ॥

अविद्यमानपूर्वपदात्कुलादपत्ये एतौ वा स्तः । पक्षे खोऽपि । कुल्यः । कौलेयकः । कुलीनः । पदग्रहणात् बहुच्पूर्वात् स्यादेव । बहुकुल्यः । बाहुकुलेयकः । बहुकुलीनः ॥

महाकुलादञ्खञौ ॥ १४१ ॥

खश्च । माहाकुलः । महाकुलीनः । माहाकुलीनः ॥

दुष्कुलाड्ढक् ॥ १४२ ॥

खश्च । दौष्कुलेयः । दुष्कुलीनः ॥

स्वसुश्छः ॥ १४३ ॥

स्वसुरपत्यं स्वस्रीयः ॥

भ्रातुर्व्यच्च ॥ १४४ ॥

भ्रातृव्यः । चाच्छः । भ्रात्रीयः ॥

व्यन् सपत्ने ॥ १४५ ॥

भ्रातुर्व्यन् स्यात्सपत्ने । शत्रुपर्यायः सपत्नशब्दः । अपत्यमिति न संबध्यते । भ्रातृव्यः शत्रुः । भगवता तु अपत्ये सपत्ने प्रत्ययमङ्गीकृत्यैव पाप्मना भ्रातृव्येणेत्यादौ उपमानात्प्रयोग उक्तः ॥

रेवत्यादिभ्यष्ठक् ॥ १४६ ॥

एभ्योपत्ये ठक् स्यात् । ढगाद्यपवादः । रैवतिकः । आश्वपालिकः ॥

## गोत्रस्त्रियाः कुत्सने ण च ॥ १४७ ॥

पारिभाषिकमत्र गोत्रम्। गोत्रं या स्त्री तदभिधायिनोऽपत्ये णः स्यात् चात् ठक् कुत्सने गम्ये। पितुरसंविज्ञाने मातृव्यपदेशोऽपत्यस्य कुत्सा। गार्ग्या अपत्यं गार्गो जाल्मः। गार्गिकः। गोत्रग्रहणं किम्। कारिकेयो जाल्मः। स्त्रियाः किम्। औपगविर्जाल्मः। कुत्सने किम्। गार्गेयो माणवकः। मातामहादेरुपलालयतोयं प्रयोगः इति नास्त्यत्र कुत्सा॥

## वृद्धाट्ठक् सौवीरेषु बहुलम् ॥ १४८ ॥

सौवीरगोत्रप्रत्ययान्तात् वृद्धादपत्ये ठक् स्यात् वा कुत्सने गम्ये। भागवित्तेरपत्यं भागवित्तिकः। पक्षे यञिञो-श्चेति(४।१।१०१) फक्। भागवित्तायनः। तार्णविन्दवस्यापत्यं तार्णविन्दविकः। तार्णविन्दविः। आकशापात्। शुभ्रादित्वात् ठक्। तस्यापत्यं आकशापेयिकः। आकशापेयिः। वृद्धात्किम्। पूर्वसूत्रे गोत्रग्रहणं स्त्रीविशेषणमिति तन्निवृत्त्यर्थम्। सौवीरेषु किम्। औपगविर्माणवकः॥

## फेश्छ च ॥ १४९ ॥

फिञन्तात्सौवीरगोत्रादपत्ये छः स्यात् ठक् च कुत्सने गम्ये। यमुन्दस्यापत्यं यामुन्दायनिः। तिकादिभ्यः फिञ्(४।१।१५४)। तस्यापत्यं यामुन्दायनीयः। यामुन्दायनिकः। कुत्सने किम्। यामुन्दायनिः। फिञन्तादौत्सर्गिकस्याणो ण्यक्षत्रियार्षे(२।४।५८)ति लुक्। सौवीरेषु किम्। यामुन्दायनिः। अत्र यमुन्दश्च सुयामा च वार्ष्यायणि फिञः स्मृता इति वृत्तौ परिगणितम्। तत् भाष्यकारासम्मतमिति यूनि लुगि(४।१।९०) ति सूत्रे कैयटः॥

## फांटाहृतिमिमताभ्यां णफिञौ ॥ १५० ॥

कुत्सन इति निवृत्तम्। आभ्यां सौवीरगोत्रे वर्तमानाभ्यामपत्ये यथाक्रमं णफिञौ स्तः। फकोपवादः। फांटाहृतः। मैमतायनिः। केचित्तु यथासङ्ख्यं नेच्छन्ति। फांटाहृतायनिः। मैमतः। तत् भगवता नोक्तम्। सौवीरेषु किम्। फांटाहृतायनः। यञिञोश्चेति(४।१।१०१) फक्। मैमतायनः। मिमतशब्दो नडादिः॥

## कुर्वादिभ्यो ण्यः ॥ १५१ ॥

सौवीरेष्विति निवृत्तम्। एभ्योऽपत्ये ण्यः स्यात्। कौरव्यः। गार्ग्यः। कुरुशब्दात् कुरुनादेर्ण्यस्य तद्राजत्वात् बहुषु लुक्। इदं तु श्रूयते। कौरव्याः। तिकादित्वात्। कौरव्यायणिः॥

वामरथशब्दस्य कण्वादिवत्कार्यमिष्यते स्वरं वर्जयित्वा॥

यञञोश्चेति(२।४।६४) लुक्। वामरथः। यञश्च(४।१।१६)। प्राचां ष्फ तद्धितः(४।१।१७)। वामरथा वामरथ्यायनी स्त्रीत्यादि। स्वरस्तु प्रत्ययस्यैव॥

## सेनान्तलक्षणकारिभ्यश्च ॥ १५२ ॥

सेनान्ताल्लक्षणात्कारिवाचकाच्चापत्ये ण्यः स्यात्। कारिशब्दः कारूणां तन्तुवायादीनां वाचकः। कारिषेण्यः। हारिषेण्यः। लाक्षण्यः। कारिभ्यः। तान्तुवाय्यः। नापित्यः प्राचाम्। उदीचां तु परत्वात् उदीचां वृद्धादिति(४।१।१५७) फिञेव। नापितायनिः॥

उदीचामिञ् ॥ १५३ ॥

सेनान्तलक्षणकारिभ्योऽपत्ये इञ् वा स्यात् । हारिषेणिः । पौरु(कारि)षेणिः । लाक्षणिः । तान्तुवायिः । तक्षन् शब्दः शिवादिः । तेनाण् इञा वाध्यते । न तु ण्यः । ताक्ष्णः । षपूर्वहन्धृतराज्ञामणी(६।४।१३५)त्यल्लोपः । ताक्षण्यः । ये चाभावकर्मणो(६।४।१६८)रिति प्रकृतिभावः ॥

तिकादिभ्यः फिञ् ॥ १५४ ॥

एभ्योऽपत्ये फिञ् स्यात् । तैकायनिः । कैतवायनिः । क्षत्रियवाचकस्य कौरव्यशब्दस्य कुरुनादिण्यन्तस्येह पाठः । कौरव्यायणिः । यस्तु कुर्वादिण्यन्तस्तस्मादिञेव । तस्य ण्यक्षत्रियार्षे(२।४।५८)ति लुक् । कौरव्यः पिता । कौरव्यः पुत्रः ॥

कौसल्यकार्मार्याभ्यां च ॥ १५५ ॥

आभ्यामपत्ये फिञ् स्यात् । कोसलस्यापत्यं कौसल्यायनिः । यो निपातनात् । कर्मारस्यापत्यं कार्मार्यायणिः । यकारः पूर्ववत् ॥

दगुच्छागवृषाणां युट् च ॥

दागव्यायनिः । छाग्यायनिः । वार्ष्यायणिः ॥

अणो द्व्यचः ॥ १५६ ॥

अणन्ताद् द्व्यचोऽपत्ये फिञ् स्यात् । इञोऽपवादः । कार्त्रायणिः । हार्त्रायणिः । अणः किम् । दाक्षायणः । द्व्यचः किम् । औपगविः ॥

उदीचां वृद्धादगोत्रात् ॥ १५७ ॥

वृद्धं यदगोत्रं तस्मादपत्ये फिञ् वा स्यात् । आम्रगु-

म्नायनिः । नापितायनिः । प्राचामग्रग्रुप्तिः । वृद्धात्किम् । याज्ञदत्तिः । वा नामधेयस्य वृद्धसंज्ञे(१।१।७३)ति पक्षे याज्ञदत्तायनिः । अगोत्रात्किम् । औपगविः ॥

## वाकिनादीनां कुक् च ॥ १५८ ॥

एभ्योऽपत्ये फिञ् स्यात्तेषां कुक् च । वाकिनकायनिः ॥ चर्मिवर्मिणोर्नलोपश्च ॥ चार्मिकायणिः । वार्मिकायणिः । चर्मवर्मशब्दौ व्रीह्यादी । उदीचामित्येव । वाकिनिः । वचनं वाकः । सोऽस्यास्तीति वाकिनः । पृषोदरादित्वात्साधुः बर्हिणवत् ॥

## पुत्रान्तादन्यतरस्याम् ॥ १५९ ॥

उदीचां वृद्धा(४।१।१५७)दिति यत्र फिञ् तस्मिन् परतः पुत्रान्तस्य प्रातिपदिकस्य कुग्वा स्यात् । तेन त्रैरूप्यम् । गार्गीपुत्रकायणिः । गार्गीपुत्रायणिः । गार्गीपुत्रिः ॥

## प्राचामवृद्धात्फिन् बहुलम् ॥ १६० ॥

अवृद्धादपत्ये फिन् वा स्यात् । ग्लुचुकायनिः । म्लुचुकायनिः । ग्लौचुकिः । म्लौचुकिः । बहुलग्रहणात् दाक्षिः प्लाक्षिरित्यत्र न ॥

## मनोर्जातावञ्यतौ षुक् च ॥ १६१ ॥

मनोरेतौ स्तः षुक् च समुदायेन चेज्जातिर्गम्यते । मानुषः । मनुष्यः । जातौ किम् । अपत्ये त्वणेव । मानवः ॥

वालके णत्वं च ॥

माणवकः ॥

अपत्यं पौत्रप्रभृति गोत्रम् ॥ १६२ ॥

पौत्रप्रभृत्यपत्यं गोत्रसंज्ञं स्यात् । गार्ग्यः । वात्स्यः । पौत्रप्रभृति किम् । अनन्तरे गार्गिः ॥

जीवति तु वंश्ये युवा ॥ १६३ ॥

वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञं स्यात् न गोत्रसंज्ञम् । गार्ग्यायणः । वात्स्यायनः ॥

भ्रातरि च ज्यायसि ॥ १६४ ॥

ज्येष्ठभ्रातरि जीवति वंश्ये पित्रादौ मृतेपि पौत्रादिरपत्यं कनीयान् युवसंज्ञः स्यात् । गार्ग्ये जीवति पित्रादौ मृतेपि कनीयान् गार्ग्यायणः । वात्स्यायनः ॥

वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ॥ १६५ ॥

भ्रातुरन्यस्मिन्सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवद्युवसंज्ञं वा स्यात् । पितृव्यादौ जीवति गार्ग्यस्यापत्यं गार्ग्यायणः । गार्ग्यः । तरप् ग्रहणं किम् । वयसा स्थानेन चोत्कृष्टे यथा स्यात् । नेह । स्थानवयोन्यूने सपिण्डे जीवति गार्ग्यः । जीवतिग्रहणद्वयं किम । मृते मृतो वा गार्ग्यः ॥

वृद्धस्य च पूजायाम् ॥ १६६ ॥

अपत्यमन्तर्हितं वृद्धमिति गोत्रं वृद्धमित्युच्यते । वृद्धस्य युवसंज्ञा वा स्यात् पूजायाम् । तत्र भवन्तो गार्ग्यायणाः । गार्ग्या वा । पूजायां किम् । गार्ग्यः ॥

यूनश्च कुत्सायाम् ॥ १६७ ॥

यूनः कुत्सायां वा युवसंज्ञा स्यात् । गार्ग्यायणः गार्ग्यो

वा जाल्मः । यूनि गोत्रत्वारोपणमेव कुत्सा । कुत्सायां किम् । गार्ग्यायणः । इदं सूत्रद्वयं वृद्धस्य च पूजायां यूनश्च कुत्सायामिति वार्तिकस्थं सूत्रे प्रक्षिप्तम् ॥

जनपदशब्दात् क्षत्रियादञ् ॥ १६८ ॥

जनपदसमानशब्दात् क्षत्रियवाचिनः अपत्ये अञ् स्यात् । पाञ्चालः । वैदेहः । पञ्चालादयः शब्दाः जनपदे क्षत्रिये च रूढाः । जनपदशब्दात् किम् । द्रुह्योरपत्यं द्रौह्यवः । क्षत्रियात्किम् । विदेहो नाम ब्राह्मणस्तस्यापत्यं वैदेहिः ॥

क्षत्रियसमानशब्दात् जनपदात्तस्य राजन्यपत्यवत् ॥ पञ्चालानां राजा पाञ्चालः ॥

पुरोरण् ॥

पुरोरपत्यं पौरवः ॥

पाण्डोर्ड्यण् ॥

पाण्ड्यः । विशिष्टशब्दविचारणेन यो विधिः स न यादृच्छिकेष्विति बाह्वादिसूत्रे उक्तत्वात् युधिष्ठिरादिपितुः पाण्डोः पाण्डव इत्येव भवति । अत एवास्मिन् सूत्रे क्षत्रियग्रहणमनर्थकं यादृच्छिकविदेहादिशब्दात् ब्राह्मणादिवाचिनः प्रसंगाभावादिति स्थितमाकरे ॥

साल्वेयगान्धारिभ्यां च ॥ १६९ ॥

जनपदशब्दात् क्षत्रियादित्येव । आभ्यामपत्ये अञ् स्यात् । वृद्धेत्कोसलादि(४।१।१७१)ञ्यङोऽपवादः । साल्वेयः । गान्धारः । तस्य राजनीत्येव । साल्वेयो राजा । गान्धारः ॥

द्व्यञ्मगधकलिङ्गसूरमसादण् ॥ १७० ॥

जनपदशब्दात् क्षत्रियादित्येव । द्व्यचो मगधादेश्चा-

पत्ये अण् स्यात् । अञोऽपवादः । आङ्गः । वाङ्गः । मागधः । कालिङ्गः । सौरमसः । तस्य राजन्यपि । आङ्गः ॥

वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥ १७१ ॥

जनपदशब्दात् क्षत्रियादित्येव । वृद्धादिदन्तात्कोसलादजादाच्चापत्ये ञ्यङ् स्यात् । अञोऽपवादः । आम्बष्ठ्यः । सौवीर्यः । इकारान्तात् । आवन्त्यः । कौसल्यः । आजाद्यः । इदिति तपरः किम् । कुमारी नाम जनपदक्षत्रियशब्दः । तस्यापत्यम् । कौमारः । तस्य राजनीत्येव । आम्बष्ठ्यो राजा ॥

कुरुनादिभ्यो ण्यः ॥ १७२ ॥

जनपदशब्दात् क्षत्रियादित्येव । कुरोर्नादिभ्यश्चापत्ये ण्यः स्यात् । अणञोरपवादः । कौरव्यः । नैषध्यः । नैषध इत्यत्र शेषविवक्षायामण् । तस्य राजनीत्येव । कौरव्यो राजा ॥

साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ॥ १७३ ॥

जनपदशब्दात् क्षत्रियादित्येव । साल्वा क्षत्रिया तन्नामिका। तस्या अपत्यम् । द्व्यच(४।१।१२१)इति ढक् । साल्वेयः । अणपीष्यते । साल्वः । तस्य निवासः । साल्वो जनपदः । तदवयवाः उदुम्बर तिलवि(ख)ल मद्रकार युगन्धर भु(भू)लिङ्ग शा(श)रदण्ड बुध अजमीढ अजकन्द इत्येवमादयः । साल्वावयवेभ्यः प्रत्यग्रथादिभ्यश्चापत्ये इञ् स्यात् । अञोऽपवादः । औदुम्बरिः । तैलवि(ख)लिरित्यादि । प्रात्यग्रथिः । कालकूटिः । आश्मकिः । तस्य राजनीत्येव । औदुम्बरी राजा ॥

## ते तद्राजाः ॥ १७४ ॥

जनपदशब्दात् क्षत्रियादञ्(४।१।१६८)आदयः तदा परामृश्यन्ते । ते अञादयस्तद्राजसंज्ञाः स्युः । बहुषु तद्राजस्ये-(२।४।६२)ति लुक् । पञ्चालाः । विदेहाः इत्यादि ॥

## कम्बोजाल्लुक् ॥ १७५ ॥

जनपदशब्दादिति विहितस्याञः कम्बोजाल्लुक् । कम्बोजः । तस्य राजनीत्येव । कम्बोजो राजा ॥

कम्बोजादिभ्य इति वाच्यम् ।

चोलः । कडरः(?) । केव(र)लः ॥

## स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ॥ १७६ ॥

एभ्यस्तद्राजस्य लुक् स्यात् स्त्रियाम् । अवन्तिकुन्तिभ्यां ञ्यङः । कुरोर्ण्यस्य । अवन्ती । कुन्ती । इतो मनुष्यजाते(४।१।६५)रिति ङीष् । कुरूः । स्त्रियां किम् । आवन्त्यः ॥

## अतश्च ॥ १७७ ॥

अकारप्रत्ययस्य तद्राजस्य लुक् स्यात् स्त्रियाम् । शूरसेनी । मद्री । माद्रीसुताविति त्वार्षम् । शैषिको वा ॥

## न प्राच्यभर्गादियौधेयादिभ्यः ॥ १७८ ॥

प्राच्येभ्यो भर्गादिभ्यो यौधेयादिभ्यश्चाकारप्रत्ययस्य न लुक् । पूर्वेण प्राप्तस्य निषेधः । प्राच्येभ्यः । पाञ्चाली । वैदेही । आङ्गी । वाङ्गी । भर्गादिभ्यः । भार्गी । काशे(कैके)यी । यौधेयादिभ्यः । युधाया अपत्यम् । द्व्यच(४।१।१२१)इति ढक् । ततः पर्श्वादियौधेयादिभ्यामणञा(५।३।११७)विति स्वा-

र्थिकोऽञ्। तस्य लुकि प्रतिषिद्धेऽञन्तत्वात् ङीन्(४।१।७३)। यौधेयी। शौभे(भ्रे)यी। शौक्रेयी। यौधेयादिभ्योऽञः अलुग्विधानं ज्ञापकं प्राग्दीव्यतीयस्यापि तद्राजस्यातश्चेत्यनेन लुगिति। तेन पर्श्वादिभ्योऽणः स्त्रियां लुक् सिद्धः। पर्शूः। पर्शोरपत्यम्। अञ्मगधे(४।१।१७०)त्यण्। तस्यातश्चे(४।१।१७७)ति लुकि पर्श्वादियौधेयादिभ्या(५।३।११७)मिति स्वार्थेऽण्। तस्यापि ज्ञापकेन लुक्। तत ऊङुतः(४।१।६६)। रक्षाः। रक्षःशब्दात् पूर्ववदण्द्वयस्य लुक्। असुरी। जनपदलक्षणस्याञो लुकि पर्श्वादिलक्षणस्य चाणः,जातिलक्षणो ङीष्॥

इति चतुर्थाध्यायस्य प्रथमः पादः॥



## तेन रक्तं रागात् ॥ १ ॥

शुक्लस्य वर्णान्तरापादनमिह रञ्जेरर्थः । तेनेति तृतीयासमर्थाद् रागविशेषवाचिभ्यः रक्तमित्यस्मिन्नर्थे यथास्वं प्रत्ययः स्यात् । इत्यण् । कषायेण रक्तः काषायः । माञ्जिष्ठः । रागात् किम् । देवदत्तेन रक्तं वस्त्रम् । काषायौ गर्दभस्य कर्णौ हारिद्रौ कुक्कुटस्य पादाविति तूपमानात् । द्वैपवैयाघ्रादञ्(४।२।१२)इति यावत् तृतीयाविभक्तिरनुवर्तते ॥

## लाक्षारोचनाशकलकर्दमाट्ठक् ॥ २ ॥

एभ्यो रागवाचिभ्यस्तृतीयासमर्थेभ्यो रक्तमित्यस्मिन्नर्थे ठक् स्यात् । अणोऽपवादः । लाक्षया रक्तं लाक्षिकम् । रौचनिकम् । शाकलिकम् । कार्दमिकम् ॥ शकलकर्दमाभ्यामणपीष्यते । शाकलम् । कार्दमम् ॥

नील्या अन्वाच्यः ॥

नील्या रक्तं नीलम् ॥

पितात्कन् ॥

पीतकम् ॥

हरिद्रामहारजनाभ्यामञ् ॥

हारिद्रम् । माहारजनम् ॥

## नक्षत्रेण युक्तः कालः ॥ ३ ॥

तृतीयासमर्थान्नक्षत्रविशेषवाचिनो युक्तमित्यस्मिन्नर्थे य-

थाविहितं प्रत्ययः स्याद्यो युक्तः स कालश्चेत् । पुष्येण युक्ता पौषी रात्रिः । पौषमहः । माघी रात्रिः । माघमहः । नक्षत्रेण किम् । चन्द्रमसा युक्ता रात्रिः । कालः किम् । पुष्येण युक्तः चन्द्रमाः । नक्षत्रकालयोश्चन्द्रद्वारको योगः । पुष्ययुक्तचन्द्रयुक्तत्वात् पुष्ययुक्तः । एवमन्यत्र ॥

## लुबविशेषे ॥ ४ ॥

अहोरात्रो नक्षत्रेण युज्यते । तत्राविशेषे गम्यमाने पूर्वोक्तप्रत्ययस्य लुप् स्यात् । अद्य पुष्यः । अविशेषे किम् । पौषी रात्रिः । पौषमहः । पौषोऽहोरात्र इत्यत्र विशेषस्य शब्देन उक्तत्वाल्लुबभावः । पुष्येण युक्ता पौषी पौर्णमासी माघीत्यादौ विभाषा फाल्गुनी(फाल्गुनी)(४।२।२३)त्यादिनिर्देशात् पौर्णमास्यां लुप् न । श्रवणशब्दात् श्रवणेति निर्देशात् भवति । अबाधकान्यपि निपातनानीति श्रावणीत्यपि साधुः ॥

## संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ५ ॥

आभ्यां प्रत्ययस्य लुप् स्याद्विशेषेऽपि संज्ञायाम् । श्रवणा रात्रिः । अश्वत्थो मुहूर्त्तः । विभाषा फाल्गुनीश्रवणेति(४।२।२३)निपातनात् लुपि युक्तवद्भावो न । संज्ञायां किम् । श्रावणी रात्रिः । आश्वत्थो मुहूर्त्तः ॥

## द्वन्द्वाच्छः ॥ ६ ॥

नक्षत्रद्वन्द्वात्तृतीयासमर्थाद्युक्ते काले छः स्यात् अविशेषे विशेषे च । अद्य राधानुराधीयम् । पुष्यपुनर्वसवीयम् । राधानुराधीया रात्रिः । पुष्यपुनर्वसवीयमहः । छस्य लुप् न ॥

दृष्टं साम ॥ ७ ॥

तृतीयासमर्थात् दृष्टमित्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् साम चेत् । वसिष्ठेन दृष्टं वासिष्ठं साम । वैश्वामित्रम् ॥

कलेर्ढक् ॥ ८ ॥

कलिना दृष्टं कालेयं साम ॥

प्राग्दीव्यतीयेषु सर्वत्राग्निकलिभ्यां ढग्वाच्यः ॥

अग्निना दृष्टं अग्नौ भवं अग्नेरागतं अग्निर्देवताऽस्येति वा आग्नेयम् । एवं कालेयम् ॥

दृष्टे सामनि अण् डिद्वा वाच्यः ॥

उशनसा दृष्टमौशनम् । औशनसम् ॥

जातेऽर्थे सन्धिवेलाद्यणपि वा डित् ॥

शतभिषजि जातः शातभिषः ॥

तीयादीकक् स्वार्थे वाच्यः ॥

द्वैतीयीकम् । तार्तीयीकम् । द्वितीयः । तृतीयः ॥

न विद्यायाः ॥

द्वितीया तृतीया वा विद्या ॥

दृष्टं सामेत्यस्मिन्नर्थे गोत्रादङ्कवत् प्रत्यय इष्यते ॥

औपगवेन दृष्टमौपगवकम् । गोत्रचरणाद्वुञ्(४।३।१२६) ॥

वामदेवाड्ड्यड्ड्यौ ॥ ९ ॥

वामदेवात् तृतीयासमर्थात् दृष्टं सामेत्यर्थे ड्यत् ड्य इत्येतौ स्तः । अणोऽपवादः । वामदेव्यम् । वामदेव्यम् । स्वरे भेदः । यस्ये(६।४।१४८)ति लोपेनैव सिद्धे डित्करणं ययतोर्ग्रहणे अनयोर्ग्रहणं माभूदित्येवमर्थम् ॥

परिवृतो रथः ॥ १० ॥

तृतीयासमर्थात् परिवृत इत्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् रथश्चेत् । वस्त्रेण परिवृतो वास्त्रो रथः । चार्मणः । रथः किम् । वस्त्रेण परिवृतः कायः । रथावयव एव । नेह । छात्रैः परिवृतो रथः ॥

पाण्डुकम्बलादिनिः ॥ ११ ॥

तृतीयासमर्थादस्मात् परिवृतो रथ इत्यर्थे इनिः स्यात् । अणोऽपवादः । पाण्डुकम्बली । पाण्डुकम्बलिनौ । पाण्डुकम्बलशब्दः गजाश्वा(राजा)स्तरणचर्मकम्बलवाचकः ॥

द्वैपवैयाघ्रादञ् ॥ १२ ॥

द्वीपव्याघ्राभ्यां विकारे चर्मणि प्राणिरजतादिभ्योऽञ्(४।३।१५४) । द्वैपवैयाघ्राभ्यां परिवृतो रथ इत्यर्थे अञ् स्यात् । स्वरे भेदः । द्वैपः । वैयाघ्रः ॥

कौमारापूर्ववचने ॥ १३ ॥

कौमार इत्यणंतं निपात्यते अपूर्ववचने ॥ स्त्रीपुंसयोरिदं निपातनमिष्यते ॥ उभयत्र स्त्रियाः पाणिग्रहणस्यापूर्वत्वे गम्ये प्रत्ययः । अपूर्वपतिं कुमारीमुपपन्नः कौमारः पतिः। कुमारीशब्दात् द्वितीयासमर्थादुपयन्तरि प्रत्ययः । अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी भार्या । प्रथमान्तात् स्वार्थे प्रत्ययः । कुमार्या भवः कौमारः पतिः तस्य स्त्री कौमारी भार्येति प्रयोगद्वयस्योपपत्तेः प्रत्याख्यातोयं योगः ॥

## तत्रोद्धृतममत्रेभ्यः ॥ १४ ॥

तत्रेति सप्तमीसमर्थादमत्रवाचिनः उद्धृतमित्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात्। भुक्तोच्छिष्टमुद्धृतमुच्यते। शरावे उद्धृतः शाराव ओदनः। अमत्रेभ्यः किम्। पाणा उद्धृतः। सप्तमीसमर्थविभक्तिः क्षीराड्ढञि(४।२।२०)ति यावदनुवर्तते ॥

## स्थण्डिलाच्छयितरि व्रते ॥ १५ ॥

स्थण्डिलशब्दात्सप्तमीसमर्थाच्छयितरि यथाविहितं प्रत्ययः स्यात्समुदायेन चेत् व्रतं गम्यते। स्थण्डिले शेते स्थाण्डिलो ब्रह्मचारी। व्रते किम्। स्थण्डिले शेते देवदत्तः ॥

## संस्कृतं भक्षाः ॥ १६ ॥

सप्तमीसमर्थात् संस्कृतमित्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् भक्षाश्चेद्वाच्याः स्युः। भ्राष्ट्रेषु संस्कृता भ्राष्ट्रा भक्षाः। सत उत्कर्षाधानं संस्कारः। भक्षाः किम्। पुष्पपुटे संस्कृतो माल्यगुणः। संस्कृतं भक्षा इति यावत् क्षीराड्ढञ्(४।२।२०) [तावत्]अनुवर्तते ॥

## शूलोखाद्यत् ॥ १७ ॥

अणोऽपवादः। शूले संस्कृतं मांसं शूल्यम्। उख्यम् ॥

## दध्नष्ठक् ॥ १८ ॥

दध्नि संस्कृत दाधिकम्। अत्र दधिरूपाधारे द्रव्यान्तरेण लवणादिना संस्कारे प्रत्यय इति न प्राग्वहतीयेन ठकाऽन्यथासिद्धिः ॥

## उदश्वितोऽन्यतरस्याम् ॥ १९ ॥

ठग्वा। उदश्विति संस्कृतमौदश्वित्कम्। औदश्वितम् ॥

## क्षीराड्ढञ् ॥ २० ॥

क्षीरे संस्कृतं क्षैरेयम् ॥

## सास्मिन्पौर्णमासीति संज्ञायाम् ॥ २१ ॥

सेति प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययः स्यात् प्रथमानिर्दिष्टं यत् सा पौर्णमासी चेत्संज्ञायाम्। मासार्धमाससंवत्सराणामियं संज्ञा। पौषी पौर्णमासी अस्मिन् पौषो मासोऽर्धमासः संवत्सरो वा। संज्ञायां किम्? पौषी पौर्णमासी अस्मिन् दशरात्रे। अत एव च भृतकमासे न भवति। पूर्णो मासो यस्यां तिथौ। अस्मादेव निपातनादण्। पौर्णमासी। पूर्णो माः पूर्णमाः पूर्णमास इयं पौर्णमासीति वा। माश्चन्द्रमाः। भीमो भीमसेन इतिवत् ॥

## आग्रहायण्यश्वत्थाट्ठक् ॥ २२ ॥

आभ्यां ठक् स्यादुक्तेऽर्थे। अणोऽपवादः। आग्रहायणिको मासः अर्धमासः संवत्सरो वा। एवमाश्वत्थिकः। अश्वत्थेन युक्ता पौर्णमासी अश्वत्थः। निपातनाल्लुप् ॥

## विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ॥ २३ ॥

एते पौर्णमासीवाचकाः शब्दाः। एभ्यः प्राग्विषये ठञ् स्यात्। पक्षे अण्। फाल्गुनी पौर्णमासी अस्मिन्फाल्गुनः फाल्गुनिको वा मासः। एवं श्रावणः। श्रावणिकः। कार्तिकः। कार्तिकिकः। चैत्रः। चैत्रिकः ॥

## सास्य देवता ॥ २४ ॥

सेति प्रथमासमर्थावस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात् यत्प्रथमानिर्दिष्टं सा चेद्देवता । इन्द्रो देवतास्य ऐन्द्रं हविः । आदित्यम् । बार्हस्पत्यम् । यागसंप्रदानं देवता । देवतेति किम् । कन्या देवदत्तस्य । ऐन्द्रो मन्त्र इत्यत्रापि मन्त्रस्तुत्यस्य देवतात्वात्सास्य देवतेत्येव सिद्धम् । आग्नेयो वै ब्राह्मण इत्यत्र तु सर्वत्राग्निकलिभ्यां ढक्(४।२।८वा) । उपमानाद्वा । महाराजप्रो-ष्ठपदाद् ठञि(४।२।३५)ति यावत् सास्य देवतेत्यधिकारः ॥

## कस्येत् ॥ २५ ॥

कशब्दादण् स्यादिकारश्चान्तादेशः स्यास्य देवतेत्यर्थे । विधिवल्लाघस्ये(६।४।१४८)ति लोपो न । को देवतास्य कायमे-ककपालम् । कायानुब्रूहीति प्रैषोक्त ॥

## शुक्राद्घन् ॥ २६ ॥

शुक्रो देवतास्य शुक्रियं हविः ॥

## अपोनप्त्रपांनप्तृभ्यां घः ॥ २७ ॥

अपोनपात् देवतास्य अपोनप्त्रियम् । अपांनपात् देव-तास्य अपांनप्त्रियं हविः । निपातनान्नप्तृभावः ॥

## छ च ॥ २८ ॥

अपोनप्त्रीयम् । अपांनप्त्रीयम् । योगविभागः सङ्ख्याता-नुदेशनिरासार्थः ॥

छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसङ्ख्यानम् ॥

पैङ्गाक्षीपुत्रीयम् । तार्णबिन्दवीयं हविः ॥

शतरुद्रात् घच्छौ च ॥

शतरुद्रियं शतरुद्रीयं हविः ॥

महेन्द्राद्घाणौ च ॥ २९ ॥

महेन्द्रो देवतास्य माहेन्द्रं महेन्द्रियम्। चात् छः। महेन्द्रीयम् ॥

सोमाट्ट्यण् ॥ ३० ॥

सोमो देवतास्य सौम्यं हविः। टित्त्वात् ङीप्। सौमी ऋक् ॥

वाय्वृतुपित्रुषसो यत् ॥ ३१ ॥

वायुर्देवतास्य वायव्यम्। ऋतव्यम्। पित्र्यम्। उषस्यम् ॥

द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृह-
मेधाच्छ च ॥ ३२ ॥

चाद्यत्। द्यौश्च पृथिवी च देवते अस्य द्यावापृथिवीयम्। द्यावापृथिव्यम्। शुनासीरीयम्। शुनासीर्यम्। शुनो वायुः। सीर आदित्यः। मरुत्वतीयम्। मरुत्वत्यम्। अग्नीषोमीयम्। अग्नीषोम्यम्। वास्तोष्पतीयम्। वास्तोष्पत्यम्। गृहमेधीयम्। गृहमेध्यम् ॥

अग्नेर्ढक् ॥ ३३ ॥

अग्निर्देवतास्य आग्नेयम् ॥

कालेभ्यो भववत् ॥ ३४ ॥

कालविशेषवाचिभ्यः भववत् प्रत्ययाः स्युः सास्य देवतेत्यर्थे। कालात् ठञ्(४।३।११)सादिना भवे ये विधास्यन्ते तेऽत्रापि

भवन्ति । मासे भवं मासिकम् । सांवत्सरिकम् । वासन्तम् । भाद्रपदम् । एवं मासो देवतास्येति मासिकमित्यादि ॥

महाराजप्रोष्ठपदाट्ठञ् ॥ ३५ ॥

महाराजो देवतास्य माहाराजिकम् । प्रौष्ठपदिकम् ॥

ठञ् प्रकरणे तदस्मिन् वर्तते इति नवयज्ञादिभ्य उपसङ्ख्यानम् ॥

नवयज्ञोऽस्मिन्वर्तत इति नावयज्ञिकः कालः । पाकयज्ञिकः ॥

पूर्णमासादण् ॥

पूर्णो मासोऽस्यां वर्तत इति पौर्णमासी तिथिः । सास्मिन्पौर्णमासी(४।२।२१)ति निपातनाद्वा अणिति तत्रैवोक्तम् ॥

पितृव्यमातुलमातामहपितामहाः ॥ ३६ ॥

एते निपात्यन्ते । पितृमातृभ्यां भ्रातरि व्यत् डुलच् । ताभ्यां पितरि डामहच् । मातरि पिच्च । तयोरानङ् च निपात्यते । पितुर्भ्राता पितृव्यः । मातुर्मातुलः । पितुः पिता पितामहः । मातुर्मातामहः । पितुर्माता पितामही । मातुर्मातामही ॥

अवेर्दुग्धे सोढदूसमरीसचः ॥

अवेर्दुग्धं अविसोढम् । अविदूसम् । अविमरीसम् ॥

तिलान्निष्फलात्पिञ्जपेजौ ॥

निष्प्रयोजनस्तिलस्तिलपिञ्जः । तिलपेजः ॥

पिञ्जश्छन्दसि डिच्च ॥

तिल्पिञ्जः ॥

तस्य समूहः ॥ ३७ ॥

तस्येति षष्ठीसमर्थात्समूहार्थे यथाविहितम् प्रत्ययः स्यात् । काकानां समूहः काकः । इनित्रकट्यचश्चे(४।२।५१) ति यावत्समूहाधिकारः ॥

भिक्षादिभ्योऽण् ॥ ३८ ॥

एभ्योऽण् स्यात्समूहे । अनुदात्तादेरञि(४।२।४४)त्यस्य बाधनार्थं पुनरणग्रहणम् । भिक्षाणां समूहो भैक्षम् । भिक्षादिषु-युवतिशब्दपाठसामर्थ्यात् भस्याढे तद्धित(६।३।३५वा) इति पुंवद्भावो न । युवतीनां समूहो यौवतम् । भगवता पुंवद्भाव एवेष्टः । पाठश्चानर्थक इत्युक्तमाकरे ॥

गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्॥३९॥

एभ्यो वुञ् स्यात्समूहे । अपत्याधिकारादन्यत्र लौकिकं गोत्रमपत्यमात्रं गृह्यते । औपगवानां समूह औपगवकम् । उक्ष्णां समूह औक्षकम् । औष्ट्रकम् । राजकम् । राजन्यकम् । राजपुत्रकम् । वात्सकम् । मानुष्यकम् । आजकम् ॥

वृद्धाच्च ॥

वृद्धानां समूहो वार्धकम् ॥

केदाराद्यञ्च ॥ ४० ॥

कैदार्यम् । कैदारकम् ॥

गणिकायाश्च यञ् ॥

गाणिक्यम् ॥

ठञ् कवचिनश्च ॥ ४१ ॥

कवचिनां समूहः कावचिकम् । चात्केदाराच्च । कैदारिकम् ॥

ब्राह्मणमाणववाडवाद्यन् ॥ ४२ ॥

ब्राह्मणानां समूहो ब्राह्मण्यम् । माणव्यम् । वाडव्यम् ॥

पृष्ठाच्च ॥

पृष्ठानां समूहः पृष्ठ्यः षडहः ॥

अह्नः खः क्रतौ ॥

अह्नां समूहः अहीनः । क्रतौ किम् । आह्नम् । खण्डिकादित्वादञ् ॥

पर्श्वा णस् ॥

पर्शूनां समूहः पार्श्वम् । पदत्वादोर्गुणाभावः ॥

ग्रामजनबन्धुसहायेभ्यस्तल् ॥ ४३ ॥

तलन्तं स्त्रीलिङ्गम् । ग्रामाणां समूहः ग्रामता । जनता । बन्धुता । सहायता ॥

गजाच्च ॥

गजता ॥

अनुदात्तादेरञ् ॥ ४४ ॥

कपोतानां समूहः कापोतम् । मायूरम् । तैत्तिरम् ॥

खण्डिकादिभ्यश्च ॥ ४५ ॥

अञ् स्यात्समूहे । आद्युदात्तार्थम् अचित्तार्थं च वचनम् ।

खण्डिकानां समूहः खाण्डिकम् । वाडवम् ॥ क्षुद्रकमालवात्सेनासंज्ञायाम् ॥ क्षुद्रकस्यापत्यानि बहूनि । जनपदशब्दा-(४।१।१६८)दिति विहितस्याञो लुक् । मालवात्तु वृद्धलक्षणस्य ञ्यङः(४।१।१७१)। क्षुद्रकाश्च मालवाश्चेति क्षत्रियद्वन्द्वः । तेषां समूहः क्षौद्रकमालवी सेना । सेनायां किम् । क्षौद्रकमालवकमन्यत् । अत्र समासान्तोदात्तत्वे शेषनिघाते चानुदात्तादे(४।२।४४)रित्येवाञि सिद्धे ज्ञापकार्थं पाठः । पूर्वोऽपि गोत्रलक्षणो वुञ् परमञं बाधते, सामूहिकेषु च तदन्तविधिरिति द्वयं ज्ञाप्यते । औपगवकम् । वुञ् भवति पूर्वविप्रतिषेधेन । गौधेनुकम् । तदन्तविधिना ठक् ॥

## चरणेभ्यो धर्मवत् ॥ ४६ ॥

चरणशब्दाः कठकलापादयः । तेभ्यः समूहे धर्मवत् प्रत्ययाः स्युः । यद्यपि चरणेभ्यो धर्मे न कोपि प्रत्ययो विहितः तथापीदमेव धर्मवद्ग्रहणं लिङ्गं गोत्रचरणाद्वुञ(४।३।१२६)-स्त्यादयो धर्मेपि भवन्तीति । कठानां धर्मः काठकम् । कालापकम् । छान्दोग्यम् । आथर्वणम् । तेषां समूहः काठकमित्यादि ॥

## अचित्तहस्तिधेनोष्ठक् ॥ ४७ ॥

अचित्तार्थेभ्यः हस्तिधेनुभ्यां च ठक् स्यात्समूहे । अणञोरपवादः । अपूपानां समूहः आपूपिकम् । शाष्कुलिकम् । हास्तिकम् । धैनुकम् ॥

अधेनोरञ् ॥

आधेनवम् ॥

## केशाश्वाभ्यां यञ्छावन्यतरस्याम् ॥ ४८ ॥

आभ्यां यथाक्रमेतौ वा स्तः समूहे । कैश्यम् । कैशिकम् ।

अश्वीयम् । आश्वम् ॥

## पाशादिभ्यो यः ॥ ४९ ॥

यप्रत्ययान्तं स्त्रीलिङ्गम् । पाशानां समूहः पाश्या । पद्या । घास्या । शकव्या इत्यादि ॥

## खलगोरथात् ॥ ५० ॥

यः । खलानां समूहः खल्या । गव्या । रथ्या । योगविभाग उत्तरार्थः ॥

## इनित्रकट्यचश्च ॥ ५१ ॥

खलगोरथाद्यथासङ्ख्यमेते स्युः समूहे । एतेपि स्वाभाव्यात् स्त्रियामेव । खलिनी । गोत्रा । रथकट्या ॥

खलादिभ्य इनिर्वाच्यः ॥

खलिनी । डाकिनी । कुटुम्बिनी । आकृतिगणोऽयम् ॥

## त्रिषयो देशे ॥ ५२ ॥

समूह इति निवृत्तम् । तस्येत्यनुवर्तते । षष्ठीसमर्थाद्विषय इत्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्याद्देशश्चेत् । शिवीनां विषयः शैवो देशः । देशे किम् । देवदत्तस्य विषयोऽनुवाकः । अत्रायं सिद्धान्तसङ्ग्रहः । जनपदलक्षणस्याभिधेयस्याङ्गादिसम्बन्धिनो निवासरूपत्वं विषयरूपत्वं चास्ति । तत्रैकस्योभयरूपत्वात् । प्रयोगवशादङ्गादौ निवासविवक्षैव । तथा च जनपदे लुबि-(४।२।८०)ति लुप् । अङ्गानां निवासः अङ्गाः । वङ्गाः । सुम्हाः । पुंड्रा इति । गान्धार्यादिषु राजन्यादिषु च पर्यायेणोभयविवक्षा । गान्धारीणां विषयो गान्धारः । निवासो गान्धारयः । व-

सातीनां विषयो वासातः । निवासो वसातयः । शिवीनां विषयः शैवः। निवासः शिवयः। राजन्यादिष्वपि। राजन्यानां विषयः राजन्यकम्। निवासो राजन्याः।दैवयातवाः। दैवयातवकः। वैल्ववनादिषु विषयविवक्षैव । वैल्ववनकम्। आम्बरीषपुत्रकम्। आत्मकामेयमित्यादि । उत्तरसूत्रस्थमपीह प्रसङ्गादुदाहृतम्। एतत्सर्वमभिधानस्वाभाव्याल्लभ्यम्। विशेषस्त्वाकं(?)॥

राजन्यादिभ्यो वुञ् ॥ ५३ ॥

विषयो देश इत्यस्मिन्विषये । राजन्यानां विषयो राजन्यकः। दैवयातकः । आकृतिगणोऽयम् । विशेषस्तूक्तः पूर्वसूत्रे ॥

भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥ ५४ ॥

भौरिक्यादिभ्य ऐषुकार्यादिभ्यश्च यथासङ्ख्यं विधल् भक्तल् एतौ स्तः विषयो देश इत्यस्मिन्नर्थे। भौरिकिविधम्। ऐषुकारिभक्तम्। चान्द्रायणभक्तमित्यादि॥

सोऽस्यादिरितिच्छन्दसः प्रगाथेषु ॥ ५५ ॥

छन्दश्शब्देनाक्षरेयत्तावाचिनो गायत्र्यादेः शब्दस्य ग्रहणम् । स इति प्रथमासमर्थाच्छन्दोवाचिनः आदिभूतादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात् प्रगाथश्चेत् षष्ठ्यर्थः। इतिकरणाद्यमर्थः। पङ्क्तिरादिरस्य प्रगाथस्य पाङ्क्तः प्रगाथः। आनुष्टुभः। जागतः। आदिः किम् । अनुष्टुप् मध्यमस्य प्रगाथस्य। छन्दसः किम्। उदुत्यशब्दः आदिरस्य प्रगाथस्य। प्रगाथेषु किम् । पङ्क्तिरादिरस्यानुवाकस्य । प्रगाथशब्दः क्रियानिमित्तकः क्वचिदेव मन्त्रविशेषे वर्तते ॥

छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थ उपसङ्ख्यानम् ॥ त्रिष्टुबेव त्रैष्टुभम्। आनुष्टुभम्। जागतम् ॥

## संग्रामे प्रयोजनयोद्धृभ्यः ॥ ५६ ॥

प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमासमर्थेभ्यः अस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात्संग्रामश्चेत् षष्ठ्यर्थः। सुभद्रा प्रयोजनमस्य संग्रामस्य सौभद्रः। गौरिमित्रः संग्रामः। योद्धृभ्यः। अहिमाला योद्धारोऽस्य संग्रामस्य आहिमालः। भारतः। प्रयोजनयोद्धृभ्यः किम्। सुभद्रा प्रेक्षिकाऽस्य संग्रामस्य ॥

## तदस्यां प्रहरणमिति क्रीडायां णः ॥ ५७ ॥

तदिति प्रथमासमर्थात् प्रहरणवाचिनः अस्यां क्रीडायामित्यर्थे णः स्यात्। इतिकरणो(!) विवक्षार्थः। दण्डः प्रहरणमस्यां क्रीडायां दाण्डा। मौष्टा। प्रहरणं किम्। माला भूषणमस्यां क्रीडायाम्। क्रीडायां किम्। खड्गः प्रहरणमस्यां सेनायाम् ॥

## घञः सास्यां क्रियेति ञः ॥ ५८ ॥

प्रथमासमर्थात्क्रियावाचिनो घञन्तादस्यामित्यर्थे ञः स्यात्। अस्यामिति स्त्रीत्वं विवक्षितम् ॥ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ श्येनपातोऽस्यां वर्तते श्यैनंपाता मृगया। तैलंपाता। श्येनतिलस्य पाते ञ(६।३।७१) इति मुम्। घञः किम्। श्येनपतनमस्याम्। क्रिया किम्। प्राकारोऽस्याम्। अक्रीडायामप्ययं विधिः ॥

तदधीते तद्वेद ॥ ५९ ॥

तद्विति द्वितीयासमर्थादधीते वेद इत्येतयोरर्थयोर्यथाविहितं प्रत्ययः स्यात्। व्याकरणमधीते वेत्ति वा वैयाकरणः। नैरुक्तः ॥

क्रतूक्थादिसूत्रान्ताट्ठक् ॥ ६० ॥

क्रतुविशेषवाचिभ्यः उक्थादिभ्यः सूत्रान्ताच्च ठक् स्यात् पूर्वविषये। अणोऽपवादः। अग्निष्टोममधीते वेत्ति वा आग्निष्टोमिकः। वाजपेयिकः। उक्थशब्दः सामविशेषवाचकः। तस्मात् सामलक्षणे औक्थिक्यनाम्नि प्रातिशाख्ये उपचाराद्वर्तमानात् प्रत्यय इष्यते नतु सामसु। औक्थिकः। औक्थिक्यमधीत इत्यर्थः। औक्थिक्यशब्दात् अनभिधानात् प्रत्ययो न। औक्थिक्यमित्यत्र औक्थिकानामाम्नाय इतीदमर्थे छन्दोगौक्थिके(४।३।१२९)ति ञ्यः। लौकायतिकः। नैयायिकः। सूत्रान्तात्। वार्तिकसूत्रिकः। साङ्ग्रहसूत्रिकः ॥

सूत्रान्तादकल्पादेः ॥

कल्पसूत्रमधीते काल्पसूत्रः। अणेव ॥

विद्यालक्षणकल्पान्ताच्च ठक् ॥

वायसविद्यिकः। गौलक्षणिकः। पाराशरकल्पिकः ॥

विद्याया अङ्गक्षत्रधर्मत्रिपूर्वायाष्ठक् न ॥

आङ्गविद्यः। क्षात्रविद्यः। धार्मविद्यः। त्रैविद्यः ॥

आख्यानाख्यायिकेतिहसपुराणेभ्यश्च ॥

आद्ययोरर्थग्रहणम्। अन्त्ययोः स्वरूपग्रहणम्। यावक्रीतिकः। प्रैयङ्गविकः। यवक्रीतमधिकृत्य कृतमाख्यानं उ-

पचाराद्यवक्रीतशब्देनोच्यते । तमधीत इति विग्रहः । एवं मैयज्ञविक इत्यत्रापि । वासवदत्तिकः । सौमनोत्तरिकः । वासवदत्तामधिकृत्य कृता आख्यायिका इत्यत्राधिकृत्य कृते ग्रन्थ(४।३।८७) इत्यर्थे वृद्धाच्छः(४।२।११४) । तस्य लुवाख्यायिकाभ्यो बहुलमि(४।३।८७वा)ति लुप् । ततोऽनेन ठक् । एवं सौमनोत्तरिकः । ऐतिहासिकः । पौराणिकः ॥

सर्वसादेर्द्विगोश्च लुक् ॥

सर्वविद्यः । सवार्तिकः । वार्तिकान्तमधीत इत्यन्तवचने सहस्याव्ययीभावः । द्विवेदः । पञ्चव्याकरणः । अत्र द्विगोर्लुगि(४।१।८८)त्येव लुक् वार्तिके स्मारितः ॥

अनुसूलक्ष्यलक्षणेभ्यश्च ठक् ॥

अनुसूर्नाम ग्रन्थः । तमधीते आनुसुकः । लाक्षिकः । लाक्षणिकः ॥

इकन् पदोत्तरपदात् ॥

उत्तरपदिकः । पूर्वपदिकः ॥

शतषष्टेः पथः षिकन् ॥

शतपथिकः । शतपथिकी । षाष्टिपथिकः । षाष्टिपथिकी ॥ अणपीति केचित् ॥ शातपथः ॥

क्रमादिभ्यो वुन् ॥ ६१ ॥

तदधीते तद्वेदेत्येव । क्रमकः । मीमांसकः ॥

अनुब्राह्मणादिनिः ॥ ६२ ॥

अनुब्राह्मणमधीते अनुब्राह्मणी । अनुब्राह्मणिनौ ॥

## वसन्तादिभ्यष्ठक् ॥ ६३ ॥

साहचर्यात् ताच्छब्द्यम् । वसन्तसहचरितः वसन्तः । तमधीते वासन्तिकः । वार्षिकः ॥

## प्रोक्ताल्लुक् ॥ ६४ ॥

प्रोक्तप्रत्ययान्तादध्येतृवेदित्रोरुत्पन्नस्य प्रत्ययस्य लुक् स्यात् । पाणिनिना प्रोक्तं पाणिनीयं तदधीते पाणिनीयः । स्त्रियां स्वरे च विशेषः । पाणिनीया ॥

## सूत्राच्च कोपधात् ॥ ६५ ॥

सूत्रवाचिनः कोपधादुत्पन्नस्य प्रत्ययस्य लुक् । अप्रोक्तार्थ आरम्भः । पाणिनीयमष्टकं सूत्रं तदधीयते अष्टकाः पाणिनीयाः । दशकाः । वैयाघ्रपदीयाः ॥

## सङ्ख्याप्रकृतेरेव ॥

नेह । महावार्तिकं सूत्रमधीते माहावार्तिकः । कालापकः । कोपधात्किम् । चातुष्टयः ॥

## छन्दोब्राह्मणानि च तद्विषयाणि ॥ ६६ ॥

इह प्रोक्तप्रत्ययान्तस्यानेकः प्रकारो दृश्यते । स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यमध्येतृवेदित्रोः प्रत्ययश्च । स्वातन्त्र्यं तावत् पाणिनिना प्रोक्तं व्याकरणं पाणिनीयम् । उपाध्यन्तरयोगो महत्पा(हापा)णिनीयमिति । वाक्यं पाणिनीयमधीयत इति । अध्यतृवेदित्रोः प्रत्ययः पाणिनीया इति । छन्दोब्राह्मणवाचिनां तु प्रोक्तप्रत्ययान्तानामध्येतृवेदितृप्रत्ययविषयतैवेष्यते । न तु स्वातन्त्र्यादीति तद्विषयार्थमिदं सूत्रम् । छन्दांसि च ब्राह्म(पर्मानंवर)णानि च प्रोक्तप्रत्ययान्तान्यध्येतृवेदितृप्र-

त्ययविषयाण्येव न तु स्वातन्त्र्यादि विषयाणि। कठेन प्रोक्तमधीयते कठाः। मौदाः। वाजसनेयिनः। ब्राह्मणानि खल्वपि। ताण्डिनः। भाल्लविनः। छन्दस्त्वेनैव सिद्धे ब्राह्मणग्रहणं पुराणप्रोक्तत्वलक्षणब्राह्मणविशेषप्रतिपत्त्यर्थम्। तेनेह न। याज्ञवल्क्यानि। सौलभानि। चकारोऽनुक्तसमुच्चयार्थः। तेन कल्पदावपि भवति। काश्यपिनः। कौशिकिनः। पाराशरिणो भिक्षवः। शैलालिनो नटाः। कर्मन्दिनः। कृशाश्विनः। छन्दोब्राह्मणानि किम्। पाणिनीयं व्याकरणम्॥

## तदस्मिन्नस्तीति देशे तन्नाम्नि॥ ६७॥

तदिति प्रथमासमर्थादस्त्युपाधिकादस्मिन्निति सप्तम्यर्थे यथाविहितं प्रत्ययः स्यात्तन्नामा देशश्चेत् सप्तम्यर्थः। उदुम्बराणि सन्त्यस्मिन् देशे औदुम्बरो देशः॥

## तेन निर्वृत्तम्॥ ६८॥

देशे तन्नाम्नीति चतुर्णां शेषः। तेनेति तृतीयासमर्थान्निर्वृत्त इत्यर्थे यथाविहितं प्रत्ययः स्यात्। कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी॥

## तस्य निवासः॥ ६९॥

तस्येति षष्ठीसमर्थान्निवास इत्यर्थे यथाविहितं प्रत्ययः स्यात्तन्नाम्नि देशे। निवसन्त्यस्मिन्निति निवासः। ऋजुनावां निवास आर्जुनावः॥

## अदूरभवश्च॥ ७०॥

षष्ठीसमर्थाददूरभव इत्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात्

देशे तन्नाम्नि । विदिशाया अदूरभवं नगरं वैदिशम् । इत ऊर्ध्वं चतुर्ष्वर्थेषु प्रत्ययविधिः ॥

ओरञ् ॥ ७१ ॥

उवर्णान्तादञ् स्यात् तदस्मिन्नित्यादिचतुर्ष्वर्थेषु । अत्र(र)डु । आव(र)डवम् । नद्यां तु परत्वान्मतुप् । इक्षुमती ॥

मतोश्च बह्वजङ्गात् ॥ ७२ ॥

बह्वच् अङ्गं यस्यासौ बह्वजङ्गो मतुप् । तदन्तादञ् स्यादुक्तेऽर्थे । बहु(ऐ)षुकावतम् । साधुकावतम् । बह्वजङ्गात्किम् । यावमतम् ॥

बह्वचः कूपेषु ॥ ७३ ॥

बह्वचोञ् स्यात् कूपेषु । दीर्घवरत्रेण निर्वृत्तः कूपः दैर्घवरत्रः । कापिलवरत्रः ॥

उदक् च विपाशः ॥ ७४ ॥

विपाश उत्तरे कूले ये कूपास्तेषु अञ् स्यात् । अबह्वजर्थ आरम्भः । दत्तेन निर्वृत्तः कूपः दात्तः । गौप्तः । उदक्किम् । दक्षिणतो विपाशः कूपः दात्तः । अणत्र । स्वरे भेदः ॥

सङ्कलादिभ्यश्च ॥ ७५ ॥

कूपेष्विति निवृत्तम् । अञ् स्याच्चातुरर्थिकः । सङ्कलेन निर्वृत्तं साङ्कलम् । पौष्कलम् ॥

स्त्रीषु सौवीरसाल्वप्राक्षु ॥ ७६ ॥

देशे तन्नाम्नीत्यस्येदं विशेषणम् । ङ्याप्प्रातिपदिकादञ् स्याच्चातुरर्थिकः सौवीरे स्त्रीलिङ्गे साल्वे प्राचि च । सौवीरे

तावद । दत्त(त्ता)मित्रेण निर्वृत्ता दात्त(त्ता)मित्रा नगरी । साल्वे । विधूमाग्निना निर्वृत्ता वैधूमाग्नी प्राची । ककण्डेन निर्वृत्ता काकण्डी ॥

## सुवास्त्वादिभ्योऽण् ॥ ७७ ॥

एभ्योऽण् स्यात् । अञोऽपवादः नद्यां मतुपश्च । सुवास्तोरदूरभवं नगरं सौवास्तवमित्यादि ॥

## रोणी ॥ ७८ ॥

अस्मादण् स्याच्चातुरर्थिकः । कूपलक्षणाञोऽपवादः । रौणः । प्रथमानिर्देशात्तदन्तादपि । आजकरौणः ॥

## कोपधाच्च ॥ ७९ ॥

अण् स्यात् । अञोऽपवादः । कर्णच्छिद्रकेण निर्वृत्तः कार्णच्छिद्रकः कूपः । कृकवाकुना निर्वृत्तः कार्कवाकवः ॥

## वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदादिभ्यः॥८०॥

वुञादयः सप्तदशप्रत्यया अरीहणादिभ्यः सप्तदशगणेभ्यः यथासङ्ख्यं स्युः चातुरर्थिकाः । अणोऽपवादः ॥ अरीहणादिभ्यो वुञ् । आरीहणकम् । द्रौघणकमित्यादि ॥ कृशाश्वादिभ्यश्छण् । कार्शाश्वीयम् । वैशालीयमित्यादि ॥ ऋश्यादिभ्यः कः । ऋश्यकः । न्यग्रोधक इत्यादि ॥ कुमुदादिभ्यष्ठच् । कुमुदिकम् । शर्करिकमित्यादि ॥ काशादिभ्य इलः । काशिलः । पलाशिल इत्यादि ॥ तृणादिभ्यः सः । तृणसः । नडसः इत्यादि ॥ प्रेक्षादिभ्य इनिः । प्रेक्षी । हलकी इत्यादि ॥

अश्मादिभ्यो रः । अश्मरम् । ऊषरमित्यादि ॥ सख्यादिभ्यो ढञ् । साखेयम् । मालेयमित्यादि ॥ सङ्काशादिभ्यो ण्यः । साङ्काश्यमित्यादि ॥ बलादिभ्यो यः । बल्यमित्यादि ॥ पक्षादिभ्यः फक् । पाक्षायण इत्यादि ॥ कर्णादिभ्यः फिञ् । कार्णायनिः ॥ सुतङ्गमादिभ्यः इञ् । सौतङ्गमिः ॥ प्रगद्यादिभ्यो ञ्यः । प्रागद्यः ॥ वराहादिभ्यः कक् । वाराहकम् ॥ कुमुदादिभ्यष्ठक् । कौमुदिकमित्यादि ॥ शिरीषशब्दः अरीहणादिषु वराहादिषु कुमुदादिषु च पठ्यते ॥ तस्मादुत्पन्नस्य प्रत्ययस्य पक्षे लुबपीष्यते ॥ तेन चातूरूप्यम् । तथा च लुपि युक्तवदि(१।२।५१)ति सूत्रे भगवतोदाहृतम् । शिरीषाणामदूरभवो ग्रामः शिरीष इति ॥

जनपदे लुप् ॥ ८१ ॥

जनपदे उत्पन्नस्य चातुरर्थिकस्य लुप् स्यात् । लुपि युक्तवद्व्यक्तिवचने(१।२।५१) । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः । उदुम्बराणि सन्त्यस्मिन्निसौदुम्बरो जनपदः वैदिश इत्यत्राभिधानलक्षणत्वात्तद्धितस्य लुप् न भवति ॥

वरणादिभ्यश्च ॥ ८२ ॥

एभ्यः प्रागुक्तं स्यात् । अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं वरणाः । गोदयोरदूरभवो ग्रामः गोदौ ग्रामः ॥

शर्कराया वा ॥ ८३ ॥

अस्माच्चातुरर्थिकस्याणो वा लुप् । शर्करा । शार्करम् । कुमुदादिषु वराहादिषु च पाठात् शर्करिकं शार्करकमित्यपि ॥

ठक्छौ च ॥ ८४ ॥

शर्कराया एतौ स्तश्चातुरर्थिकौ । शार्करिकम् । शर्करीयम् । तेन षाड्रूप्यं सिद्धम् ॥

नद्यां मतुप् ॥ ८५ ॥

नद्यामभिधेयायां मतुप् स्याच्चातुरर्थिकः । उदुम्बराः यस्यां सन्ति उदुम्बरावती । पुष्करावती । इक्षुमती । भागीरथ्यादावनभिधानान्न भवति ॥

मध्वादिभ्यश्च ॥ ८६ ॥

मतुपि(व)नद्यामपि । मधुमानित्यादि ॥

कुमुदनडवेतसेभ्यो ड्मतुप् ॥ ८७ ॥

चातुरर्थिकः । कुमुद्वान् । नड्वान् । वेतस्वान् ॥

महिषाच्च ।

महिष्मान् ॥

नडशादाड्ड्वलच् ॥ ८८ ॥

आभ्यां ड्वलच् स्याच्चातुरर्थिकः । नड्वलम् । शाद्वलम् ॥

शिखाया वलच् ॥ ८९ ॥

शिखावलं नाम नगरम् ॥

उत्करादिभ्यश्छः ॥ ९० ॥

उत्करीयम् । पिप्पलीयमित्यादि ॥

नडादीनां कुक् च ॥ ९१ ॥

एषां कुगागमः स्याच्छश्च प्रत्ययः । नडकीयम् । प्लक्षकीयमित्यादि ॥

शेषे ॥ ९२ ॥

अपत्यादिचतुरर्थ्यन्तादन्यः शेषः । इत ऊर्ध्वं शेष इत्यधिकारः ॥

राष्ट्रावारपाराद्घखौ ॥ ९३ ॥

आभ्यामेतौ यथासङ्ख्यं स्तः । राष्ट्रियः । अवारपारीणः ॥

विगृहीतादपीष्यते ॥

अवारीणः । पारीणः ॥

विपरीताच्च ॥

पारावारीणः । इदानीं प्रकृतिविशेषोपादानेन प्रत्यया विधीयन्ते । जातादयोऽर्थाः समर्थविभक्तयश्च पुरस्ताद्वक्ष्यन्ते ॥

ग्रामाद्यखञौ ॥ ९४ ॥

ग्राम्यः । ग्रामीणः । उत्तरसूत्रेऽनुवर्तनात् ग्रामेयकः ॥

कत्र्यादिभ्यो ढकञ् ॥ ९५ ॥

शैषिकः । कुत्सिताः त्रयः कत्रयः । बहुव्रीहिर्वा । निपातनात् कद्भावः । कात्रेयकः । औंभेयक इत्यादि ॥

कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ॥ ९६ ॥

कुलादिभ्यो यथासङ्ख्यं श्वाद्यर्थेषु ढकञ् स्याच्छैषिकः । कुले जातः कौलेयकः श्वा चेत् । कौलोऽन्यः । कौक्षेयकः असिश्चेत् । कौक्षोऽन्यः । ग्रैवेयकः अलङ्कारश्चेत् । ग्रैवोऽन्यः ॥

नद्यादिभ्यो ढक् ॥ ९७ ॥

नद्यां जातादि नादेयः । माहेयः । पौर्वनगरेयम् । पौरेयम् । वानेयम् । गैरेयमित्यादि ॥

दक्षिणापश्चात्पुरसस्त्यक् ॥ ९८ ॥

अव्ययसाहचर्याद्दक्षिणेत्याजन्तस्य ग्रहणं न टाबन्तस्य । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः ॥

कापिश्याः ष्फक् ॥ ९९ ॥

कापिश्यां जातादि कापिशायनं मधु । कापिशायनी द्राक्षा॥

बाह्ल्युर्दिपर्दिभ्यश्च ।

बाह्लायनी । और्दायनी । अवृद्धादपी(४।२।१२५)ति वुञि प्राप्ते उपसङ्ख्यानमिदम् ॥

रङ्कोरमनुष्येण् च ॥ १०० ॥

चात् ष्फक् शैषिकः । राङ्कवः राङ्कवायणो वा गौः । अमनुष्ये किम् । राङ्कवो मनुष्यः । अत्रायं संग्रहः । रङ्कवो जनपदः । ततः प्राग्दीव्यतोण् प्राप्तः । ततोऽवृद्धादपी(४।२।१२५)ति वुञ् । तत ओर्देश ठञ्(४।२।११९) । ततः कोपधादण् (४।२।१३२) । ततः कच्छादिभ्यश्चे(४।२।१३३)त्यण् प्राप्तः । ततः ष्फगणौ विधीयेते । कोपधत्वादेवाणि सिद्धे कच्छादिषु रङ्कुशब्दस्य पाठः मनुष्यतत्स्थयोर्वुञि(४।२।१३४) त्यानार्थः । एवं चामनुष्य इति प्रतिषेधोऽनर्थकः । मनुष्ये विशेषविहितत्वान्मनुष्यतत्स्थयोरिति वुञा भाव्यम् । कच्छादिपाठादेवाणसिद्धेरिहाण्ग्रहणं चानर्थकम् । तस्मात् रङ्कोश्चेत्येव ष्फगर्थं कर्तव्यम् । काशिकायां तु अमनुष्य इति पर्युदासाश्रयणे मनुष्यसदृशे प्राणिनि ष्फग्विधीयते नाप्राणिनि अत एव विशेषविहितत्वादणो बाधकः स्यादित्यण्ग्रहणमपि कृतमिति स्थितम् । तद्भगवद्वचनविरुद्धमित्युपेक्ष्यम् ॥

## द्युप्रागपागुदक्प्रतीचो यत् ॥ १०१ ॥

दिवि जातादि दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । अव्ययात्तु कालवाचिनः परत्वात् ट्युट्युलावेव । प्राक्तनमित्यादि ॥

## कन्थायाष्ठक् ॥ १०२ ॥

शैषिकः । कांथिकः ॥

## वर्णौ वुक् ॥ १०३ ॥

वर्णौ या कन्था तस्य वुक् स्याच्छैषिकः । ठगपवादः । वणुर्नाम नदः । तत्समीपो देशो वर्णुः । अदूरभवार्थे सुवास्त्वाद्यण्‌ः जनपदे लुवि(४।२।८१)ति लुप् । कान्थकम् । तथाहि जातं हिमवत्सु कान्थकम् ॥

## अव्ययात्त्यप् ॥ १०४ ॥

शैषिकः ॥

### अमेहक्वतसित्रेभ्य एव ॥

अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । परिगणनं किम् । औपरिष्टः । अणेव । अव्ययानां भमात्रे टिलोपः(६।४।१४४वा) इति टिलोपः ॥

### त्यप् नेर्ध्रुवे ॥

नित्यः ॥

### निसो गते ॥

निर्गतो वर्णाश्रमेभ्यः निष्ट्यश्चण्डालादिः ॥

### आविसः छन्दसि ॥

आविष्टपो वर्धते ॥

अरण्याण्णः ॥

आरण्याः सुमनसः ॥

दूरादेत्यः ॥

दूरेत्यः पथिकः ॥

उत्तरादाहञ् ॥

औत्तराहः ॥

ऐषमोह्यःश्वसोऽन्यतरस्याम् ॥ १०५ ॥

त्यप्। पक्षे ट्युट्युलौ। ऐषमस्त्यः। ऐषमस्तनः। ह्यस्त्यः। ह्यस्तनः। श्वस्त्यः। श्वस्तनः। श्वसस्तुट् चे(४।३।१५)ति ठञपि। शौवस्तिकः ॥

तीररूप्योत्तरपदादञ्ञौ ॥ १०६ ॥

तीरोत्तरपदाद्रूप्योत्तरपदाच्च क्रमादेतौ स्तः। काकतीरम्। शैवरूप्यम्। उत्तरपदग्रहणात् बहुच्पूर्वान्न। बहुरूप्यम् ॥

दिक्पूर्वपदादसंज्ञायां ञः ॥ १०७ ॥

दिक्पूर्वपदात् असंज्ञाविषयात् ञः स्यात् पौर्वः। अणोऽपवादः। पूर्वस्यां शालायां भवः पौर्वशालः। तद्धितार्थे-(२।१।५१)ति समासः। संज्ञायां तु पूर्वैषुकामशमः। दिक्सङ्ख्ये संज्ञाया(२।१।५०)मिति समासः। प्राचां ग्रामनगराणा(७।३।१४)-मित्युत्तरपदवृद्धिः ॥

मद्रेभ्योऽञ् ॥ १०८ ॥

दिक्पूर्वपदादित्येव। मद्रशब्दो नित्यं बहुवचनान्तः। पौ-

र्षमद्रः । आपरमद्रः ॥

उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ॥ १०९ ॥

उदीच्यग्रामवाचिनो बह्वचोऽन्तोदात्तादञ् स्यात् शैषिकः । शैवपुरम् । उदीच्यग्रामात्किम् । माथुरम् । बह्वचः किम् । ध्वजी । ध्वाजम् । अन्तोदात्तात्किम् । शार्करीधानम् ॥

प्रस्थोत्तरपदपलद्यादिकोपधादण् ॥ ११० ॥

प्रस्थोत्तरपदात्पलद्यादिभ्यः कोपधाच्चाण् स्यात् शैषिकः । उदीच्यग्रामलक्षणस्याञोऽपवादः । माद्रीप्रस्थः । माहकीप्रस्थः । पलद्यादिभ्यः । पालदः । पारिषदः । कोपधात् । नैलीनकः । पैघी(चैया)तकः ॥

कण्वादिभ्यो गोत्रे ॥ १११ ॥

पारिभाषिकस्य गोत्रस्येह ग्रहणम् । गोत्रप्रत्ययान्तेभ्यः कण्वादिभ्योऽण् स्याच्छैषिकः । छापवादः । काण्वाः । शाकलाः । गोत्रे किम् । कण्वो देवतास्य काण्वः । तस्येदं काण्वीयम् ॥

इञश्च ॥ ११२ ॥

गोत्रे य इञ् तदन्तादण् स्याच्छैषिकः । दाक्षाः । प्लाक्षाः । पारिभाषिकगोत्रानुवर्तनादिह न । पाणिनेर्यानः(?) छात्राः । पाणिनीयाः । गोत्रे किम् । सौतङ्गमेरिदं सौतङ्गमीयम् । सौतङ्गमीति तु वुञ्छणादी(४।२।८०)अन्तः ॥

न द्व्यचः प्राच्यभरतेषु ॥ ११३ ॥

प्राच्यभरतगोत्रादिञन्तात् द्व्यचः अण् न स्यात् । पूर्वेण

प्राप्तस्य निषेधः । पैङ्गी(चैदी)याः । मौष्टी(पौष्की)याः । अचः किम् । पान्नागाराः । प्राच्यभरतेषु किम् । दाक्षाः । भरतग्रहणमन्यत्र प्राच्यग्रहणे भरतग्रहणं न भवतीति ज्ञापनार्थनम् ॥

वृद्धाच्छः ॥ ११४ ॥

गोत्र इति निवृत्तम् । वृद्धाच्छः स्याच्छैषिकः । गार्गीयाः । मालीयः ॥

भवतष्ठक्छसौ ॥ ११५ ॥

वृद्धादित्येव । भावत्कः । भवदीयः । सदादीनि चे(१।२।७४)ति वृद्धत्वम् । अवतस्य तु भावतः ॥

काश्यादिभ्यष्ठञ्ञिठौ ॥ ११६ ॥

एभ्यो वृद्धेभ्य एतौ स्तः शैषिकौ । इकार उच्चारणार्थः । स्त्रियां विशेषः । काशिकी । काशिका । वैदिकी । वैदिका । दैवदत्तिकी । दैवदत्तिका । एङ् प्राचां देश(१।१।७५)इति देवदत्तस्य वृद्धत्वम् । वाहीकग्रामस्य तु दैवदत्तः । भाष्यकारवचनप्रामाण्याच्छोऽपि । देवदत्तीया । वा नामधेयस्ये(१।१।७३वा)ति व्यवस्थितविभाषया छ एव कर्तव्ये वृद्धत्वं न तु ठञ्ञिठञोरिति ॥

वाहीकग्रामेभ्यश्च ॥ ११७ ॥

वृद्धेभ्य एभ्यष्ठञ्ञिठौ स्तः । शाकलिकी । शाकलिका । माघविकी । माघविका ॥

विभाषोशीनरेषु ॥ ११८ ॥

उशीनरेषु ये ग्रामास्तद्वाचिनो वृद्धात् ठञ्ञिठौ वा स्तः ।

आह्वजालिकी। आह्वजालिका। [ आह्वजालीया ] सौदर्शनिकी। सौदर्शनिका। सौदर्शनीया॥

ओर्देशे ठञ् ॥ ११९ ॥

वृद्धादिति निवृत्तम्। उवर्णान्ताद्देशवाचिनः ठञ् स्याच्छैषिकः। नैषादकर्षुकः। निषादकर्षूशब्दात् ठञ्। इसुसुक्तान्तात्कः(७।३।५१)। केऽणः(७।४।१३)इति ह्रस्वत्वम्। देशे किम्। पटोश्छात्रः पाटवः॥

वृद्धात् प्राचाम् ॥ १२० ॥

उवर्णान्तात् वृद्धात् प्राग्देशवाचिनः ठञ् स्यात्। नापितवास्तुकः। पूर्वेणैव सिद्धे नियमार्थं वचनम्। प्राग्देशे वृद्धादेवेति। तेनेह न भवति। मल्लवास्तु। माल्लवास्तवम्॥

धन्वयोपधाद्वुञ् ॥ १२१ ॥

धन्वविशेषवाचिनो योपधाच्च देशवाचिनो वृद्धाद्वुञ् स्याच्छैषिकः। धन्वशब्दो मरुदेशवचनः। पारेधन्वकः। ऐरावतकः। योपधात्। साङ्काश्यकः। काम्पिल्यकः॥

प्रस्थपुरवहान्ताच्च ॥ १२२ ॥

प्रस्थाद्यन्ताद्देशवाचिनो वृद्धाद्वुञ् स्याच्छैषिकः। छापवादः। मालाप्रस्थकः। नान्दीपुरकः। फाल्गुनीवहकः। पुरान्तस्य रोपधत्वेनैव वुञि सिद्धे अप्रागर्थमिह ग्रहणम्॥

रोपधेतोः प्राचाम् ॥ १२३ ॥

रोपधादीकारान्ताच्च प्राग्देशवाचिनोऽवृद्धात् वुञ् स्यात् शैषिकः। पाटलीपुत्रकः। ऐकचक्रकः। इदन्तात्। काकट-

कः(?) । काकन्दकः । प्राचां किम् । दाक्ष(त्ता)मित्रीयः । तपरकरणं स्पष्टार्थम् । दीर्घान्तस्य देशवाचिनोऽभावात् ॥

जनपदतदवध्योश्च ॥ १२४ ॥

ग्रामसमुदायो जनपदः । देश इत्येव । वृद्धाज्जनपदवाचिनः तदवधिवाचिनश्च वुञ् स्याच्छैषिकः । आभिसारकः । आदर्शकः । तदवधेः । श्यामायनकः । तदवधिरित्यत्र स चासाववधिश्चेति जनपद एव गृह्यते । कस्यावधिरिति चेत् । प्रत्यासत्त्या जनपदस्यैवेति विज्ञायते । ततश्च जनपदत्वेनैव सिद्धे तदवधिग्रहणं गर्तोत्तरपदच्छबाधनार्थम् । त्रैगर्तकः ॥

अवृद्धादपि बहुवचनविषयात् ॥ १२५ ॥

वृद्धादवृद्धाच्च जनपदतदवधिवाचिनः बहुवचनविषयात् वुञ् स्यात् । अणछयोरपवादः । वृद्धाज्जनपदात् । दार्वाः । दार्वकः । जाम्ववा(म्ब्वा)ः । जाम्बव(म्ब्व)कः । वृद्धात्तदवधेः । कालञ्जराः । कालञ्जरकः । अवृद्धाज्जनपदात् । अङ्गाः । आङ्गकः । अवृद्धात्तदवधेः । अजमीढाः । आजमीढकः । विषयग्रहणं नित्यबहुवचनान्तत्वार्थम् । तेन जनपदस्यैकशेषेण यत्र बहुवचनं तत्र न भवति । वर्तन्य(वार्तन)ः ॥

कच्छाग्निवक्त्रगर्तोत्तरपदात् ॥ १२६ ॥

कच्छाद्युत्तरपदाद्देशवाचिनो वृद्धादवृद्धाच्च वुञ् स्यात् । दाराणीयकः । दारुकच्छकः । वैभुजाग्नकः । सैन्धुवक्त्रकः । बाहुगर्तकः ॥

धूमादिभ्यश्च ॥ १२७ ॥

देशवाचिभ्य एभ्यो वुञ् स्यात् । अणाद्यपवादः । धौ-

मक इत्यादि ॥ समुद्रशब्दात् नावि मनुष्ये च वुञिष्यते ॥ सामुद्रको मनुष्यः नौर्वा । सामुद्रमन्यत् ॥

नगरात्कुत्सनप्रावीण्ययोः ॥ १२८ ॥

नगराद्वुञ् शैषिकः एतयोरर्थयोः । तद्वासिकुत्सनादिना नगरस्यापि तद्वत्त्वम् । नागरकाश्चोराः प्रवीणा वा । एतयोः किम् । नागरो ब्राह्मणः ॥

अरण्यान्मनुष्ये ॥ १२९ ॥

वुञ् । अरण्याण्ण(४।२।१०४वा)इत्यस्यापवादः । आरण्यको मनुष्यः ॥

मनुष्यग्रहणमुपलक्षणम् ॥

आरण्यकः पन्थाः अध्यायः न्यायः विहारः हस्ती वा ॥

वा गोमये ॥

आरण्यका गोमया आरण्या वा । एषु किम् । आरण्याः पशवः ॥

विभाषा कुरुयुगन्धराभ्याम् ॥ १३० ॥

आभ्यां वुञ् वा । कौरवः । कौरवकः । यौगन्धरः । यौगन्धरकः । जनपदशब्दत्वादेतयोरवृद्धादपी(४।२।१२५)ति नित्ये वुञि विकल्पोऽयम् ॥

मद्रवृज्योः कन् ॥ १३१ ॥

अवृद्धादपी(४।२।१२५)ति वुञोऽपवादः । मद्रेषु जातः मद्रकः । वृजिकः ॥

## कोपधादण् ॥ १३२ ॥

जनपदवुञोऽपवादः। ऋषिकेषु जातः। आर्षिकः। माहिषिकः। अणूग्रहणमोर्देशे ठञि(४।२।११९)त्यस्य बाधनार्थम्। इक्ष्वाकुषु जातः ऐक्ष्वाकः॥

## कच्छादिभ्यश्च ॥ १३३ ॥

देशवाचिभ्य एभ्योण् स्यात्। वुञाद्यपवादः। काच्छः। सैन्धव इत्यादि॥

## मनुष्यतत्स्थयोर्वुञ् ॥ १३४ ॥

एतयोरर्थयोः कच्छादिभ्यो वुञ् स्यात्। अणोपवादः। काच्छको मनुष्यः। काच्छकमस्येक्षितं जल्पितं हसितं वा। एवं कौरवको मनुष्यः। कौरवकमस्येक्षितं जल्पितं वेत्यादि॥

## अपदातौ साल्वात् ॥ १३५ ॥

अपदाताविव मनुष्ये तत्स्थे च साल्वाद्वुञ्। साल्वको मनुष्यः। साल्वकमस्य हसितं जल्पितं वा। पदातौ तु साल्वः पदातिः॥

## गोयवाग्वोश्च ॥ १३६ ॥

साल्वाद्वुञ् तयोः। कच्छाद्यणोपवादः। साल्विका गौर्यवागूर्वा। साल्वमन्यत्॥

## गर्तोत्तरपदाच्छः ॥ १३७ ॥

देश इत्येव। अणोपवादः। वाहीकग्रामलक्षणं तु परत्वात् बाधते। श्वाविद्गर्तीयम्। सृगालगर्तीयम्॥

गहादिभ्यश्च ॥ १३८ ॥

छः । अणाद्यपवादः । गहीय इत्यादि ॥

पृथिवीमध्यस्य मध्यमभावश्च ॥

पृथिवीमध्ये भवः मध्यमीयः ॥

चरणे त्वण् च निवासे ॥

चान्मध्यमभावः । पृथिवीमध्यं निवास एषां कठादिचरणानां माध्यमाः ॥

मुखपार्श्वतसोर्लोपश्च ॥

मुखतीयम् । पार्श्वतीयम् ॥

कुग्जनस्य परस्य च ॥

जनकीयम् । परकीयम् ॥

देवस्य च ॥

देवकीयम् ॥

वेणुकादिभ्यश्छण् ॥

आकृतिगणोऽयम् । वैणुकीयम् । औत्तरपदीयम् । प्रास्थीयम् । माध्यमकीयम् ॥

प्राचां कटादेः ॥ १३९ ॥

प्राग्देशवाचिनः कटादेः छः स्यात् । अणोपवादः । कटनगरीयम् । कटघोषीयम् ॥

राज्ञः क च ॥ १४० ॥

राज्ञः कोन्तादेशश्छश्च । राजकीयम् ॥

वृद्धादकेकान्तखोपधात् ॥ १४१ ॥

वृद्धाद्देशवाचिनः अक इक इत्येवमन्तात् खोपधाच्च छः

स्यात् । अणाद्यपवादः । ब्राह्मणको नाम जनपदः । तत्र जातः ब्राह्मणकीयः । इक । शाल्मलिकीयः । खोपध । कौटशिखीयम् ॥

अनेकग्रहणं कोपधोपलक्षणम् ॥

तेन सौसुकीय इत्याद्यपि सिद्धम् ।

कन्थापलदनगरग्रामह्रदोत्तरपदात् ॥ १४२ ॥

कन्थाद्युत्तरपदाद्देशवाचिनो वृद्धाच्छः स्यात् दौपिकः । वाहीकग्रामलक्षणस्यापवादः । दाक्षिकन्थीयम् । दाक्षिपलदीयम् । दाक्षिनगरीयम् । दाक्षिग्रामीयम् । दाक्षिह्रदीयम् ॥

पर्वताच्च ॥ १४३ ॥

छः । अणोपवादः । पर्वतीयः ॥

विभाषाऽमनुष्ये ॥ १४४ ॥

पर्वतीयानि पार्वतानि वा फलानि । अमनुष्ये किम् । पर्वतीयो मनुष्यः ॥

कृकणपर्णाद्भारद्वाजे ॥ १४५ ॥

भारद्वाजदेशवाचिभ्यामाभ्यां छः स्यात् । अणोपवादः । कृकणीयम् । पर्णीयम् । भारद्वाजे किम् । कार्कणम् । पार्णम् ॥

इति चतुर्थस्य द्वितीयः पादः ॥



## युष्मदस्मदोरन्यतरस्यां खञ् च ॥ १ ॥

एतयोः खञ् स्याच्चात् छः । अन्यतरस्यांग्रहणादणपि । यथासङ्ख्यमत्र न । उदाहरणमुत्तरसूत्रे वक्ष्यते ॥

## तस्मिन्नणि च युष्माकास्माकौ ॥ २ ॥

तस्मिन् खञ्यणि च युष्मदस्मदोर्यथासङ्ख्यम् एतौ स्तः । निमित्तयोर्यथासङ्ख्यं योगविभागान्निरस्तम् । यौष्माकीणः । यौष्माकः । आस्माकीनः । आस्माकः । तस्मिन्नणि चेति किम् । युष्मदीयोऽस्मदीयः ॥

## तवकममकावेकवचने ॥ ३ ॥

एकार्थवाचिनोर्युष्मदस्मदोर्यथासङ्ख्यं तवक ममक इत्येतौ स्तः खञ्यणि च । तावकीन स्तावकः । मामकीनो मामकः । तस्मिन्नणि चेति किम् । त्वदीयो मदीयः ॥

## अर्धाद्यत् ॥ ४ ॥

अर्ध्यम् ॥

सपूर्वपदात् ठञ् वाच्यः ॥

गौतमार्धिकम् ॥

## परावराधमोत्तमपूर्वाच्च ॥ ५ ॥

एतत्पूर्वादर्धाद्यत् स्यात् । परार्ध्यम् । अपरार्ध्यम् । अ-

धमार्ध्यम् । उत्तरार्ध्यम् । पञ्चम्यैव निर्देष्टव्ये पूर्वग्रहणाद् परावरपूर्वादुत्तरसूत्रेण ठञ् न भवति ॥

दिक्पूर्वपदात् ठञ् च ॥ ६ ॥

दिक्पूर्वपदादर्धात् ठञ् चाद्यत् । पूर्वार्ध्यम् । पौर्वाधिकम् । दक्षिणार्ध्यम् । दाक्षिणाधिकम् ॥

ग्रामजनपदैकदेशादञ्ठञौ ॥ ७ ॥

ग्रामाद्येकदेशवाचिनो दिक्पूर्वपदादर्धादेतौ स्तः । यतो वाधः । ग्रामस्य जनपदस्य वा पौर्वार्धः । दाक्षिणाधिकः । तद्धितार्थे(२।१।५१)ति समासः ॥

मध्यान्मः ॥ ८ ॥

मध्याद् मः शैषिकः । मध्यम. ॥

अवोऽधसोर्लोपश्च ।

अवमः । अधमः ॥

अ सांप्रतिके ॥ ९ ॥

मध्यादकारप्रत्ययः सांप्रतिके । नात्युत्कृष्टो नात्यपकृष्टो मध्यो वैयाकरणः ॥

द्वीपादनुसमुद्रं यञ् ॥ १० ॥

समुद्रसमीपद्वीपवाचिनो द्वीपाद्यञ् स्याच्छैषिकः । द्वीपे भवः द्वैप्यः । अनुसमुद्रं किम् । द्वैपमन्यत् ॥

कालात् ठञ् ॥ ११ ॥

कालविशेषवाचिनः ठञ् स्याद् । अणोऽपवादः । वृद्धा-

च्छं(४।२।११४)परत्वात् बाधते। मासिकः। अर्धमासिकः। सांवत्सरिकः। गौणादपि कालवाचिनः प्रत्यय इष्यते। कादम्बपुष्पिकः। व्रैहिपलालिकः॥

श्राद्धे शरदः॥ १२॥

ठञ्। ऋत्वणोऽपवादः। शारदिकं श्राद्धम्। श्राद्धे किम्। शारदम्॥

विभाषा रोगातपयोः॥ १३॥

शरदः ठञ्। शारदिको रोगः शारदः। शारदिक आतपः शारदः। रोगातपयोः किम्। शारदं दधि॥

निशाप्रदोषाभ्यां च॥ १४॥

ठञ् वा। नैशिकम्। नैशम्। प्रादोषिकम्। प्रादोषम्॥

श्वसस्तुट् च॥ १५॥

श्वसो वा ठञ् स्यात्तस्य तुट् च। पक्षे त्यप् ट्युलौ च। शौवस्तिकम्। श्वस्त्यम्। श्वस्तनम्॥

सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्॥ १६॥

सन्धिवेलादिभ्यो ऋतुभ्यो नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात्। ठञोऽपवादः। सान्धिवेलम्। सान्ध्यम्। आमावास्यमित्यादि। ऋतुभ्यः। शैशिरम्। नक्षत्रेभ्यः। तैषम्॥

प्रावृष एण्यः॥ १७॥

प्रावृषि भवः प्रावृषेण्यः॥

वर्षाभ्यष्ठक् ॥ १८ ॥

ऋत्वणोऽपवादः । वर्षासु जातादि वार्षिकम् ॥

छन्दसि ठञ् ॥ १९ ॥

वर्षाभ्य इत्येव । वार्षिकाद्वत् ॥

वसन्ताच्च ॥ २० ॥

छन्दसि ठञित्येव । वासन्तिकाद्वत् ॥

हेमन्ताच्च ॥ २१ ॥

छन्दसि ठञित्येव । हैमन्तिकाद्वत् ॥

सर्वत्राण् च तलोपश्च ॥ २२ ॥

लोके वेदे च हेमन्तादण् स्यात् तलोपश्च । हैमनो वायुः । चात् ऋत्वण् । तत्र न तलोपः । हैमन्तः । सर्वत्र ग्रहणस्य पूर्वसूत्रे अपकर्षात् । भाषायामपि ठञ् तेन हैमन्तिकमित्यपीति काशिकायाम् । तत् भगवदनभिमतम् । भगवता हि हेमनशब्दस्य हेमन्तपर्यायस्य प्रकृत्यन्तरत्वादुभाभ्यां ऋत्वणि हैमनं हैमन्तमिति भाषायामिष्टरूपद्वयसिद्धेः सूत्रमेतत् मत्याख्यातम् ॥

सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ २३ ॥

सायमादिभ्योऽव्ययेभ्यश्च कालवाचिभ्य एतौ स्तस्तयोस्तुट् चागमः । सायन्तनम् २ । चिरन्तनं २ । प्रागेतनं २ । अव्ययेभ्यः । दोषातनं २ । दिवातनं २ । स्वरे भेदः । अत्र मान्तत्वमेदन्तत्वं च निपातनात् ॥

चिरपरुत्परारिभ्यस्त्नो वक्तव्यः ॥

चिरत्नम् । परुत्नम् । परारित्नम् ॥

प्रगस्यच्छन्दसि गलोपश्च ॥

प्रत्नम् ॥

अग्रादिपश्चात् डिमच् ॥

अग्रिमम् । आदिमम् । पश्चिमम् ॥

अन्ताच्च ॥

अन्तिमम् ॥

विभाषापूर्वाह्णापराह्णाभ्याम् ॥ २४ ॥

ट्युट्युलौ तुट् चेत्येव । पक्षे कालाट् ठञ् । पूर्वाह्णेतनः । अपराह्णेतनः । घकालतने(६।३।१७)ष्विति सप्तम्या अलुक् । यदा पूर्वाह्णः सोढोऽस्येति विभक्त्यन्तरेण विग्रहः तदा पूर्वाह्णतन इत्येव । पौर्वाह्णिकम् । आपराह्णिकम् ॥

तत्र जातः ॥ २५ ॥

तत्रेति सप्तमीसमर्थाज्जात इत्यर्थे यथाविहितं अणादयः स्युः। स्रुघ्ने जातः । स्रौघ्नः । माथुरः। राष्ट्रियः । अवारपारीण इत्यादिः । शेष(४।२।९२)इत्यनेनैव सिद्धे असङ्करेण विशिष्ट एवार्थे अपवादा यथा स्युरित्येवमर्थं जाताद्यर्थनिर्देशः । प्रावृषि जातः प्रावृषिकः । भवस्तु प्रावृषेण्यः । ये तु निरपवादाः कृतलब्धक्रीतकुशलाः(४।३।३८)इत्यादयः तेषां निर्देशो ऽपर्थ एवेति स्थितम् ॥

प्रावृषष्ठप् ॥ २६ ॥

प्रावृषिकः ॥

संज्ञायां शरदो वुञ् ॥ २७ ॥

तत्र जात इत्येव । शारदका दर्भाः । शारदका मुद्गाः । दर्भविशेषस्य मुद्गविशेषस्य चेयं संज्ञा । संज्ञायां किम् । शारदं सस्यम् । केचित्तु कृतलब्धक्रीतकुशलाः(४।३।३८) इति यावत् संज्ञाधिकारमिच्छन्ति ॥

पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् ॥ २८ ॥

ठ्युट्युलाद्यपवादः । पूर्वाह्णकम् । अपराह्णकम् । आर्द्रकम् । मूलकम् । प्रदोषकम् । अवस्करकम् । असंज्ञायां तु यथाप्राप्तम् ॥

पथः पन्थ च ॥ २९ ॥

पथो वुन् स्यात् पन्थ इत्यादेशश्च । पन्थकः ॥

अमावास्याया वा ॥ ३० ॥

वुनित्येव । सन्धिवेलाद्यणोऽपवादः । अमावास्यकः । आमावास्यः ॥ अमावस्यादपीष्यते ॥ अमावस्यकः । आमावस्यः ॥

अ च ॥ ३१ ॥

अमावास्याया अकारप्रत्ययः । अमावास्यायां जातः अमावास्यः । अमावस्य इत्यपि ॥

सिन्ध्वपकराभ्यां कन् ॥ ३२ ॥

तत्र जात इत्येव । सिन्धोः कच्छाद्यणः मनुष्यवुञश्चापकरादौत्सर्गिकस्य चापवादः । सिन्धुकः । अपकरकः ॥

अणञौ च ॥ ३३ ॥

सिन्ध्वपकराभ्यां यथासङ्ख्यमेतौ स्तः। सैन्धवः। आपकरः॥

श्रविष्ठाफल्गुन्यनूराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥ ३४ ॥

एभ्यो जातार्थे आगतस्य नक्षत्राणो लुक् स्यात्। लुक्तद्धितेति(१।२।४९)स्त्रीप्रत्ययस्य लुक्। श्रविष्ठासु जातः श्रविष्ठः। फल्गुनः। अनूराधः। स्वातिः। तिष्यः। पुनर्वसुः। हस्तः। विशाखः। अषाढः। बहुलः। नक्षत्रसाहचर्यात् कृत्तिकापर्यायस्य बहुलस्येह ग्रहणम्॥

लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्॥

चित्रायां जाता चित्रा। रेवती। रोहिणी। स्त्रीप्रत्ययस्य लुकि गौरादित्वात् ङीप्॥

फल्गुन्यषाढाभ्यां टानौ॥

स्त्रियामित्येव। फल्गुनी। अषाढा॥

श्रविष्ठाषाढाभ्यां छणपि॥

श्राविष्ठीयः। आषाढीयः॥

स्थानान्तगोशालखरशालाच्च ॥ ३५ ॥

स्थानांतादुत्तराभ्यां च जातार्थे उत्पन्नस्य लुक् स्यात्। गोस्थानः। अश्वस्थानः। गोशालः। खरशालः।

वत्सशालाभिजिदश्वयुक्छतभिषजो वा ॥ ३६ ॥

एभ्यो जातार्थप्रत्ययस्य लुग्वा। वत्सशालः। वात्सशालः। अभिजित्। आभिजितः। अश्वयुक् आश्वयुजः। शतभिषक्। शातभिषजः॥

नक्षत्रेभ्यो बहुलम् ॥ ३७ ॥

जातार्थस्य लुगिमेव । रोहिणः इत्यादि । श्रविष्ठा-फल्गुन्यनुराधेति(४।३।३४)सूत्रे यद्वार्तिकं तदेतद्बहुलग्रहणस्यैव प्रपञ्चः ॥

कृतलब्धक्रीतकुशलाः ॥ ३८ ॥

सप्तमीसमर्थादेष्वर्थेषु यथाविहितं प्रत्ययः स्यात् । स्रुघ्ने कृतः लब्धः क्रीतः कुशलो वा स्रौघ्नः । माथुरः । राष्ट्रिय इत्यादि ॥

प्रायभवः ॥ ३९ ॥

सप्तमीसमर्थात् प्रायभव इत्यर्थे यथाविहितं प्रत्ययः स्यात् । स्रुघ्ने प्रायेण बाहुल्येन भवति स्रौघ्नः । राष्ट्रिय इत्यादि । तत्र भव इत्येव सिद्धे प्रायभवग्रहणं प्रत्याख्यातं विशेषस्त्वाकरे ॥

उपजानूपकर्णोपनीवेष्ठक् ॥ ४० ॥

एभ्यस्सप्तम्यन्तेभ्यष्ठक् स्यात् प्रायभव इत्यर्थे । औ-पजानुकः । औपकर्णिकः । औपनीविकः ॥

सम्भूते ॥ ४१ ॥

सप्तमीसमर्थादस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् । स्रुघ्ने सम्भवति स्रौघ्नः राष्ट्रिय इत्यादि ॥

कोशाड्ढञ् ॥ ४२ ॥

तत्र सम्भूत इत्येव । कोशे संभूतं कौशेयं वस्त्रम् । स्वदिरेषा ॥

कालात्साधुपुष्प्यत्पच्यमानेषु ॥ ४३ ॥

कालविशेषवाचिभ्यः सप्तम्यन्तेभ्यः साध्वादिष्वर्थेषु यथा

विहितं प्रत्ययः स्यात् । हेमन्ते साधुः हैमनः । वसन्ते पुष्यन्ति वासन्त्यः कुन्दलताः । शरदि पच्यन्ते शारदाः शालयः ॥

उप्ते च ॥ ४४ ॥

कालविशेषवाचिनः सप्तम्यन्तादुप्तेऽर्थे यथाविहितं प्रत्ययः स्यात् । हेमन्ते उप्यन्ते हैमना यवाः । ग्रैष्माः शालयः ॥

आश्वयुज्या वुञ् ॥ ४५ ॥

तत्र उप्त इत्येव । आश्वयुज्यामुप्ताः आश्वयुजका माषाः । आश्वयुग्भ्यां युक्ता पौर्णमासी आश्वयुजी ॥

ग्रीष्मवसन्तादन्यतरस्याम् ॥ ४६ ॥

उप्ते वुञ् । ग्रैष्मम् । ग्रैष्मकम् । [वासन्तम् ।]वासन्तकम् ॥

देयमृणे ॥ ४७ ॥

कालविशेषवाचिनः सप्तम्यन्ताद्देयमित्यर्थे यथाविहितं प्रत्ययः स्यात् ऋणं चेद्देयम् । मासे देयमृणं मासिकम् । आर्धमासिकम् । ऋणं किम् । मासे देया भिक्षा ॥

कलाप्यश्वत्थयवबुसाद्वुन् ॥ ४८ ॥

एभ्यः कालवाचिभ्यः सप्तम्यन्तेभ्यः वुन् स्याद्देयमृणमित्यर्थे । यस्मिन्काले मयूराः कलापिनो भवन्ति अश्वत्थाः फलन्ति यवबुसं चोत्पद्यते स कालः साहचर्यात् कलाप्यादिशब्देनोच्यते । कलापकम् । अश्वत्थकम् । यवबुसकम् ॥

ग्रीष्मावरसमाद्वुञ् ॥ ४९ ॥

आभ्यां वुञ् स्यात् देयमृणमित्यर्थे । ग्रैष्मकम् । आव-

रसमकम्। अतीते वत्सरे देयं यदद्यापि न दत्तं तदावरसमकम्॥

संवत्सराग्रहायणीभ्यां ठञ्च॥ ५०॥

देयमृणमित्येव। चाट्ठञ्। सांवत्सरिकम्। [सांवत्सरकम्।] आग्रहायणिकम्। आग्रहायणकम्। वेति वाच्ये सन्धिवेलाद्यण्बाधनार्थं ठञ्वचनम्॥

व्याहरति मृगः॥ ५१॥

सप्तम्यन्तात्कालवाचिनः व्याहरति मृग इत्यर्थे यथाविहितं प्रत्ययः स्यात्। निशायां व्याहरति नैशिकः। नैशः। प्रादोषिकः। प्रादोषः। मृगः किम्। निशायां व्याहरत्युलूकः॥

तदस्य सोढम्॥ ५२॥

तदिति प्रथमासमर्थात्कालवाचिनः सोढोपाधिकादस्येति षष्ठ्यर्थे यथाविहितं प्रत्ययः स्यात्। सोढं जितम्। अभ्यस्तमिति यावत्। निशासहचरितमध्ययनं निशा। तत्सोढमस्य छात्रस्य नैशः। नैशिकः। प्रादोषः। प्रादोषिकः॥

तत्र भवः॥ ५३॥

तत्रेति सप्तमीसमर्थात् भव इत्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात्। स्रौघ्नः। माथुरः॥

दिगादिभ्यो यत्॥ ५४॥

तत्र भव इत्येव। अण्छयोरपवादः। दिशि भवं दिश्यम्। वर्ग्यम्। आद्यमित्यादि॥

शरीरावयवाच्च ॥ ५५ ॥

यत्। अणोऽपवादः। वृद्धाच्छं परत्वाद् बाधते। दन्ते भवं दन्त्यम्। कर्ण्यम्। ओष्ठ्यम्। पादे भवं पद्यम्। पद्यत्यतदर्थ (६।३।५३)इति पद्भावः। नासिकायां भवं नस्यम्। नस्नासिकाया यत्तसि(६।१।६३। वा)त्यादिना नस्भावः॥

दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥ ५६ ॥

एभ्यो ढञ् स्यात् तत्र भव इत्यर्थे। दार्तेयम्। दृतिश्चर्मविकारः। कौक्षेयम्। कालशेयम्। वास्तेयम्। वस्तिर्नाभेरधःशरीरावयवः। आस्तेयम्। आहेयं विषम्। अस्तिः विभक्तिप्रतिरूपको निपातः तिङन्तेन समानार्थः। अस्तिक्षीरा गौरिति यथा॥

ग्रीवाभ्योऽण् च॥ ५७ ॥

तत्र भव इत्येव। चात् ढञ्। ग्रीवासु भवं ग्रैवम्। ग्रैवेयम्। ग्रीवाशब्दः भूतावयवविशेषसङ्घातवचनः। तेषां बहुत्वात् बहुवचनम्। यदा तिरोहितावयवच्छेदसङ्घे वर्तते तदैकवचनांतस्य प्रयोगः॥

गम्भीराञ्ञ्यः॥ ५८ ॥

तत्र भव इत्येव। गाम्भीर्यम्॥

पञ्चजनाच्च॥

पाञ्चजन्यम्॥

अव्ययीभावाच्च॥ ५९ ॥

ञ्यः। परिमुखं भवं पारिमुख्यम्। पारिहनव्यम् इत्यादि॥

परिमुखादेशिना(रेवा)व्ययीभावादयं विधिः॥

तेनेह न। औपकूलः औपशालः॥

अन्तःपूर्वपदाट्ठञ् ॥ ६० ॥

अन्तः पूर्वपदादव्ययीभावात् ठञ् स्यात्तत्र भव इति विषये। अणोपवादः। आन्तर्गेहिकम्। आन्तरगारिकम्। विभक्त्यर्थेऽव्ययीभावः॥

समानाच्च ॥

सामानिकम्॥

तदादेश्च ॥

सामानदेशिकम्। सामानग्रामिकम्॥

अध्यात्मादिभ्यश्च ॥

आध्यात्मिकम्। आधिदैविकम्। आधिभौतिकम्। आकृतिगणोयम्। अनुशतिकादित्वादुभयपदवृद्धिः॥

ऊर्ध्वंदमाच्च ॥

और्ध्वंदमिकम्। निपातनान्मान्तत्वमूर्ध्वस्य॥

ऊर्ध्वदेहाच्च ॥

और्ध्वदैहिकम्॥

लोकोत्तरपदाच्च ॥

ऐहलौकिकम्। पारलौकिकम्॥

मुखपार्श्वाभ्यान्तसन्ताभ्यामीयमत्ययः॥

मुखतीयम्। पार्श्वतीयम्॥

जनपरयोः कुक्च ॥

जनकीयम्। परकीयम्॥

मध्यादीयः॥

मध्यीयः॥

मण्मीयौ च ॥

माध्यमः । मध्यमीयः ॥

मध्य मध्यं दिनण् चास्मात् ॥

मध्ये भवं माध्यंदिनम् ॥

स्थाम्नो लुक् ॥

अश्वत्थामा ॥

अजिनांताच्च ॥

लुक् । उष्ट्राजिनः । सिंहाजिनः ॥

ग्रामात्पर्यनुपूर्वात् ॥ ६१ ॥

अव्ययीभावादित्येव । अस्मात् ठञ् स्यात् तत्र भव इति विषये । पारिग्रामिकः । आनुग्रामिकः ॥

जिह्वामूलाङ्गुलेश्छ. ॥ ६२ ॥

यतोऽपवादः । जिह्वामूलीयम् । अङ्गुलीयम् ॥

वर्गान्ताच्च ॥ ६३ ॥

छः । कवर्गीयम् । पवर्गीयम् ॥

अशब्दे यत्खावन्यतरस्याम् ॥ ६४ ॥

वर्गान्तोदेतौ वा स्तः न तु शब्दे । वासुदेववर्गे भवः वासुदेववर्ग्यः । वासुदेववर्गीणः । वासुदेववर्गीयः । अशब्दे किं । कवर्गीयः वर्णः ॥

कर्णललाटात्कन्नलङ्कारे ॥ ६५ ॥

कर्णे भवा कर्णिका । ललाटिका । अलङ्कारे किम् । कर्ण्यम् । ललाट्यम् ॥

तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ॥६६॥

व्याख्यायतेऽनेनेति व्याख्यानम्। व्याख्यातव्यस्य नाम व्याख्यातव्यनाम। तस्येति षष्ठीसमर्थाद् व्याख्यातव्यस्य नाम्नः यथाविहितं प्रत्ययः स्याद् व्याख्याने विधेये। चकारेण तत्र भव इति समुच्चीयते। वक्ष्यमाणाष्ठञादयो भवव्याख्यानयोर्यथा स्युरित्येवमर्थमुभयाधिकारः। सुपां व्याख्यानं सौपो ग्रन्थः। तैङः। सुप्सु भवं सौपम्। तैङम्। व्याख्यातव्यनाम्नः किं। पाटलिपुत्रस्य व्याख्यानी सुकोसला। एवं सन्निवेशं पाटलिपुत्रमिति सुकोसलया व्याख्यायते। पाटलिपुत्रशब्दस्तु न व्याख्यातव्यनाम। ग्रन्थस्यैव व्याख्यातव्यत्वेन प्रसिद्धत्वाद् निरुक्तं व्याख्यायत इति। न हि पाटलिपुत्रं व्याख्यायत इति कश्चिदाह॥

बह्वचोन्तोदात्तात् ठञ् ॥ ६७ ॥

बह्वचोन्तोदात्ताद्व्याख्यातव्यनाम्नः ठञ् स्याद् भवव्याख्यानयोः। षात्वणत्विकम्। सामस्तिकम्(?)। समासस्वरेणान्तोदात्तत्वम्। बह्वचः किम्। द्व्यचष्ठकं वक्ष्यति। एकाच् प्रत्युदाहरणम्। सौपम्। तैङम्। कार्तम्। अन्तोदात्तात्किम्। संहितायां व्याख्यानं तत्र भवं वा सांहितम्। संहिताशब्दः गतिरनन्तरः(६।२।४९)इत्याद्युदात्तः॥

क्रतुयज्ञेभ्यश्च ॥ ६८ ॥

ठञ्। क्रतुभ्यः। अग्निष्टोमस्य व्याख्यानं तत्र भवो वा आग्निष्टोमिकः। वाजपेयिकः। राजसूयिकः। यज्ञेभ्यः। पाकयज्ञिकः। क्रतुग्रहणेनैवसिद्धे असोमयागार्थं यज्ञग्रहणम्। पाञ्चौदनिकः। दाशौदनिकः॥

अध्यायेष्वेवर्षेः ॥ ६९ ॥

ऋषिशब्दाः मन्त्राध्यायपठिता इह गृह्यन्ते । तेषां साहचर्यात् ग्रन्थादावुपचाराद्वृत्तिः । ऋषिशब्देभ्यष्ठञ् स्यात् भवव्याख्यानयोः । अध्यायेष्विति प्रत्ययार्थविशेषणम् । वसिष्ठस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकः अध्यायः । वैश्वामित्रिकः । अध्यायेषु किम् । वासिष्ठी ऋक् ॥

पौरोडाशपुरोडाशात् ष्ठन् ॥ ७० ॥

पुरोडाशसंस्कारको मन्त्रः पौरोडाशः । तस्य व्याख्यानं तत्र भवो वा पौरोडाशिकः । पुरोडाशसहचरितो मन्त्रः पुरोडाशः । तस्य व्याख्यानं तत्र भवो वा पुरोडाशिकः । षो ङीषर्थः । पुरोडाशिकी ॥

छन्दसो यदणौ ॥ ७१ ॥

अज्लक्षणठकोऽपवादः । छन्दसो व्याख्यानं तत्र भवं वा छन्दस्यम् । छान्दसम् ॥

अजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ॥ ७२ ॥

अजादिभ्यो व्याख्यातव्यनामभ्यष्ठक् स्यात् । अणाद्यपवादः । अचस्तावत् । इष्टेर्व्याख्यानमिष्टौ भवं वा ऐष्टिकम् । पाशुकम् । ऋकारान्तात् । चातुर्होतृकः । पाञ्चहोतृकः । ब्राह्मणिकः । आर्चिकः । प्राथमिकः । आध्वरिकः । पौरश्चरणिकः । नामाख्यातिकः ॥

विगृहीतादपि ॥

नामिकः । आख्यातिकः ॥

अणृगयनादिभ्यः ॥ ७३ ॥

ठञादेरपवादः । ऋगयनस्य व्याख्यानं तत्र भवं वा आर्गयनम् । पादव्याख्यानमित्यादि ॥

तत आगतः ॥ ७४ ॥

तत इति पञ्चमीसमर्थादागत इत्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् । स्रुघ्नादागतः । स्रौघ्नः । माथुरः ॥

ठगायस्थानेभ्यः ॥ ७५ ॥

स्वामिग्राह्यो भाग आयः । स यस्मिन्नुत्पद्यते तदायस्थानम् । तद्वाचिभ्यः ठक् स्यात् तत आगत इति विषये । अणोऽपवादः । छं तु परत्वात् बाधते । शुल्कशालाया आगतः शौल्कशालः । आपणिकः ॥

शुण्डिकादिभ्योऽण् ॥ ७६ ॥

आयस्थानठगाद्यपवादः । शुण्डिकादागतः शौण्डिकः । कार्कण इत्यादि ॥

विद्यायोनिसम्बन्धेभ्यो वुञ् ॥ ७७ ॥

विद्यायोनिसम्बन्धवाचिभ्यो वुञ् स्यात् तत आगत इत्यत्र । उपध्यायादागतं औपाध्यायकम् । शैष्यकम् । आचार्यकम् । योनिसम्बन्धेभ्यः । मातामहकम् । पैतामहकम् ॥

ऋतठञ् ॥ ७८ ॥

ऋकारान्ताद्विद्यायोनिसम्बन्धवाचिनः ठञ् स्यात् । वुञोऽपवादः । होतुरागतं हौतृकम् । भ्रातृकम् । स्वास्रकम् । मातृकम् ॥

पितुर्यच्च ॥ ७९ ॥

चात् ठञ् । पितुरागतं पित्र्यम् । पैतृकम् ॥

गोत्रादङ्कवत् ॥ ८० ॥

अपत्याधिकारादन्यत्र लौकिकं गोत्रमपत्यमात्रं गृह्यते । गोत्रप्रत्ययान्तादङ्कवत्प्रत्ययः स्यात्तत आगत इति विषये । गोत्रचरणाद्वुञ्(४।३।१२६)सङ्घाङ्कलक्षणेष्वञ्यञिञामण्(४।३।१२७) इति विहितवुञणोरयमतिदेशः । औपगवात् आगतं औपगवकम् । कापटकम् । वैदम् । गार्गम् । दाक्षम् ॥

हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ॥ ८१ ॥

तत आगत इत्येव । हेतुभ्यस्तावत् । समादागतं समरूप्यम् । विषमरूप्यम् । समीयम् । विषमीयम् । गहादित्वाच्छः । मनुष्येभ्यः । देवदत्तरूप्यम् । दैवदत्तम् । मनुष्यग्रहणमहेत्वर्थम् । बहुवचनम् स्वरूपविधिनिरासार्थम् ॥

मयट् च ॥ ८२ ॥

हेतुमनुष्येभ्य इत्येव । विषमादागतं विषममयम् । देवदत्तमयम् ॥

प्रभवति ॥ ८३ ॥

पञ्चमीसमर्थात् प्रभवतीत्यर्थे यथाविहितं प्रत्ययः स्यात् । प्रभवः प्रथमोपलम्भः । हिमवतः प्रभवति हैमवती गङ्गा ॥

विदूराञ्ञ्यः ॥ ८४ ॥

ततः प्रभवतीत्येव । वैदूर्यम् । बालवायं विदूरमिति वैयाकरणा उपचरन्ति । बालवायाद्धि वैदूर्यं प्रभवति ॥

तद्गच्छति पथिदूतयोः ॥ ८५ ॥

तदिति द्वितियासमर्थात् गच्छतीत्यर्थे यथाविहितं प्रत्ययः स्यात् । मथुरां गच्छति माथुरः पन्थाः दूतो वा । पथिदूतयोः किम् । मथुरां गच्छति सेना ॥

अभिनिष्क्रामति द्वारम् ॥ ८६ ॥

द्वितीयासमर्थात् अभिनिष्क्रामतीत्यर्थे यथाविहितं प्रत्ययः स्यात् । आभिमुख्येन निष्क्रमणमभिनिष्क्रमणम् । स्रुघ्नमभिनिष्क्रामति कान्यकुब्जद्वारं स्रौघ्नम् । माथुरम् । द्वारं किम् । स्रुघ्नमभिनिष्क्रामति पुरुषः । निष्क्रमणक्रियायां करणं द्वारमिति तस्यैव स्वातन्त्र्यविवक्षायां द्वारं निष्क्रामतीत्युपपद्यते ॥

अधिकृत्य कृते ग्रन्थे ॥ ८७ ॥

द्वितीयासमर्थात् अधिकृत्येत्यर्थे यथाविहितं प्रत्ययः स्यात् यत्कृतं स चेत् ग्रन्थः । सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रः । ग्रन्थे किम् । सुभद्रामधिकृत्य कृतः प्रासादः ॥

लुबाख्यायिकार्थस्य बहुलम् ॥

वासवदत्तामधिकृत्य कृता आख्यायिका वासवदत्ता । सुमनोत्तरा । क्वचिन्न । भैमरथी । आख्यायिका गद्यग्रन्थविशेषः ॥

शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ ८८ ॥

अधिकृत्य कृते ग्रन्थ इत्येव । शिशूनां क्रन्दनं शिशुक्रन्दः । तमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः । यमसभीयः । द्वन्द्वात् । अग्निकाश्यपीयः । इन्द्रजननीयः । इन्द्रजननादिराकृतिगणः ॥

द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः ॥

दैवासुरम् । राक्षोसुरम् ॥

सोस्य निवासः ॥ ८९ ॥

स इति प्रथमासमर्थान्निवासोपाधिकादस्येत्यर्थे यथाविहितं प्रत्ययः स्यात् । निवसन्त्यस्मिन्निति निवासः । मथुरा निवासोऽस्य माथुरः । राष्ट्रियः ॥

अभिजनश्च ॥ ९० ॥

प्रथमासमर्थादभिजनोपाधिकादस्येत्यर्थे यथाविहितं प्रत्ययः स्यात् । स्रुघ्नोभिजनोस्य । स्रौघ्नः । माथुरः । अभिजनाः पित्रादयः । तत्सम्बन्धाद्देशोप्यभिजन उच्यते । यत्र स्वयमस्ति स तस्य निवासः यत्र पित्रादिभिरुषितं सोभिजन इति विवेकः ॥

आयुधजीविभ्यश्छः पर्वते ॥ ९१ ॥

पर्वतवाचिनः प्रथमासमर्थादभिजनादस्येत्यर्थे छः स्यादायुधजीविषु । सूत्रे तादर्थ्ये चतुर्थी । हृद्गोलः पर्वतोऽभिजन एषामायुधजीविनां हृद्गोलीयाः । अन्धकवर्तीयाः । रोहितगिरीयाः । आयुधजीविभ्यः किम् । ऋक्षोदः पर्वतोऽभिजन एषां ब्राह्मणानां आर्क्षोदाः । पर्वते किम् । साङ्काश्यका आयुधजीविनः ॥

शण्डिकादिभ्यो ञ्यः ॥ ९२ ॥

सोऽस्याभिजन इत्येव । शण्डिकोऽभिजनोस्य शाण्डिक्यः । सार्वसेन्यः ॥

सिन्धुतक्षशिलादिभ्योऽणञौ ॥ ९३ ॥

सिन्ध्वादिभ्यस्तक्षशिलादिभ्यश्च यथासङ्ख्यमणञौ स्तः सोऽस्याभिजन इत्येतद्विषये। सैन्धवः। वार्णव इत्यादि। ताक्षशिलः। वात्सोद्धरण इत्यादि॥

तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ॥ ९४ ॥

सोऽस्याभिजन इत्येव। तूद्यादिभ्यश्चतुर्भ्यः यथासङ्ख्यमेते स्युः। तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्यः॥

भक्तिः ॥ ९५ ॥

भज्यतेऽसौ भक्तिः। प्रथमासमर्थात् भक्त्युपाधिकादस्येत्यर्थे यथाविहितं प्रत्ययः स्यात्। स्रुघ्नो भक्तिरस्य स्रौघ्नः। माथुरः॥

अचित्तादृदेशकालाट्ठक् ॥ ९६ ॥

सोऽस्य भक्तिरित्येव। देशकालव्यतिरिक्तादचित्तवाचिनः ठक् स्यात्। आपूपिकः। शाष्कुलिकः। अचित्तात् किम्। दैवदत्तः। अदेशकालात्किम्। स्रौघ्नः। ग्रैष्मः॥

महाराजाट्ठञ् ॥ ९७ ॥

महाराजो भक्तिरस्य माहाराजिकः। स्वरभेदः॥

वासुदेवार्जुनाभ्यां वुन् ॥ ९८ ॥

वासुदेवो भक्तिरस्य वासुदेवकः। अर्जुनकः। देवताविशेषवाचिनो वासुदेवस्यैव ग्रहणम्। क्षत्रियवाचिनस्तु गोत्रक्षत्रियाख्येभ्य(४।३।९९)इत्येव वुञ् सिद्धः। स्वरे च न भेदः॥

गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ॥ ९९ ॥

सोस्य भक्तिरित्येव । गोत्राख्येभ्यः क्षत्रियाख्येभ्यश्च वुञ् स्यात् । ग्लुचुकायनिर्भक्तिरस्य ग्लौचुकायनकः । क्षत्रिय । नाकुलकः । बहुलात् पाणिनो भक्तिरस्य पाणिनीयः । आख्याग्रहणं प्रसिद्धक्षत्रियशब्दपरिग्रहार्थम् ॥

जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ॥ १०० ॥

जनपदिनो जनपदस्वामिनः क्षत्रियाः । तद्वाचिनां बहुवचने जनपदवाचिना शब्देन समानश्रुतीनां जनपदवत्सर्वं स्यात् प्रत्ययः प्रकृतिश्च सोस्य भक्तिरित्येतस्मिन्विषये । यथा अङ्गा जनपदो भक्तिरस्य आङ्गक इत्यवृद्धाद्(४।२।१२५)पीति वुञ् भवति । एवमङ्गाः क्षत्रिया भक्तिरस्य अङ्गक इत्येव । जनपदतदवध्योश्चे(४।२।१२४)तिप्रकरणोक्तस्यायमतिदेशः । बहुवचनग्रहणं बहुवचने समानश्रुतीनां वचनान्तरेऽपि प्रत्ययार्थम् । अङ्गः अङ्गौ वा भक्तिरस्य आङ्गकः । अन्यथा यत्र साम्यं तत्रैव स्यात् । एकवचनद्विवचनयोर्न स्यात् ॥

तेन प्रोक्तम् ॥ १०१ ॥

तेनेति तृतीयासमार्थात् प्रोक्तमित्यर्थे यथाविहितं प्रत्ययः स्यात् । अध्ययनार्थकथनादिना प्रकर्षेण प्रदर्शितं प्रोक्तम् । न तु कृतम् । कृते ग्रन्थ इत्येव गतत्वात् । अन्येन कृता माथुरेण प्रोक्ता माथुरी वृत्तिः ॥

तित्तिरिवरतन्तुखण्डिकोखाच्छण् ॥ १०२ ॥

एभ्यः छण् स्यात् । तेन प्रोक्तमित्येव । तित्तिरिणा

प्रोक्तमधीयते तैत्तिरीयाः। वारतन्तवीयाः। खाण्डिकीयाः। औखीयाः। शौनकादिभ्यश्छन्दसीत्यत्रैतदनुवर्तनात् छन्दस्येव। नेह। तित्तिरिणा प्रोक्ताः श्लोकाः। अनभिधानादत्रापि न॥

काश्यपकौशिकाभ्यामृषिभ्यां णिनिः॥ १०३॥

तेन प्रोक्तमित्येव। छापवादः। कल्पसूत्राभ्यां प्रोक्तः। तस्यापि तद्विषयतेत्युक्तं छन्दोब्राह्मणानि च तद्विषयाणीत्यत्र। काश्यपेन प्रोक्तमधीयते काश्यपिनः। कौशिकिनः। ऋषिभ्यां किम्। इदानीन्तनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम्॥

कलापिवैशम्पायनान्तेवासिभ्यश्च॥ १०४॥

कलाप्यन्तेवासिवाचिनो वैशम्पायनान्तेवासिवाचिनश्च णिनिः स्यात् तेन प्रोक्तमित्यस्मिन्विषये। अणोपवादः। छं तु परत्वात् बाधते। कलाप्यन्तेवासिनश्चत्वारः। हरिद्रुणा प्रोक्तमधीयते हारिद्राविणः। तुम्बुरु। तौम्बुरविणः। उलपा औलपिनः। छगलिनो ढिनुकं वक्ष्यति। वैशम्पायनान्तेवासिनो नव। आलम्बि। पिलिङ्गि(पलङ्ग)। कमल। ऋचा(भटना)भ। आरुणि। ताण्डि(ण्ड्य)। श्यादू(मा)पन। कठ। कलापि॥ आलम्बिनइत्यादि। कठाल्लुकं कलापिनोणं च वक्ष्यति। सप्तैवोदाहारणम्। साक्षादन्तेवासिनो गृह्यन्ते न तु अन्तेवास्यन्तेवासिनः॥

पुराणप्रोक्तेषु ब्राह्मणकल्पेषु॥ १०५॥

प्रत्ययार्थविशेषणमेतत्। तृतीयासमर्थात् प्रोक्तार्थे णिनिः स्यात्। ब्राह्मणेषु। भाल्लविनः। कल्पेषु पैङ्गी कल्पः। पु-

शाणप्रोक्तेषु किम् । याज्ञवल्कानि ब्राह्मणानि । आश्मरथः कल्पः। पुराणेन चिरन्तनेन प्रोक्ताः पुराणप्रोक्ताः याज्ञवल्क्यादयश्च न पुरातना ऋषय इति सूत्रकृदाशयः । 'कण्वादित्वादण्। एतस्य तद्विषयता न। प्रतिपदं ब्राह्मणेषु यः प्रत्ययस्तस्यैव लक्षणप्रतिपदोक्तन्यायेन तद्विषयत्वात् । पुराण इति निपातनात्तुडभावः। पुरातन इत्यपि भवत्येव ॥

शौनकादिभ्यश्छन्दसि ॥ १०६ ॥

एभ्यो णिनिः स्यात्। तेन प्रोक्तमित्येव। शौनकिनः। वाजसनेयिनः। छन्दसीति किम्। शौनकीया शिक्षा ॥

कठचरकाल्लुक् ॥ १०७ ॥

आभ्यां प्रोक्तप्रत्ययस्य लुक् स्यात् । कठेन प्रोक्तमधीयते कठाः। चरकाः। छन्दसीत्येव। चारकाः श्लोकाः ॥

कलापिनोऽण् ॥ १०८ ॥

तेन प्रोक्तमित्येव। कलापिना प्रोक्तमधीयते कालापाः। इनण्यनपत्य(६।४।१६४)इति प्रकृतिभावे प्राप्ते नान्तस्य टिलोपे सब्रह्मचारी(६।४।१४४वा)त्यादिवार्तिकेन टिलोपः। यथाविहितमित्येव सिद्धे अण्ग्रहणमधिकविधानार्थम् । तेन माथुरी वृत्तिरित्यादि सिद्धम् ॥

छगलिनो ढिनुक् ॥ १०९ ॥

तेन प्रोक्तमित्येव। छगलिना प्रोक्तमधीयते छागलेयिनः॥

पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ॥ ११० ॥

आभ्यां णिनिः स्यात्तेन प्रोक्तमित्यस्मिन्विषये। भि-

क्षुनटसूत्रयोरिति यथासङ्ख्यं प्रत्ययार्थविशेषणम् । सूत्रशब्दः प्रत्येकमभिसम्बध्यते । तद्विषयता चात्रेष्यते । पाराशर्येण मोक्षमधीयते पाराशरिणो भिक्षवः । शैलालिनो नटाः । पूर्ववट्टिलोपः । भिक्षुनटसूत्रयोः किम् । पाराशरम् । शैलालम् ॥

कर्मन्दकृशाश्वादिनिः ॥ १११ ॥

कर्मन्देन मोक्तमधीयते कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः । यथासङ्ख्यं भिक्षुनटसूत्रयोरित्येव । कार्मन्दम् । काशश्विम् ॥

तेनैकदिक् ॥ ११२ ॥

तेनेति तृतीयासमर्थादेकदिगित्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् । सुदाम्ना समानदिक् सौदामनी विद्युत् । सुदामादयः पर्वतविशेषाः ॥

तसिश्च ॥ ११३ ॥

तेनैकदिगित्यस्मिन्विषये । चाद्यथाविहितं च । पीलुमूलतः । स्वरादिपाठादव्ययत्वम् ॥

उरसो यच्च ॥ ११४ ॥

तेनैकदिगित्येव । चात्तसिः । उरसा एकदिक् उरस्यः ॥

उपज्ञाते ॥ ११५ ॥

तृतीयासमर्थादुपज्ञात इत्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् । विनोपदेशेन स्वयं ज्ञातमुपज्ञातम् । पाणिनिनोपज्ञातं पाणिनीयम् ॥

कृते ग्रन्थे ॥ ११६ ॥

तृतीयासमर्थात् कृते ग्रन्थे यथाविहितं प्रत्ययः स्यात् । वररुचिना कृतो वाररुचो ग्रन्थः ॥

संज्ञायाम् ॥ ११७ ॥

तेन कृतमित्यस्मिन्विषये यथा विहितं प्रत्ययः स्यात् संज्ञायाम् । अग्रन्थार्थमिदम् । मक्षिकाभिः कृतं माक्षिकम् । गार्मुतम् । मधुनः संज्ञा ॥

कुलालादिभ्यो वुञ् ॥ ११८ ॥

कृतमित्यस्मिन्विषये संज्ञायाम् । कुलालेन कृतं कौलालकमित्यादि ॥

क्षुद्राभ्रमरवटरपादपादञ् ॥ ११९ ॥

एभ्योञ् स्यात्तेन कृतमित्यस्मिन्विषये संज्ञायाम् । क्षुद्राभिः कृतं क्षौद्रम् । भ्रामरम् । वाटरम् । पादपम् ॥

तस्येदम् ॥ १२० ॥

तस्येति षष्ठीसमर्थादिदमित्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् । उपगोरिदमौपगवम् । अनन्तरादिष्वनभिधानान्न । देवदत्तस्यानन्तरमिति ॥

वहेस्तुरणिट् च ॥

संवोढुः स्वं सांवहित्रम् ॥

अग्नीधः शरणे रञ् भसंज्ञा च ॥

आग्नीध्रम् ॥

समिधामाधाने षेण्यण् ॥

समिधामाधानो मन्त्रः सामिधेन्यः । सामिधेनी ऋक् ॥

रथाद्यत् ॥ १२१ ॥

रथस्येदं रथ्यम् चक्रादि । अभिधानस्वाभाव्याद्रथाङ्ग एवेष्यते ॥

तदन्तविधिरत्रेष्यते ॥

परमरथ्यम् ॥

पत्रपूर्वादञ् ॥ १२२ ॥

पत्रं वाहनम् । तत्पूर्वाद्रथादञ् स्यात् । यतोऽपवादः । अश्वरथस्येदमाश्वरथम् । औष्ट्ररथम् ॥

पत्राध्वर्युपरिषदश्च ॥ १२३ ॥

पत्रवाचिनोऽध्वर्युपरिषद्भ्यां चाञ् स्यात् । अश्वस्येदमाश्वम् । गार्दभम् । आध्वर्यवम् । पारिषदम् ॥

हलसीराट्ठक् ॥ १२४ ॥

हलस्येदं हालिकम् । सैरिकम् ॥

द्वन्द्वाद्वुन् वैरमैथुनिकयोः ॥ १२५ ॥

द्वन्द्वसंज्ञकाद्वुन् स्याद्वैरमैथुनिकयोः । वैरे । काकोलूकिका । मैथुनिकायाम् । आत्रिभारद्वाजिका । मिथुनकर्म मैथुनिका । मनोज्ञादित्वाद् वुञ् । वुन्नतं स्वभावात् स्त्रियां वर्तते ॥

वैरे देवासुरादिभ्यः प्रतिषेधः ॥

दैवासुरम् । राक्षोसुरम् ॥

गोत्रचरणाद्वुञ् ॥ १२६ ॥

गोत्रवाचिभ्यश्चरणवाचिभ्यश्च वुञ् स्यात् । औपगवस्येदमौपगवकम् ॥

चरणाद्धर्माम्नाययोरिष्यते ॥

काठकम् । कालापकम् ॥

सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ॥ १२७ ॥

अञ् यञ् इञ् एतदन्तादण् स्यात् सङ्घादिषु ॥

सङ्घादिषु घोषग्रहणम् ॥

तेन यथासङ्ख्यं न । पूर्ववुञोऽपवादः । अञन्तात् । बैदः सङ्घः अङ्कः लक्षणं घोषो वा । यञन्तात् । गार्गः सङ्घः अङ्कः लक्षणं घोषो वा । इञन्तात् । दाक्षः सङ्घादिः ॥

शाकलाद्वा ॥ १२८ ॥

अस्मादण्वा स्यात्सङ्घादिषु । शाकलेन प्रोक्तमधीयते शाकलाः । तेषां सङ्घादिः शाकलः शाकलको वा । चरणत्वात् वुञ् ॥

छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ॥ १२९ ॥

सङ्घादयो निवृत्ताः । एभ्यो ञ्यः स्यात्तस्येदमित्यत्र । चरणाद्धर्माम्नाययोः । छन्दोगानां धर्मः आम्नायो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नटानां धर्म आम्नायो वा नाट्यम् ॥

न दण्डमाणवान्तेवासिषु ॥ १३० ॥

दण्डप्रधाना माणवा दण्डमाणवाः । एष्वभिधेयेषु वुञ

न । गोत्रग्रहणानुवर्तनाद्युञ एवायं प्रतिषेधः । गौकक्षा दण्डमाणवाः अन्तेवासिनो वा । दाक्षाः । प्लाक्षाः ॥

रैवतिकादिभ्यश्छः ॥ १३१ ॥

गोत्रवुञोपवादः । रैवतिकस्येदं रैवतिकीयमित्यादि ॥

कौपिञ्जलहास्तिपदादण् ॥ १३२ ॥

गोत्रवुञोऽपवादः । तस्येदमित्येव । कौपिञ्जलाः । हास्तिपदाः ॥

अथर्वणिकस्यैकलोपश्च ॥ १३३ ॥

अथर्वणिकादण् स्यादेकस्य च लोपः । अथर्वणिकस्य धर्म अम्नायो वा आथर्वणः ॥

तस्य विकारः ॥ १३४ ॥

तस्येति षष्ठीसमर्थाद्विकार इत्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् । अप्राण्याद्यु[दाहरणम्] । अश्मनो विकारः आश्मः । आश्मनः । अश्मनो विकार(६।४।१४४वा) इति पाक्षिकष्टिलोपः । मृत्तिकाया विकारो मार्त्तिकः । नित्स्वरेणाद्युदात्तावेतौ । तस्य प्रकरणे पुनस्तस्य ग्रहणं शैषिकनिवृत्त्यर्थम् । विकारावयवयोर्घादयो न भवन्तीति । हालः । सैरः ॥

अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ १३५ ॥

एभ्यः षष्ठीसमर्थेभ्यो यथाविहितं प्रत्ययः स्यादवयवे चाद्विकारे च । तत्र प्राणिभ्योऽञ वक्ष्यति । ओषधिभ्यः । मौर्वं काण्डम् भस्म वा । वृक्षेभ्यः । खादिरं काष्ठं भस्म वा । इत

उत्तरे प्रत्ययाः प्राण्योषधिवृक्षेभ्यो विकारावयवविषयाः । अन्येभ्यस्तु विकारमात्रे । आपादसमाप्तेर्विकाराधिकारः ॥

बिल्वादिभ्योऽण् ॥ १३६ ॥

अञ्मयटोरपवादः । बिल्वस्य विकारः अवयवो वा बैल्वः । व्रैह इत्यादि ॥

कोपधाच्च ॥ १३७ ॥

कोपधादण् स्याद्यथायोगं विकारावयवयोः । अणोऽपवादः । माण्डूकम् । तार्क्षवम् ॥

त्रपुजतुनोः षुक् ॥ १३८ ॥

एतयोरण् स्यात् षुक् चागमः । त्रपुणो विकारः त्रापुषम् । जातुषम् ॥

ओरञ् ॥ १३९ ॥

उकारान्तादञ् स्यात् । अणोऽपवादः । देवदारोर्विकारः अवयवो वा दैवदारवम् । भाद्रदारवम् ॥

अनुदात्तादेश्च ॥ १४० ॥

अञ् । कपित्थस्य विकारः अवयवो वा कापित्थम् । दाधित्थम् । कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तावेतौ ॥

पलाशादिभ्यो वा ॥ १४१ ॥

अञ् । पलाशानां विकारः अवयवो वा पालाशम् । स्वरे भेदः । खादिरम् ॥

शम्याः ट्लञ् ॥ १४२ ॥

शम्या विकारः अवयो वा शामीलम्। शामीली स्रुक् ॥

मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ १४३ ॥

प्रातिपदिकमात्रान्मयड्वा स्यात् भक्ष्याच्छादनवर्जितयोर्विकारावयवयोर्भाषायाम्। विकारावयवाधिकारे पुनरेतयोर्ग्रहणं अपवादविषयेपि मयटः समावेशार्थम् । कपोतमयम् । कापोतम्। लोहमयम् । लौहम्। अश्ममयम्। आश्मनम्। भाषायां किम्। बैल्वो यूपः। अभक्ष्याच्छादनयोः किम् । मौद्गः सूपः। कार्पासमाच्छादनम् ॥

नित्यं वृद्धशरादिभ्यः ॥ १४४ ॥

वृद्धाच्छरादिभ्यश्च नित्यं मयट् स्यात् । आम्रमयम् । शालमयम् । शरादिभ्यः । शरमयम् । दर्भमयमित्यादि । आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणादेकाचो नित्यं मयडिति सिद्धं भवति । त्वङ्मयम् ॥

गोश्च पुरीषे ॥ १४५ ॥

मयट्। गोमयम्। पुरीषे किम् । गव्यम् पयः । पुरीषं न विकारो नावयवः ॥

पिष्टाच्च ॥ १४६ ॥

नित्यं मयट्। पिष्टमयम् ॥

संज्ञायां कन् ॥ १४७ ॥

पिष्टादित्येव । मयटोऽपवादः । पिष्टकः ॥

## व्रीहेः पुरोडाशे ॥ १४८ ॥

मयट् । बिल्वाद्यणोपवादः । व्रीहिमयः पुरोडाशः । व्रैहमन्यत् ॥

## असंज्ञायां तिलयवाभ्याम् ॥ १४९ ॥

मयट् । तिलमयम् । यवमयम् । असंज्ञायां किम् । तैलम् । यावकः । यावादिभ्यः कन्(५।४।२९) ॥

## द्व्यचश्छन्दसि ॥ १५० ॥

मयट् । वर्णमयी जुहूः । शरमयं बर्हिः ॥

## नोत्वद्वर्ध्रबिल्वात् ॥ १५१ ॥

उत्वतः वर्ध्रबिल्वाभ्यां च मयट् न । द्व्यचश्छन्दसी-(४।३।१५०)त्यस्य प्रतिषेधः । मौञ्जम् । गार्मुतम् । वार्ध्री । बैल्वः । तपरः किम् । धूममयान्यभ्राणि ॥

## तलादिभ्योऽण् ॥ १५२ ॥

मयडाद्यपवादः । तालं धनुः । तालमयमन्यत् । बार्हिणम् ॥

## जातरूपेभ्यः परिमाणे ॥ १५३ ॥

जातरूपं सुवर्णम् । तद्वाचिभ्योण् परिमाणे विकारे । मयडाद्यपवादः । हाटको निष्कः । हाटकं कार्षापणम् । जातरूपम् । तापनीयम् । परिमाणे किम् । हाटकमयी यष्टिः ॥

## प्राणिरजतादिभ्योऽञ् ॥ १५४ ॥

प्राणिवाचिभ्यो रजतादिभ्यश्चाञ् स्याद्विकारावयवयोः ।

अणाद्यपवादः । कापोतम् । मायूरम् । राजनम् । सैसम् । लौहमित्यादि । अत्र ये अनुदात्तादयः पठ्यन्ते रजतादयः तेभ्योऽञि सिद्धे मयड्निवृत्त्यर्थं पुनर्वचनम् ॥

ञितश्च तत्प्रत्ययात् ॥ १५५ ॥

तच्छब्देन विकारावयवपरामर्शः । ञितो विकारावयवप्रत्ययस्तदन्तादञ् स्यात् विकारावयवयोः । मयटोऽपवादः । ओरञ्(४।३।१३९) शम्याः ष्लञ्(४।३।१४२)प्राणिरजतादिभ्योऽञ्(४।३।१५४) उष्ट्राद्वुञ्(४।३।१५७)एण्या ढञ्(४।३।१५९) कंसीयपरशव्ययोर्यञञौ(४।३।१६८) इत्येते गृह्यन्ते । दैवदारवस्य विकारोऽवयवो वा दैवदारवम् । कापित्थम् । पालाशम् । शामीलमित्यादि । ञितः किम् । बैल्वमयम् । तत्प्रत्ययात् किम् । बैदमयम् ॥

क्रीतवत्परिमाणात् ॥ १५६ ॥

प्राग्वहतेष्ठगि(४।४।१)त्यारभ्य परिमाणात् क्रीतार्थे ये विहितास्ते विकारेऽतिदिश्यन्ते । अणादीनामपवादः । संख्यापि परिमाणमेव । निष्केण क्रीतं नैष्ककम् । एवं निष्कस्य विकारो नैष्ककम् । शत्यः । शतिकः । वतिः सर्वसादृश्यार्थः । तेन अध्यर्धपूर्वे(५।१।२८)त्यादिविधिरपि भवति । द्विसहस्रः । द्विसाहस्रम् । विभाषा कार्षापणे(५।१।२९)ति पाक्षिकलुक् । संख्यायाः संवत्सरसंख्यस्ये(७।३।१५)त्युत्तरपदवृद्धिः ॥

उष्ट्राद्वुञ् ॥ १५७ ॥

प्राण्यञोऽपवादः । उष्ट्रस्य विकारोऽवयवो वा औष्ट्रकः ॥

उमोर्णयोर्वा ॥ १५८ ॥

वुञ् । उमा । औमम् । औमकम् । ऊर्णा । और्णम् । और्णकम् ॥

एण्या ढञ् ॥ १५९ ॥

प्राण्यञोऽपवादः। एण्या विकारः अवयवो वा ऐणेयम्। पुंसस्त्वणेव ॥

गोपयसोर्यत् ॥ १६० ॥

गव्यम्। पयस्यम् ॥

द्रोश्च ॥ १६१ ॥

यत्। द्रव्यम् ॥

माने वयः ॥ १६२ ॥

द्रोर्वयप्रत्ययः स्यात् माने विकारविशेषे। द्रुवयं मानम्। मीयते येन मानं प्रस्थादि ॥

फले लुक् ॥ १६३ ॥

विकारावयवप्रत्ययस्य फले वाच्ये लुक् स्यात्। आमलक्याः फलमामलकम्। लुक्तद्धितलुकी(१।२।४९)ति स्त्रीप्रत्ययस्य लुक् ॥

प्लक्षादिभ्योऽण् ॥ १६४ ॥

एभ्योऽण् स्यात् फले वाच्ये। विधानसामर्थ्यान्न लुक्। प्लाक्षं फलम्। नैयग्रोधम्। न्यग्रोधस्य च केवलस्ये(७।३।५)त्यैच्। आश्वत्थमित्यादि ॥

जम्ब्वा वा ॥ १६५ ॥

अस्मात् फलेऽण् वा स्यात्। ओरञो(४।३।१३९)ऽपवादः।

अणो विधानान्न लुक् । अञो भवत्येव । जाम्बवम् । जम्बु वा फलम् ॥

लुप्च ॥ १६६ ॥

जम्ब्वाः फलमत्ययस्य लुब्वा स्यात् । लुपि युक्तवद्व्यक्तिवचने(१।२।५१) । जम्ब्वाः फलं जम्बूः ॥

लुप्प्रकरणे फलपाकशुषामुपसंख्यानम् ॥

फलपाकेन ये शुष्यन्ति व्रीह्यादयस्तद्वाचिनामित्यर्थः । व्रीहयः । यवाः । माषाः । मुद्गाः । तिलाः ॥

पुष्पमूलेषु च बहुलम् ॥

मल्लिकायाः पुष्पं मल्लिका । न च भवति । पाटलानि पुष्पाणि । बहुलवचनाल्लुगपि । करवीरम् । अशोकम् ॥

हरीतक्यादिभ्यश्च ॥ १६७ ॥

एभ्यः फलप्रत्ययस्य लुप् स्यात् । हरीतक्याः फलं हरीतकी । कोशातकीत्यादि ॥

कंसीयपरशव्ययोर्यञञौ लुक् च ॥ १६८ ॥

प्राक्क्रीताच्छेन(५।१।१) कंसीयः । उगवादिभ्यो यत्(५।१।२) । परशव्यः । अभ्यां यञञौ यथासङ्ख्यं स्तः छयतोर्लुक् च । कंसीयस्य विकारः कांस्यम् । परशव्यस्य विकारः । पारशवः ॥

इति चतुर्थस्याध्यायस्य तृतीयः पादः ॥

## अथ चतुर्थाध्यायस्य चतुर्थः पादः।

### प्राग्वहतेष्ठक् ॥ १ ॥

तद्वहति रथयुगप्रासङ्ग(४।४।७६)मित्यतः प्राग्येऽर्थास्तत्र ठक् स्यात्। अक्षैर्दीव्यति आक्षिकः इत्यादि ॥

ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसङ्ख्यानम् ॥

माशब्दः इत्याह माशब्दिकः। नैत्यशब्दिकः। कार्यशब्दिकः। वाक्याच्चायं विधिः। अन्यथा प्रभूतादीनां माशब्दादित्वेनैव सिद्धेः पुनर्वचनमनर्थकं स्यात् ॥

आहौ प्रभूतादिभ्यः ॥

प्रभूतमाह प्राभूतिकः। पार्याप्तिकः ॥

पृच्छतौ सुस्नातादिभ्यः ॥

सुस्नातं पृच्छति सौस्नातिकः। सौखरात्रिकः। सौखशायि(खशायनि)कः ॥

गच्छतौ परदारादिभ्यः ॥

परदारान् गच्छति पारदारिकः। गौरुतल्पिकः ॥

### तेन दीव्यति खनति जयति जितं ॥ २ ॥

तेनेति तृतीयासमर्थाद्दीव्यत्यादिष्वर्थेषु ठक् स्यात्। अक्षैर्दीव्यति आक्षिकः। शालाकिकः। कुद्दालेन खनति कौद्दालिकः। अक्षैर्जयति आक्षिकः। अक्षैर्जितं आक्षिकम्। स-

र्थेत्र करणे तृतीया । तेन देवदत्तेन जितमित्यत्र न । सङ्ख्या-
कालौ न विवक्षितौ ॥

संस्कृतम् ॥ ३ ॥

तृतीयासमर्थात् संस्कृतमित्यर्थे ठक् स्यात् । सत उत्क-
र्षाधानं संस्कारः । दध्ना संस्कृतं दाधिकम् । शार्करिकम् ॥

कुलत्थकोपधादण् ॥ ४ ॥

कुलत्थात् कोपधाच्चाण् स्यात् संस्कृतमित्यत्र । ठकोऽप-
वादः । कुलत्थैः संस्कृतं कौलत्थम् । तैत्तिरि(डी)कम् ॥

तरति ॥ ५ ॥

तृतीयासमर्थात्तरतीत्यर्थे ठक् स्यात् । उडुपेन तरति
औडुपिकः ॥

गोपुच्छात् ठञ् ॥ ६ ॥

गोपुच्छेन तरति गौपुच्छिकः ॥

नौद्व्यचष्ठन् ॥ ७ ॥

नावो द्व्यचश्च ठन् स्यात्तरतीत्यर्थे । नावा तरति नावि-
कः । द्व्यचः । घटिकः । पथिकः । षकारः सांहितिको नानु-
बन्धः । बाहुका स्त्री ॥

आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च ।
अवसथात्किशरादेः षितः षडेते ठगधिकारे ॥
विधिनावयापेक्षया षट्त्वम् । प्रत्ययास्तु सप्त ॥

चरति ॥ ८ ॥

तृतीयासमर्थाच्चरत्यर्थे ठक् स्यात्। चरतिर्भक्षणे गतौ च वर्तते। दध्ना चरति दाधिकः। हास्तिकः॥

आकर्षात् ष्ठल् ॥ ९ ॥

चरतीत्येव। आकर्षेण चरति आकर्षिकी। आकर्षः सुवर्णपरीक्षार्थो निकषोपलः॥

पर्पादिभ्यः ष्ठन् ॥ १० ॥

चरतीत्येव। पर्पिकः॥ पादः पच्च॥ पादाभ्यां चरति पदिकः। पदिकी॥

श्वगणात् ठञ् ॥ ११ ॥

चात् ष्ठन्। श्वगणेन चरति श्वागणिकः। श्वगणिकः। श्वादेरिञि (७।३।८) सूत्रेकारादाविति वचनात् ठञि द्वारादिकार्यं न॥

वेतनादिभ्यो जीवति ॥ १२ ॥

एभ्यस्तृतीयान्तेभ्यो जीवत्यर्थे ठक् स्यात्। वेतनेन जीवति वैतनिक इत्यादि। धनुर्दण्डग्रहणमत्र सङ्घातविगृहीतार्थम्। धानुर्दण्डिकः। धानुष्कः। दाण्डिकः॥

वस्नक्रयविक्रयात् ठन् ॥ १३ ॥

आभ्यां ठन् स्याज्जीवत्यर्थे। वस्नेन जीवति वस्निकः। वस्नं मूल्यम्। क्रयविक्रयेण जीवति क्रयविक्रयिकः॥ विगृहीतादपि॥ क्रयिकः। विक्रयिकः॥

आयुधाच्छ च ॥ १४ ॥

चात् ठन्। आयुधेन जीवति आयुधीयः। आयुधिकः॥

हरत्युत्सङ्गादिभ्यः ॥ १५ ॥

एभ्यस्तृतीयासमर्थेभ्यो हरत्यर्थे ठक् स्यात् । उत्सङ्गेन हरति औत्सङ्गिक इत्यादि ॥

भस्त्रादिभ्यः ष्ठन् ॥ १६ ॥

हरतीत्येव । भस्त्रया हरति भस्त्रिकः । भस्त्रिकी इत्यादि ॥

विभाषा विवधवीवधात् ॥ १७ ॥

हरतीत्येव । आभ्यां ष्ठन् स्यात् । पक्षे ठक् । विवधेन हरति विवधिकः । विवधिकी । वीवधिकः । वैवधिकः । एतौ पर्यायौ पथि पर्याहारे च वर्तेते । उभयतो बद्धशिक्यः स्कन्धवाह्यः काष्ठविशेषः पर्याहारः ॥

अण् कुटिलिकायाः ॥ १९ ॥

कुटिलिकया हरति मृगः व्याधं कौटिलिको मृगः । व्याधानामुपकरणं कुटिलिका ॥

निर्वृत्तेऽक्षद्यूतादिभ्यः ॥ २० ॥

एभ्यस्तृतीयासमर्थेभ्यः निर्वृत्तमित्यर्थे ठक् स्यात् । अक्षद्यूतेन निर्वृत्तं आक्षद्यूतिकं वैरम् । गातागतिकमित्यादि ॥

त्रेर्मम्नित्यम् ॥ २१ ॥

ड्वितः क्त्रि(३।३।८८)रिति विहितोत्र गृह्यते । क्त्र्यन्तात् निर्वृत्तमित्यर्थे नित्यं मप् स्यात् । डुपच् । पाकेन निर्वृत्तं पक्त्रिमम् । उप्त्रिममित्यादि । नित्यग्रहणं स्वातन्त्र्यनिवृत्त्यर्थम् । तेन नित्यं मबन्तस्यैव प्रयोगः ॥

निर्वृत्ते भावप्रत्ययान्तादिमब्वाच्यः ॥

पाकेन निर्वृत्तं पाकिमम्। रागिमम्। कुट्टिमम् ॥

अयमित्ययाचिताभ्यां कक्नौ ॥ २१ ॥

निर्वृत्त इत्येव। अभ्यां यथा संख्यमेतौ स्तः। आपमित्यकम्। अव्ययत्वादत्र तेनेति न संबध्यते। याचितकम् ॥

संसृष्टे ॥ २२ ॥

तृतीयासमर्थात् संसृष्ट इत्यर्थे ठक् स्यात्। दध्ना संसृष्टं दाधिकम्। मारीचिकम् ॥

चूर्णादिनिः ॥ २३ ॥

संसृष्ट इत्येव। चूर्णैः संसृष्टाश्चूर्णिनोऽपूपाः ॥

लवणाल्लुक् ॥ २४ ॥

अस्मात् संसृष्टप्रत्ययस्य लुक् स्यात्। लवणेन संसृष्टो लवणः सूपः। द्रव्यवाचिनोऽयं लुक् न गुणवाचिनः। मधुरादिशब्दवल्लुकं विनाप्युपचाराद्द्रव्यवृत्तिसिद्धेः ॥

मुद्गादण् ॥ २५ ॥

संसृष्ट इत्येव। मुद्गैः संसृष्टः मौद्ग ओदनः ॥

व्यञ्जनैरुपसिक्ते ॥ २६ ॥

व्यञ्जनविशेषवाचिभ्यस्तृतीयासमर्थेभ्यः उपसिक्तेऽर्थे ठक् स्यात्। सूपेनोपसिक्तः सौपिक ओदनः। दाधिकः। व्यञ्जनैः किम्। उदकेनोपसिक्त ओदनः ॥

ओजस्सहोम्भसा वर्तते ॥ २७ ॥

एभ्यस्तृतीयासमर्थेभ्यो वर्तत इत्यर्थे ठक् स्यात्। ओ-

जसा वर्तते औजसिकः शूरः । साहसिकश्चोरः । अम्भासिको मत्स्यः ॥

तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥ २८ ॥

तदिति द्वितीयासमर्थेभ्यः प्रत्यनुपूर्वेभ्य ईपादिभ्यो वर्तत इत्यर्थे ठक् स्यात् । प्रतीपं वर्तते प्रातीपिकः । आन्वीपिकः । प्रातिलोमिकः । प्रातिकूलिकः । आनुकूलिकः ॥

परिमुखं च ॥ २९ ॥

द्वितीयासमर्थादस्माद्वर्तत इत्यर्थे ठक् स्यात् । परिमुखं वर्तते पारिमुखिकः । चात् पारिपार्श्विकः ॥

प्रयच्छति गर्ह्यं ॥ ३० ॥

द्वितीयासमर्थात् गर्ह्यवाचिनः प्रयच्छतीत्यर्थे ठक् स्यात् । द्विगुणार्थं यत्तत् द्विगुणम् । तत् प्रयच्छति द्वैगुणिकः ॥

वृद्धेर्वृधुषिभावः ॥

वार्धुषिकः । गर्ह्यं किम् । द्विगुणं प्रयच्छत्यधमर्णः ॥

कुसीददशैकादशात् ष्ठन्ष्ठचौ ॥ ३१ ॥

अत्रापि तादर्थ्यात्ताच्छब्द्यम् । अभ्यां यथासङ्ख्यमेतौ स्तः प्रयच्छति गर्ह्यमित्यत्र । ठकोपवादः । कुसीदं प्रयच्छति कुसीदिकः । दशैकादशान् प्रयच्छति दशैकादशिकः । निपातनादकारः समासान्तः । षो ङीपर्थः ॥

उञ्छति ॥ ३२ ॥

द्वितीयासमर्थादुञ्छतीत्यर्थे ठक् स्यात् । बदराण्युञ्छति बादरिकः । नैवारिकः ॥

रक्षति ॥ ३३ ॥

द्वितीयासमर्थाद्रक्षत्यर्थे ठक् स्यात् । समाजं रक्षति सामाजिकः ॥

शब्ददर्दुरं करोति ॥ ३४ ॥

द्वितीयासमर्थाभ्यां करोत्यर्थे ठक् स्यात् । शब्दं करोति शाब्दिको वैयाकरणः । अनभिधानाच्छब्दं करोति खर इत्यत्र न । दार्दुरिकः कुलालः ॥

पक्षिमत्स्यमृगान् हन्ति ॥ ३५ ॥

एभ्यो द्वितीयासमर्थेभ्यो हन्त्यर्थे ठक् स्यात् । स्वरूप-पर्यायविशेषाणां ग्रहणम् । पक्षिणो हन्ति पाक्षिकः । शाकुनिकः । तैत्तिरिकः । मात्स्यकः । मैनिकः । शाफरिकः । मार्गिकः । हारिणिकः । सारंगिकः ॥

परिपन्थं च तिष्ठति ॥ ३६ ॥

द्वितीयासमर्थादस्मात्तिष्ठत्यर्थे ठक् स्यात् । चः प्रत्ययार्थं समुच्चिनोति । परिपन्थं तिष्ठति हन्ति वा पारिपन्थिकः ॥

माथोत्तरपदपदव्यनुपदं धावति ॥ ३७ ॥

द्वितीयासमर्थान्माथोत्तरपदात्पदव्यनुपदाभ्यां च धावतीत्यर्थे ठक् स्यात् । दण्डमाथं धावति दाण्डमाथिकः । पदवि । पादविकः । माथशब्दः पथिपर्यायः ॥

आक्रन्दाट्ठञ्च ॥ ३८ ॥

धावतीत्येव । चात् ठक् । स्वरे भेदः । आक्रन्दं धावति

आक्रन्दिकः । आक्रन्दं धावति आक्रन्दिकः । आक्रन्दन्त्यस्मिन्नित्याक्रन्दो देशः ॥

पदोत्तरपदं गृह्णाति ॥ ३९ ॥

पदोत्तरपदात् द्वितीयासमर्थात् गृह्णात्यर्थे ठक् स्यात् । पूर्वपदं गृह्णाति पौर्वपदिकः । औत्तरपदिकः । पदोत्तरं च पदं चेत्यन्ये । तेन पादिक इत्यपि ॥

प्रतिकण्ठार्थललामं च ॥ ४० ॥

एभ्यो द्वितीयासमर्थेभ्यः गृह्णात्यर्थे ठक् स्यात् । प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः । आर्थिकः । लालामिकः ॥

धर्मं चरति ॥ ४१ ॥

द्वितीयान्तादस्माचरत्यर्थे ठक् स्यात् । धर्मं चरति धार्मिकः । आधर्मिकः ॥

प्रतिपथमेति ठंश्च ॥ ४२ ॥

द्वितीयान्तादस्मादेत्यर्थे ठन् स्यात् ठक् च । प्रतिपथमेति प्रतिपथिकः । प्रातिपथिकः ॥

समवायान् समवैति ॥ ४३ ॥

समवायवाचिभ्यो द्वितीयान्तेभ्यः समवैत्यर्थे ठक् स्यात् । समवायः समूहः । समवायान् समवैति सामवायिकः । सामूहिकः ॥

परिषदो ण्यः ॥ ४४ ॥

समवैतीत्येव । परिषदं समवैति पारिषद्यः । पृषतः पार्षद इत्यपि केचित् । परिषदित्यधिकरणे क्विप् ॥

सेनाया वा ॥ ४५ ॥

ण्यः । सेनां समवैति सैन्यः । सैनिकः ॥

संज्ञायां ललाटकुक्कुट्यौ पश्यति ॥ ४६ ॥

आभ्यां द्वितीयान्ताभ्यां पश्यतीत्यर्थे ठक् स्यात् संज्ञायाम् । संज्ञाग्रहणम् प्रसिद्ध्यर्थं न तु रूढ्यर्थम् । ललाटं पश्यति लालाटिकः सेवकः । दूरे स्थितो ललाटमेव पश्यति न पुनः कार्येषूपतिष्ठत इत्यर्थः । कौक्कुटिको भिक्षुः । कुक्कुटीशब्देन तत्पतनदेशो लक्ष्यतेः तस्याल्पतया यः पादविक्षेपे चक्षुस्संयम्य गच्छति स उच्यते ॥

तस्य धर्म्यम् ॥ ४७ ॥

तस्येति षष्ठीसमर्थाद्धर्म्यमित्यर्थे ठक् स्यात् । धर्म्यं न्यायादनपेतम् । शुल्कशालाया धर्म्यं शौल्कशालिकम् । आकरिकम् ॥

अण्महिष्यादिभ्यः ॥ ४८ ॥

तस्य धर्म्यमित्येव । महिष्या धर्म्यं माहिषम् । पौरोहित्यमित्यादि ॥

ऋतोऽञ् ॥ ४९ ॥

तस्य धर्म्यमित्येव । ऋवर्णान्तादञ् स्यात् । पोतुर्धर्म्यं पौत्रम् । नुःनात्रं (गातुः गात्रम्) ॥

नराच्च ॥

नारम् ॥

विशसितुरिड्लोपश्च ॥

वैशस्त्रम् ॥

विभाजयितुर्णिलोपश्च ॥

वैभाजित्रम् ॥

अवक्रयः ॥ ५० ॥

षष्ठीसमर्थादवक्रय इत्यर्थे ठक् स्यात् । शुल्कशालाया अवक्रयः शौल्कशालिकः । आपणिकः । अर्थलोभेन धर्मातिरेकेण द्रव्यादिग्रहणमवक्रयः ॥

तदस्य पण्यम् ॥ ५१ ॥

तदिति प्रथमासमर्थात् पण्योपाधिकादस्येत्यर्थे ठक् स्यात् । अपूपः पण्यमस्य आपूपिकः । शाष्कुलिकः । पण्यमिति विशेषणं वृत्तावन्तर्भवतीति तस्याप्रयोगः ॥

लवणाट्ठञ् ॥ ५२ ॥

तदस्य पण्यमित्येव । लवणं पण्यमस्य लावणिकः ॥

किसरादिभ्यः ष्ठन् ॥ ५३ ॥

एभ्यस्तदस्य पण्यमित्यत्र ष्ठन् स्यात् । किसरादयो गन्धविशेषवाचिनः । किसरिकः । किसरिकी इत्यादि ॥

शलालुनोऽन्यतरस्याम् ॥ ५४ ॥

तदस्य पण्यमित्येव । अस्मात् ष्ठन्वा । पक्षे ठक् । शलालुकः । शलालुकी । शालालुकः ॥

शिल्पम् ॥ ५५ ॥

प्रथमासमर्थाच्छिल्पवाचिनः अस्येत्यर्थे ठक् स्यात् । मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । वादनवृत्तिमृदङ्गशब्दः प्रत्ययमुत्पादयति । अनभिधानाच्च मृदङ्गवादनशब्दाच्च प्रत्ययो न । शिल्पं कर्मकौशलम् ॥

मड्डुकझर्झरादणन्यतरस्याम् ॥ ५६ ॥

शिल्पमित्येव । मड्डुकवादनं शिल्पमस्य माड्डुकः । पक्षे ठक् । माड्डुकिकः । झार्झरः । झार्झरिकः ॥

प्रहरणम् ॥ ५७ ॥

प्रथमासमर्थात् प्रहरणवाचिनः अस्येत्यर्थे ठक् स्यात् । असिः प्रहरणमस्य आसिकः । धानुष्कः ॥

परश्वधात् ठञ् ॥ ५८ ॥

तदस्य प्रहरणमित्येव । पारश्वधिकः । चात् ठक् । स्वरे भेदः । परशुः ॥

शक्तियष्ट्योरीकक् ॥ ५९ ॥

शक्तिः प्रहरणमस्य शाक्तीकः । याष्टीकः ॥

अस्तिनास्तिदिष्टं मतिः ॥ ६० ॥

एभ्यः प्रथमासमर्थेभ्योस्येत्यर्थे ठक् स्यात् यत् प्रथमासमर्थं मतिश्चेत्सा । परलोकोस्तीति मतिरस्य आस्तिकः । तद्विपरीता नास्तिकः । दैष्टिकः । दिष्टं प्रमाणम् । अभिधानस्वाभाव्यान्नियतविषयकः प्रयोगः । अस्तिनास्ती निपातौ ॥

शीलम् ॥ ६१ ॥

प्रथमान्ताच्छीलवाचिनः अस्येत्यर्थे ठक् स्यात् । शीलं स्वभावः । अपूपभक्षणं शीलमस्य आपूपिकः । भक्षणं तद्विषयं शीलं च वृत्तावेवान्तर्भवति ॥

छत्रादिभ्यो णः ॥ ६२ ॥

तदस्य शीलमित्येव । छादयतीति छत्रम् । छादनक्रि-

पाशीलमस्य छात्रः। गुरुकार्येष्ववहितः तच्छिद्रावरकः शिष्य उच्यते॥

कर्माध्ययने वृत्तम्॥ ६३॥

प्रथमासमर्थादस्येत्यर्थे ठक् स्यात् तत् प्रथमासमर्थमध्ययनविषयं कर्म चेद्वृत्तम्। एकमन्यदध्ययने कर्म वृत्तमस्य ऐकान्यिकः। द्वैयन्यिकः। तद्धितार्थे(२।१।५१)ति समासे सति ठक्। यस्याध्ययने नियुक्तस्य परीक्षाकाले पठतः स्खलितपाठरूपमेकं जातं स उच्यते ऐकान्यिक इति। एवमन्यदप्यूह्यम्॥

बह्वच्पूर्वपदात् ठञ्॥ ६४॥

बह्वच्पूर्वपदं यस्य तस्मात् ठञ् स्यात्तदस्य कर्माध्ययने वृत्तमित्यत्र। द्वादशान्यान्यध्ययने वृत्तान्यस्य द्वादशान्यिकः। द्वादशास्यापपाठा जाता इत्यर्थः॥

हितं भक्षाः॥ ६५॥

प्रथमासमर्थात् अस्मा इत्यर्थे ठक् स्यात् हितं भक्षाश्चेत्। अपूपभक्षणं हितमस्मै आपूपिकः। शाष्कुलिकः॥

तदस्मै दीयते नियुक्तम्॥ ६६॥

तदिति प्रथमासमर्थादस्मा इति चतुर्थ्यर्थे ठक् स्यात्तच्चेन्नियुक्तं दीयते। नियमेन दीयते इत्यर्थः। अग्रभोजनमस्मै नियुक्तं दीयते आग्रभोजनिकः॥

श्राणामांसौदनाट्टिठन्॥ ६७॥

अभ्यां टिठन् स्यात् पूर्वविषये। टो ङीबर्थः। श्राणा नियुक्तमस्मै दीयते श्राणिकः। श्राणा यवागूः। मांसौदनि-

कः ॥ विगृहीताच्चेति केचित् ॥ मांसिकः । ओदनिकः ॥

भक्तादणन्यतरस्याम् ॥ ६८ ॥

भक्तमस्मै नियुक्तं दीयते भाक्तः । पक्षे ठक् । भाक्तिकः ॥

तत्र नियुक्तः ॥ ६९ ॥

तत्रेति सप्तमीसमर्थान्नियुक्त इत्यर्थे ठक् स्यात् । द्वारे नियुक्तः दौवारिकः । शौल्कशालिकः ॥

अगारान्ताट्ठन् ॥ ७० ॥

तत्र नियुक्त इत्येव । देवागारे नियुक्तः देवागारिकः । भाण्डागारिकः ॥

अध्यायिन्यदेशकालात् ॥ ७१ ॥

सप्तम्यन्तादद्देशकालवाचिनः अध्यायिन्यर्थे ठक् स्यात् । अध्ययने निषिद्धदेशकालवाचिनः अयं प्रत्यय इष्यते । श्मशानेऽधीते श्माशानिकः । चातुर्दशिकः । अदेशकालात्किम् । स्रुघ्नेऽधीते पूर्वाह्णे वा ॥

कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ॥ ७२ ॥

सप्तम्यन्तात् कठिनान्तात् प्रस्तारसंस्थानाभ्यां च व्यवहरत्यर्थे ठक् स्यात् । वंशकठिनेषु व्यवहरति वांशकठिनिको वासरः । वार्ध्रकठिनकः । प्रास्तारिकः । सांस्थानिकः । वंशाः कठिनाः यत्र वंशकठिनः । आहिताग्न्यादित्वाद्विशेषणस्य परनिपातः । वृध्नः चर्मविकारः ॥

निकटे वसति ॥ ७३ ॥

सप्तम्यन्तान्निकटाद्वसत्यर्थे ठक् स्यात् । निकटे वसति

नैकटिको भिक्षुः । शास्त्रेण यस्य निकटवासस्तत्रायं विधिः ॥

अवसथात् ठञ् ॥ ७४ ॥

आवसथे वसति आवसथिकः ।

प्राग्घिताद्यत् ॥ ७५ ॥

तस्मै हित(५।१।५)मित्यतः प्राग्यदधिकारः ॥

तद्वहति रथयुगप्रासङ्गम् ॥ ७६ ॥

तदिति द्वितीयान्तेभ्यः रथादिभ्यो वहत्यर्थे यत् स्यात् । रथं वहति रथ्यः । युग्यः । प्रासङ्ग्यः । रथसीताहलेभ्यो यद्विधा(वार्तिकम्)विति तदन्तविधिरत्रेष्यते । परमरथ्यः ॥

धुरो यड्ढकौ ॥ ७७ ॥

धुरं वहति धुर्यः । धौरेयः ॥

खः सर्वधुरात् ॥ ७८ ॥

तद्वहतीत्येव । सर्वधुरीणः । ख इति योगविभागादुत्तरधुरीणः । दक्षिणधुरीणः ॥

एकधुराल्लुक् च ॥ ७९ ॥

अस्माद्वहत्यर्थप्रत्ययस्य लुक् । चात् खः । एकधुरं वहति एकधुरः । एकधुरीणः ॥

शकटादण् ॥ ८० ॥

शाकटं वहति शाकटो गौः ॥

हलसीराट्ठक् ॥ ८१ ॥

हलं वहति हालिकः । सैरिकः । तस्येद(४।३।१२०)मित्य-

धिकारविहितेन हलसीराट्ठगि(४।३।१२४)त्येव सिद्धे पुनर्वचनात्तदन्तविधिस्त(र)त्र। द्वैहलिकः। द्वैसीरिकः॥

संज्ञायां जन्याः॥ ८२॥

जनीशब्दाद्वहत्यर्थे यत् निपात्यते संज्ञायाम्। जनीं वहन्ति जन्याः जामातुर्वयस्याः। जनी वधूः॥

विध्यत्यधनुषा॥ ८३॥

द्वितीयान्ताद्विध्यत्यर्थे यत् स्यान्न चेद्धनुः करणम्। पादौ विध्यन्ति पद्याः शर्कराः। ऊरव्याः कण्टकाः। अधनुषा किम् पादौ विध्यति धनुषा। अधनुषेति करणमात्रप्रतिषेधः। तेन शर्कराभिर्विध्यति कण्टकैर्विध्यतीत्यत्रापि न॥

धनगणं लब्धा॥ ८४॥

द्वितीयान्ताभ्यामाभ्यां लब्धेत्यर्थे यत् स्यात्। धनं लब्धा धन्यः। गण्यः। लब्धेति तृन्नतम्॥

अन्नाण्णः॥ ८५॥

अन्नं लब्धा आन्नः॥

वशं गतः॥ ८६॥

द्वितीयान्ताद् वशाद् गत इत्यर्थे यत् स्यात्। वशं गतो वश्यः॥

पदमस्मिन् दृश्यम्॥ ८७॥

प्रथमान्तात्पदाद् दृश्योपाधिकादस्मिन्नित्यर्थे यत् स्यात्। पदं दृश्यमस्मिन् पद्यः कर्दमः। नातिद्रवो नातिशुष्क इत्यर्थः॥

मूलमस्याबर्हि॥ ८८॥

प्रथमान्तान् मूलशब्दादाबर्ह्युपाधिकादस्येत्यर्थे यत् स्या-

व। मूलमेषामाबर्हि मूल्या माषाः मुद्गा वा। बृह उद्यमने। आबर्हणमाबर्हः। सोऽस्यास्तीत्याबर्हि। येषां मध्यतो लवने मूलमप्यायाति त उच्यन्ते मूल्याः॥

संज्ञायां धेनुष्या॥ ८९॥

अयं निपात्यते संज्ञायाम्। धेनोर्यप्रत्ययः षुक् च। या धेनुरुत्तमर्णाय दोहार्थं दीयते सा धेनुष्या॥

गृहपतिना संयुक्ते ञ्यः॥ ९०॥

तृतीयान्तात् गृहपतेः संयुक्तेऽर्थे ञ्यः स्यात् संज्ञायाम्। गृहपतिना संयुक्तो गार्हपत्योऽग्निः। गृहपतिर्मन्त्रविशेषः॥

नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु॥ ९१॥

नावादिभ्योऽष्टभ्यस्तृतीयान्तेभ्यः यथासंख्यं तार्याद्यष्टस्वर्थेषु यत् स्यात्। नावा तार्या नाव्या नदी। वयसा तुल्यो वयस्यः सुहृत्। संज्ञाधिकाराद्वयसा तुल्यः शत्रुरित्यत्र न। संज्ञाग्रहणं प्रयोगनियमार्थं न तु रूढ्यर्थम्। धर्मेण प्राप्यं धर्म्यम्। विषेण वध्यो विष्यः। अर्हार्थे कृत्यः। मूलेनानाम्यं मूल्यम्। अनाम्यमभिभवनीयम्। यावता द्रव्येण पटादिकं क्रियते तन्मूल्यम्। विक्रयसमये तदतिरिक्तं यत् लाभो नाम तन्मूलम्। मूलेन च मूल्यमभिभूयत एव। मूलेन समो मूल्यः पटः। उपादानकारणेन समानफल इत्यर्थः। सीतया सम्मितं सीत्यं क्षेत्रम्। रथसीताहलेभ्यो यद्विधा(वार्तिकम्)विति तदन्तविधिः। द्विसीत्यम्। त्रिसीत्यम्। सीता हलाग्रम्। तुलया सम्मितं तुल्यम्॥

धर्मपथ्यर्थन्यायादनपेते॥ ९२॥

पञ्चम्यन्तेभ्य एतेभ्यः अनपेत इत्यर्थे यत् स्यात्। धर्मा-

दनपेतं धर्म्यम् । अर्थ्यम् । न्याय्यम् । संज्ञाधिकारादभिधेयनियमः ॥

छन्दसो निर्मिते ॥ ९३ ॥

तृतीयान्तात् छन्दसः निर्मित इत्यर्थे यत् स्यात् । छन्दःशब्द इच्छापर्याय इह गृह्यते । छन्दसा निर्मितं छन्दस्यम् ॥

उरसोऽण्च ॥ ९४ ॥

चाद्यत् । उरसा निर्मित औरसः औरस्यः पुत्रः । संज्ञाधिकारादभिधेयनियमः ॥

हृदयस्य प्रियः ॥ ९५ ॥

षष्ठ्यंतादस्मात् प्रिय इत्यर्थे यत् स्यात् । हृदयस्य प्रियः हृद्यो देशः । संज्ञाधिकारात् हृदयस्य प्रियः पुत्र इत्यत्र न ॥

बन्धने चर्षौ ॥ ९६ ॥

षष्ठ्यन्तात् हृदयात् यत् स्यात् बन्धने ऋषौ । बध्यते येन बन्धनः । ऋषिर्वेदः । हृदयस्य बन्धनः हृद्यः परवशीकरणमन्त्रः ॥

मतजनहलात्करणजल्पकर्षेषु ॥ ९७ ॥

मतादिभ्यः षष्ठ्यन्तेभ्यो यथासंख्यं करणादिष्वर्थेषु यत् स्यात् । मतं ज्ञानम् । तस्य करणं मत्यं भावः साधनं वा । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः द्विहल्यः भावः साधनं वा ॥

तत्र साधुः ॥ ९८ ॥

तत्रेति सप्तम्यंतात्साधुरित्यर्थे यत् स्यात् । सामनि

साधुः सामन्यः । वेमन्यः । ये चाभावकर्मणो(६।४।१६८)रिति प्रकृतिभावः ॥

प्रतिजनादिभ्यः खञ् ॥ ९९ ॥

प्रतिजने साधुः प्रातिजनीनः । सांयुगीन इत्यादि ॥

भक्ताण्णः ॥ १०० ॥

भक्ते साधवो भाक्तास्तण्डुलाः ॥

परिषदो ण्यः ॥ १०१ ॥

परिषदि साधुः पारिषद्यः ॥ णोऽपीष्यते ॥ पारिषदः ॥

कथादिभ्यष्ठक् ॥ १०२ ॥

कथायां साधुः काथिकः । वैतण्डिक इत्यादि ॥

गुडादिभ्यष्ठञ् ॥ १०३ ॥

गुडे साधुर्गौडिक इक्षुः । आपूपिक इत्यादि ॥

पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ १०४ ॥

पथि साधुः पाथेयः । आतिथेयः । वासतेयः । स्वापतेयः ॥

सभाया यः ॥ १०५ ॥

सभायां साधुः सभ्यः ॥

ढश्छन्दसि ॥ १०६ ॥

सभाया इत्येव । सभेयो युवा ॥

समानतीर्थे वासी ॥ १०७ ॥

साधुरिति निवृत्तम् । सप्तम्यंतात् समानतीर्थात् वासी-

त्यर्थे यत् स्यात्। समानतीर्थे वसति सतीर्थ्यः। समानोपाध्याय इत्यर्थः। तीर्थो गुरुः। तीर्थे ये(६।३।८७) इति समानस्य सः॥

समानोदरे शयित ओ चोदात्तः॥ १०८॥

सप्तम्यन्तादस्मात् शयित इत्यर्थे यत् स्यादोकारश्चोदात्तः। समानोदरे शयितः समानोदर्यो भ्राता॥

सोदराद्यः॥ १०९॥

सोदरे शयितः सोदर्यः। उदात्त इति नानुवर्तते॥

भवे छन्दसि॥ ११०॥

सप्तमीसमर्थात् भव इत्यर्थे यत् स्यात् छन्दसि। तत्र भवे अणाद्यादीनामपवादः। नमो मेघ्याय च विद्युत्याय च। आ पादसमाप्तेश्छन्दोऽधिकारः॥

पाथोनदीभ्यां ड्यण्॥ १११॥

तत्र भव इत्येव। पाथसि भवः पाथ्यः। नाद्यः। पाथोऽन्तरिक्षम्॥

वेशन्तहिमवद्भ्यामण्॥ ११२॥

वेशन्ते भवा वैशन्ती। हैमवती। वेशन्तः पल्वलम्॥

स्रोतसो विभाषा ड्यड्ड्यौ॥ ११३॥

ड्यड्ड्यतोः स्वरे भेदः। स्रोत्यः। पक्षे यत्। स्रोतस्यः॥

सगर्भसयूथसनुताद्यन्॥ ११४॥

तत्र भव इत्येव। सगर्भ्यः। सयूथ्यः। सनुत्यः। सर्वत्र समानस्यच्छन्दसी(६।३।८४)ति सभावः॥

तुग्राद्धन् ॥ ११५ ॥

तुग्रे भवः तुग्रीयः ॥

अग्राद्यत् ॥ ११६ ॥

अग्रे भवमग्र्यम्। घच्छाभ्यां बाधा मा भूदिति यद्ग्रहणम् ॥

घच्छौ च ॥ ११७ ॥

अग्रादित्येव। अग्रे भवमाग्रियम्। अग्रीयम्। चात् यत्। अग्र्यम्। स्वरे भेदः ॥

समुद्राभ्राद्धः ॥ ११८ ॥

समुद्रे भवः समुद्रियः। अभ्रियः ॥

बर्हिषि दत्तम् ॥ ११९ ॥

भव इति निवृत्तम्। सप्तम्यन्तादस्माद् दत्तमित्यर्थे यत् स्यात्। बर्हिष्येषु निधिषु प्रियेषु ॥

दूतस्य भागकर्मणी ॥ १२० ॥

षष्ठ्यन्तादस्माद्यत् स्यात् भागकर्मणोः। दूतस्य भागः कर्म वा दूत्यम् ॥

रक्षोयातूनां हननी ॥ १२१ ॥

षष्ठ्यन्ताभ्यामाभ्यां हननीत्यर्थे यत् स्यात्। हन्यतेऽनयेति हननी। रक्षसां हननी रक्षस्या तनूः। यातूनां हननी यातव्या ॥

रेवतीजगतीहविष्याभ्यः प्रशस्ये ॥ १२२ ॥

षष्ठ्यन्तेभ्य एभ्यः प्रशस्ये यत् स्यात्। प्रशंसनं प्रश-

स्यम् । भावे क्यप् । रेवत्याः प्रशंसनं रेवत्यम् । जगत्यम् । हविष्यम् । हविषे जाताः हविष्याः । तासां प्रशंसने हविष्यम् । यस्येति[चेति]लोपे हलो यमा(८।४।६४)मिति यलोपः ॥

असुरस्य स्वम् ॥ १२३ ॥

षष्ठ्यन्तादस्मात् स्वमित्यर्थे यत् । अणोऽपवादः । असुरस्य स्वमसुर्यम् ॥

मायायामण् ॥ १२४ ॥

असुरस्येत्येव । असुरस्य माया आसुरी माया स्वधया कृतापि(सि) ॥

तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः॥ १२५॥

तद्वानिति मत्वन्तात् प्रथमासमर्थाद्वासामित्यर्थे यत् स्यात् मतोश्च लुक् । उपधानो मन्त्र इति प्रकृतिविशेषणम् । इष्टकास्विति प्रत्ययार्थस्य । इतिर्विवक्षार्थः । उपधीयते येन उपधानः । वर्चःशब्दोऽस्मिन् मन्त्रेऽस्ति स वर्चस्वान् । वर्चस्वानुपधानो मन्त्र आसामिष्टकानामिति विगृह्य यति विहिते मतोर्लुक् । वर्चस्या उपदधाति । तेजस्या ऋतव्याः । इतिकरणस्य नियमार्थत्वादनेकपदसम्भवेऽपि केनचिदेव पदेन तद्वान्मन्त्रो गृह्यते न सर्वेण ॥

अश्विमानण् ॥ १२६ ॥

अस्मादण् स्यात् पूर्वविषये । अश्विशब्दोऽस्मिन् मन्त्रेऽस्ति अश्विमान् । अश्विमानुपधानो मन्त्र आसामिष्टकानामिति अणि मतुपि लुकि च इनण्यनपत्ये(६।४।१६४) इति प्रकृतिभावः । अश्विनीरुपदधाति ॥

## वयस्यासु मूर्ध्नो मतुप्॥ ॥ १२७॥

वयस्त्रानुपधानो मन्त्र आसां ता वयस्याः। तास्वभिधेयासु मूर्ध्नो मतुप् स्यात्। यस्मिन्मन्त्रे वयोमूर्धन्शब्दौ स वयस्वान्मूर्धन्वान् च। यथा मूर्धा वयः प्रजापतिश्छन्द इति। तत्र वयस्वत इव मूर्धन्वतोऽपि यति प्राप्ते मतुप् विधीयते। मूर्धन्वतीरुपदधाति। वयस्यासु किम्। यत्र केवलो मूर्धशब्दो न वयःशब्दस्ततो मा भूत्॥

## मत्वर्थे मासतन्वोः॥ १२८॥

प्रथमान्तादस्त्युपाधिकात् षष्ठ्यर्थे सप्तम्यर्थे च यत् स्यात् मासतन्वोः। मत्वर्थीयानामपवादः। नभांसि विद्यन्तेऽस्मिन्नभस्यो मासः। सहस्यः। मधव्यः। नभःशब्दो मेघे। तन्वाम् अपि। ओजः अस्यां विद्यते ओजस्या तनूः। रक्षस्या। मासतन्वोः किम्। मधुमता पात्रेण चरति॥

मासतन्वोरनन्तरार्थे च॥

मध्वस्मिन्ननन्तरोऽतीतः माधवो मासः॥

लुगकारेकाररेफाश्च॥

लुक्। तपश्च तपस्यश्च। नभश्च नभस्यश्च। अकार। इषः। ऊर्जः मासः। इकार। शुचिर्मासः। रेफः। शुक्रो मासः॥

## मधोर्ञ च॥ १२९॥

मत्वर्थे मासतन्वोरित्येव। चाद्यत्। उपसङ्ख्यानाल्लुगपि। मध्वस्मिन्नस्ति माधवः मधव्यः मधुर्मासः। माधवा मधव्या मधुस्तनूः॥

## ओजसोऽहनि यत्खौ॥ १३०॥

मत्वर्थ इत्येव। ओजोऽस्त्यस्मिन्नहनि ओजस्यम् ओजसीनमहः॥

वेशोयशआदेर्भगाद्यल् ॥ १३१ ॥

एतदुभयादेर्भगाद्यल् स्यात् मत्वर्थे । वेशो बलम् । श्रीकामप्रयत्नमाहात्म्यवीर्यादिषु भगशब्दो वर्तते । वेशसो भगः श्रीकामादिर्विद्यते यस्य वेशोभग्यः । यशोभग्यः ॥

ख च ॥ १३२ ॥

वेशोभगीनः । यशोभगीनः । योगविभाग उत्तरार्थः ॥

पूर्वैः कृतमिनयौ च ॥ १३३ ॥

मत्वर्थ इति निवृत्तम् । तृतीयान्तात् पूर्वैः कृतमित्यर्थे इनय इत्येतौ स्तः चात् खः । पूर्वैः कृतः पूर्विणः । पूर्व्यः । पूर्वीणः ॥

अद्भिः संस्कृतम् ॥ १३४ ॥

तृतीयान्तादस्मात् संस्कृतमित्यर्थे यत् स्यात् । अद्भिः संस्कृतमप्यम् ॥

सहस्रेण संमिते घः ॥ १३५ ॥

तृतीयान्तादस्मात् संमिते घः स्यात् । संमितः सदृशः । सहस्रेण तुल्यः सहस्रियः । क्वचित्संमिताविति पाठः । तत्रापि सादृश्यमर्थः ॥

मतौ च ॥ १३६ ॥

मत्वर्थे च सहस्राद् घः स्यात् । सहस्रमस्य विद्यते सहस्रियः ॥

सोममर्हति यः ॥ १३७ ॥

द्वितीयान्तात्सोमात् यः स्यादर्हत्यर्थे । सोममर्हति सोम्यो ब्राह्मणः ॥

मये च ॥ १३८ ॥

मयडर्थे सोमाद्यः स्यात्। आगतविकारावयवप्रकृता मयडर्थाः। तत्र यथायोगं समर्थविभक्तिरूह्या। सोम्यम्। सोममयमित्यर्थः॥

मधोः ॥ १३९ ॥

मयडर्थे अस्माद्यत् स्यात्। मधव्यम्। मधुमयमित्यर्थः ॥

वसोः समूहे च ॥ १४० ॥

अस्माद्यत् स्यात् समूहे चान्मयडर्थेऽपि। वसव्यः समूहः। मयडर्थो वा ॥

अक्षरसमूहे छन्दस उपसङ्ख्यानम् ॥

सप्तदशाक्षरं छन्दस्यम्। सप्तदशाक्षराण्येवच्छन्द इत्यर्थः। स्वार्थ एवात्र प्रत्ययः॥

वसोरपि ॥

वसव्यैः। वसुभिरित्यर्थः। वसव्यस्य। वसोः इत्यर्थः ॥७॥

नक्षत्राद्धः ॥ १४१ ॥

अस्मात् स्वार्थे घः स्यात्। नक्षत्रियेभ्यः स्वाहा ॥

सर्वदेवात्तातिल् ॥ १४२ ॥

आभ्यां स्वार्थे तातिल् स्यात्। सर्वतातिः ॥

शिवशमरिष्टस्य करे ॥ १४३ ॥

षष्ठ्यन्तेभ्य एभ्यस्तातिल् स्यात्करे। करोतीति करः। शिवं करोतीति शिवतातिः। शन्तातिः। अरिष्टतातिः ॥

भावे च ॥ १४४ ॥

भावेपि पूर्ववत् । शिवतातिः । शन्तातिः । अरिष्टतातिः ।
यतः पूर्णोऽवधिः । छन्दोधिकारश्च पूर्णः ॥

इति श्रीमहोपाध्यायन्नंभट्टकृतौ व्याकरणमिताक्षरायां
चतुर्थस्य चतुर्थश्चरणः ॥

समाप्तोध्यायश्च ॥



प्राक्क्रीताच्छः ॥ १ ॥

तेन क्रीत(५।१।३७)मित्यतः प्राग्येर्थास्तेषुच्छः स्यात् । वत्सेभ्यो हितः वत्सीयो गोधुक् ॥

उगवादिभ्यो यत् ॥ २ ॥

उवर्णान्तात् गवादिभ्यश्च यत् स्यात् प्राक्क्रीतीयेषु । छापवादः । शङ्कव्यं दारु । पिचव्यः कार्पासः । गवादिभ्यः । गव्यम् । हविष्यमित्यादि । सनंगुर्नाम चर्मविकारः । ततश्चर्मणोञि(५।१।१५)त्यतः पूर्वविप्रतिषेधेन य एवेष्यते । सनंगव्यं चर्म । चरुर्नाम हविः । सक्तुरन्नविकारः । ताभ्यां विभाषा हविरि(५।१।४)त्यादिना अपूपादिष्वन्नविकारेभ्यश्चेति पाठाच्च विकल्पे प्राप्ते नित्यमिष्यते । चरव्यास्तण्डुलाः । सक्तव्या धानाः । गवादिषु नाभि नभं चेति पठ्यते । नाभेर्यत् नभादेशश्चेत्यर्थः । नाभये हितो नभ्योऽक्षः । यस्तु शरीरावयवो नाभिस्ततः शरीरावयवाद्य(५।१।६)दित्येव । तत्र च न नभादेशः । नाभये हितं नाभ्यं तैलम् ॥

शुनः संप्रसारणं वा च दीर्घत्वं तदान्तोदात्तत्वं च ॥

शुने हितं शुन्यम् । शून्यम् । चस्यानुक्तसमुच्चयार्थत्वान्नस्तद्धित(६।४।१४४) इति टिलोपो न ॥

ऊधसोऽनङ् च ॥

ऊधसे हितं ऊधन्यम् ॥

कम्बलाच्च संज्ञायाम् ॥ ३ ॥

अस्मात् प्राक्क्रीतीयेषु यत् स्यात् संज्ञायाम् । कंबल्यम् ।

अपरिमाणविस्ताचितकम्बल्येभ्य(४।१।२२)इति निपातनादप्येतत्सिद्धेरशिष्योयं योग इति भगवान् ॥

विभाषा हविरपूपादिभ्यः ॥ ४ ॥

हविर्विशेषवाचिभ्योऽपूपादिभ्यश्च यद्वा स्यात् प्राक्क्रीतीयेषु । आमिक्ष्यं आमिक्षीयम् वा दधि । अपूप्यम् अपूपीयमित्यादि । गवादिषु हविःशब्दपाठात् स्वरूपग्रहणमत्र न ॥

तस्मै हितम् ॥ ५ ॥

तस्मा इति चतुर्थीसमर्थाद्धितमित्यर्थे यथाविहितं प्रत्ययः स्यात् । वत्सेभ्यो हितः वत्सीयो गोधुक् । गव्यम् ॥

शरीरावयवाद्यत् ॥ ६ ॥

दन्तेभ्यो हितं दन्त्यम् । कण्ठ्यम् ॥

खलयवमाषतिलवृषब्रह्मणश्च ॥ ७ ॥

यत् । खलाय हितं खल्यम् । यव्यम् । माष्यम् । तिल्यम् । वृषाय हितं वृष्यम् । ब्रह्मणे हितं ब्रह्मण्यम् । चात् रथाय हिता रथ्या । परमरथ्येति केचित् । वृष्णे हितम् ब्राह्मणेभ्यो हितमिति विगृह्यवाक्यमेव । न तुच्छः । अनभिधानात् ॥

अजाविभ्यां थ्यन् ॥ ८ ॥

अजाय अजायै वा हिता अजथ्या । अविथ्या ॥

आत्मन्विश्वजनभोगोत्तरपदात्खः ॥ ९ ॥

आत्मन्विश्वजनाभ्यां भोगोत्तरपदाच्च हितमित्यर्थे खः स्यात् । छापवादः । आत्मने हितं आत्मनीनम् । आत्माध्वा-

नौ ख(६।४।१६९) इति प्रकृतिभावः । विश्वजनेभ्यो हितं विश्वजनीनम् ॥ कर्मधारयादेवेष्यते ॥ षष्ठीवहुव्रीहेस्तुच्छ एव । विश्वजनीयम् ॥

पञ्चजनाच्च ॥

खः । पञ्चजनीनम् । अत्रापि कर्मधारयादेव । पञ्चजनीयमन्यत् । पञ्चजना मनुष्याः ॥

सर्वजनाट्ठञ्च ॥

चात् खः । सार्वजनिकः । सर्वजनीनः । अत्रापि कर्मधारयादेव । सर्वजनीयमन्यत् ॥

महाजनाट्ठञ् ॥

महाजनाय हितं माहाजनिकम् । तत्पुरुषादेव । वहुव्रीहेस्तु महाजनीयमित्येव । भोगोत्तरपदात्खल्वपि । मातृभोगाय हितः मातृभोगीणः । पितृभोगीणः । भोगशब्दः शरीरवाची । केवलाच्छ एव । मात्रीयः । पित्रीयः ॥

राजाचार्याभ्यां नित्यम् ॥

भोगोत्तरपदाभ्यामेव हिते प्रत्ययः । राजभोगीनः ॥

आचार्यादणत्वं च ॥

आचार्यभोगीनः । राज्ञे हितम् आचार्याय हितमिति तु वाक्यमेव ॥

सर्वपुरुषाभ्यां णढञौ ॥ १० ॥

आभ्यां यथासङ्ख्यमेतौ स्तः । सर्वस्मै हितं सार्वम् । पौरुषेयम् ॥

सर्वाच्छ इष्यते ॥

सर्वीयम् ॥

पुरुषाद्वधविकारसमूहकृतेष्विति वाच्यम् ॥

प्रत्ययार्थसामर्थ्येन षष्ठीसमर्थविभक्तिर्लभ्यते । कृते तु तेनेति तृतीयोपात्तैव । पुरुषस्य वधः विकारः समूहो वा पौरुषेयः । पुरुषेण कृतः पौरुषेयो ग्रन्थः । अत्र वधसमूहयोरणः विकारे प्राणिरजतादयञः ग्रन्थे कृते ग्रन्थ(४।३।११६) इत्यस्य चापवादः । प्रासादादौ न कस्यापि ॥

माणवचरकाभ्यां खञ् ॥ ११ ॥

माणवाय हितं माणवीनम् । चारकीणम् ॥

तदर्थं विकृतेः प्रकृतौ ॥ १२ ॥

प्रकृतिरुपादानम् । तस्यैव परिणामविशेषो विकृतिः । विकृतिवाचिनश्चतुर्थ्यन्ताद्यथाविहितं प्रत्ययः स्यात् विकृत्यर्थायां प्रकृतावभिधेयायाम् । अगारेभ्यो हितानि काष्ठानि अगारीयाणि । प्राकारीया इष्टकाः । शङ्कव्यं दारु । प्रकृतेरन्यार्थे विवक्षायामेव प्रत्ययः । तेनेह न । धानानां सक्तवः । अत्र ह्यन्यनिवृत्तिर्विवक्षिता । धानानां सक्तवो न लाजानामिति । न तु तादर्थ्यम् ॥

छदिरुपधिबलेर्ढञ् ॥ १३ ॥

तदर्थं विकृतेः प्रकृतावित्येव । छादिषेयाणि तृणानि । औपधेयं दारु । बालेयास्तण्डुलाः । उपधेः स्वार्थ एव प्रत्ययः । उपधी रथाङ्गम् । तदेवोपधेयम् । यदा तु चर्मविकारः छदिः तदा परत्वाच्चर्मणोऽञि प्राप्ते ढञ्एवञः पूर्वविप्रतिषिद्धमिति ढञेव । छादिषेयं चर्म ॥

ऋषभोपानहोर्ञ्यः ॥ १४ ॥

तदर्थं विकृतेः प्रकृतावित्येव । आर्षभ्यो वत्सः । औपानह्यो

मुञ्जः। औपानह्यं चर्म। प्रकृतेरुच्छेदो रूपान्तरयोगश्च विकृतिर्गृह्यते। तेन ऋषभस्य विकृतित्वानपायः॥

चर्मणोऽञ् ॥ १५ ॥

चर्मणो या विकृतिस्तद्वाचिनः अञ् स्यात्तदर्थायां प्रकृतौ। वार्ध्रं वारत्रं चर्म॥

तदस्य तस्मिन् स्यादिति ॥ १६ ॥

तदिति प्रथमासमर्थात् स्यादुपाधिकादस्यास्मिन्नित्यर्थे यथाविहितं प्रत्ययः स्यात्। इतिकरणो विवक्षार्थः। प्राकार आसामिष्टकानां स्यात् प्राकारीयाः इष्टकाः। प्राकारोऽस्मिन्देशे स्यात् प्राकारीयो देशः। सम्भावनेऽलमि(३।३।१५४)-त्यादिना सम्भावनायां लिङ्। स्यादिति प्रकृतिविकृतिभावादिकमिह न विवक्षितम्। प्रासादोऽस्य देवदत्तस्य स्यादित्यत्र तु अनभिधानान्न॥

परिखाया ढञ् ॥ १७ ॥

परिखा अस्य अस्मिन्वा स्यात् पारिखेयो देशः। छयतोः पूर्णोऽवधिः॥

प्राग्वतेष्ठञ् ॥ १८ ॥

तेन तुल्यं क्रिया चेद्वति(५।१।११५)रित्यतः प्राग्येर्थास्तेषु ठञ् स्यात्। पारायणिकः॥

आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥ १९ ॥

तदर्हती(५।१।६३)त्येतदन्ता येर्थास्तेषु ठक् स्याद्गोपुच्छादीन्वर्जयित्वा। ठञोऽपवादः। निष्केण क्रीतं नैष्ककम्। अभिविधावाङ्। तेनार्हत्यर्थेऽपि ठक्। श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः।

गोपुच्छादिवर्जं किम् । गोपुच्छेन क्रीतं गौपुच्छिकम् । संख्या । साप्ततिकम् । परिमाणं । मास्यिकम् । ठञ् प्रत्युदाहरणम् ॥

असमासे निष्कादिभ्यः ॥ २० ॥

आर्हादित्येव । एभ्यष्ठक् स्यान्न तु समासे । ठञोऽपवादः । नैष्किकमिसावि । असमासे किम् । परमनैष्किकम् । ठञेव । परिमाणान्त(७।३।१७)स्येत्युत्तरपदवृद्धिः । अत्रासमासग्रहणं ज्ञापकं पूर्वत्र तदन्तविधेः । उगवादिभ्यो यत्(५।१।२) । सुगव्यम् । कृष्णतिल्यः । राजमाष्यः । प्राग्वतेः संख्यापूर्वपदानां तदन्तविधिरिष्यते न तु लुकि । द्वैपारायणिकः । लुगन्तात्तु न । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । अध्यर्धे(५।१।२८)त्यञो लुक् । द्विशूर्पेण क्रीतमिति । शूर्पादञ(५।१।२६)न्यतरस्यामित्यञ् न । तदभावे ठञेव । द्विशौर्पिकम् । द्विगुनिमित्तत्वाभावात् ठञो न लुक् । परिमाणान्तस्ये(७।३।१७)त्युत्तरपदवृद्धिः ॥

शताच्च ठन्यतावशते ॥ २१ ॥

आर्हादित्येव । शतेन क्रीतः शत्यः । शतिकः । अशतेति किम् । शतं परिमाणमस्य शतकः सङ्घः । उत्तरसूत्रेण कनेव । प्रकृत्यर्थाभिन्नशतस्य प्रत्ययार्थत्वे अयं निषेधः । तेन शतेन क्रीतं शत्यं शाटकशतमित्यत्र प्रतिषेधो न । चात्समासे न । द्विशतकम् ॥

संख्याया अतिशदन्तायाः कन् ॥ २२ ॥

आर्हादित्येव । ठञोऽपवादः । पञ्चभिः क्रीतः पञ्चकः । बहुकः । गणकः । अतिशदन्तायाः किम् । साप्ततिकः । चा-

ारिंशत्कः । त्यन्तप्रतिषेधे अर्थवद्ग्रहणात् डतेर्न । कतिकः ॥

वतोरिड्वा ॥ २३ ॥

वत्वन्तात्परस्य कन इड्वा स्यात् । संख्यात्वात्कन् पूर्वेणैव सिद्धः । तावतिकः । तावत्कः ॥

विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञयाम् ॥ २४ ॥

आभ्यां ड्वुन् स्यादार्हीयेषु न तु संज्ञायाम् । विंशकः । तिर्विंशतेर्डिती(६।४।१४२)ति तिलोपः । असंज्ञायां किम् । विंशतिकः । त्रिंशत्कः । विंशतित्रिंशद्भ्यामिति योगविभागादत्र कन् ॥

कंसाट्टिठन् ॥ २५ ॥

आर्हादित्येव । ठञोपवादः । टो ङीवर्थः । कंसिकः । कंसिकी ॥

अर्धाच्च ।

आर्धिकः । आर्धिकी ॥

कार्षापणाच्च टिठन् प्रतिश्चास्यादेशो[वा]वाच्यः ॥

कार्षापणिकः । प्रतिकः ॥

शूर्पादञन्यतरस्याम् ॥ २६ ॥

आर्हादित्येव । पक्षे ठञ् । शौर्पम् । शौर्पिकम् ॥

शतमानविंशतिकसहस्रवसनादण् ॥ २७ ॥

एभ्योऽण् स्यादार्हीयेषु । ठक्ठञोरपवादः । शतमानेन क्रीतं शातमानम् । वैंशतिकम् । साहस्रम् । वासनम् ॥

अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ॥ २८ ॥

प्रत्ययस्य लुक् स्यान्न तु संज्ञायाम् । अध्यर्धकंसम् । अध्यर्धशूर्पम् । द्विशूर्पम् । द्विगुनिमित्तस्यैव लुक् । नेह । द्विशूर्पेण

क्रीतं द्विशौर्पिकम्। असंज्ञायां किम। पाञ्चलोहितिकम्। पाञ्चकलापिकम्। लोहितशब्दस्य भस्याढ(वा६।३।३५) इति पुंवद्भावः। एतौ प्रत्ययान्तावेव परिमाणविशेषस्य संज्ञे। वार्तिके तु द्विगुविशेषणं संज्ञाग्रहणम् मत्वा असंज्ञाग्रहणं प्रत्याख्यातम्। लुप्तप्रत्ययस्यैव द्विगोः संज्ञात्वात्। तदुक्तम् भगवता पञ्चलोहितमित्येव भवितव्यमिति। संज्ञायामपीत्यर्थः। अध्यर्धस्य ग्रहणं च समासकन्विध्यर्थमिति। अध्यर्धशब्दस्य संख्यात्वाद्विगोरित्येव लुक्सिद्धेरिहाध्यर्धग्रहणमनर्थकमिति भगवान्। वृत्तौ तु अन्यत्र संख्याग्रहणेऽध्यर्धग्रहणं नेति ज्ञापनार्थमिह ग्रहणमिति स्थितम्। एवं सति समासादिकं स(न) स्या[त्।]भगवद्वचनविरुद्धत्वाच्च चिन्त्यं तत्॥

विभाषा कार्षापणसहस्राभ्याम् ॥ २९ ॥

अध्यर्धपूर्वद्विगोः कार्षापणसहस्रान्तात् परस्यार्हीयस्य वा लुक् स्यात्। प्राप्तविभाषेयम्। अध्यर्धकार्षापणम्। अध्यर्धकार्षापणिकम्। द्विकार्षापणम्। द्विकार्षापणिकम्। औपसङ्ख्यानिकस्यापि टिठनो लुक्। अलुक् पक्षेऽत्र प्रत्यादेशश्च वा। अध्यर्धप्रतिकम्। द्विप्रतिकम्। अध्यर्धसहस्रम्। अध्यर्धसाहस्रम्। द्विसहस्रम्। द्विसाहस्रम्। सङ्ख्यायाः संवत्सरसङ्ख्यस्ये(७।३।१५)त्युत्तरपदवृद्धिः॥

सुवर्णशतमानयोरुपसङ्ख्यानम्॥

अध्यर्धसुवर्णम्। अध्यर्धसौवर्णम्। द्विसुवर्णम्। द्विसौवर्णम्। अध्यर्धशतमानम्। अध्यर्धशातमानम्। द्विशतमानम्। द्विशातमानम्। परिमाणान्तस्ये(७।३।१७)त्युत्तरपदवृद्धिः॥

## द्वित्रिपूर्वान्निष्कात् ॥ ३० ॥

अस्माद्द्विगोरार्हीयस्य वा लुक् । द्विनिष्कम् । द्विनैष्किकम् । त्रिनिष्कम् । त्रिनैष्किकम् ॥

बहुपूर्वाच्च ॥

बहुनिष्कम् । बहुनैष्किकम् । परिमाणान्तस्ये(७।३।१७) त्युत्तरपदवृद्धिः ॥

## बिस्ताच्च ॥ ३१ ॥

द्वित्रिपूर्वादस्माद्द्विगोरार्हीयस्य वा लुक् । द्विबिस्तम् । द्विबैस्तिकम् । त्रिबिस्तम् । त्रिबैस्तिकम् ॥

बहुपूर्वाच्च ॥

बहुबिस्तम् । बहुबैस्तिकम् ॥

## विंशतिकात्खः ॥ ३२ ॥

एतदन्तादध्यर्धपूर्वद्विगोः खः स्यादार्हीयेषु । अध्यर्धविंशतिकीनम् । द्विविंशतिकीनम् । त्रिविंशतिकीनम् । विधानसामर्थ्यान्न लुक् ॥

## खार्या ईकन् ॥ ३३ ॥

एतदन्तादध्यर्धपूर्वद्विगोरीकन् स्यादार्हीयेषु । अध्यर्धखारीकम् । द्विखारीकम् ॥

केवलाच्च वाच्यम् ॥

खारीकम् ॥

काकण्याश्चेति वाच्यम् ॥

अध्यर्धकाकणीकम् । द्विकाकणीकम् ॥

केवलायाश्च ॥

काकणीकम्॥

पणपादमाषशताद्यत् ॥ ३४ ॥

पणाद्यन्तादध्यर्धपूर्वाद्द्विगोश्च यत् स्यादार्हीयेषु । अध्यर्धपण्यम्। द्विपण्यम्। अध्यर्धपाद्यम्। द्विपाद्यम्। पद्यत्यतदर्थे (६।३।५३)इति पद्भावोत्र न। प्राण्यङ्गस्यैवेष्टत्वात्। इह तु परिमाणस्य ग्रहणम्। अध्यर्धमाष्यम्। अध्यर्धशत्यम्। द्विशत्यम्॥

शाणाद्वा ॥ ३५ ॥

एतदन्तादध्यर्धपूर्वाद्द्विगोर्यद्वा स्यादार्हीयेषु। पक्षे ठञो लुक्। अध्यर्धशाण्यम्। अध्यर्धशाणम्। द्विशाण्यम्। द्विशाणम्॥

शताच्च ॥

अध्यर्धशत्यम्। अध्यर्धशतम्। द्विशत्यम्। द्विशतम्। पूर्वेण नित्यं प्राप्तेऽयं विकल्पः॥

द्वित्रिपूर्वादण्च ॥ ३६ ॥

द्वित्रिपूर्वाच्छाणादार्हीयेष्वण् स्याच्चाद्यद्वा। द्विशाण्यम्। द्वैशाणम्। द्विशाणम्। त्रिशाण्यम्। त्रैशाणम्। त्रिशाणम्। अशाणेति पर्युदासादादिवृद्धिः॥

तेन क्रीतम् ॥ ३७ ॥

तेनेति तृतीयासमर्थात् क्रीतमित्यर्थे यथायथं ठगादयः स्युः। सप्तत्या क्रीतं साप्ततिकम्। शत्यम्। शतिकम्। तेनेति मूल्यात्करणे तृतीयासमर्थविभक्तिः। अन्यत्रानभिधानान्न भवति। देवदत्तेन क्रीतम्। पाणिना क्रीतम्। द्विबहुवचनान्ताच्च न। प्रस्थाभ्यां क्रीतम्। प्रस्थैः क्रीतम्। यत्र प्रकृत्यर्थस्य सङ्ख्याभेदे प्रमाणमस्ति तत्र भवत्येव। द्विकम्। त्रिकम्। मुद्रैः क्रीतं

मैद्रिकमिति। न ह्येकेन मुद्रेन क्रयः सम्भवति। सर्वत्राभिधानमेव शरणम्॥

तस्य निमित्तं संयोगोत्पातौ ॥ ३८ ॥

तस्येति षष्ठीसमर्थान्निमित्तमित्यर्थे यथाविहितं प्रत्ययः स्याद् यत्तन्निमित्तं संयोगश्चेदुत्पातो वा। संयोगः संबन्धः। उत्पातः शुभाशुभसूचकः क्रियाविशेषः। शतस्य निमित्तं धनपतिना संयोगः शत्यः। शतस्य निमित्तं दक्षिणाक्षिस्पन्दनं शत्यम्। शतिकम्॥

तन्निमित्तप्रकरणे वातपित्तश्लेष्मसन्निपातेभ्यः शमनकोपनयोरुपसङ्ख्यानम्॥

वातस्य शमनं कोपनं वा वातिकम्। पैत्तिकम्। श्लैष्मिकम्। सान्निपातिकम्। शमनकोपने एवात्र प्रत्ययार्थो न तु निमित्तम्॥

गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ॥ ३९ ॥

गोर्द्व्यचश्च यत् स्यात्तस्य निमित्तमित्येतस्मिन्विषये सङ्ख्यादीन् वर्जयित्वा। ठगाद्यपवादः। गोर्निमित्तं संयोग उत्पातो वा गव्यम्। द्व्यचः। धन्यम्। स्वर्ग्यम्। सङ्ख्यादिवर्जं किम्। पञ्चानां निमित्तं पञ्चकम्। परिमाणम्। खारीकम्। अश्वादि। आश्विकम्। आश्मिकमित्यादि॥

ब्रह्मवर्चसाच्च यत्॥

ब्रह्मवर्चसस्य निमित्तं गुरुणा संयोगः ब्रह्मवर्चस्यः॥

पुत्राच्छ च ॥ ४० ॥

चाद्यत्। पुत्रस्य निमित्तं संयोग उत्पातो वा पुत्रीयः। पुत्र्यः॥

सर्वभूमिपृथिवीभ्यामणञौ ॥ ४१ ॥

आभ्यां यथासङ्ख्यमेतौ स्तस्तस्य निमित्तमित्येतस्मिन्विषये। सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः। अनुशतिकादित्वादुभयपदवृद्धिः। पार्थिवः ॥

तस्येश्वरः ॥ ४२ ॥

षष्ठ्यन्ताभ्यां सर्वभूमिपृथिवीभ्यां यथासङ्ख्यमेतौ स्त ईश्वर इत्यर्थे। सर्वभूमेरीश्वरः सार्वभौमः। पार्थिवः ॥

तत्र विदित इति च ॥ ४३ ॥

षष्ठ्यन्ताभ्यां सर्वभूमिपृथिवीभ्यामणञावित्येव। सर्वभूमौ विदितः सार्वभौमः। पार्थिवः ॥

लोकसर्वलोकाभ्यां ठ(काट्ठ)ञ् ॥ ४४ ॥

तत्र विदित इत्येव। लोके विदितः लौकिकः। सार्वलौकिकः। अनुशतिकादित्वादुभयपदवृद्धिः ॥

तस्य वापः ॥ ४५ ॥

उप्यते अस्मिन्निति वापः। षष्ठ्यन्ताद्वाप इत्यर्थे यथाविहितं प्रत्ययः स्यात्। प्रस्थस्य वापः क्षेत्रं प्रास्थिकम्। खारीकम् ॥

पात्रात् ष्ठन् ॥ ४६ ॥

तस्य वाप इत्येव। ठकोऽपवादः। पात्रस्य वापः क्षेत्रं पात्रिकम्। पात्रिकी क्षेत्रभक्तिः। पात्रं परिमाणविशेषः ॥

तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ४७ ॥

तदिति प्रथमासमर्थादस्मिन्नित्यर्थे यथाविहितं प्रत्ययः

स्यात्तच्चेत् प्रथमासमर्थं वृद्ध्यादिकम् दीयत इति वृद्ध्यादिभिः प्रत्येकमभिसम्बध्यते। उत्तमर्णायाधमर्णेन मूलधनातिरिक्तं देयं वृद्धिः। स्वामिग्राह्यो भाग आयः। पटादीनामुपादानमूलादतिरिक्तं द्रव्यं लाभः। रक्षानिर्वेशो राजभागः शुल्कः। उत्कोच उपदा। पञ्चास्मिन् वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते पञ्चकः। शत्यः। शतिकः। साहस्रो देवदत्तः॥

पूरणार्धाट्ठन्॥ ४८॥

पूरणवाचिनः अर्धाच्च ठन् स्यात्तदस्मिन्नित्यादिविषये। द्वितीयो वृद्ध्यादिरस्मिन् दीयते द्वितीयिकः। अर्धिकः। अर्धशब्दो रूपकार्धस्य रूढिः॥

भागाद्यच्च ४९॥

चात् ठन्। भागो वृद्ध्यादिरस्मिन्दीयते भाग्यः। भागिकः। भागोपि रूपकार्धवाचकः॥

तद्धरति वहत्यावहति भाराद्वंशादिभ्यः॥ ५०॥

तदिति द्वितीयासमर्थात् हरत्यादिष्वर्थेषु यथाविहितं प्रत्ययः स्यात्। भाराद्वंशादिभ्य इति प्रकृतिविशेषणम्। तत्र द्वेधा अर्थः। भारान्ताद्वंशादिपूर्वादित्येकः। वंशभारं हरति वहत्यावहति वा वांशभारिकः। कौटजभारिक इत्यादि। अपरस्तु भारभूतेभ्यो वंशादिभ्य इति आर्थो विशेषणविशेष्यभावः। भारभूतान् वंशान् हरति वांशिकः। कौटजिकः। भारात्किम्। वंशं हरति। वंशादिभ्यः किम्। भारभूतान् व्रीहीन् हरति। सूत्रार्थद्वयमिदमाचार्येण शिष्याः पाठिताः। हरति देशान्तरं प्रापयति। वहति उत्क्षिप्य धारयति। आवहति उत्पादयतीत्यर्थः॥

वस्नद्रव्याभ्यां ठन्कनौ ॥ ५१ ॥

आभ्यां यथासङ्ख्यमेतौ स्तो हरत्यादिष्वर्थेषु । वस्नं ह-
रति वहत्यावहति वा वास्निकः ॥

सम्भवत्यवहरति पचति ॥ ५२ ॥

द्वितीयासमर्थात्सम्भवत्यादिष्वर्थेषु यथाविहितं प्रत्ययः स्या-
द् । प्रस्थं सम्भवति अवहरति [पचति] वा प्रास्थिकः । खारीकः ।
आधेयस्य प्रमाणानतिरेकः सम्भवः । अपसंहरणमवहारः ॥

तत्पचतीति द्रोणादण् च ॥

द्रोणं पचति द्रौणी [द्रौणिकी] वा ब्राह्मणी ॥

आढकाचितपात्रात्खोऽन्यतरस्याम् ॥ ५३ ॥

एभ्यो द्वितीयान्तेभ्यः सम्भवत्यादिषु खो वा स्यात् ।
पक्षे ठञ् । आढकं सम्भवति अवहरति पचति वा आढकी-
ना । आढकिकी । आचितीना । आचितिकी । पात्रीणा ।
पात्रिकी ॥

द्विगोः ष्ठंश्च ॥ ५४ ॥

आढकाचितपात्रान्ताद्द्विगोः ष्ठन् स्यात् चात् खः स-
म्भवत्यादिषु । पक्षे ठञ् । तस्याध्यर्थे(५।१।२८)ति लुक् ।
खष्ठनोः विधानान्न लुक् । षो ङीपर्थः । आढकी । द्व्या-
ढकीना । आचितिकी । आचितीना । आचिती । द्विपात्रिकी ।
द्विपात्रीणा । द्विपात्री । अपरिमाणबिस्ताचिते(४।१।२२)-
ति ङीपः प्रतिषेधो न ॥

कुलिजाल्लुक्खौ च ॥ ५५ ॥

कुलिजान्ताद् द्विगोः सम्भवत्यादिषु खष्ठनौ वा स्तः पक्षे

ठञ् तस्य च वा लुक् । तेन चातूरूप्यम् । द्विकुलिजिकी । द्विकुलिजीना । द्वैकुलिजिकी । द्विकुलिजी । वार्तिके तु ठञो नित्यमेव लुक् । तद्देन(?) द्वैकुलिजकीति नास्त्येव । तत्र हि कुलिजाच्चेत्येव त्रैरूप्यसिद्धेर्लुक्खग्रहणं प्रत्याख्यातम् । तद्धाकरे स्पष्टम् ॥

## सोऽस्यांशवस्नभृतयः ॥ ५६ ॥

स इति प्रथमासमर्थादस्येत्यर्थे यथाविहितं प्रत्ययः स्यात् तच्चेत् प्रथमासमर्थमंशादिकं भवति । पञ्च अंशाः वस्नः भृतिर्वा अस्य पञ्चकः । भागः । शतिकः । वस्नं मूल्यम् । भृतिर्वेतनम् ॥

## तदस्य परिमाणम् ॥ ५७ ॥

तदिति प्रथमान्तात्परिमाणोपाधिकादस्येत्यर्थे यथाविहितं प्रत्ययः स्यात् । प्रस्थं परिमाणमस्य प्रास्थिको राशिः । खारीकः । वर्षशतं परिमाणमस्य वार्षशतिकः । षष्टिर्जीवितं परिमाणमस्य षाष्टिकः । साप्ततिकः । प्रकृत्यर्थप्रत्ययार्थयोरनुवृत्त्यैव प्राप्तौ पुनर्ग्रहणं पुनर्विधानार्थम् । तेन द्विषाष्टिकः । द्विसाप्ततिकः । द्विगो(४।१।८८)रिति लुक् न ॥

## संख्यायाः संज्ञासंघसूत्राध्ययनेषु ॥ ५८ ॥

तदस्य परिमाणमित्येव । सङ्ख्यावाचिनो यथाविहितं प्रत्ययः स्यात्संज्ञादिप्रत्ययार्थविशेषणम् ॥

तत्र संज्ञायां स्वार्थे प्रत्ययो वाच्यः ॥

पञ्चैव पञ्चकाः शकुनयः । त्रिकाः शालङ्कायनाः । पञ्च परिमाणमस्य संघस्य पञ्चकः सङ्घः । अष्टाध्यायाः परिमाणमस्य सूत्रस्य अष्टकं पाणिनीयम् । अधीतिरध्ययनम् । पञ्चावृत्तयः परिमाणमस्य पञ्चकमध्ययनम् ॥

पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पंचाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥ ५९ ॥

पङ्क्त्यादयस्सदस्य परिमाणमित्येतस्मिन्विषये निपात्यन्ते। यदिहालाक्षणिकं तत्सर्वं निपातनात्। पञ्चन्। अस्य टिलोपः तिश्च प्रत्ययः। पञ्च पदानि परिमाणमस्य पङ्क्तिश्छन्दः। द्वयोर्दशतोर्विन्भावः शतिश्चप्रत्ययः। द्वौ दशतौ परिमाणमस्य विंशतिः। त्रयाणां त्रिन् शच्च प्रत्ययः। त्रिंशत्। चतुर्णां चत्वारिन् शच्च प्रत्ययः। चत्वारिंशत्। पञ्चानां भाभावः शच्च प्रत्ययः। पञ्चाशत्। षण्णां तिप्रत्ययः अपवत्वं च। षष्टिः। सप्तानां तिः। सप्ततिः। अष्टानामशीभावः तिश्च। अशीतिः। नवानां तिप्रत्ययः। नवतिः। दशानां शभावस्तश्च प्रत्ययः। दश दशतः परिमाणमस्य शतम्। विंशत्यादयो गुणवचना यथाकथञ्चिद्व्युत्पाद्याः। नात्रावयवार्थाभिनिवेशः। अतएव च विंशतिर्ब्राह्मणाः ब्राह्मणानां विंशतिरिति सिद्धम्। नीलघटो घटस्य नीलमितिवत्। यदपि चैषां विषयभेदेन गुणमात्रे गुणिनि च वृत्तिः स्वलिङ्गसङ्ख्यानुविधानं तत्सर्वं स्वाभाविकमेव। ब्राह्मणानां पङ्क्तिरित्यादौ क्रमोपि गम्यते। सर्वत्राभिधानं शरणम्॥

पञ्चद्दशतौ वर्गे वा ॥ ६० ॥

एतौ निपात्येते वर्गे। पक्षे कन्। पञ्च परिमाणमस्य पञ्चद् वर्गः। पञ्चकः। दशत्। दशकः॥

सप्तनोऽञ् छन्दसि ॥ ६१ ॥

वर्ग इत्येव। साप्तान्यसृजत्॥

त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ॥ ६२ ॥

तदस्य परिमाणमित्येव । एतयोर्डण् स्याद् ब्राह्मणेऽभिधेये संज्ञायाम् । त्रिंशदध्यायाः परिमाणमेषां त्रैंशानि ब्राह्मणानि । चात्वारिंशानि । कानिचिदेव ब्राह्मणान्युच्यन्ते ॥

तदर्हति ॥ ६३ ॥

तदिति द्वितीयासमर्थादर्हत्यर्थे यथाविहितं प्रत्ययः स्यात् । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः । शत्यः । शतिकः ॥

छेदादिभ्यो नित्यम् ॥ ६४ ॥

नित्यमिति प्रत्ययार्थविशेषणम् । एभ्यो यथाविहितं प्रत्ययः स्यात्तदर्हतीतिविषये । छेदं नित्यमर्हतिच्छैदिकः । भैदिकः ॥

शीर्षच्छेदाद्यच्च ॥ ६५ ॥

चात् ठक् । शिरश्छेदं नित्यमर्हति शीर्षच्छेद्यः । शैर्षच्छैदिकः । प्रत्ययसन्नियोगेन शिरसः शीर्षभावो निपात्यते ॥

दण्डादिभ्यो यः ॥ ६६ ॥

अत्र(त्र) वधशब्दात् दण्डादित्वेन यति सति तित्स्वरितमिति स्वरः प्रसज्येतेति अचो यदि(३।१।९७)ति सूत्रे कैयटदर्शनात् दण्डादिभ्यश्चेत्येव सूत्रमित्याभाति । तदर्हतीत्येव । दण्डमर्हति दण्ड्यः । मुसल्य इत्यादि ॥

छन्दसि च ॥ ६७ ॥

तदर्हतीत्येव । प्रातिपदिकमात्राच्छन्दसि यत् स्यात् । या(यू)प्यः पलाशः ॥

पात्राद्घंश्च ॥ ६८ ॥

तदर्हतीत्येव । चाद्यत् । ठक्ठञोरपवादः । पात्रं परि-

माणमर्घ्यमस्ति। पात्रमर्हति पात्रियः। पात्र्यः॥

कडङ्गरदक्षिणाच्छ च ॥ ६९ ॥

तदर्हतीत्येव। चाधत्। कडङ्गरमर्हति कडङ्गरीयो गौः। कडङ्गर्यः। दक्षिणामर्हति दक्षिणीयो ब्राह्मणः। दक्षिण्यः॥

स्थालीबिलात् ॥ ७० ॥

तदर्हतीत्येव। अस्मात् छयतौ स्तः। स्थालीबिलमर्हन्ति स्थालीबिलीयास्तण्डुलाः।स्थालीबिल्याः। पाकयोग्या इत्यर्थः॥

यज्ञर्त्विग्भ्यां घखञौ ॥ ७१ ॥

तदर्हतीत्येव। आभ्यां यथासङ्ख्यमेतौ स्तः। यज्ञमर्हति यज्ञियो ब्राह्मणः। आर्त्विजीनः॥

यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसङ्ख्यानम्॥

यज्ञकर्मार्हति यज्ञियो देशः। ऋत्विक्कर्मार्हति आर्त्विजीनं ब्राह्मणकुलम्। आर्हीयाणां ठगादीनां पूर्णोऽवधिः। अतः परं प्राग्वतीयष्ठञेव भवति॥

पारायणतुरायणचान्द्रायणं वर्तयति ॥ ७२ ॥

अर्हतीति निवृत्तम्। एभ्यो द्वितीयान्तेभ्यो वर्तयतीत्यर्थे ठञ् स्यात्। पारायणं वर्तयति अधीते पारायणिकः छात्रः। तौरायणिको यजमानः। चान्द्रायणिकस्तपस्वी। तुरायणं यज्ञविशेषः॥

संशयमापन्नः ॥ ७३ ॥

अस्माद्द्वितीयान्तादापन्न इत्यर्थे ठञ् स्यात्। संशयं प्राप्तः सांशयिकः स्थाणुः॥

योजनं गच्छति ॥ ७४ ॥

द्वितीयान्तादस्माद्गच्छत्यर्थे ठञ् स्यात् । योजनं गच्छति यौजनिकः ॥

क्रोशशतयोजनशतयोश्च ॥

क्रोशशतं गच्छति क्रौशशतिकः । यौजनशतिकः ॥

आभ्यां ततोऽभिगमनमर्हति च ॥

क्रोशशतादभिगमनमर्हति क्रौशशतिको भिक्षुः । योजनशतादभिगमनमर्हति यौजनशतिको गुरुः ॥

पथः ष्कन् ॥ ७५ ॥

पथिशब्दाद्द्वितीयान्ताद्गच्छत्यर्थे ष्कन् स्यात् । पन्थानं गच्छतीति पथिकः । पथिकी ॥

पन्थो ण नित्यम् ॥ ७६ ॥

नित्यमिति प्रत्ययार्थविशेषणम् । पथः पन्थादेशो णश्च प्रत्ययः नित्यं गच्छतीत्यर्थे । पन्थानं नित्यं गच्छति पान्थः । नित्यग्रहणानर्थक्यं कदाचिद्गच्छत्यपीष्टत्वादित्याकरे ॥

उत्तरपथेनाहृतं च ॥ ७७ ॥

तृतीयान्तादस्मादाहृतमित्यर्थे ठञ् स्याद्गच्छत्यर्थे च । उत्तरपथेनाहृतं उत्तरपथेन गच्छति वा औत्तरपथिकः ॥

वारिजङ्गलस्थलकान्ताराजशङ्कुपूर्वाच्च पथः ॥

वारिपथेनाहृतः गच्छति वा वारिपथिकः । जाङ्गलपथिकः । स्थालपथिकः । कान्तारपथिकः । आजपथिकः । शाङ्कुपथिकः ॥

स्थलपूर्वात्पथः अण् मधुकमरीचयोः ॥

स्थलपथेनाहृतं स्थालपथं मधुकं मरीचं वा ॥

कालात् ॥ ७८ ॥

व्युष्टादिभ्योणि(५।१।९७)ति यावत्कालादिरधिकारः ॥

तेन निर्वृत्तम् ॥ ७९ ॥

तेनेति तृतीयासमर्थात्कालवाचिनो निर्वृत्तमित्यर्थे ठञ् स्यात्। मासेन निर्वृत्तं मासिकम्। सांवत्सरिकम् ॥

तमधीष्टो भृतो भूतो भावी ॥ ८० ॥

तमिति द्वितीयासमर्थात्कालवाचिनः यथाविहितं प्रत्ययः स्यात्। अधीष्टः सत्कृत्य व्यापारितः। भृतो वेतनेन क्रीतः। कालाध्वनोरत्यन्तसंयोग(२।३।५)इति द्वितीया। मासमधीष्टो मासिकोऽध्यापकः। मासं भृतो मासिकः कर्मकरः। मासं भूतो मासिको व्याधिः। मासं भावी मासिक उत्सवः। यद्यप्यध्येषणं भरणञ्च मुहूर्तं क्रियते। तथापि तत्साध्यक्रियाया मासेनात्यन्तसंयोग इति तयोरप्यौपचारिकेनात्यन्तसंयोगेन द्वितीया न विरुध्यते ॥

मासाद्वयसि यत्खञौ ॥ ८१ ॥

अस्मादेतौ स्तः भूते वयसि अभिधेये। मासम्भूतः मास्यः। मासीनः। वयसि किम्। मासिकः ॥

द्विगोर्यप् ॥ ८२ ॥

मासान्ताद्विगोर्यप् स्यात् भूते वयसि। द्वौ मासौ भूतः द्विमास्यः। त्रिमास्यः ॥

षण्मासाण्ण्यच्च ॥ ८३ ॥

अस्मात् ण्यच्यपौ स्तः चात् ठञ् वयसि। षण्मासं भूतः षाण्मास्यः। षण्मास्यः। षाण्मासिकः ॥

अवयसि ठंश्च ॥ ८४ ॥

षण्मासात् ठञ् स्याच्चात् ण्यत् अवयस्यभिधेये। षण्मासम्भूतः षाण्मासिको रोगः। षाण्मास्यः॥

समायाः खः ॥ ८५ ॥

द्वितीयान्तादस्मात् खः स्यादधीष्टादिषु। समामधीष्टो भृतो भूतो भावी वा समीनः। तेन निर्वृत्तमित्यपि तेन परिजय्येति यावदनुवर्तनीयमिति केचित्। समया निर्वृत्तः समीनः॥

द्विगोर्वा ॥ ८६ ॥

समायाः ख इत्येव। द्विसमीनः। पक्षे ठञ्। द्वैसमिकः। प्राग्वतेः सङ्ख्यापूर्वपदानान्तदन्तग्रहणमलुकीत्युक्तम्॥

रात्र्यहःसंवत्सराच्च ॥ ८७ ॥

एतदन्ताद्द्विगोर्निर्वृत्तादिषु खो वा स्यात्। पक्षे ठञ्। द्विरात्रीणः। द्वैरात्रिकः। द्व्यहीनः। द्वैयह्निकः। द्विसंवत्सरीणः। द्विसांवत्सरिकः। सङ्ख्यायाः संवत्सरसङ्ख्यस्य(७।३।१५)-इत्युत्तरपदवृद्धिः॥

वर्षाल्लुक् च ॥ ८८ ॥

वर्षान्ताद्द्विगोर्निर्वृत्तादिष्वर्थेषु खठञौ स्तस्तयोश्च वा लुक्। द्विवर्षीणो द्विवार्षिको द्विवर्षो वा व्याधिः। वर्षस्याभविष्यती(७।३।१६)त्युत्तरपदवृद्धिः। भाविनि तु द्वैवर्षिकः॥

चित्तवति नित्यम् ॥ ८९ ॥

वर्षान्ताद्द्विगोर्निर्वृत्तादिषूत्पन्नस्य प्रत्ययस्य नित्यं लुक् स्याच्चित्तवत्यभिधेये। द्विवर्षो दारकः। चित्तवति किम्। द्विवर्षीणो व्याधिः। भूतार्थस्यैव लुगिति मञ्जर्याम्। तेन केचित् द्वे वर्षे अधीष्टो भृतो वा द्विवार्षिको मनुष्य इति भवत्येवेति॥

## षष्टिकाः षष्टिरात्रेण पच्यन्ते ॥ ९० ॥

षष्टिकेति निपात्यते । षष्टिरात्रात्कन् प्रत्ययः पच्यन्त इत्यर्थे रात्रिशब्दस्य च लोपः । षष्टिरात्रेण पच्यन्ते षष्टिकाः । बहुवचनमतन्त्रम् । धान्यविशेषसंज्ञेयम् । मुद्गादौ नातिप्रसङ्गः ॥

## वत्सरान्ताच्छश्छन्दसि ॥ ९१ ॥

निर्वृत्तादिषु । ठञोऽपवादः । इद्वत्सरीयः । इदावत्सरीयः ॥

## संपरिपूर्वात्ख च ॥ ९२ ॥

एतत्पूर्वाद्वत्सरान्निर्वृत्तादिषु खः स्याच्चाच्छन्दसि । संवत्सरीणः । संवत्सरीयः । परिवत्सरीणः । परिवत्सरीयः ॥

## तेन परिजय्यलभ्यकार्यसुकरम् ॥ ९३ ॥

तेनेति तृतीयासमर्थात्कालवाचिनः परिजय्यादिष्वर्थेषु ठञ् स्यात् । मासेन परिजय्यः लभ्यः कार्यः सुकरो वा मासिकः । परिजय्यः परिजेतुं शक्यः ॥

## तदस्य ब्रह्मचर्यम् ॥ ९४ ॥

तदिति द्वितीयासमर्थात्कालवाचिनः अस्येत्यर्थे ठञ् स्यात् प्रकृतिप्रत्ययसमुदायेन चेत् ब्रह्मचर्यं गम्यते । यद्वा ब्रह्मचर्यं चेत् प्रत्ययार्थः । मासं ब्रह्मचर्यमस्य मासिकः ब्रह्मचारी । आर्धमासिकः । यद्वा मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम् । आर्धमासिकम् । द्वितीयवृत्तौ तदिति प्रथमासमर्थविभक्तिः । पूर्वत्र ब्रह्मचारी प्रत्ययार्थः । परत्र ब्रह्मचर्यमेव । उभयमपि सूत्रकाराभिमतम् ॥

महानाम्न्यादिभ्य षष्ठ्यन्तेभ्यः उपसङ्ख्यानम् ॥

महानाम्नीनां ब्रह्मचर्यं महानाम्निकम् । गौदानिकम् । आदित्यव्रतिकम् ॥

तच्चरतीति च महानाम्न्यादिभ्यः ॥

महानाम्नीश्चरति माहानाम्निकः। आदित्यव्रतिकः । भस्याढ(६।३।३५ वा)इति पुंवद्भावेन ङीपि निवृत्ते टिलोपः । अन्ये तु महानाम्नीति ऋक्संज्ञात्वात्संज्ञापूरण्यो(६।३।३७)रिति पुंवद्भावप्रतिषेधे यस्येति लोपे आभीयत्वाट्टिलोपाप्रवृत्तौ माहानाम्निकमिति साधयन्ति ॥

अवान्तरदीक्षादिभ्यो डिनिः ॥

अवान्तरदीक्षां चरति अवान्तरदीक्षी । तिलव्रती ॥

अष्टाचत्वारिंशतो ड्वुन् डिनिश्च ॥

अष्टाचत्वारिंशद्वर्षाणि व्रतं चरति अष्टाचत्वारिंशकः । अष्टाचत्वारिंशी ॥

चातुर्मास्यादीनां यलोपश्च ॥

चाद् ड्वुन् डिनिश्च । चातुर्मास्यानि चरति चातुर्मासकः । चातुर्मासी ॥

चतुर्मासात् ण्यो यज्ञे तत्र भवे ॥

चतुर्मासेषु भवानि चातुर्मास्यानि ॥

संज्ञायामण् ।

चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी आषाढी ॥

तस्य च दक्षिणा यज्ञाख्येभ्यः ॥ ९५ ॥

तस्येति षष्ठीसमर्थेभ्यो यज्ञाख्येभ्यः दक्षिणेत्यर्थे ठञ् स्यात् । अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी । वाजपेयिकी । आख्याग्रहणं प्रसिद्धाप्रसिद्धयज्ञमात्रपरिग्रहार्थम् ॥

तत्र च दीयते कार्यं भववत् ॥ ९६ ॥

तत्रेति सप्तम्यन्तात्कालवाचिनः दीयते कार्यमित्यर्थयोर्भववत् प्रत्ययः स्यात्। मासे भवं मासिकम्। मासे दीयते कार्यं वा मासिकम्। प्रावृषेण्यम्। तत्र च दीयत इति भिन्नो योगः। यज्ञाख्येभ्य इत्येव। वाजपेये दीयते वाजपेयिकम्। द्वैवाजपेयिकम्॥

व्युष्टादिभ्योण् ॥ ९७ ॥

कालादिति निवृत्तम्। तत्र च दीयते कार्यमित्येव। व्युष्टे दीयते कार्यं वा वैयुष्टम्। नैयं(नैत्य)मित्यादि। अग्निपदादीनामपि व्युष्टादिष्वेव पाठः कर्तव्यः। आग्निपदमित्यादि॥

तेन यथाकथाच हस्ताभ्यां णयतौ ॥ ९८ ॥

तृतीयासमर्थाभ्यामाभ्यां यथासङ्ख्यमेतौ स्तः दीयते कार्यमित्यर्थयोः। यथाकथाचशब्दोऽव्ययसमुदायः अनादरे वर्तते। यथाकथाच दीयते कार्यं वा याथाकथाचम्। हस्तेन दीयते कार्यं वा हस्त्यम्॥

संपादिनि ॥ ९९ ॥

तृतीयासमर्थाद् ठञ् स्यात्सम्पादिन्यभिधेये। सम्पत्तिर्गुणोत्कर्षः। आवश्यके णिनिः। वस्त्रयुगेन सम्पादि वास्त्रयुगिकं शरीरम्। वस्त्रयुगेन विशेषतः शोभत इत्यर्थः॥

कर्मवेषाद्यत् ॥ १०० ॥

आभ्यां यत् स्यात्तेन सम्पादिनीत्यत्र। कर्मणा सम्पादि कर्मण्यं शरीरम्। वेष्यो नटः॥

तस्मै प्रभवति सन्तापादिभ्यः ॥ १०१ ॥

तस्मा इति चतुर्थ्यन्तेभ्यः सन्तापादिभ्यः प्रभवत्यर्थे

ठञ् स्यात् । प्रभवति शक्तः । अलमर्थे चतुर्थी । सन्तापाय प्रभवति सान्तापिकः । साङ्ग्रामिक इत्यादि ॥

योगाद्यच्च ॥ १०२ ॥

चात् ठञ् । योगा यत्र भवति योग्यः । यौगिकः ॥

कर्मण उकञ् ॥ १०३ ॥

कर्मणे प्रभवति कार्मुकं धनुः । धनुषोऽन्यत्रानभिधानान्न ॥

समयस्तदस्य प्राप्तम् ॥ १०४ ॥

तदिति प्रथमांतात् प्राप्तोपाधिकात्समयात् अस्येत्यर्थे ठञ् स्यात् । समयः प्राप्तोऽस्य सामयिकं कार्यम् ॥

ऋतोरण् ॥ १०५ ॥

तदस्य प्राप्तमित्येव । ऋतुः प्राप्तोस्य आर्तवं पुष्पम् ॥

उपवस्त्रादिभ्यश्च ॥

उपवस्ता प्राप्तोस्य औपवस्त्रम् । प्राशित्रम् ॥

छन्दसि घस् ॥ १०६ ॥

ऋतोरित्येव । ऋत्वियः । सिति चे(१।४।१६)ति पदत्वान्न गुणः ॥

कालाद्यत् ॥ १०७ ॥

तदस्य प्राप्तमित्येव । कालः प्राप्तोस्य काल्यस्तापः । काल्यं शीतम् ॥

प्रकृष्टे ठञ् ॥ १०८ ॥

प्राप्तमिति निवृत्तम् । प्रकृष्टार्थवृत्तेः प्रथमात्कालादस्येत्यर्थे ठञ् स्यात् । प्रकृष्टो दीर्घः कालोऽस्य कालिकमृणम् । कालिकं वैरम् । ठञ्ग्रहणं स्पष्टार्थम् ॥

प्रयोजनम् ॥ १०९ ॥

प्रथमान्तात् प्रयोजनोपाधिकादस्येत्यर्थे ठञ् स्यात् । इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम् । मह उत्सवः ॥

विशाखाषाढादण्मन्थदण्डयोः ॥ ११० ॥

तदस्य प्रयोजनमित्येव । आभ्यामण् स्याद्यथासङ्ख्यं मन्थदण्डयोरर्थयोः । विशाखा प्रयोजनमस्य वैशाखो मन्थः । आषाढो दण्डः ॥

चूडादिभ्यश्च ॥

चूडा प्रयोजनमस्य चौडम् । श्रद्धा प्रयोजमस्य श्राद्धम् ॥

अनुप्रवचनादिभ्यश्छः ॥ १११ ॥

तदस्य प्रयोजनमित्येव । अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयमित्यादि ॥

वेशनपूरणवदनरोहणात्सपूर्वपदादुपसङ्ख्यानम् ॥

गृहप्रवेशनं प्रयोजनमस्य गृहप्रवेशनीयम् । प्रपूरणीयम् । गोप्रवदनीयम् । पतनेति क्वचित्पाठः । अश्वप्रपतनीयम् । प्रासादारोहणीयम् ॥

स्वर्गादिभ्यो यत् ॥

स्वर्गः प्रयोजनमस्य स्वर्ग्यम् । धन्यम् । यशस्यम् । आयुष्यम् । काम्यम् ॥

पुण्याहवाचनादिभ्यो लुग्वाच्यः ॥

पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम् । शान्तिवाचनम् । स्वस्तिवाचनम् ॥

समापनात्सपूर्वपदात् ॥ ११२ ॥

तदस्य प्रयोजनमित्येव । अस्माच्छः स्यात् । ठञोपवादः ।

छन्दःसमापनं प्रयोजनमस्यच्छन्दःसमापनीयः। व्याकरणसमापनीयः॥

ऐकागारिकट् चोरे॥ ११३॥

अयं निपात्यते चोरे। एकागारं प्रयोजनमस्य ऐकागारिकश्चोरः। टो ङीबर्थः। ठञैव सिद्धे निपातनं व्यर्थम् अनभिधानाच्च चोरादन्यत्र प्रयोगाभाव इति सूत्रमिदं प्रत्याख्यातप्राकरे। ञित्स्वराभावार्थं निपातनमिति तु तद्विरुद्धत्वादेवोपेक्षणीयम्॥

आकालिकडाद्यन्तवचने॥ ११४॥

अयं निपात्यते आद्यन्तवचने विवक्षिते। समानकालस्याद्य(त्रा)काल आदेशः। आद्यन्तविशेषणं चैतत्। इकट् च प्रत्ययः। समानकालावाद्यन्तावस्य आकालिकः स्तनयित्नुः। आकालिकी विद्युत्। आदिरुत्पत्तिः। अन्तो विनाशः। उत्पत्त्यनन्तरं विनश्यतीत्यर्थः॥

आकालात् ठन् च॥

चात् ठञ्। आकालिकी। आकालिका। यथा तु वार्तिकं(?)। तथा पूर्वसूत्रवत् प्रत्याख्यानाद्धि। ठञः पूर्णोऽवधिः॥

तेन तुल्यं क्रिया चेद्वतिः॥ ११५॥

तेनेति तृतीयासमर्थात्तुल्यमित्यर्थे वतिः स्यात्चत्तुल्यं सा क्रिया चेत्। ब्राह्मणवत्(इव) वर्तते ब्राह्मणवत्। राजवत्। क्रिया किम्। गुणद्रव्यतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः। पुत्रेण तुल्यो गोमान्॥

तत्र तस्येव॥ ११६॥

तत्रेति सप्तमीसमर्थात्तस्येति षष्ठीसमार्थाच्चेवार्थे वतिः

स्यात्। मथुरायामिव मथुरावत्। देवदत्तस्येव देवदत्तवत्॥

तदर्हम्॥ ११७॥

तदिति द्वितीयासमर्थादर्हमित्यर्थे वतिः स्यात् यदर्हं सा क्रिया चेत्। राजानमर्हतीदं वृत्तं राजवद्वर्तते। क्रिया किम्। ब्राह्मणमर्हतीदं दधि। इवस्यापि प्रयोगो दृश्यते। राजेव राजानं युध्यते॥

उपसर्गाच्छन्दसि धात्वर्थे॥ ११८॥

उपसर्गात्साधने धात्वर्थे वर्तमानात्स्वार्थे वतिः स्याच्छन्दसि। परावतो निवत उद्वतश्च। परागतानि निगतानि उद्गतानि च॥

तस्य भावस्त्वतलौ॥ ११९॥

तस्येति षष्ठीसमर्थाद् भाव इत्यर्थे त्वतलौ स्तः। शब्दस्य प्रवृत्तिनिमित्तं भावः। अश्वस्य भावः अश्वत्वम्। अश्वता॥

आ च त्वात्॥ १२०॥

ब्रह्मणस्त्व(५।१।१३६)इति यावत्त्वतलोरधिकारः अपवादसमावेशार्थम्। पृथोर्भावः प्रथिमा। पार्थवम्। पृथुत्वम्। पृथुता। चाभ्रग्लञ्भ्यामपि समावेशः। स्त्रियो भावः स्त्रैणम्। स्त्रीत्वम्। स्त्रीता। पौंस्नम्। पुंस्त्वम्। पुंस्ता॥

न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः॥ १२१॥

इत उत्तरे भावप्रत्यया ये ते नञ्तत्पुरुषान्न चतुराद्यन्ततत्पुरुषं वर्जयित्वा। अत्र(प)तित्वम्। अत्र(प)तिअम(ता)। यक् न भवति। त्वतलोर्न निषेधः। नञ् पूर्वात्किम्। बार्हस्पत्यम्। तत्पुरुषात्किम्।

नास्य वटवः सन्ति अवटुः । तस्य भावः आवटवम् । इगन्ताच्च(५।१।१३१)त्यण् । चतुरादिवर्जं किम् । आचातुर्यम् । आसङ्ग्यम् । आलवण्यम् । आवव्यम् । आबुध्यम् । आकत्यम् । आरस्यम् । आलस्यम् ॥

पृथ्वादिभ्य इमनिज्वा ॥ १२२ ॥

तस्य भाव इत्येव । वावचनमण्समावेशार्थम् । पृथोर्भावः प्रथिमा । तुरिष्ठेमेयस्सु(६।४।१५४) टे(६।४।१५५)रिति टिलोपः । र ऋत(६।४।१६१) इति रत्वम् । पार्थवम् । पृथुत्वम् । पृथुतेत्यादि ॥

वर्णदृढादिभ्यः ष्यञ् च ॥ १२३ ॥

वर्णविशेषवाचिभ्यो दृढादिभ्यश्च ष्यञ् स्यात् भावे । चादिमनिच् । शुक्लस्य भावः शौक्ल्यम् । शुक्लिमा । शुक्लत्वम् । दार्ढ्यम् । द्रढिमा । दृढत्वमित्यादि । षो ङीषर्थः । औचिती । यथाकामी ॥

गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥ १२४ ॥

गुणवचनेभ्यो ब्राह्मणादिभ्यः षष्ठ्यन्तेभ्यः कर्मणि ष्यञ् स्यात् चात् भावे च । कर्म क्रिया । जडस्य भावः कर्म वा जाड्यम् । मौढ्यम् । ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यम् । ब्राह्मणत्वम् । आपादसमाप्तेर्भावकर्माधिकारः । ब्राह्मणादिराकृतिगणः ॥

चातुर्वर्ण्यादीनां स्वार्थ उपसङ्ख्यानम् ॥

चत्वार एव वर्णाश्चातुर्वर्ण्यम् ॥ चतुर्वेदस्योभयपदवृद्धिश्च ॥ चातुर्वैद्यम् । चातुराश्रम्यम् । त्रैलोक्यम् । त्रैस्वर्यम् । षाड्गु-

ध्यम् । सान्निध्यम् । सामीप्यम् । सौगण्यम् । अयमप्याकृतिगणः ॥

अर्हतो नुम्च ॥

अर्हतो भावः आर्हन्त्यम् । आर्हन्ती ॥

स्तेनाद्यन्नलोपश्च ॥ १२५ ॥

आस्माद्यत् स्यान्नलोपश्च । स्तेनस्य भावः कर्म वा स्तेयम् । योगविभागात् स्तैन्यमित्यपि केचित् ॥

सख्युर्यः ॥ १२६ ॥

सख्युर्भावः कर्म वा सख्यम् ॥

दूतवणिग्भ्यां च ॥

दूत्यम् । वणिज्यम् ॥

कपिज्ञात्योर्ढक् ॥ १२७ ॥

कपेर्भावः कर्म वा कापेयम् । ज्ञातेयम् ॥

पत्यन्तपुरोहितादिभ्यो यक् ॥ १२८ ॥

पत्यन्तात् पुरोहितादिभ्यश्च यक् स्यात् । सेनापतेर्भावः कर्म वा सैनापत्यम् । प्राजापत्यम् । पौरोहित्यम् । राज्यमित्यादि ॥

प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ॥ १२९ ॥

प्राणिजातिवाचिभ्यो वयोवचनेभ्य उद्गात्रादिभ्यश्चाञ् स्यात् । अश्वस्य भावः कर्म वा आश्वम् । औष्ट्रम् । कौमारम् । कैशोरम् । औद्गात्रम् । औन्नेत्रमित्यादि ॥

हायनान्तयुवादिभ्योऽण् ॥ १३० ॥

हायनान्ताद्युवादिभ्यश्चाण् स्यात् । द्विहायनस्य भावः कर्म वा द्वैहायनम् । त्रैहायनम् । यौवनम् । स्थाविरमित्यादि ॥

श्रोत्रियस्य यलोपश्च ॥

श्रोत्रियस्य भावः कर्म वा श्रौत्रम् ॥

इगन्ताच्च लघुपूर्वात् ॥ १३१ ॥

लघुपूर्वो य इक् तदन्तादण् स्यात् । शुचेर्भावः कर्म वा शौचम् । मौनम् । पाटवम् । लाघवम् । इगन्तात्किम् । पटत्वम् । लघुपूर्वात्किम् । कट्रुत्वम् । ब्रह्मणादित्वात्काव्यम् ॥

योपधाद्गुरूपोत्तमाद्वुञ् ॥ १३२ ॥

रामणीयकम् ॥

सहायाद्वा ॥

साहायकम् । साहाय्यमित्यादि । योपधात्किम् । विमानत्वम् । गुरूपोत्तमात्किम् । क्षत्रियत्वम् ॥

द्वन्द्वमनोज्ञादिभ्यश्च ॥ १३३ ॥

द्वन्द्वात् मनोज्ञादिभ्यश्च वुञ् स्यात् । गोपालपशुपालानां भावः कर्म वा गौपालपशुपालिका । मानोज्ञकम् । काल्याणकमित्यादि ॥

गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ॥ १३४ ॥

गोत्रवाचिनश्चरणवाचिनश्च वुञ् स्यात् श्लाघादिषु गम्येषु । श्लाघा विकत्थनम् । अत्याकारः पराधिक्षेपः । तदवेतस्तत्प्राप्तः तदृज्ञो वा । तदिति गोत्रचरणयोर्भावकर्मणी निर्दिश्येते । गार्गिकया काठिकया श्लाघते अधिकुरुते वा । गार्ग्यत्वेन कठत्वेन च विकत्थते परानधिक्षिपति वेत्यर्थः । तदवेते । गार्गिकां काठिकां वा अवेतः । गार्ग्यत्वं कठत्वं च प्राप्त इत्यर्थः । श्लाघादिषु किम् । गार्ग्यत्वम् ॥

होत्राभ्यश्छः ॥ १३५ ॥

होत्रेति ऋत्विग्वाचकः । ऋत्विग्विशेषवाचिभ्यः छः स्यात् । मैत्रावरुणीयम् । ब्राह्मणाच्छंसीयम् ॥

ब्रह्मणस्त्वः ॥ १३६ ॥

ब्रह्मणो भावः कर्म वा ब्रह्मत्वम् । नेति वाच्ये त्वोक्तिस्तल्बाधार्था । ऋत्विज्येव । ब्रह्मता ॥

पञ्चमस्य प्रथमः ॥



अथ पञ्चमाध्यायस्य द्वितीयः पादः ॥

धान्यानां भवने क्षेत्रे खञ् ॥ १ ॥

षष्ठ्यन्तात् धान्यविशेषवाचिनः भवने क्षेत्रे वाच्ये खञ् स्यात् । भवन्त्यस्मिन्निति भवनम् । मौद्गीनम् । कौद्रवीणम् । क्षेत्रे किम् । मुद्गानां भवनः कुसूलः ॥

व्रीहिशाल्योर्ढक् ॥ २ ॥

भवने क्षेत्र इत्येव । खञोऽपवादः । व्रैहेयम् । शालेयम् ॥

यवयवकषष्टिकाद्यत् ॥ ३ ॥

यवानां भवनं क्षेत्रं यव्यम् । यवक्यम् । षष्टिक्यम् ॥

विभाषातिलमाषोमाभङ्गाणुभ्यः ॥ ४ ॥

यत् । पक्षे खञ् । तिलानां भवनं क्षेत्रं तिल्यम् । तैलीनमित्यादि । उमाभङ्गयोरपि धान्यत्वमेव ॥

सर्वचर्मणः कृतः खखञौ ॥ ५ ॥

सर्वचर्मशब्दात्तृतीयान्तात्कृत इत्यर्थ एतौ स्तः । सर्वेति प्रत्ययार्थविशेषणम् । निपातनादसमर्थसमासः । सर्वचर्मणा कृतः सर्वचर्मीणः । सार्वचर्मीणः ॥

यथामुखसंमुखस्य दर्शनः खः ॥ ६ ॥

षष्ठीसमर्थाभ्यामाभ्यां दर्शन इत्यर्थे खः स्यात् । दृश्यतेऽस्मिन्निति दर्शन आदर्शादिः । यथामुखं दर्शनः यथामुखीनः । संमुखस्य दर्शनः संमुखीनः । निपातनात्समासान्तलोपः ॥

तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ॥ ७ ॥

तदिति द्वितीयान्तात्सर्वादेः पथ्याद्यन्ताद्व्याप्नोत्यर्थे खः स्यात् । सर्वपथं व्याप्नोति सर्वपथीनः । सर्वाङ्गीणः । सर्वकर्मीणः । सर्वपत्रीणः । सर्वपात्रीणः ॥

आप्रपदं प्राप्नोति ॥ ८ ॥

द्वितीयासमर्थादस्मात् प्राप्नोत्यर्थे खः स्यात् । प्रपदं पदाग्रम् । अभिविधावाङ् । आप्रपदीनः पटः ॥

अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ ९ ॥

द्वितीयान्तेभ्योऽनुपदादिभ्यो यथासङ्ख्यं बद्धादिषु खः स्यात् । अनुपदं बद्धा अनुपदीना उपानत् । सर्वान्नं भक्षयति सर्वान्नीनो भिक्षुः । अयानयं नेयः आयानयीनः शारः । एकद्यूतकारापेक्षया शारस्य प्रदक्षिणं गमनमयः । द्वितीयापेक्षया वामपार्श्वगमनमनयः । रूढिरियम् । प्रदक्षिणवामपार्श्वगामिनां शाराणां द्वितीयद्यूतकारसम्बन्धिभिः शारैः पदानां गृहापरपर्यायाणां अनाक्रमणमयानयः । ससहायस्य शारस्य परैर्नाक्रम्यते पदम् असहायस्तु शारान्तरेण बाध्यत इति द्यूतव्यवहारः । केचित्तु फलकाशारःस्थितस्यैव स्वशारवर्गमानेयस्यायानयीनमितिपर्यभिधानमिच्छन्ति । यस्तु शार एकपार्श्व एव सञ्चरति तत्र न भवति प्रत्ययः । यो हि शारः पार्श्वात्पार्श्वान्तरमानीयते स एवायानयं नीयते । अन्यस्त्वयमेव नीयते । अनयमेव वा ॥

परोवरपरम्परपुत्रपौत्रमनुभवति ॥ १० ॥

द्वितीयान्तेभ्य एभ्योऽनुभवत्यर्थे खः स्यात् । परांश्चाव-

रांश्चानुभवति परोवरीणः। अवरस्यादेरुत्वं निपातनात्। परांश्च परतरांश्चानुभवति परंपरीणः। परंपरतरस्य परंपरेति निपात्यते। पुत्रपौत्राननुभवति पुत्रपौत्रीणः। अत्र केचित् सामान्येनैव निपातनमिच्छन्ति। तेषां पारोवर्यम् पारंपर्यमित्यन्यत्रापि प्रयोग उपपद्यते। अन्ये तु परंपरेत्यव्युत्पन्नप्रातिपदिकम् ततः स्वार्थे ष्यञ् पारंपर्यं पारोवर्यमित्यसाधुरेव प्रत्ययसन्नियोगेनैव निपातनौचित्यादित्याहुः॥

अवारपारात्यन्तानुकामङ्गामी॥ ११॥

द्वितीयान्तेभ्य एभ्यः गामीत्यर्थे खः स्यात्। गमिष्यतीति गामी। अकेनो(२।३।७०)रिति षष्ठीप्रतिषेधः। अवारपारं गामी अवारपारीणः। अवारीणश्च। पारीणः पारावारीणः इत्यपि। अत्यन्तं गामी अत्यन्तीनः। भृशं गन्तेत्यर्थः। अनुकामं गामी अनुकामीनः। यथेष्टं गन्तेत्यर्थः॥

समां समां विजायते॥ १२॥

अस्माद्विजायत इत्यर्थे खः स्यात्। विजायते गर्भं धारयतीत्यर्थः। अत्यन्तसंयोगे द्वितीया। वीप्सायां द्विर्भावः। वचनात्सुबन्तसमुदायात् प्रत्ययः॥

पूर्वपदे सुपः अलुग्वाच्यः॥

समां समां विजायते समांसमीना गौः। केचित्तु विस्थु(ज)निर्गर्भमोचने वर्तत इति समायां समायामिति विगृह्य पूर्वपदे याट एव लोपः उत्तरपदे सर्वस्या एव विभक्तेर्लोपो वाच्य इत्याहुः॥

अद्यश्वीनावष्टब्धे॥ १३॥

अयं निपात्यतेऽवष्टब्धे विजने। अवष्टब्धमासन्नं गृह्यते।

अत्रान्चालम्बनाविदूर्ययो(८।३।६८)रिति मूर्धन्यविधानात्। अग्रश्वो वा विजायते अग्रश्वीना गौः। खे सति अव्ययानां भमात्र(६।४।१४४वा)इति टिलोपः। केचित्तु विजायत इति नानुवर्तयन्ति। अवष्टब्धमात्रे निपातनम्। अग्रश्वीनं मरणम्। अग्रश्वीनो वियोगः॥

आगवीनः॥ १४॥

अयं निपातः। गोराङ्पूर्वाद्वा तस्य गोः प्रतिदानात्कर्मकारिणि खो निपात्यते। यो गवा भृतः आ तस्य गोः प्रतिदानात्कर्म करोति स आगवीनः कर्मकरः॥

अनुग्वलं गामी॥ १५॥

गोः पश्चादनुगु। अस्मादलं गामीत्यर्थे खः स्यात्। अनुगवीनो गोपालः॥

अध्वनो यत्खौ॥ १६॥

तदलं गामीत्येव। अध्वानमलङ्गच्छतीत्यध्वन्यः। अध्वनीनः। ये चाभावकर्मणोः(६।४।१६८)आत्मध्वानौ खे(६।४।१६९) इति प्रकृतिभावः॥

अभ्यमित्राच्छ च॥ १७॥

तदलङ्गामीत्येव। चाद्यत्खौ। अभ्यमित्रमलङ्गच्छति अभ्यमित्रीणः। अभ्यमित्र्यः। अभ्यमित्रीयः। अमित्राभिमुखं गच्छतीत्यर्थः॥

गोष्ठात्खञ्भूतपूर्वे॥ १८॥

गावास्तिष्ठन्त्यस्मिन्निति गोष्ठम्। गोष्ठशब्देन सन्निहितगोसमूहो यो देशः स उच्यते। गोष्ठात् भूतपूर्वोपाधिकात्स्वार्थे खञ्

स्यात्। गोष्ठो भूतपूर्वः गौष्ठीनो देशः। भूतपूर्वे किम्। गोष्ठे वर्तते॥

अश्वस्यैकाहगमः॥ १९॥

षष्ठ्यन्तादश्वादेकाहगम इत्यर्थे खञ् स्यात्। एकाहेन गम्यत इत्येकाहगमः। अश्वस्यैकाहगमः आश्वीनोऽध्वा॥

शालीनकौपीने अधृष्टाकार्ययोः॥ २०॥

एतौ यथासङ्ख्यमेतयोरर्थयोः खञन्तौ निपात्येते एतौ अधृष्टाकार्यपर्यायौ। व्युत्पत्तौ नात्यन्ताग्रहः। अधृष्टोऽप्रगल्भः। शालाप्रवेशनमर्हति शालीनः जडः। कूपावतरणमर्हतीति कौपीनं पापम्। अकार्यमित्यर्थः। कृतेः क्रियासामान्यवाचित्वादकार्यमस्पृश्यमिति वस्त्रेऽपि कौपीनप्रयोग इत्याह॥

व्रातेन जीवति॥ २१॥

तृतीयान्तादस्माज्जीवत्यर्थे खञ् स्यात्। नानाजातीयाः अनियतवृत्तयः शरीरायासजीविनो व्राताः। तेषां कर्म व्रातम्। तेन जीवति व्रातीनः। तेषामेवान्यतम उच्यते। यस्त्वन्यस्तदीयेन कर्मणा जीवति तत्र नेष्यते प्रत्ययः॥

साप्तपदीनं सख्यम्॥ २२॥

अयं निपात्यते सख्ये। सप्तभिः पदैरवाप्यते साप्तपदीनं सख्यम्। साप्तपदीनः सखा साप्तपदीनं मित्रमिति तु धर्मधर्मिणोरभेदोपचारात्॥

हैयंगवीनं संज्ञायाम्॥ २३॥

संज्ञायामिदं निपात्यते। ह्योगोदोहस्य हियंगुवादेशः। तस्य विकारे खञ्। दुह्यत इति दोहः क्षीरम्। ह्योगोदोहस्य विकारः

हैयङ्गवीनं घृतम् । अविकृतरूपगन्धस्य घृतस्येयं संज्ञा न घृतमात्रस्य । संज्ञायां किम् । उदश्वित्ति मा भूत् ॥

तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ॥ २४ ॥

तस्येति षष्ठीसमर्थेभ्यः पील्वादिभ्यः कर्णादिभ्यश्च यथासङ्ख्यं पाकमूलयोरर्थयोरेतौ स्तः । पीलूनां पाकः पीलुकुणः । कर्कन्धूकुण इत्यादि । पाकः परिणामः । कर्णस्य मूलं कर्णजाहम् । अक्षिजाहमित्यादि । प्रयोजनाभावाज्जस्येत्संज्ञाऽभावः ॥

पक्षात्तिः ॥ २५ ॥

तस्य मूलमित्येव । पक्षस्य मूलं पक्षतिः ॥

तेन वित्तश्चुञ्चुप्चणपौ ॥ २६ ॥

तेनेति तृतीयान्ताद्वित्त इत्यर्थे एतौ स्तः । वित्तो ज्ञात इत्यर्थः । विद्यया वित्तः विद्याचुञ्चुः । विद्याचणः ॥

विनञ्भ्यां नानाञौ न सह ॥ २७ ॥

आभ्यां न सहेत्यसहायवाचिभ्यां स्वार्थे यथासङ्ख्यं नानाञौ स्तः । विना । नाना ॥

वेः शालच्छङ्कटचौ ॥ २८ ॥

अस्मादेतौ स्तः । विशाले शृङ्गे विशङ्कटे । सत्तासाधनक्रियावचनादुपसर्गात् स्वार्थे प्रत्ययावेते(तौ) । विगते शृङ्गे विशाले इति । तद्योगाद्गोरपि विशाल इत्युच्यते । वस्तुतो गुणवचना एते यथाकथञ्चित् व्युत्पाद्याः । नावयवार्थेऽभिनिवेशः ॥

सम्प्रोदश्च कटच् ॥ २९ ॥

सङ्कटम् । प्रकटम् । उत्कटम् । चाद्विकटम् ॥

अलाबूतिलोमाभङ्गाभ्यो रजसि ॥

अलाबूनां रजः अलाबूकटम् । तिलकटम् । उमाकटम् । भङ्गाकटम् ॥

गोष्ठजादयः स्थानादिषु पशुनामादिभ्यः ॥

आदिशब्दः प्रकारे । गवां स्थानं गोष्ठम् ॥

सङ्घे कटच् ॥

अवीनां सङ्घः अविकटः ॥

विस्तारे पटच् ॥

अविपटः ॥

द्वित्वे गोयुगच् ॥

द्वौ उष्ट्रौ उष्ट्रगोयुगम् । अन्ये तूष्ट्रस्य ग्रीवाबन्धने यानाङ्गे युगे प्रत्ययः इत्याहुः ॥

प्रकृत्यर्थस्य षट्त्वे षड्गवच् ॥

गोषड्गवम् । अश्वषड्गवम् ॥

स्नेहने तैलच् ॥

सर्षपतैलम् ॥

भवने क्षेत्रे शाकटशाकिनौ ॥

इक्षूणां भवनं क्षेत्रम् इक्षुशाकटम् । इक्षुशाकिनम् । मूलशाकिनमित्यादि प्रयोगतोऽनुसन्धेयम् ॥

अवात्कुटारच्च ॥ ३० ॥

चात्कटच् । अवकुटारः । अवकटः ॥

नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः॥ ३१॥

नासिकानमने अनादेते स्युः संज्ञायाम्। नासिकायाः नतम् अवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगान्नासिकापुरुषयोरपि अवटीट इत्यादिव्यपदेशः॥

नेर्बिडज्बिरीसचौ॥ ३२॥

नेरेतौ स्तः नासिकाया नते संज्ञयाम्। नासिकाया नतं निबिडम्। निबिरीसम्। तद्योगान्नासिकापुरुषावपि तथा। निबिडं वस्त्रमित्यादौ तूपमानात् प्रयोगः॥

इनच्पिटच्चिक चि च॥ ३३॥

नेरेतौ स्तः नासिकायां नतेऽभिधेये तस्य च नेर्यथासङ्ख्यं चिक चि एतावादेशौ स्तः। चिकिनः। चिपिटः॥

कप्रत्ययः चिक् च नेरादेशो वाच्यः॥

चिक्कः॥

क्लिन्नशब्दाच्चक्षुर्विशेषाभिधायिनः स्वार्थे लः तस्य च चिल् पिल् चुल् इत्यादेशश्च वाच्यः॥

चिल्लं पिल्लं चुल्लं वा चक्षुषी। तद्योगात्पुरुषोपि [चिल्लः पिल्लः] चुल्ल इत्युच्यते॥

उपाधिभ्यां त्यकन्नासन्नारूढयोः॥ ३४॥

आभ्यां त्यकन् स्याद्यथासंख्यमासन्नारूढयोः। संज्ञाधिकारात् प्रयोगनियमः। पर्वतस्यासन्ना भूरुपत्यका। तस्यैवोच्चस्थानमधित्यका। प्रत्ययस्थादिती(७।३।४४)त्वमपि संज्ञाधिकारादेव न॥

## कर्मणि घटोऽठच् ॥ ३५ ॥

सप्तम्यन्तादस्माद् घट इत्यर्थे अठच् स्यात् । घटत इति घटः । कर्मणि घटते कर्मठः पुरुषः ॥

## तदस्य संजातं तारिकादिभ्य इतच् ॥३६॥

तदिति प्रथमान्तात्सञ्जातोपाधिकात्तारकादेरस्येत्यर्थे इतच् स्यात् । तारकाः संजाता अस्य तारकितं नभः । पुष्पितो वृक्ष इत्यादि ॥

## प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥ ३७ ॥

प्रथमान्तात्प्रमाणोपाधिकादस्येत्यर्थे एते स्युः । ऊरू प्रमाणमस्य ऊरुद्वयसम् ऊरुदघ्नम् जानुद्वयसम् जानुदघ्नम् उदकम् ॥

ऊर्ध्वमान एव प्रथमाविष्येते ॥

मात्रस्तु सामान्येनैव ऊरुमात्रम् । प्रस्थमात्रम् ॥

प्रमाणे लो वाच्यः ॥

प्रमाणशब्दा ये प्रसिद्धास्तेभ्य उत्पन्नस्य लुक् स्यात् । शमः प्रमाणमस्य शमः । दिष्टिः । वितस्तिः ॥

द्विगोर्नित्यम् ॥

द्वौ शमौ प्रमाणस्य द्विशमः । द्विवितस्तिः । नित्यग्रहणं संशये वक्ष्यमाणमात्रचोपि निवृत्त्यर्थम् । द्वे दिष्टी प्रमाणं स्यातां न वा द्विदिष्टिः ॥

स्तोमे डट् वाच्यः ॥

स्तोमो मन्त्रः । पञ्चदश स्तोमाः परिमाणमस्य पञ्चदशः । सप्तदशः । सप्तदशी रात्रिः ॥

शन्शतोर्डिनिः ॥

पञ्चदशिनोऽर्धमासाः । त्रिंशिनो मासाः ॥

विंशतेश्च ॥

विंशिनोऽङ्गिरसः । अत्र ति विंशते(६।४।१४२)रिति तिलोपे यस्येति लोपः आभीयत्वान्न प्राप्नोति । भगवत्प्रयोगात्तु भवति ॥

प्रमाणपरिमाणाभ्यां संख्यायाश्च संशये मात्रज्वाच्यः ॥

शमः प्रमाणमस्य स्यान्न वा शममात्रम् । दिष्टिमात्रम् । प्रस्थमात्रम् । पञ्चत्वसंख्याप्रमाणमेषां स्यान्न वा पञ्चमात्राः । षण्मात्राः ॥

वत्वन्ताद् स्वार्थे द्वयसज्मात्रचौ बहुलम् ॥

तावदेव तावद्द्वयसम् । तावन्मात्रम् । यावद्द्वयसम् । यावन्मात्रम् ॥

पुरुषहस्तिभ्यामण्च ॥ ३८ ॥

चाद्द्वयसजादयस्त्रयः । पुरुष प्रमाणमस्य पौरुषम् । हास्तिनम् । पुरुषद्वयसम् । हस्तिद्वयसमित्यादि । द्विगोर्नित्यमित्येव । द्विपुरुषमुदकम् । द्विहस्ति ॥

यत्तदेतेभ्यः परिमाणे वतुप् ॥ ३९ ॥

एभ्यः प्रथमान्तेभ्यः परिमाणोपाधिकेभ्यः अस्येत्यर्थे वतुप् स्यात् । यत्परिमाणमस्य यावान् । तावान् । एतावान् । आ सर्वनाम्न(६।३।९१)इत्यात्वम् । आयामस्तु प्रमाणं स्यात्परिमाणं तु सर्वत इति प्रमाणपरिमाणयोर्भेदः ॥

युष्मदस्मद्भ्यां छन्दसि सादृश्ये वतुप् ॥

त्वावतः । मावतः । त्वत्सदृशस्य मत्सदृशस्य चेत्यर्थः ॥

किमिदम्भ्यां वो घः ॥ ४० ॥

आभ्यां वतुपो वकारस्य घः स्यात् । अत एव वतुप् । इदं-

किमोरीश्की(६।३।९०) । इयान् । कियान् ॥

किमः संख्यापरिमाणे डति च ॥ ४१ ॥

संख्यापरिच्छेदे वर्तमानात् प्रथमान्तात्किमः अस्येत्यर्थे डतिः स्याच्चाद्वतुप् । का संख्या परिमाणमेषां कति कियन्तो वा ब्राह्मणाः। संख्याप्रश्ने वर्तमानात्किमोयं विधिः। अत एव क्षेपे न भवति । केयमेषां देशानां संख्येति । अत एव च द्व्येकयोर्न प्रत्ययः । संख्याप्रश्नस्य बहुष्वेव सम्भवात् ॥

संख्याया अवयवे तयप् ॥ ४२ ॥

अवयवे वर्तमानायाः संख्याया अवयविनि तयप् स्यात् । पञ्च अवयवा अस्य पञ्चतयम् । चतुष्टयी रज्जुः ॥

द्वित्रिभ्यां तयस्यायज्वा ॥ ४३ ॥

आभ्यां तयपोऽयज्वा स्यात् । द्वयं । त्रयं । द्वितयं । तयग्रहणं प्रत्ययान्तरत्वशङ्कानिवृत्त्यर्थम् । तेन तयन्निबन्धनो ङीप् त्रयी गतिरिति ॥

उभादुदात्तो नित्यम् ॥ ४४ ॥

अस्मात्तयपो नित्यमयजादेशः स्यात् स चोदात्तः । उभयें देवमनुष्याः । वचनसामर्थ्याद्वाद्युदात्तत्वं विज्ञायते । पुरस्तादपवादन्यायेन चित्स्वरस्यायं बाधको नामन्त्रितस्वरस्य ॥

तदस्मिन्नधिकमिति दशान्ताड्डः ॥ ४५ ॥

तदिति प्रथमासमर्थाद्दशान्तादधिकोपाधिकादस्मिन्नित्यर्थे डः स्यात् । एकादशाधिका अस्मिन् शते एकादशं शतम् । एकादशं सहस्रम् । एकादशं शतसहस्रम् । शतानां सहस्रं सहस्राणां वा शतमिति विग्रहे उभयथा संख्याया अल्पीयस्या(२।२।३४वा)

इति शतस्य पूर्वनिपातः । अन्तग्रहणं किम् । दश अधिका अस्मिन् शते ॥

शतसहस्रयोरेव प्रत्यय इष्यते ॥

नेह । एकादश अधिका अस्मिन् त्रिंशति ॥

प्रकृतिप्रत्ययार्थयोः साजात्य एव ॥

नेह । एकादश माषा अधिका अस्मिन् कार्षापणशते । इति करणात्सर्वमेतल्लभ्यम् ॥

शदन्तविंशतेश्च ॥ ४६ ॥

तदस्मिन्नधिकमित्येव । शदन्ताद्विंशतेश्च डः स्यात् । त्रिंशदधिका अस्मिन् शते त्रिंशं शतम् । चत्वारिंशम् । अन्तग्रहणादेकत्रिंशम् । विंशम् ॥

तदन्ताच्च ॥

एकविंशम् ॥

संख्याग्रहणं कर्तव्यम् ॥

इह मा भूत् । गोत्रिंशदधिका अस्मिन् शते ॥

संख्याया गुणस्य निमाने मयट् ॥ ४७ ॥

निमानं मूल्यम् । मेङ् प्रणिदान इत्यस्य करणे ल्युट् । निमाने वर्तमानात्प्रथमान्तात्संख्यावाचिनः अस्येत्यर्थे मयट् स्यात् गुणस्य चेन्निमानम् । गुणो भागः । भागो येन निमीयते मूल्येन सोपि सामर्थ्याद् भाग एव विज्ञायते । यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य द्विमयमुदश्विद्यवानाम् । त्रिमयम् । भागे विधीयमानोऽपि प्रत्ययः अभिधानस्वाभाव्याद् भागवन्तमाचष्टे । भागविशेषप्रतिपत्त्यर्थं मयटः प्रकृत्यर्थे विशेषणस्योपादानम् । निमसापेक्षत्वाच्च वृत्तिः । गुणस्येत्येकत्वं विवक्षितम् । तेनेह न । त्रयो भागा यवानाम् द्वावुदश्वित इति । निमेयसंख्यापेक्षया निमानसंख्याया आधिक्ये प्रत्ययः ।

नेह । एको यवभागो निमानमस्योदश्विद्भागस्य। भागसाम्य एव। नेह। भागो यवानामध्यर्धमुदश्वितः ॥

निमेये वर्तमानायाः संख्याया निमानेपि प्रत्यय इष्यते ॥

उदश्वितो द्वौ भागौ निमेयमस्य यवभागस्य द्विमया यवा उदश्वितः । संख्यायाः किम् । यवभागौ निमानमस्योदश्विद्भागस्य । गुणस्य किम् । द्वौ व्रीहियवौ निमानमस्योदश्वितः। यवानां द्वौ भागौ समीपे अस्योदश्विद्भागस्य ॥

तस्य पूरणे डट् ॥ ४८ ॥

तस्येति षष्ठीसमर्थात्संख्यावाचिनः पूरण इत्यर्थे डट् स्यात्। पूर्यते अनेनेति पूरणः। एकादशानां पूरणः एकादशः। द्वादशः । यस्मिन्नुपजाते संख्या संपद्यते स प्रत्ययार्थः। इह न भवति। पञ्चानां मुष्टिकानां पूरणो घटः ॥

नान्तादसंख्यादेर्मट् ॥ ४९ ॥

नान्तादसंख्यादेर्डटो मडागमः स्यात्। पञ्चानां पूरणः पञ्चमः। सप्तमः। नान्तात्किम्। त्रिंशः। असंख्यादेः किम्। एकादशः ॥

थट् च छन्दसि ॥ ५० ॥

नान्तादसंख्यादेर्डटो थट् चान्मट् आगमश्छन्दसि । पञ्चथः। पञ्चमः ॥

षट्कतिकतिपयचतुरां थुक् ॥ ५१ ॥

एषां डटि परतः थुगागमः स्यात्। षण्णां पूरणः षष्ठः । कतिथः। कतिपयथः। चतुर्थः ॥

चतुरश्छयतावाद्यक्षरलोपश्च ॥

तुरीयः । तुर्यः ॥

बहुपूगगणसंघस्य तिथुक् ॥ ५२ ॥

एषां तिथुक् स्यात् डटि । पूगसङ्घयोरत एव डट् । बहूनां पूरणो बहुतिथः । पूगतिथः । गणतिथः । सङ्घतिथः ॥

वतोरिथुक् ॥ ५३ ॥

वत्वन्तस्येथुक् स्याड्डटि । यावतां पूरणः यावतिथः ॥

द्वेस्तीयः ॥ ५४ ॥

तस्य पूरण इत्येव । डटोऽपवादः । द्वयोः पूरणः द्वितीयः ॥

त्रेः संप्रसारणं च ॥ ५५ ॥

चात्तीयः । त्रयाणां पूरणः तृतीयः । अण इति तत्रानुवर्तनात् हल(६।४।२)इति संप्रसारणदीर्घत्वाभावः ॥

विंशत्यादिभ्यस्तमडन्यतरस्याम् ॥ ५६ ॥

पङ्क्तिविंशती(५।१।५९)त्यादिसूत्रपठिता विंशत्यादय इह गृह्यन्ते । एभ्यः परस्य डटस्तमडागमो वा स्यात् । विंशतेः पूरणो विंशतितमः विंशः । त्रिंशत्तमस्त्रिंशः । षष्ट्यादेश्चासंख्यादे-(५।२।५८)रिति ज्ञापकात् तदन्तविधिरत्रेष्यते । एकविंशतितमः । एकोनविंशतितमः ॥

नित्यं शतादिमासार्धमाससंवत्सराच्च ॥ ५७ ॥

शतादिभ्यो मासादिभ्यश्च परस्य डटो नित्यं तमडागमः स्यात् । मासादिभ्योऽस्मादेव ज्ञापकात् डट् । शतस्य पूरणः शततमः । मासस्य पूरणो मासतमः । अर्धमासतमः ।

संवत्सरतमः। एकशततमः। एकसहस्रतमः॥

षष्ट्यादेश्चासंख्यादेः॥ ५८॥

असंख्यादेः षष्टिप्रभृतेः परस्य डटो नित्यं तमट् स्यात्। विंशत्यादिभ्यः(५।२।५६)इति विकल्पापवादः। संख्यादेस्तु विकल्प एव। षष्टेः पूरणः षष्टितमः। सप्ततितमः। नवतितमः। असंख्यादेः किम्। एकषष्टः। एकषष्टितमः॥

मतौ छः सूक्तसाम्नोः॥ ५९॥

प्रातिपदिकान्मत्वर्थे छः स्यात् सूक्ते सामनि च। अच्छावाकशब्दोऽस्मिन्नस्तीति अच्छावाकीयम् सूक्तम्। वा(वा)-रव(व)न्तीयं साम। अस्यवा(वा)मीयम्। कयाशुभा(भी)यम्। अनुकरणस्यानुकार्येणार्थवत्त्वात् प्रातिपदिकत्वाविरोधः॥

अध्यायानुवाकयोर्लुक्॥ ६०॥

मत्वर्थे उत्पन्नस्यच्छस्य लुक् स्यात् एतयोरभिधेययोः। अत एव ज्ञापकाच्छः। गर्दभाण्डशब्दोऽस्मिन्नस्ति गर्दभाण्डोऽध्यायः अनुवाको वा॥

वेति वाच्यम्॥

गर्दभाण्डीयः॥

विमुक्तादिभ्योऽण्॥ ६१॥

एभ्यो मत्वर्थे अण् स्यात् अध्यायानुवाकयोः। विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्तोऽध्यायः अनुवाको वा। दैवासुर इत्यादि॥

गोषदादिभ्यो वुन्॥ ६२॥

गोषदशब्दोऽस्मिन्नस्ति गोषदकोऽध्यायः अनुवाको वा। इषेत्वक इत्यादि॥

तत्र कुशलः पथः॥ ६३॥

तत्रेति सप्तम्यन्तात्पथः कुशल इत्यर्थे वुन् स्यात्। पथि कु-

शलः पथिकः ॥

अकर्पादिभ्यः कन् ॥ ६४ ॥

तत्र कुशल इत्येव। आकर्षे कुशलः आकर्षक इत्यादि ॥

धनहिरण्यात्कामे ॥ ६५ ॥

आभ्यां सप्तम्यन्ताभ्यां कामे कन् स्यात्। काम इच्छा। कामयिता त्वनभिधानान्न गृह्यते। धने कामो धनकः हिरण्यकः देवदत्तस्य ॥

स्वाङ्गेभ्यः प्रसिते ॥ ६६ ॥

स्वाङ्गविशेषवाचिभ्यः सप्तम्यन्तेभ्यः प्रसित इत्यर्थे कन् स्यात्। प्रसितः प्रसक्तः। तत्पर इत्यर्थः। केशेषु प्रसितः केशकः। दन्तकः॥ अङ्गसमुदायादपीष्यते॥ दन्तौष्ठकः। केशनखकः। केशादिरचनायां प्रसक्त इत्यर्थः ॥

उदराट्ठगाद्यूने ॥ ६७ ॥

सप्तम्यन्तादस्मात् प्रसिते ठक् स्यात्। आद्यूनः अविजिगीषुः। दिवोऽविजिगीषायाम्(८।२।४९)मिति निष्ठानत्वविधानात्। प्रसक्त्यार्थे विशेषणं चैतत्। उदरे प्रसक्त औदरिकः। यो बुभुक्षया पीडितः स उच्यते। आद्यूने किम्। उदरकः॥

सस्येन परिजातः ॥ ६८ ॥

तृतीयान्तादस्मात्परिजात इत्यर्थे कन् स्यात्। सस्यशब्दो गुणवाचीह गृह्यते। परिः सर्वतो भावे। यो गुणैः सम्बद्धो जायते किञ्चिदपि वैगुण्यं नास्ति यस्य तस्येदमभिधानम्। सस्येन परिजातः सस्यकः वत्सः। सस्यको मणिः। आकरशुद्ध इत्यर्थः ॥

अंशं हारी ॥ ६९ ॥

द्वितीयान्तादस्मात् हारीत्यर्थे कन् स्यात् । अंशं हारी अंशको दायादः पुत्रो वा । आवश्यके णिनिः । अकेनो(२।३।७०)-रिति षष्ठीनिषेधात् द्वितीया ॥

तन्त्रादचिरापहृते ॥ ७० ॥

पञ्चम्यन्तादस्मादचिरापहृते कन् स्यात् । तन्त्रादचिरापहृतः तन्त्रकः पटः । तन्तुवायगृहादानीतो नूतन एवमुच्यते ॥

ब्राह्मणकोष्णिके संज्ञायाम् ॥ ७१ ॥

कन्नन्तावेतौ निपात्येते । यत्र देशे ब्राह्मणा आयुधजीविनः तस्य ब्राह्मणक इति संज्ञा । अल्पान्ना च यवागूरुष्णिकेत्युच्यते ॥

शीतोष्णाभ्यां कारिणि ॥ ७२ ॥

आभ्यां कन् स्यात् कारिणि ॥ गौणाभ्यां क्रियाविशेषणाभ्यां प्रत्यय इष्यते ॥ शीतमिव शीतं मन्दकरणमित्यर्थः । उष्णमिवोष्णमाशुकरणमित्यर्थः । शीतं करोतीति शीतकोऽलसः । उष्णको दक्षः । गौणाभ्यां किम् । शीतं करोति तुषारः । उष्णं करोत्यादित्यः । गौणमुख्यन्यायानादरे अभिधानमेवात्र शरणम् ॥

आधिकम् ॥ ७३ ॥

निपातोयम् । अध्यारूढस्योत्तरपदलोपः कंश्च प्रत्ययः । अधिको द्रोणः खार्याः खार्यां वा । अधिका खारी द्रोणेन । कर्तरि कर्मणि वा अध्यारूढशब्दः । द्वयमपि संग्राह्यमेव । यदा कर्तरि क्तः तदा कर्मणोनभिधानाद्द्वितीयायां प्राप्तायां यस्मादधिक(२।३।९)मिति निर्देशात्पञ्चमी । तदस्मिन्नधिक(५।२।४५)मिति निर्देशात्सप्तम्यपि ॥

अनुकाभिकाभीकः कमिता ॥ ७४ ॥

कमितर्येते निपात्यन्ते कन्नन्ताः । अनु कामयते अनुकः । अभिकः । अभीकः ॥

पार्श्वेनान्विच्छति ॥ ७५ ॥

तृतीयान्तादस्मादन्विच्छत्यर्थे कन् स्यात् । अनृजुरुपायः पार्श्वम् । य ऋजुनोपायेनान्वेष्टव्यानर्थाननृजुनोपायेनान्विच्छति स पार्श्वकः ॥

अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ॥ ७६ ॥

तृतीयान्ताभ्यामाभ्यामन्विच्छत्यर्थे यथासङ्ख्यमेतौ स्तः । अयःशूलं तीक्ष्णोपायः । तेनान्विच्छति आयःशूलिकः । साहसिक इत्यर्थः । दाण्डाजिनिकः । दाम्भिक इत्यर्थः ॥

तावतिथं ग्रहणमिति लुग्वा ॥ ७७ ॥

तावतिथमिति पूरणप्रत्ययान्तानां सामान्येन निर्देशः । गृह्यतेऽनेनेति ग्रहणम् । पूरणप्रत्ययान्ताद् ग्रहणोपाधिकात्स्वार्थे कन् स्यात् पूरणप्रत्ययस्य च वा लुक् । द्वितीयेन रूपेण ग्रन्थं गृह्णाति द्विकं द्वितीयकं त्रिकं तृतीयकम् वा रूपम् । रूपमावृत्तिरुच्यते ॥

पूरणप्रत्ययान्ताद् ग्रहीतरि कन् पूरणप्रत्ययस्य च नित्यं लुग्वाच्यः ॥

षष्ठेन रूपेण गृह्णाति षट्को देवदत्तः । नवकः । इतिकरणस्य विवक्षार्थत्वाद् ग्रन्थविषयमेव ग्रहणं विज्ञायते । तेन द्वितीयेन हस्तेन धनं गृह्णातीत्यादौ न ॥

स एषां ग्रामणीः ॥ ७८ ॥

स इति प्रथमान्ताद्ग्रामण्युपाधिकादेषामित्यर्थे कन् स्यात् ।

देवदत्तो ग्रामणीः प्रधानमेषां देवदत्तकाः । यज्ञदत्तकाः । ग्रामणीः किम् । देवदत्तः शत्रुरेषाम् ॥

शृङ्खलमस्य बन्धनं करभे ॥ ७९ ॥

बध्यतेऽनेनेति बन्धनम् । शृङ्खलमिति करभाणां पादे व्यतिषज्यमानं काष्ठं पाशकमुच्यते । करभो बाल उष्ट्रः । प्रथमान्तादस्मात् बन्धनोपाधिकादस्येत्यर्थे कन् स्यात् करभश्चेत् षष्ठ्यर्थः । शृङ्खलमस्य बन्धनं शृङ्खलकः करभः ॥

उत्क उन्मनाः ॥ ८० ॥

कन्नन्तोऽयं निपात्यते उन्मनसि । उद्गतं मनोऽस्योत्को देवदत्तः । उत्सुक इत्यर्थः ॥

कालप्रयोजनाद्रोगे ॥ ८१ ॥

कालवाचिनः प्रयोजनवाचिनश्च यथायोगं समर्थविभक्तियुक्ताद्रोगेऽभिधेये कन् स्यात् । प्रयोजनं कारणं फलं च गृह्यते । द्वितीयेऽह्नि भवः द्वितीयको ज्वरः । तृतीयकः । चतुर्थकः । द्वितीयादीनां वृत्तिविषये अभिधानस्वाभाव्यात्कालविशेषवृत्तित्वम् । प्रयोजनम् । विषपुष्पैर्जनितो विषपुष्पको ज्वरः । उष्णं कार्यमस्य उष्णको ज्वरः । शीतकः । उत्तरसूत्रस्थसंज्ञाग्रहणस्य योगविभागेनैतच्छेषत्वाङ्गीकारादुक्तसर्वार्थलाभः ॥

तदस्मिन्नन्नं प्राये संज्ञायाम् ॥ ८२ ॥

तदिति प्रथमान्तादस्मिन्नित्यर्थे कन् स्यात् यत्तत्प्रथमासमर्थमन्नं चेत् प्रायविषयं भवति । प्रायो बाहुल्यम् । संज्ञा च समुदायोपाधिः । गुडापूपाः प्रायेणान्नमस्यां गुडापूपिका पौर्णमासी । तिलापूपिका । कृसरिका । त्रिपुटिका ॥

वटकेभ्य इनिर्वाच्यः ॥

वटकिनी पौर्णमासी। सप्तम्याश्च न ता(५।२।११५वा)विति वचनान्मत्वर्थीयेनिना नान्यथासिद्धिः ॥

कुल्माषादञ् ॥ ८३ ॥

पूर्वविषये । कुल्माषाः प्रायेणान्नमस्यां कौल्माषी पौर्णमासी। कुल्माषा मुद्गाः ॥

श्रोत्रियंश्छन्दोधीते ॥ ८४ ॥

छन्दोधीत इत्यर्थेयं निपात्यते। नः स्वरार्थः। छन्दसः श्रोत्रभावः अधीत इत्यर्थे घंश्च प्रत्ययः । छन्दोधीते श्रोत्रियः । तावतिथ(५।२।७७)मित्यतो वानुवृत्तेश्छान्दस इत्यपि ॥

श्राद्धमनेन भुक्तमिनिठनौ ॥ ८५ ॥

श्राद्धमिति स्मृत्युक्तक्रियाविशेषः। साहचर्याच्तत्साधने वर्तते। अस्मात्प्रथमान्ताद् भुक्तोपाधिकादनेनेत्यर्थे एतौ स्तः। श्राद्धं भुक्तमनेन श्राद्धी। श्राद्धिकः। यस्मिन्काले भुजिक्रियाहिततृप्तिलक्षणविशेषानुवृत्तिः तस्मिन्नेव समयविशेष एतयोः प्रयोग इष्यते। तेनाद्य भुक्ते श्वः श्राद्धिक इति न भवति। तदपि लोकप्रसिद्धमद्यतनमेव गृह्यते । तेन यस्याजीर्णमन्नं द्वितीयेहनि तदा प्रत्ययाभावः। अभिधानमात्रमत्र शरणं ॥

पूर्वादिनिः ॥ ८६ ॥

क्रियाविशेषणादस्मादनेनेत्यर्थे इनिः स्यात् । अनेनेति कर्तृत्वं क्रियां विना न संभवतीति यां कांचन क्रियामादाय प्रत्ययविधिः। पूर्वं गतमनेन भुक्तं पीतं वा पूर्वी। पूर्विणौ ॥

सपूर्वाच्च ॥ ८७ ॥

विद्यमानपूर्वात् पूर्वान्ताद् प्रातिपदिकादनेनेत्यर्थे इनिः

स्यात्। पूर्वं कृतमनेन कृतपूर्वी कटम्। भुक्तपूर्वी ओदनम्। सुप्सुपे(२।१।४यो०वि०)ति समासे सत्ययं तद्धितः। वृत्तावत्यन्तमुपसर्जनीभूतेन क्तेन कर्मणोऽनभिहितत्वाद्द्वितीया कटमित्यादौ सिद्धा। पूर्वं भुक्तमनेन पूर्वी ओदनमिति तु प्रयोगाभावाद्द्वितीयाऽभावः। सति तस्मिन्निष्टैव॥

इष्टादिभ्यश्च ॥ ८८ ॥

एभ्योऽनेनेत्यर्थे इनिः स्यात्। इष्टमनेन इष्टी यज्ञे। पूर्ती श्राद्धे। क्तस्येन्विषयस्ये(२।३।३६वा)ति कर्मणि सप्तमी॥

छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ॥ ८९ ॥

एतौ छन्दसि निपात्येते पर्यवस्थातरि। पर्यवस्थाता सपत्नः। मा त्वा परिपन्थिनो विदन्। मा त्वा परिपरिणो विदन्॥

अनुपद्यन्वेष्टा ॥ ९० ॥

अन्वेष्टर्ययं निपात्यते। अनुपदी गवाम्॥

साक्षाद्द्रष्टरि संज्ञायाम् ॥ ९१ ॥

अस्मादिनिः स्याद् द्रष्टरि संज्ञायाम्। साक्षाद्द्रष्टा साक्षी। अव्ययानां भमात्र(६।४।१४४वा)इति टिलोपः। संज्ञाग्रहणादुपद्रष्टैवोच्यते न दाता न ग्रहीता॥

क्षेत्रियच् परक्षेत्रे चिकित्स्यः ॥ ९२ ॥

परक्षेत्रे चिकित्स्य इत्यर्थेऽयं निपातः। परक्षेत्रे जन्मान्तरशरीरे चिकित्स्यो व्याधेरसाध्यत्वतात् क्षेत्रियः। यद्वा परक्षेत्रे धान्यार्थक्षेत्रे यानि जातानि विनाश्यानि तानि क्षेत्रियाणि तृणानि। यद्वा परदारेषु निग्राह्यः क्षेत्रियः पारदारिकः। यद्वा परशरीरेषु संक्रमय्य यद्विषं चिकित्स्यते तत्क्षेत्रियम्। सर्वं चैतत् प्रमाणमेव॥

इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ॥ ९३ ॥

इन्द्रियमित्यन्तेदार्थं निपात्यते। रूढिरियं चक्षुरादीनाम्। इन्द्रलिङ्गमित्यादि व्युत्पत्तिकथनम्। इन्द्र आत्मा। इन्द्रस्य लिङ्गम् इन्द्रेण दृष्टम् इन्द्रेण सृष्टम् इन्द्रेण जुष्टम् इन्द्रेण दत्तम् वा। षष्ठ्याद्यन्तादिन्द्राल्लिङ्गाद्यर्थे घच्। इति व्युत्पत्त्यन्तरसूचकः। वा परस्परनिरपेक्षविकल्पद्योतकः॥

तदस्यास्त्यस्मिन्निति मतुप् ॥ ९४ ॥

तदिति प्रथमान्तादस्त्युपाधिकादस्यास्मिन्नित्यर्थे मतुप् स्यात्। गावोऽस्य सन्ति गोमान्। वृक्षा अस्मिन् सन्ति वृक्षवान् पर्वतः। इतेः प्रयोगनियमार्थत्वादतिप्रसङ्गाभावः। उक्तं च।

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥

भूम्नि गोमान्। निन्दायां काकतालुकी। प्रशंसायां रूपवान्। नित्ययोगे क्षीरिणो वृक्षाः। अतिशायने उदरिणी कन्या। संसर्गे दण्डी॥

गुणवचनेभ्यो मतुपो लुक्॥

शुक्लो गुणोऽस्मिन्नस्ति शुक्लः पटः। केवलगुणमात्रवाचिभ्यो न। रूपवान्। गन्धवान्॥

रसादिभ्यश्च ॥ ९५ ॥

मतुप् प्रागिवषये। रसोऽस्यास्तीति रसवान्। रूपवान्। अत्र रसिको नटः ऊर्वशी रूपिणी स्पर्शिको वायुरिति प्रत्ययान्तरप्रयोगदर्शनान्नियमानुपपत्तेः प्रत्याख्यातोयं योगो

भगवता। अत एव पुनर्मतुब्विधानादिनिठनौ बाध्येते तेन रसीति न भवितव्यमिति वृत्त्यन्तरे रुद्रपण्डितोक्तमपहसि(स्ति)-तम्। प्रत्याख्यानपक्षे यथालक्षणमप्रयुक्त इति तस्यापीष्टत्वाद् अभिधानलक्षणत्वे च सुतरां सूत्रवैयर्थ्यमिति भगवद्वचनापरिशी-लननिबन्धनमेतत्॥

प्राणिस्थादातो लजन्यतरस्याम्॥ ९६॥

प्राणिस्थवाचिन आदन्तान्मत्वर्थे लच् वा स्यात्। पक्षे मतुप्। चूडालः। चूडावान्। अङ्गादेव। नेह। चिकीर्षा-वान्। प्रत्ययस्वरेणैव सिद्धे चित्करणं चूडालोस्तीत्यत्र स्वरितो वानुदात्ते पदादा(८।२।६)विसेतद्बाधनार्थम्॥

सिध्मादिभ्यश्च॥ ९७॥

मत्वर्थे लज्वा। पक्षे मतुबेव समुच्चीयते। तेनेनिठनौ न। सिध्मलः। सिध्मवान्। गडुलः। गडुमान् इत्यादि॥ वातादी-नामूङ् च॥ वातूलः। दन्तूलः। वलूलः। ललाटूलः[। गलूलः]॥

वत्सांसाभ्यां कामबले॥ ९८॥

यथासंख्यं कामबलयोर्वर्तमानाभ्यामाभ्यां लच् स्यान्म-त्वर्थे। वत्सलः पिता। स्नेहवानित्यर्थः। अंसलो मल्लः। बलवानित्यर्थः। लज्विषय एवाभिधानस्वाभाव्याद्वत्सांसौ कामबलयोर्वर्तेते इति नित्यं लजेव न मतुप् नापि वाक्यम्॥

फेनादिलच्च॥ ९९॥

चाल्लच् मतुप्च मत्वर्थे। फेनिलः। फेनलः। फेनवान्॥

लोमादिपामादिपिच्छादिभ्यः शनेलचः॥ १००॥

त्रिभ्यो गणेभ्यो यथासंख्यमेते स्युः मत्वर्थे मतुप् च।

लोमादिभ्यः शः। लोमशः। लोमवानित्यादि। पामादिभ्यो नः। पामनः। पामवानित्यादि॥ लक्ष्म्या अच्च॥ लक्ष्मणः। पिच्छादिभ्य इलच्। पिच्छिलः। पिच्छवान्। उरसिलः। उरस्वानित्यादि॥

प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः॥ १०१॥

मत्वर्थे। मतुप् च। प्राज्ञः। प्रज्ञावान्। पिच्छादिपाठात् प्रज्ञिल इत्यपि। श्राद्धः। श्रद्धावान्। आर्चः। अर्चावान्। वार्त्तः। वृत्तिमान्। विच्छेदप्रतिविधानादिषु वृत्तिशब्दो वर्तते॥

तपस्सहस्राभ्यां विनीनी॥ १०२॥

आभ्यां यथासंख्यमेतौ स्तः। तपोऽस्यास्मिन्वास्ति तपस्वी। सहस्री। असदन्तत्वादेव प्रत्ययद्वयसिद्धौ पुनर्वचनमणा बाधा मा भूदित्येवमर्थम्। सहस्रात्तु ठनपि बाध्यते॥

अण् च॥ १०३॥

तापसः। साहस्रः॥

ज्योत्स्नादिभ्यश्च॥

ज्यौत्स्नः। तामिस्रः। कुण्डलाई:(?)कौण्डलः। कौतुपः। वैपादिकः। वैसर्पः। ज्योत्स्नादिराकृतिगणः। सर्वत्र मतुबस्त्येव। तपस्वान्। सहस्रवान्। ज्योत्स्नावान्॥

सिकताशर्कराभ्यां च॥ १०४॥

अण्। सैकतो घटः। शार्करं मधु॥

देशे लुबिलचौ च॥ १०५॥

सिकताशर्कराभ्यां देशे वाच्ये लुबिलचौ स्तः। चादण्। मतुप् वर्तत एव। लुबयं विशेषाभावान्मतुबाद्यन्यतमस्य।

सिकता अस्मिन्विद्यन्ते सिकताः देशः । सिकतिलः । सैकतः । सिकतावान् । शर्कराः । शार्करिलः । शार्करः । शर्करावान् । देशे किम् । मतुबर्थौ प्रत्युदाहरणम् ॥

दन्त उन्नत उरच् ॥ १०६ ॥

उन्नतत्वोपाधिकादस्मादुरच् स्यात् । उन्नता दन्ता अस्य दन्तुरः । उन्नते किम् । दन्तवान् ॥

ऊषसुषिमुष्कमधो रः ॥ १०७ ॥

एभ्यो रः स्यान्मत्वर्थे । ऊषरं क्षेत्रम् । सुषिरं काष्ठम् । मुष्करः पशुः । मधुरः गुडः । मधुशब्दो वृत्तिविषये रसवाची । तस्मान्मतुबप्यनभिधानान्न । इतरभिधेयनियमार्थस्यानुवर्तनादूषोऽस्ति घट इत्यत्र न ॥

रप्रकरणे खादिभ्य उपसंख्यानम् ॥

खं कण्ठविवराख्यं महदस्य खरो गर्दभः । मुखमस्यास्ति सर्वस्मिन् वाच्ये मुखरः । कुञ्जरः । कुञ्जौ हस्तिहनू । जातिशब्दोऽयम् । नगा वर्तन्तेऽत्र नगरम् । पांसुरम् । पाण्डुरम् ॥

कच्छ्वा ह्रस्वत्वं च ॥

कच्छुरः ॥

द्युद्रुभ्यां मः ॥ १०८ ॥

कृतोत्वस्य दिवः द्युः । प्रकृत्यन्तरं वा दिनवाची । द्युमः । द्रुमः । रूढावेतौ । तेन मतुबत्र न ॥

केशाद्वोऽन्यतरस्याम् ॥ १०९ ॥

पक्षे मतुबिनिठनः । केशवः । केशवान् । केशी । केशिकः ॥

वप्रकरणेऽन्येभ्योऽपि दृश्यत इति वाच्यम् ॥

मणिवः। हिरण्यवः। बिम्बावम्। कुररावम्। राजीवम्। अन्येषामपि दृश्यते(६।३।१३७)इति दीर्घः। इष्टकावम्॥

छन्दसीवनिपौ च॥

चात् वमतुपौ। रथोस्यास्तीति रथीः। मघोऽस्यास्तीति मघवा। उद्गतमस्यास्तीति ससाधनक्रियावचनादुपसर्गात् मतुपः। उद्वा। उद्वती॥

मेधारथाभ्यामिरन्निरचौ॥

छन्दसीत्येव। मेधिरः। रथिरः॥

गाण्ड्यजगात्संज्ञायाम्॥ ११०॥

आभ्यां मत्वर्थे वः स्यात्। गाण्डीवम् सन्धेस्तुल्यत्वात् गाण्डिवं वा धनुः। अजगवं धनुः। संज्ञात्वान्मतुन्न॥

काण्डाण्डादीरन्नीरचौ॥ १११॥

आभ्यां यथासंख्यमेतौ स्तः मत्वर्थे। काण्डीरः। अण्डीरः॥

रजःकृष्यासुतिपरिषदो वलच्॥ ११२॥

एभ्यो मत्वर्थे वलच् स्यात्। रजस्वला कन्या। कृषीवलः कुटुम्बी। आसुतीवलः शौण्डिकः। वले(६।३।११८)इति दीर्घः। परिषद्वलो राजा। रजोऽस्मिन्ग्राम इसत्रानभिधानान्न वलच्॥

अन्येभ्योपि दृश्यत इति वाच्यम्॥

भ्रातृवलः। वल(६।३।११८)इत्यत्राणुग्रहणानुवर्तनाद्दीर्घाभावः। पुत्रवलः। उत्सङ्गवलः। संज्ञाग्रहणस्यापि तत्रानुवर्तनादसंज्ञायां दीर्घो न॥

दन्तशिखात्संज्ञायाम्॥ ११३॥

आभ्यां मत्वर्थे वलच् स्यात् संज्ञायाम्। दन्तावलो

हस्ती । शिखावलो मयूरः ॥

ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगो मिन्मलिनमलीमसाः ॥ ११४ ॥

एते मत्वर्थे निपात्यन्ते संज्ञायाम् । ज्योतिष उपधालोपो न प्रत्ययश्च । ज्योत्स्ना । तमस उपधाया इत्वं रश्च । तमिस्रा रात्रिः । लिङ्गमतन्त्रम् । तमिस्रं नभः । शृङ्गादिनच् । शृङ्गिणः । ऊर्जोऽसुगागमो विनिवलचौ च । ऊर्जस्वी । ऊर्जस्वलः । गोमिन् । गोमी । मलादिनजीमसचौ । मलिनः । मलीमसः ॥

अत इनिठनौ ॥ ११५ ॥

अदन्तान्मत्वर्थे एतौ स्तः । दण्डी । दण्डिकः । दण्डवान् ॥

एकाक्षरान्न ॥

स्ववान् ॥

कृतो न ॥

कारकवान् ॥

जातेर्न ॥

वृक्षवान् ॥

सप्तम्यां च न ॥

दण्डा अस्यां शालायां सन्तीति दण्डवती । उक्तं च । एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृताविति । प्रायिकं चैतत् । कार्यी कार्यिकः तण्डुली तण्डुलिक इत्यादिदर्शनात् ॥

व्रीह्यादिभ्यश्च ॥ ११६ ॥

मत्वर्थे इनिठनौ स्तः । व्रीही । व्रीहिकः । व्रीहिमान् । इतेरभिधेयनियमार्थस्य अनुवर्तनात् शिखादिभ्य इनिरेव । यवखा(यवखदा)दिषु ठनेव । अवशिष्टेभ्य उभयम् । अभिधानस्वाभाव्यलभ्यं चैतत् ॥

तुन्दादिभ्य इलच्च ॥ ११७ ॥

चादिनिठनौ मतुप् च । तुन्दिलः । तुन्दी । तुन्दिकः । तुन्दवान् । व्रीह्यादिभ्य(५।२।११६)इत्येव सिद्धे तुन्दादिषु व्रीहिशब्दपाठोऽर्थपरिग्रहार्थः । तेन शालिलः शाली शालिकः शालिमान् इत्यादि सिद्धम् ॥

एकगोपूर्वाट्ठञ् नित्यम् ॥ ११८ ॥

एकपूर्वात् गोपूर्वाच्च मत्वर्थे नित्यं ठञ् स्यात् । नित्यग्रहणं मतुब्बाधनार्थम् । एकशतमस्यास्ति ऐकशतिकः । एकशतमिति पूर्वकालैके(२।१।४९)ति प्रतिपदोक्तसमासादेव प्रत्ययः । तेन तत्पुरुषात् बहुव्रीहेर्द्वन्द्वाद्वा नेत्याहुः । गौशतिकः । अत इत्येव । एकविंशतिरस्यास्तीति । ऐकगविक इत्यत्र समासान्ते कृते ठञ् । गौशकटिक इत्यत्र शकटशब्दोऽकारान्तः । अत्रेदं मतरहस्यम् । वृत्तिकारेण द्वन्द्वोपतापगर्ह्या(५।२।१२८)त्यादावत इत्यनुवर्तनीयत्वादत्रापि तदनुवृत्तौ गौशकटिकमित्यत्राकारान्तशकटशब्दमादाय प्रयोग उपपादितः । भगवता तु अत इति निवृत्तम् तेन गौशकटिकमिति सिद्धम् गौविंशातिरस्यास्तीत्यादावनभिधानात् प्रत्ययाभाव इत्युक्तम् । तत्र भगवन्मतमेव सम्यक् । अत इति निवृत्तौ गौशकटीशब्दादपि प्रत्ययः सिध्यति । द्वन्द्वोपतापे(५।२।१२८)त्यादावनभिधानादभिधेयनियमार्थस्येतिकरणस्यानुवर्तनाद्वाऽतिप्रसङ्गाभावः । प्रातिपदिकग्रहणपरिभाषात्तत्र नोपतिष्ठते । प्रतिपदोच्चारण एव तदुपस्थानात् । तपरत्ववैयर्थ्यापत्तेश्च । हस्वगोशकटशब्दे तथाप्यप्रसक्तेश्च । अत एव एकद्रव्यवत्त्वावित्यपि प्रयोगः सङ्गच्छते । अनभिधानात् ठञो निवृत्तौ मतुपा सिद्धत्वात् । अन्यथा असाधुत्वं वा स्यात् द्रव्यवच्छब्देन सह एकेन द्रव्यवा-

निनि सुप्सुपे(२।१।४वा०।वि०)ति समासं विधाय कुस्त्रिकलाना वा स्यादित्यलं पल्लवितेन ॥

## शतसहस्रान्ताच्च निष्कात् ॥ ११९ ॥

निष्कपूर्वाच्छतसहस्रान्तान्मत्वर्थे ठञ् स्यात् । निष्कशतमस्यास्ति नैष्कशतिकः । नैष्कसहस्रिकः । सुवर्णनिष्कशतमस्तीत्यादावनभिधानान्न ॥

## रूपादाहतप्रशंसयोर्यप् ॥ १२० ॥

आहतप्रशंसोपाधिकाद्रूपान्मत्वर्थे यप् स्यात् । आहतं रूपमस्यास्ति रूप्यः कार्षापणः । प्रशस्तरूपमस्यास्ति रूप्यो गौः । आहननात्ताडनात्कर्षापणादिषु यत्पुरुषादिरूपमुत्पद्यते तदाहतमित्युच्यते ॥

यबन्येभ्योऽपि दृश्यत इति वाच्यम् ॥

हिम्याः पर्वताः । गुण्याः ब्राह्मणाः ॥

## अस्मायामेधास्रजो विनिः ॥ १२१ ॥

असन्तान्मायादिभ्यश्च विनिः स्यान्मत्वर्थे । मतुप् सर्वत्र समुच्चीयते । यशस्वी । यशस्वी । मायावी । व्रीह्यादिपाठान्मायी मायिक इत्यपि । मेधावी । स्रग्वी । कुत्वेन गतम् ॥

## बहुलं छन्दसि ॥ १२२ ॥

मत्वर्थे विनिः । अग्ने तेजस्विन् ॥

छन्दोविन्प्रकरणे अष्ट्रामेखलाद्वयोभयरुजाहृदयमर्मणो दीर्घश्च ॥

अष्ट्रावी । मेखलावी । द्वयावी । उभयावी । रुजावी । हृदयावी । मर्मावी ॥

सर्वत्रामयस्य ॥

लोके वेदे च । आमयावी ॥

शृङ्गवृन्दाभ्यामारकन् ॥

शृङ्गारकः। वृन्दारकः ॥

फलबर्हाभ्यामिनच् ॥

फलिनः। बर्हिणः ॥

हृदयाच्चालुरन्यतरस्याम् ॥

हृदयालुः। हृदयी। हृदयवान् ॥

शीतोष्णतृप्रेभ्यस्तन्न सहत इति चालुर्वाच्यः ॥

शीतं न सहते शीतालुः। उष्णालुः। तृप्रालुः ॥

हिमाच्चेलुः ॥

हिमं न सहते हिमेलुः ॥

बलादूलः ॥

बलं न सहते बलूलः ॥

वातात्समूहे च ॥

वातं न सहते वातूलः। वातस्य समूहो वातूलः ॥

पर्वमरुद्भ्यान्तन्(प्) ॥

पर्वाण्यस्य सन्ति पर्वतः। मरुत्तः। एतत्सर्वं बहुलग्रहणाल्लभ्यम् ॥

ऊर्णाया युस् ॥ १२३ ॥

ऊर्णा अस्यां सन्ति ऊर्णायुः। सिति चे(१।४।१६)ति पदत्वाद्यस्येति लोपाभावः। केचिच्छन्दसीत्यनुवर्तयन्ति ॥

वाचो ग्मिनिः ॥ १२४ ॥

वागस्यास्तीति वाग्मी। यद्यपि मिनिरित्येव कृते जश्त्वेन गत्वं सिध्यति व्यवस्थितत्वाच्च यरोऽनुनासिक(८।४।४५)इत्यस्याप्यप्रवृत्तिरिति गोच्चारणं व्यर्थम्। तथाप्यधिकं सदर्थान्तरं सूचयति। ते नालजाटचा(५।२।१२५)वित्यत्र कुत्सितग्रहणं चोदितं तस्य चक्रूप्यं भवति ॥

आलजाटचौ बहुभाषिणि ॥ १२५ ॥

वाच इत्येव । वाचालः । वाचाटः । बहुभाषिणि किम् । यो हि मितम् सम्यक् भाषते वाग्मी सः ॥

कुत्सित इति वाच्यम् ॥

यो हि सम्यक् बहु भाषते वाग्मी सः । गकारोच्चारणस्यैवं प्रयोजनमित्युक्तम् ॥

स्वामिन्नैश्वर्ये ॥ १२६ ॥

निपातोऽयम् । ऐश्वर्ये वर्तमानात् स्वात् मत्वर्थे आमिनिच् । स्वमैश्वर्यमस्यास्तीति स्वामी । वृत्तिविषये स्वशब्द ऐश्वर्यवृत्तिरिति धनवान्निर्धनो वा ईशिता स्वामिशब्दवाच्यः । ऐश्वर्ये किम् । स्ववान् ॥

अर्शआदिभ्योऽच् ॥ १२७ ॥

अर्शांस्यस्य सन्ति अर्शसः । रसः इत्यादि । आकृतिगणोयम् । यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत्सर्वमिह द्रष्टव्यम् ॥

द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः ॥ १२८ ॥

उपतापो रोगः । गर्ह्यं निन्द्यम् । द्वन्द्वादिविषयात् प्राणिस्थवाचिन इनिः स्यान्मत्वर्थे । द्वन्द्वात् । कटकवलयिनी । शङ्खनूपुरिणी ॥ उपतापात् । कुष्ठी ॥ गर्ह्यात् । काकतालुकी । प्राणिस्थात्किम् । पुष्पफलवान् ॥

प्राण्यङ्गान्न ॥

पाणिपादवती । अत इत्यनुवर्तते । तेनेह न । चित्रकललाटिकावती । सिद्धे प्रत्यये ठन्मतुपोर्बाधनार्थं वचनम् ॥

वातातीसाराभ्यां कुक् च ॥ १२९ ॥

एतयोरुपतापत्वात् पूर्वेणैव सिद्धे कुगर्थं वचनम् । वात-

की । अतिसारकी ॥

पिशाचाच्च ॥

पिशाचकी वैश्रवणः ॥

वयसि पूरणात् ॥ १३० ॥

पूरणप्रत्ययान्तान्मत्वर्थे इनिः स्यात् वयसि द्योत्ये [ए]व । पञ्चमो मासो संवत्सरो वाऽस्य पञ्चमी उष्ट्रः । अत्रापि नियमात् ठन्मतुपौ न ॥

सुखादिभ्यश्च ॥ १३१ ॥

इनिरित्येव । सुखी । दुःखी इत्यादि । इदमपि नियमार्थम् ॥

धर्मशीलवर्णान्ताच्च ॥ १३२ ॥

धर्माद्यन्तादिनिः । ब्राह्मणधर्मोऽस्यास्तीति ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी ॥

हस्ताज्जातौ ॥ १३३ ॥

इनिर्नियम्यते । हस्ती । जातौ किम् । हस्तवान् पुरुषः ॥

वर्णाद्ब्रह्मचारिणि ॥ १३४ ॥

इनिर्नियम्यते । अध्ययनार्थो नियमो ब्रह्म । तेन ब्रह्मचारी त्रैवर्णिक इह गृह्यते । वर्णी ब्रह्मचारी । ब्रह्मचारिणि किम् । वर्णवान् ॥

पुष्करादिभ्यो देशे ॥ १३५ ॥

इनिर्नियम्यते । पुष्करिणी । पद्मिनी । देशे किम् । पुष्करवान् हस्ती ॥

बलाद्बाहूरुपूर्वाच्च ॥

बाहुबली । ऊरुबली ॥

सर्वादेश्च ॥

सर्वधनी । सर्वकेशी नटः ॥

अर्थाच्चासन्निहिते ॥

अर्थोऽसन्निहितोऽस्य अर्थी । असन्निहिते किम् । अर्थवान् ॥

तदन्ताच्च ॥

धान्यार्थी । हिरण्यार्थी । अत्रायं संग्रहः । अर्थशब्दः क्रियावाचको धनवाचकश्च तत्र क्रियापदार्थकादत इनिठना-(५।२।११५)विनेत्र अर्थी धान्यार्थी अर्थिकः प्रत्यर्थिकः अनभिधानान्मतुबत्र न धनवाचिनस्तु मतुबेव अर्थवान् इनिठनावनभिधानान्न स्त इति अर्थात्तदन्ताच्चेति न वक्तव्यमिति स्थितमाकरे ॥

बलादिभ्यो मतुबन्यतरस्याम् ॥ १३६ ॥

पक्षे इनिरेव । सतन्(?)। बली । बलवान् । उत्साही । उत्साहवानित्यादि ॥

संज्ञायां मन्माभ्याम् ॥ १३७ ॥

मन्नन्तान्मशब्दाच्चेनिः स्यात्संज्ञायाम् । प्रथिमिनी । दामिनी । मान्ताद् । होमिनी । सोमिनी । संज्ञायां किम् । सोमवान् ॥

कंशंभ्यां बभयुस्तितुतयसः ॥ १३८ ॥

कंशमौ यथा सङ्ख्यमुदकसुखवाचकौ । ताभ्यां मत्वर्थे बभादयः सप्त स्युः । कंवः । शंवः । कम्भः । शंभः । कंयुः । शंयुः । कन्तिः । शन्तिः । कन्तुः । शन्तुः । कन्तः । शन्तः । कंयः । शंयः । सः सिति चे(१।४।१६)ति पदत्वार्थः। तेनानुस्वारपरसवर्णौ सिद्धौ ॥

तुन्दिवलिवटेर्भः ॥ १३९ ॥

तुन्दिर्वृद्धौ(तुन्दिर्वृद्धा) नाभिः । साऽस्यास्तीति तुन्दिभः ।

वल्मिः । पामादिपाठाद्वलिन इत्यपि । वटिभः ॥

अहंशुभमोर्युस् ॥ २४० ॥

एते अव्यये यथासङ्ख्यमन्तःकरणे शुभे च वर्त(र्त्)ते । अहंयुः । अहङ्कारवानित्यर्थः । शुभंयुः । कल्याणवानित्यर्थः । सकारः पदत्वार्थः ॥

इति अन्नंभट्टकृतौ व्याकरमिताक्षरायां पञ्चमस्याध्यायस्य द्वितीयः पादः ॥



प्राग्दिशो विभक्तिः ॥ १ ॥

अतः परं स्वार्थिकाः प्रत्ययाः । दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्ताति(५।३।२७)रित्यतः प्राग्ये प्रत्ययास्ते विभक्तिसंज्ञाः स्युः । विभक्तित्वे प्रयोजनं त्यदाद्यत्वादि । इत इत्यत्र ऊडिद(६।१।१७१)मित्यादिना विभक्त्याद्युदात्तत्वं च । लिती(६।१।१९३)त्यत्रोडिदमित्यनुवर्तनात् लित्स्वरस्यायं विभक्तिस्वरो बाधक इति कैयटः । एतर्हीत्यत्र लित्करणसामर्थ्याल्लित्स्वर एव इत इत्यत्र तत इत्यादौ सावकाशं लित्स्वरं विभक्तिस्वरो बाधत इति कैयटहृदयम् । तृतीयादिरित्यादिशब्देनापञ्चमाध्यायान्तं प्रत्यया गृह्यन्ते(?) ॥

किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥ २ ॥

द्व्यादिवर्जितेभ्यः किमादिभ्य एव प्राग्दिशीयाः स्युः । कुतः । कुत्र । ततः । तत्र । बहुतः । बहुत्र ॥

बहोः सङ्ख्याया एव ॥

नेह । बहौ सूपे । बहोः सूपात् । अद्व्यादिभ्यः किम् । द्वाभ्याम् । द्वयोः । द्व्यादिपर्युदासो मा भूदिति किमो ग्रहणम् । सर्वनामत्वात् द्व्यादौ प्राप्नोति । एभ्यः किम् । वृक्षात् । प्राग्दिश इत्येव । वैयाकरणपाशः ॥

इदम इश् ॥ ३ ॥

इदम इशादेशः स्यात्प्राग्दिशीयेषु । शित्त्वात्सर्वादेशः । इतः । इह ॥

एतेतौ रथोः ॥ ४ ॥

रादौ थादौ च प्राग्दिशीये परत इदमो यथासंख्यमेत

इव एतौ स्तः । एतर्हि । इदमो र्हिल्(५।३।१६)। इत्थम्। इदमस्थमुः(५।३।२४)॥

## एतदोऽश् ॥ ५ ॥

प्राग्दिशीयेष्वेत(तद:) अशादेशः स्यात्। अतः। अत्र। एतद इति भिन्नो योगः। एतदः रथोः परत एत इत् एतौ स्तः। एतर्हि। इत्थं। अनद्यतने र्हि(५।३।२१)लिति रेफादिः सिद्ध एव। थमुरपि सिद्धः। अत्रेदम इत्यनुवर्तते। तेन थकारादिर्विशेष्यते। इदमो यस्थकारादिरिति। स च थमुरेव। तस्मिन्परत आदेशो विधीयत इति सोनुमीयते। थमुना च थाल् बाध्यते॥

## सर्वस्य सोऽन्यतरस्यां दि ॥ ६ ॥

सर्वस्य सो वा स्याद्दादौ प्रत्यये परे। सर्वैकान्यकियत्तदः काले दा(५।३।१५)। सर्वदा। सदा॥

## पञ्चम्यास्तसिल् ॥ ७ ॥

पञ्चम्यन्तेभ्यः किमादिभ्यः द्व्यादिवर्जितेभ्यः स्वार्थे तसिल् वा स्यात्। कुतः। कस्मात्। यतः। ततः। बहुतः॥

## तसेश्च ॥ ८ ॥

प्रतियोगे पंचम्यास्तसिः(५।४।४४) अपादाने चाहीयरुहोः(५।४।४५)रिति विहितस्य किमादिभ्यः परस्य तसेस्तसिलादेशः स्यात्। कुत आगतः। तत आगतः। तसेस्तसिलवचनं स्वरार्थम्॥

## पर्यभिभ्यां च ॥ ९ ॥

तसिल्। परितः सर्वत इत्यर्थः। अभित उभयत इत्यर्थः। अर्थान्तरे अनभिधानान्न॥

सप्तम्यास्त्रल् ॥ १० ॥

सप्तम्यन्तेभ्यः किमादिभ्यो द्व्यादिवर्जितेभ्यस्त्रल् स्यात् । कुत्र । यत्र । बहुत्र ॥

इदमो हः ॥ ११ ॥

सप्तम्या इत्येव । त्रलो बाधः । इह ॥

किमोत् ॥ १२ ॥

सप्तम्या इत्येव । त्रलो बाधः । क्व । क्वाती(७।२।१०५)ति क्वादेशः । उत्तरसूत्रस्थवाकारस्यापकर्षात् कुत्रेत्यपि ॥

वा ह च च्छन्दसि ॥ १३ ॥

सप्तम्यन्तात्किमो वा हः स्याच्छंदसि । यथाप्राप्तं च । कुह । कु तिहोः(७।२।१०४)। क्व। कुत्र। छंदसि किम्। क्व। कुत्र॥

इतराभ्योऽपि दृश्यन्ते ॥ १४ ॥

सप्तमीपञ्चमीव्यतिरिक्तविभक्त्यन्तेभ्योपि किमादिभ्यस्तसिलादयो दृश्यंते । दृशिग्रहणात् भवद्दीर्घायुर्देवानांप्रियायुष्मद्योग एव । सभवान् । ततोभवान् । तत्रभवान् ॥ तंभवन्तम् । ततोभवन्तम् । तत्रभवन्तम् ॥ तेनभवता। ततोभवता। तत्रभवता॥ तस्मैभवते । ततोभवते । तत्रभवते॥ तस्माद्भवतः। ततोभवते(तः)। तत्रभवतः ॥ तस्यभवतः । ततोभवतः । तत्रभवतः ॥ तस्मिन्भवति । ततोभवति । तत्रभवति । एवं दीर्घायुःप्रभृतिपूदाहार्यम् ॥

सर्वैकान्यकिंयत्तदः काले दा ॥ १५ ॥

सप्तम्यन्तेभ्य एभ्यः काले दा स्यात् । त्रलो बाधः । सर्वस्मिन् काले सर्वदा । एकदा । अन्यदा । कदा । यदा ।

तदा । काले किम् । सर्वत्र देशे ॥

इदमो र्हिल् ॥ १६ ॥

सप्तम्या इत्येव । काल इति च । अस्मिन् काले एतर्हि ॥

अधुना ॥ १७ ॥

सप्तम्यन्तादिदमः अधुना स्यात्काले । अस्मिन्काले अधुना । इदम इशादेशे यस्येति लोपः । यद्वा इदमोऽश्भावो धुना च प्रत्ययो निपात्यते ॥

दानीं च ॥ १८ ॥

इदम इत्येव । अस्मिन्काले इदानीं ॥

तदो दा च ॥ १९ ॥

सप्तम्या इत्येव काल इति च । चाद्दानीम् । तदा । तदानीम् । सर्वैकान्ये(५।३।१५)त्येव सिद्धेः पुनर्दाविधिरनर्थकः । अदा प्रत्यय इति तु भगवद्वार्तिककृदुभयमतविरुद्धत्वाचिन्त्यम् ॥

तयोर्दार्हिलौ चच्छन्दसि ॥ २० ॥

इदन्तदोर्यथासङ्ख्यमेतौ स्तः छन्दसि काले । चाद्यथाप्राप्तम् । इदा । एतर्हि । अधुना । इदानीम् । तर्हि । तदा । तदानीम् ॥

अनद्यतने र्हिलन्यतरस्याम् ॥ २१ ॥

द्यादिवर्जितेभ्यः किमादिभ्यः सप्तम्यन्तेभ्योऽनद्यतने काले र्हिल् वा स्यात् । कस्मिन्ननद्यतने काले कर्हि । कदा । यर्हि । यदा । तर्हि । तदेत्यादिप्रयोगाज्ज्ञेयम् ॥

सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरे-
द्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥ २२ ॥

एते कालविशेषे निपात्यन्ते । समानस्य सभावो द्यश्च प्रत्ययः अहि । समानेऽहि सद्यः । पूर्वपूर्वतरयोः परभावः उदारी च संवत्सरे । पूर्वस्मिन् संवत्सरे परुत् । पूर्वतरे संवत्सरे परारि । परपरतरयोरपीति केचित् । परस्मिन् वर्षे परुत् । परतरे वर्षे परारि । इदमः समसुण् । अस्मिन् संवत्सरे ऐषमः । परस्मादेद्यव्यहनि । परस्मिन्नहनि परेद्यवि । इदमोऽश्भावः द्य च । अस्मिन्नहनि अद्य । पूर्वादिभ्य एद्युसुच् अहन्यभिधेये । पूर्वस्मिन्नहनि पूर्वेद्युरित्यादि ॥

उभयात् द्युश्च ॥

उभयद्युः ॥

प्रकारवचने थाल् ॥ २३ ॥

सामान्यस्य भेदको विशेषः प्रकारः । किमादिभ्यो द्यादिवर्जितेभ्यः प्रकारे द्योत्ये थाल् स्यात् । तेन प्रकारेण तथा । यथा । सर्वथा । अत्रैवार्थे विधीयमानोपि जातीयर् स्वभावात्तद्वृत्ति वर्तते अयं तु प्रकारमात्र इति अनेन तस्य न बाधः । तज्जातीयम् । अत एव च सामानाधिकरण्येन प्रयोगः । तथाजातीयकमिति ॥

इदमस्थमुः ॥ २४ ॥

प्रकारवचनमि(न इ)त्येव । थालोपवादः । अनेन प्रकारेण इत्थम् । थमोरुकारो न विभक्तौ तुस्मा(१।३।४)इत्यस्यानित्वत्वज्ञापनार्थः । तेन किमोदि(५।३।१२)सूत्र तस्येत्संज्ञा सिद्धा ॥

किमश्च ॥ २५ ॥

केन प्रकारेण कथम् ॥

था हेतौ चच्छन्दसि ॥ २६ ॥

किमस्था स्याद्धेतौ चात् प्रकारवचने छन्दसि । केन हेतुना कथा । केन प्रकारेण कथा । इदम इत्यपि केचित् । इत्था । विभक्तिसंज्ञायाः पूर्णोऽवधिः ॥

दिक्छब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ॥ २७ ॥

दिशो वाचका दिक्शब्दा रूढा गृह्यन्ते । दिगादिषु वर्तमानेभ्यो दिक्शब्देभ्यः सप्तम्याद्यन्तेभ्यः स्वार्थे अस्तातिः स्यात् । पूर्वस्यां दिशि वसति पुरस्ताद्वसति । पूर्वस्या आगतः पुरस्तादागतः । पूर्वा रम्या पुरस्ताद्रम्यम् । एवमधरस्यां दिशि अधस्तादित्यादि । एवं देशे काले चोदाहार्यम् । अस्ताति चे-(५।३।४०)ति पूर्वाधरयोः पुर् अध्भावः । दिक्शब्देभ्यः किम् । ऐन्द्र्यां दिशि वसति । सप्तम्यादिभ्यः किम् । पूर्वं ग्रामं गतः । दिगादिषु किम् । पूर्वस्मिन्वृक्षे वसति । सप्तम्यादीनां दिगादीनां च यथासङ्ख्यं नेष्यते । अवध्यपेक्षार्थाभिधायिभ्य एव प्रत्ययः । नेह । पूर्वस्मिन् देशे वसतीति । अत्र पूर्वशब्दोऽवधिनिरपेक्ष एव देशे वर्तते ॥

दक्षिणोत्तराभ्यामतसुच् ॥ २८ ॥

दिगादिषु वर्तमानाभ्यां सप्तम्याद्यन्ताभ्यामाभ्यां स्वार्थे अतसुच् स्यात् । अस्तातेर्बाधः । दक्षिणस्यां दिशि देशे काले वा वसति दक्षिणस्याः दिशः देशात् कालाद्वा आगतः

दक्षिणा दिक् देशः कालो वा दक्षिणतः । एवमुत्तरतः । सर्वनाम्नो वृत्तिमात्रे पुंव(वार्तिकम्)दिति टाप्निवृत्तिः ॥

विभाषा परावराभ्याम् ॥ २९ ॥

आभ्यामस्तात्यर्थे अतसुज्वा स्यात् । परस्यां दिशि देशे काले वा परस्याः दिशः देशात्कालाद्वा परा दिक् देशः कालो वा परतः । परस्तात् । अवरतः । अवस्तात् । अवः । विभाषावरस्य(५ ३।४१) ॥

अञ्चेर्लुक् ॥ ३० ॥

अञ्चन्तादुत्पन्नस्यास्तातेर्लुक् । प्राच्यां प्राच्याः प्राची वा प्राक् । प्रत्यक् । लुक्तद्धिते(१।२।४९)ति स्त्रीप्रत्ययस्य लुक् ॥

उपर्युपरिष्टात् ॥ ३१ ॥

एतावस्तात्यर्थे निपात्येते । ऊर्ध्वस्योपभावो रिल्रिष्टातिलौ च प्रत्ययौ । ऊर्ध्वायां दिशि देशे काले वा उपरि उपरिष्टात् ॥

पश्चात् ॥ ३२ ॥

अस्तात्यर्थेऽयं निपातः । अपरस्य पश्चभाव आतिश्च । अपरस्यां दिशि देशे काले वा पश्चात् ॥

दिक्पूर्वपदस्य चापरस्य पश्चभाव आतिश्च ॥

दक्षिणपश्चात् । उत्तरपश्चात् ॥

दिक्पूर्वस्यापरस्यार्धे परतः पश्चभावः ॥

दक्षिणपश्चार्धः । उत्तरपश्चार्धः ॥

अर्धे च ॥

विनापि पूर्वपदम् । पश्चार्धः ॥

पश्चपश्चा च छन्दसि ॥ ३३ ॥

अस्तासर्थे निपातौ । अपरस्य पश्चः । अकाराकारौ प्रत्ययौ । चात् पश्चात् ॥

उत्तराधरदक्षिणादातिः ॥ ३४ ॥

उत्तरादिभ्योऽस्तात्यर्थे आतिः स्यात् । उत्तरस्यां दिशि उत्तरस्याः उत्तरा दा(वा)उत्तरात् । अधरात् । दक्षिणात् ॥

एनबन्यतरस्यामदूरेऽपञ्चम्याः ॥ ३५ ॥

उत्तराधरदक्षिणादस्तात्यर्थे एनब्वा स्यात् अदूरे चेदवधिमान् अवधेः न तु पञ्चम्यन्तात् । उत्तरेणाधरेण दक्षिणेन वा ग्रामं अदूरे वसति । एनपा द्वितीया(२।३।३१) । पक्षे उत्तरादुत्तरत इत्यादि । अदूरे किम् । उत्तराद्वसति । अपञ्चम्याः किम् । उत्तरादागतः । अपञ्चम्या इति प्रागमेरधिकारः । अमिः पञ्चम्या अपि । केचिदुत्तरादिग्रहणं नानुवर्तयन्ति दिक्शब्दमात्रादेनपं च मन्यन्ते । तत्राभिधानस्वाभाव्यात् प्रयोग उपपादनीयः । पूर्वेण ग्राममित्यादि ॥

दक्षिणादाच् ॥ ३६ ॥

अस्तात्यर्थे । अदूर इति नानुवर्तते । दक्षिणा वसति । अपञ्चम्या इत्येव । दक्षिणत आगतः ॥

आहि च दूरे ॥ ३७ ॥

दक्षिणाहि । चात् आच् । दक्षिणा । दूरे किम् । दक्षिणतः ॥

उत्तराच्च ॥ ३८ ॥

अस्तात्यर्थे आजाही । उत्तराहि । उत्तरा ॥

पूर्वाधरावराणामसि पुरधवश्चैषाम् ॥ ३९ ॥

पूर्वादीनामस्तात्यर्थे असिः स्यात्तेषां च यथासङ्ख्यं पुर् अध् अव् एते स्युः । पुरः वसति । अधः । अवः ॥

अस्ताति च ॥ ४० ॥

अस्तातौ परे पूर्वादीनां पुरादयः स्युः । पुरस्तात् । अधस्तात् । अवस्तात् ॥

विभाषाऽवरस्य ॥ ४१ ॥

अस्तातावरस्य अव् वा स्यात् । अवस्तात् । अवरस्तात् ॥

संख्याया विधार्थे धा ॥ ४२ ॥

विधा प्रकारः । विधा चासावर्थश्च तत्र वर्तमानात्सङ्ख्यावाचिनः स्वार्थे धा स्यात् । क्रियाविषयश्च प्रकार इह गृह्यते । एकधा द्विधा भुङ्क्ते ॥

अधिकरणविचाले च ॥ ४३ ॥

अधिकरणं द्रव्यम् । तस्य विचाले गम्ये सङ्ख्यायाः धा स्यात् । एकस्यानेकीकरणमनेकस्यैकीकरणं वा विचालः । तत्र प्रथमे पूर्वेणैव सिद्धम् । द्वितीयार्थोऽयमारम्भः । एकं राशिं पञ्चधा करोति । सप्तधा । अनेकमेकधा ॥

एकाद्धो ध्यमुञन्यतरस्याम् ॥ ४४ ॥

एकाद्धा इत्यस्य ध्यमुञादेशो वा स्यात् । ऐकध्यम् एकधा वा राशिं कुरु । ऐकध्यम् एकधा वा भुङ्क्ते ॥

द्वित्र्योश्च धमुञ् ॥ ४५ ॥

आभ्यां धा इत्यस्य धमुञ् वा स्यात् । द्विधा द्वैधं भुङ्क्ते ।

त्रिधा मेधम् । द्वैधं राशिं करोति द्विधा ॥

धमुञन्तात्स्वार्थे डदर्शनम् ॥

पथि द्वैधानि संशये द्वैधानि ( संश्रयन्ते त्रैधानि ) । स्वार्थिकत्वेपि स्वभावात्सर्वत्राचित्वाल्लिङ्गसङ्ख्यायोगः ॥

एधाच्च ॥ ४६ ॥

द्वित्र्योर्धा इत्यस्यैधाज्वा स्यात् । द्वेधा । द्वैधम् । द्विधा । त्रेधा । त्रैधम् । त्रिधा ॥

याप्ये पाशप् ॥ ४७ ॥

याप्यः कुत्सितः । याप्ये वर्तमानात्प्रातिपदिकात् स्वार्थे पाशप् स्यात् । वैयाकरणपाशः । तार्किकपाशः । व्याकरणे अप्रवीण इत्यर्थः । पदप्रवृत्तिनिमित्तकुत्सायामेव । यस्तु वैयाकरणः शास्त्रे प्रवीणो दुःशीलस्तत्र न ॥

पूरणाद्भागे तीयादन् ॥ ४८ ॥

पूरणे यस्तीयस्तदन्तात् भागे वर्तमानात् स्वार्थे अन् स्यात् । स्वरे भेदः । द्वितीयो भागः । तृतीयः । भागे किम् । द्वितीयं भोजनम् । प्रत्ययस्वर एव ॥

प्रागेकादशभ्योऽच्छन्दसि ॥ ४९ ॥

प्रागेकादशभ्यः संख्यावाचिभ्यः पूरणप्रत्ययान्तेभ्यो भागे वर्तमानेभ्यः स्वार्थे अन् स्यात् । पञ्चमः । दशमः । स्वरे भेदः । अच्छन्दसि किम् । पञ्चममिन्द्रियस्यापाक्रामत् । प्रत्ययस्वर एव ॥

षष्ठाष्टमाभ्यां ञ च ॥ ५० ॥

भाग इत्येतच्छन्दसीति च । चादन् । षष्ठो भागः षाष्ठः । आष्टमः ॥

मानपश्वङ्गयोः कन्लुकौ च ॥ ५१ ॥

मीयते येन तन्मानम् । भाग इत्येव । मानपश्वङ्गवर्तिभ्यां षष्ठाष्टमाभ्यां यथासङ्ख्यमेतौ स्तः । चात् ञानौ । षष्ठकं षाष्ठं षष्ठेष्ठं नु(षष्ठं वा)मानम् । अष्टमं पश्वङ्गम् । अविशेषात् ञानोरन्यतरस्य लुक् । लुक्यन्तोदात्तत्वम् । चात्तावपि । आष्टमम् अष्टमम् पश्वङ्गम् । आद्युदात्तत्वमलुकि ॥

एकादाकिनिच्चासहाये ॥ ५२ ॥

असहायवाचिन एकात् स्वार्थे आकिनिच् स्यात् । चात् कन्लुकौ च । एकाकी । एककः । एकः । असहाय इत्यर्थः । असहाये किम् । संख्यावाचिनो मा भूत् । एकः ॥

भूतपूर्वे चरट् ॥ ५३ ॥

पूर्वं भूतः भूतपूर्वः । सुप्सुपे(२।१।४यो०वि०)ति समासः । भूतपूर्वशब्दोऽतीतकालवचनः । भूतपूर्वे वर्तमानात् प्रातिपदिकात् स्वार्थे चरट् स्यात् । आढ्यो भूतपूर्वः आढ्यचरः । दर्शनीयचरः ॥

षष्ठ्या रूप्य च ॥ ५४ ॥

षष्ठ्यन्तात् भूतपूर्वे रूप्यः स्याच्चाच्चरट् । भूतपूर्व इति प्रत्ययार्थविशेषणमस्मिन् सूत्रे । देवदत्तस्य भूतपूर्वा गौः देवदत्तरूप्यः । देवदत्तचरः । देवदत्तचरी ।

अतिशायने तमबिष्ठनौ ॥ ५५ ॥

अतिशयनमतिशायनम् । निपातनादीर्घः । तच्च गुणक्रियागतमेव गृह्यते । अतिशायने वर्तमानात् स्वार्थे एतौ स्तः । सर्वे इमे आढ्या अयमेषामतिशयेनाढ्यः आढ्यतमः । दर्शनीयतमः । पटिष्ठः । लघिष्ठः ॥

प्रकर्षप्रत्ययान्ताच्छन्दसि स्वार्थे दर्शनम् ॥

श्रेष्ठतमाय कर्मणे । श्रेष्ठायेत्यर्थः ॥ प्रकर्षवतां प्रकर्षविवक्षायामतिशायिकान्तदपरः प्रत्ययः तेन श्रेष्ठतमो युधिष्ठिर इत्यादि प्रयोग उपपन्न इति काशिकायाम् । तत्तु भगवदनभिमतम् । इह त्रीणि शुक्लानीत्यादिना वाचकश्चेत् प्रयुज्यतामित्यन्तेन महता प्रबन्धेन निरस्तत्वात् ॥

## तिङश्च ॥ ५६ ॥

अतिशायने तमप् । प्रातिपदिकाधिकाराद्वचनम् । पचतितमाम् । पठतितमाम् । अजादी गुणवचनादेवे(५।३।५८)ति नियमादिष्ठन्न ॥

## द्विवचनविभज्योपपदे तरबीयसुनौ ॥ ५७ ॥

विभक्तव्यो विभज्यः । निपातनाद्यत् । अर्थवाचिनि विभज्ये चोपपदे सुप्तिङन्तादतिशायने एतौ स्तः । तमबिष्ठनोर्बाधः । द्वयोर्मध्ये अयमाढ्यतरः । पचतितराम् । अनयोरयं पटीयान् । विभज्ये माथुराः पाटलिपुत्रकेभ्यः आढ्यतराः । पटीयांसः ॥

## अजादी गुणवचनादेव ॥ ५८ ॥

इष्ठेयसुनौ गुणवचनादेव स्तः । पटिष्ठः । पटीयान् । नेह । पाचकतरः ॥

## तुश्छन्दसि ॥ ५९ ॥

तृप्रत्ययान्यग्रहणं तुरिति । तन्तादजादी स्तश्छन्दस्यगुणवचनादपि । आसुतिंकरिष्ठः । दोहीयसी धेनुः । तुरिष्ठेमेयःस्वि(६।४।१५४)ति तृलोपः ॥

प्रशस्यस्य श्रः ॥ ६० ॥

प्रशस्यशब्दस्य श्रादेशः स्यादिष्ठेयसुनोः परतः। आदेशविधानमेव ज्ञापकमगुणवचनेभ्योपि प्रशस्यादिभ्यः अजादी इति। एषामयमतिशयेन प्रशस्यः श्रेष्ठः। अनयोरयमतिशयेन प्रशस्यः श्रेयान्। प्रकृत्यैकाजि(६।४।१६३)ति अकारस्य लोपाभावः ॥

ज्य च ॥ ६१ ॥

प्रशस्यस्य ज्यः स्यादजाद्योः परतः। एषामतिशयेन प्रशस्यः ज्येष्ठः। अनयोरतिशयेन प्रशस्यः ज्यायन्। ज्यादादीयसः(६।४।१६०) ॥

वृद्धस्य च ॥ ६२ ॥

अजाद्योः ज्यादेशः। एषामतिशयेन वृद्धः ज्येष्ठः। अनयोरतिशयेन वृद्धः ज्यायान्। प्रियस्थिरे(६।४।१५७)त्यादिना पक्षे वर्षादेशश्च। अतिशयेन वृद्धः वर्षिष्ठः। वर्षीयान् ॥

अन्तिकबाढयोर्नेदसाधौ ॥ ६३ ॥

एतयोर्यथासङ्ख्यमेतौ स्तः अजाद्योः। एषामतिशयेनान्तिकमिदं नेदिष्ठम्। अनयोर्नेदीयः। एषां बाढमयमधीते साधिष्ठोऽधीते। अनयोः साधीयान् ॥

युवाल्पयोः कनन्यतरस्याम् ॥ ६४ ॥

एतयोः कनादेशो वा स्यात् अजाद्योः। कनिष्ठः। कनीयान्। यविष्ठः। यवीयान्। स्थूलदूरे(६।४।१५६)त्यादिना यणादिलोपो गुणश्च। अल्पिष्ठः। अल्पीयानिति वा ॥

विन्मतोर्लुक् ॥ ६५ ॥

विनो मतुपश्च लुक् स्यात् अजाद्योः। अतिशयेन तेजस्वी

तेजिष्ठः । तेजीयान् । अतिशयेन बलवान् बलिष्ठः । बलीयान् ॥

प्रशंसायां रूपप् ॥ ६६ ॥

प्रशंसायां वर्तमानात्प्रातिपदिकात्स्वार्थे रूपप् स्यात् । प्रशस्तो वैयाकरणः वैयाकरणरूपः । प्रकृत्यर्थस्यातिशयविशेषः प्रशंसा । तेन वृषलरूपोयं यः पलाण्डु भक्षयतीत्यादिसिद्धिः । तिङोनुवृत्तेः पचतिरूपं पचतोरूपम् पचन्तिरूपम् । क्रियाप्रधानमाख्यातमिति तस्या एकत्वाद्रूपबन्तात् द्विवचनाद्यभावः । क्लीबत्वं लोकात् ॥

ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ॥ ६७ ॥

सुप्तिङन्तादीषन्न्यूनतायामेते स्युः । ईषदूनो विद्वान् विद्वत्कल्पः । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पम् ॥

विभाषा सुपो बहुच्पुरस्तात्तु ॥ ६८ ॥

तुशब्दः स्वार्थिकानां प्रकृतिलिङ्गवचनानियमज्ञापनार्थः । तेन गुडकल्पा द्राक्षेत्यादिसिद्धिः । सुबन्तादीषदसमाप्तौ बहुज्वा स्यात्स च प्रागेव न परतः । बहुपटुः । पटुकल्पः । सुपः किम् । पचतिकल्पम् ॥

प्रकारवचने जातीयर् ॥ ६९ ॥

सामान्यस्य भेदको विशेषः प्रकारः । तद्वृत्तेः स्वार्थे जातीयर् स्यात् । पटुप्रकारः पटुजातीयः । प्रकारवति चायं न तु प्रकारमात्रे ॥

प्रागिवात्कः ॥ ७० ॥

इवे प्रतिकृताविस्यतः प्राक्काधिकारः । अज्ञाते । अश्वकः । तिङः को नेष्यते ॥ अकजिष्यते ॥

अव्ययसर्वनाम्नामकच्प्राक्टेः ॥ ७१ ॥

अव्ययानां सर्वनाम्नां च टेः प्रागकच् स्यात्प्रागिवार्थे। कापवादः। उच्चकैः। सर्वके। प्रातिपदिकात्सुप इति चेहानुवृत्तेः केवलस्य तदन्तस्य वा टेः प्रागकच्। प्रयोगतो व्यवस्था। युष्मकाभिः। अस्मकाभिः। युवकयोः। आवकयोः। युष्मकासु। अस्मकासु। अत्र प्रातिपदिकस्य। त्वयका। मयका। त्वयकि। मयकि। अत्र सुबन्तस्य। तिङोऽनुवृत्तेः पचतकि ॥

तूष्णीमः काम् वाच्यः ॥

स च मित्त्वादन्त्याच्परः। तूष्णीकां तिष्ठति ॥

शीले को मलोपश्च ॥

तूष्णीं शीलः तूष्णीकः ॥

कस्य च दः ॥ ७२ ॥

कान्ताव्ययानां दकारोन्तादेशः स्यादकच्(चसं)बन्धे। धकित्। हिरुकुत्। पृथकत् ॥

अज्ञाते ॥ ७३ ॥

सामान्यतो ज्ञाते विशेषतोऽज्ञाते कादयः स्युः। कस्यायमश्वः। अश्वकः। विश्वकः ॥

कुत्सिते ॥ ७४ ॥

कुत्सितेऽर्थे वर्तमानात्कादयः स्युः। कुत्सितोश्वः अश्वकः। विश्वकः ॥

सञ्ज्ञायां कन् ॥ ७५ ॥

कुत्सितेर्थे संज्ञायां कन् स्यात्। कापवादः। स्वरे विशेषः।

शूद्रकः। क(चू)र्णकः॥

अनुकम्पायाम् ॥ ७६ ॥

अनुकम्पा करुणा। तद्विषये कादयः स्युः। अनुकम्पितः पुत्रः। पुत्रकः। जल्पतकि॥

नीतौ च तद्युक्तात् ॥ ७५ ॥

अनुकम्पायुक्तायथाविहितं प्रत्ययः स्यात्सामदानादिनीतौ गम्यायाम। गुडकः। तिलकः। गुडदानेनानुकम्प्यमानमाराधयतीत्यर्थः। पूर्वत्र अनुकम्प्यमानात्प्रत्ययः। इह त्वनुकम्प्यमानस्य सम्बन्धिगुडादिभ्य इति विवेकः॥

बह्वचो मनुष्यनाम्नष्ठज्वा ॥ ७८ ॥

अनुकम्पायाम। पक्षे कः। देविकः। देवदत्तकः। यज्ञिकः। यज्ञदत्तकः। बह्वचः किम। दत्तकः। मनुष्यनाम्नः किम्। भद्रबाहुकः। भद्रौ बाहू यस्येति विशेषणमेतन्न मनुष्यसंज्ञा॥

घनिलचौ च ॥ ७९ ॥

बह्वचो मनुष्यनाम्न एतौ स्तोऽनुकम्पायाम। चात् ठकौ। देवियः। देविलः। देविकः। देवदत्तकः॥

प्राचामुपादेरडज्वुचौ च ॥ ८० ॥

उपपूर्वाद् बह्वचो मनुष्यनाम्नः एतौ स्तोऽनुकम्पायाम। चात् घनिलच्ठचकाः। उपडः। उपकः। उपियः। उपिलः। उपिकः। उपेन्द्रदत्तकः॥

जातिनाम्नः कन् ॥ ८१ ॥

बह्वच इति निवृत्तम्। जातिशब्दान्मनुष्यनाम्नः कन् स्यादनुकम्पायाम्। सिंहो नाम कश्चित्। सिंहकः। व्याघ्रकः। वे-

त्यनुवृत्तेर्व्याघ्रियः व्याघ्रिलः इत्यपि। नामग्रहणं स्वरूपनिवृत्त्यर्थम् ॥

अजिनान्तस्योत्तरपदलोपश्च ॥ ८२ ॥

अजिनशब्दान्तान्मनुष्यनाम्नः कन् स्यादनुकम्पायामुत्तरपदलोपश्च। व्याघ्राजिनो नाम कश्चित्। सोनुकम्पितो व्याघ्रकः। सिंहकः ॥

ठाजादावूर्ध्वं द्वितीयादचः ॥ ८३ ॥

अस्मिन्प्रकरणे यष्ठः अजादिश्च प्रत्ययः तयोः परतो द्वितीयादच उत्तरस्य लोपः स्यात्। ऊर्ध्वग्रहणं सर्वलोपार्थम्। देविकः देविलः इत्याद्युदाहृतं प्राक्। ठग्रहणमुको द्वितीयत्वे कविधानार्थम्। वायुदत्तको वायुकः। पितृकः। पूर्वमिके सति को न स्यात् सन्निपातपरिभाषातः॥

चतुर्थादचो लोपो वाच्यः॥

बृहस्पतिदत्तः बृहस्पतिकः। बृहस्पतियः। बृहस्पतिलः ॥

अनजादौ वा ॥

देवदत्तकः। देवकः ॥

लोपः पूर्वपदस्याजादावनजादौ च ॥

दत्तिकः। दत्तियः। दत्तिलः। दत्तकः॥

विनापि प्रत्ययेन पूर्वोत्तरपदयोर्वा लोपः॥

देवदत्तः देवः दत्त इति वा ॥

उवर्णादिलस्य लादेशश्च॥

भानुदत्तो भानुलः ॥

द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपः॥

अहोदत्तः। अहिकः ॥

एकाक्षरपूर्वपदानामुत्तरपदलोपश्च ॥

वागाशीर्दत्तः। वाचिकः। कथं षडङ्गुलिदत्तः षडिकः

इति । ठाजादिवचनात्सिद्धम् । द्वितीयादच एव तत्र लोपो वाच्य इत्यर्थः ॥

शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ॥८४॥

एतत्पूर्वपदानां मनुष्यनाम्नां ठाजादावूर्ध्वं तृतीयादचो लोपः स्यात् । अनुकम्पितः शेवलेन्द्रदत्तः शेवलिकः । शेवलियः । शेवलिलः । सुपरिकः । सुपरियः । सुपरिलः । विशालिकः । विशालियः । विशालिलः । वरुणिकः । वरुणियः । वरुणिलः । अर्यमिकः । अर्यमियः । अर्यमिलः ॥

शेवलादीनामकृतसन्धीनामिति वाच्यम् ॥

शेवलेन्द्रदत्तः शेवलिकः सुपर्याशीर्दत्तः सुपरिकः इति यथा स्यात् ॥

अल्पे ॥ ८५ ॥

अल्पत्वे वर्तमानाद्यथाविहितं प्रत्ययः स्यात् । अल्पं तैलं तैलकम् । घृतकम् । सर्वकः । उच्चकैः । पचतकि ॥

ह्रस्वे ॥ ८६ ॥

ह्रस्वत्वे वर्तमानाद्यथाविहितं प्रत्ययः स्यात् । ह्रस्वो वृक्षो वृक्षकः ॥

संज्ञायां कन् ॥ ८७ ॥

ह्रस्वत्वहेतुकायां संज्ञायां कन् स्यात् । वंशकः । नटकः ॥

कुटीशमीशुण्डाभ्यो रः ॥ ८८ ॥

ह्रस्वे । ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः । पुंस्त्वं लोकात् ॥

कुत्वा डुपच् ॥ ८९ ॥

ह्रस्वा कुतूः कुतुपः । डित्वाट्टिलोपः । चर्ममयं स्नेहभाजनं कुतूरित्याचपनाख्या ॥

कासूगोणीभ्यां ष्टरच् ॥ ९० ॥

कापवादः । ह्रस्वा कासूः कासूतरी । कासूः शक्तिः शायुधविशेषः । गोणीतरी ॥

वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ॥ ९१ ॥

एभ्यः शब्दप्रवृत्तिनिमित्ततनुत्वे ष्टरच् स्यात् । वत्सतरः । वत्सतरी । उक्षतरः । अश्वतरः । ऋषभतरः । प्रथमवया वत्सस्तस्य तनुत्वं द्वितीयवयःप्राप्तिः । तरुणः उक्षा तस्य तनुत्वं तृतीयवयःप्राप्तिः । गर्दभेनाश्वायामुत्पन्नोऽश्वतरस्तस्य तनुत्वमन्यपितृकता । अनड्वान् वृषभः तस्य तनुत्वं भारवहनासामर्थ्यम् ॥

किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ॥ ९२ ॥

द्वयोरेकस्य निर्धारणे पृथक्करणे किंयत्तद्भ्यो डतरच् स्यात् । अनयोः कतरो वैष्णवः यतरस्ततर आगच्छतु । महाविभाषया वाक्यमपि । अनयोः कः पटुर्यः स आगच्छतु ॥

वा बहूनां जातिपरिप्रश्ने डतमच् ॥ ९३ ॥

बहूनामेकस्य निर्धारणे जातिप्रश्नार्थेभ्यः किंयत्तद्भ्यो डतमज्वा स्यात् । पक्षे अकच् । परिप्रश्नः किमो विशेषणम् । कतमः कको वा भवतां विप्रः । यतमः यकस्ततमः सक आगच्छतु । महाविभाषया को भवतां विप्रः यः सः । किमोऽस्मिन् विषये डतरजपि । कतरो भवतां विप्रः । कतरकतमौ जा-

तिपरिमश्न(२।१।६३)इति निपानादेतत्सिद्धमाहुः ॥

एकाच्च प्राचाम् ॥ ९४ ॥

जातिपरिमश्न इति नानुवर्तते । एकशब्दाडुतरडतमौ वा स्तः पूर्वविषये । पक्षे अकच् । अनयोरेकतरः । एषामेकतमः । एककः ॥

अप(व)क्षेपणे कन् ॥ ९५ ॥

अप(व)क्षिप्यते कुत्स्यते येन तदप(व)क्षेपणम् । तस्मात् कन् स्यात् । व्याकरणकेन त्वं गर्वितः । प्रागिवादित्येतत् समाप्तम् ॥

इवे प्रतिकृतौ ॥ ९६ ॥

इवार्थे वर्तमानात्कन् स्यात् प्रतिकृतौ । अश्व इवायमश्वप्रतिकृतिः अश्वकः । उष्ट्रकः । प्रतिकृतौ किम् । गौरिव गवयः ॥

संज्ञायां च ॥ ९७ ॥

अप्रतिकृत्यर्थमिदम् । इवार्थे वर्तमानात्कन् स्यात् संज्ञायाम् । अश्वसदृशस्य संज्ञा अश्वकः ॥

लुम्मनुष्ये ॥ ९८ ॥

संज्ञायां विहितस्य कनो मनुष्ये लुप् स्यात् । चञ्चेवायं मनुष्यश्चञ्चा । चञ्चा तृणपुरुषः । वध्रिका खरकुटी । मनुष्ये किम् । अश्वकः । देवपथादेराकृतिगणस्यायं प्रपञ्चः ॥

जीविकार्थे चापण्ये ॥ ९९ ॥

जीविकार्थं यदापण्यं तस्मिन्नभिधेये कनो लुप् स्यात् । शिवः । विष्णुः । देवलकानां जीविकार्था देवप्रतिकृतिरेवमुच्यते । आपण्ये किम् । अश्वकान् विक्रीणीते ॥

देवपथादिभ्यश्च ॥ १०० ॥

कनो लुप् । देवपथ इत्यादि ॥

अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च ।
इवे प्रतिकृतौ लोपः कनो देवपथादिषु ॥

अर्चासु शिवः । चित्रकर्मसु मध्यो(दुर्यो)धनः । ध्वजेषु कपिः । देवपथादि[रा]कृतिगणः ॥

वस्तेर्ढञ् ॥ १०१ ॥

प्रतिकृताविति निवृत्तम् । वस्तेरिवार्थे ढञ् स्यात् । वस्तिरिव वास्तेयः । वास्तेया ॥

शिलाया ढः ॥ १०२ ॥

शिलेव शिलेयम् । शिलाया इति योगविभागाड्ढञपि । शैलेयम् ॥

शाखादिभ्यो यः ॥ १०३ ॥

इवार्थे । शाखेव शाख्यः । मुख्यः । जघन्यः ॥

द्रव्यं च भव्ये ॥ १०४ ॥

द्रव्यं निपात्यते भव्ये । द्रुशब्दादिवार्थे यप्रत्ययः । द्रव्योयं राजपुत्रः । अभिप्रेतार्थानां पात्रभूत इत्यर्थः ॥

कुशाग्राच्छः ॥ १०५ ॥

इवार्थे । कुशाग्रमिव सूक्ष्मत्वात् कुशाग्रीया बुद्धिः ॥

समासाच्च तद्विषयात् ॥ १०६ ॥

इवार्थविषयात्समासादपरस्मिन् इवार्थे छः स्यात् । काकतालीयम् । श्येनकपोतीयम् । अतर्कितोपनतं चित्रकरपामुच्यते । काकस्यागमनं यादृच्छिकं तालस्य पतनं च । तेन तालेन पतता काकस्य वधः । एवमत्र देवदत्तस्य तत्रागमनं दस्यूनां चोपनिपातः तैश्च देवदत्तस्य वधः । तत्र देवद-

पादस्युगमावेशः काकतालसमावेश इवेति समासार्थः । काकवधवदेवदत्तवध इति प्रत्ययार्थः । अस्मादेव ज्ञापकात्समासः । सोपि एतच्छविषय एव ॥

शर्करादिभ्योण् ॥ १०७ ॥

इवार्थे । शर्करेव शार्करम् । कापालिकमित्यादि ॥

अङ्गुल्यादिभ्यष्ठक् ॥ १०८ ॥

इवार्थे । अङ्गुलिरिव आङ्गुलिकः इत्यादि ॥

एकशालायाष्ठजन्यतरस्याम् ॥ १०९ ॥

पक्षे ठक् । एकशालेव एकशालिकः ऐकशालिकः ॥

कर्कलोहितादीकक् ॥ ११० ॥

आभ्यामीकक् स्यादिवार्थे । कर्कः शुक्लाश्वः । कर्क इव कार्कीकः । लौहितीकः स्फटिकः । स्वयमा(म)लोहित उपाधेस्तथा भाति ॥

प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ॥ १११ ॥

एभ्यस्थालिवार्थे छन्दसि । तं प्रत्नथा पूर्वथा विश्वथेमथा । इमेति इदमा समानार्थं प्रकृत्यन्तरम् ॥

पूगाञ्ञ्योऽग्रामणीपूर्वात् ॥ ११२ ॥

इवार्थो निवृत्तः । नानाजातीया अनियतवृत्तयोर्थकामप्रधानाः संघाः पूगाः । पूर्वशब्दोऽवयववाची । ग्रामणीः पूर्वोऽवयवो यस्य संघस्य स ग्रामणीपूर्वः । पूगवाचिनः स्वार्थे ञ्यः स्यात् न तु ग्रामणीपूर्वात् । लौहध्वज्यः । लौहध्वज्यौ । लोहध्वजाः । तद्राजस्ये(२।४।६२)ति लुक् । अग्रामणीपू-

र्वातिकम । देवदत्तो ग्रामणीर्येषां देवदत्तकाः । स एषां ग्रामणी-(५।२।७८)रिति कन्प्रत्ययः ॥

व्रातच्फञोरस्त्रियाम् ॥ ११३ ॥

नानाजातीया अनियतवृद्ध(त्त)यः संघा व्राताः । व्रातवाचिभ्यश्च्फञन्तेभ्यश्च स्वार्थे ञ्यः स्यान्न तु स्त्रियाम । कापोतवा(पा)क्यः । कापोतवा(पा)क्यौ । कपोतवा(पा)काः । कौञ्जायन्यः । कौञ्जायनाः । गोत्रे कुञ्जादिभ्यः(४।१।९८) इति च्फञ् । अस्त्रियां किम् । कपोतवाका(पाकी) स्त्री । कौञ्जायनी । अत्र गोत्रत्वेन जातित्वात् ङीष् ॥

आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् ॥११४॥

वाहीकेषु य आयुधजीविसङ्घः तस्मात् स्वार्थे ञ्यट् स्यात् न तु ब्राह्मणराजन्यात् । ब्राह्मणे विशेषग्रहणम । राजन्ये स्वरूपस्य । कान्तिवृष्यः(कौण्डीवृस्यः) । क्षौद्रक्यः ॥ मालव्यः । मालव्यौ । मालवाः । टित्वात् । काण्डवृषी-(कौण्डीवृसी) । आयुधजीवीति किम् । मल्लाः । सङ्घात्किम । सम्राट् । वाहिकेषु किम् । यवनाः । अब्राह्मणराजन्यात्किम । शालङ्कायनाः राजन्याः ॥

वृकाट्टेण्यण् ॥ ११५ ॥

अस्मात्स्वार्थे टेण्यण् स्यात् । वार्केण्यः । वार्केण्यौ । वृकाः । आयुधजीविसङ्घादित्येव । जातिशब्दात्तु वृक इत्येव ॥

दामन्यादित्रिगर्तषष्ठाच्छः ॥ ११६ ॥

आयुधजीविसङ्घवाचिभ्यो दामन्यादिभ्यस्त्रिगर्तषष्ठेभ्यश्च स्वार्थे छः स्यात् । दामनीयः । दामनीयौ । दामनय इत्यादि । येषामायुधजीविनां षड्वर्गास्तत्र त्रिगर्तवर्गः षष्ठो येषां ते

तयोक्ताः । ते च संगृहीताः ।

आह्रुत्रिगर्तषष्ठांस्तु कौण्डोपरथदाण्डकी ।
क्रौष्टुकिर्जालमालिश्च ब्रह्मगुप्तोऽथ जानकिः ॥

तत्राद्यावृत्तमौ शिवाद्यणन्तौ । शेषास्त्विञन्ताः । केचित्पञ्चममतद्धितान्तं पठन्ति तेषां ब्रह्मगुप्तादेव प्रत्ययः । कौण्डोपरथीयः । दाण्डकीयः । क्रौष्टुकीयः । जालमालीयः । ब्राह्मगुप्तीयः । जानकीयः । बहुत्वे लुक् । कौण्डोपरथा इत्यादि ॥

पर्श्वादियौधेयादिभ्यामणञौ ॥ ११७ ॥

आयुधजीविसंघादित्येव । आभ्याम् एतौ स्वार्थे क्रमात्स्तः । पार्शवः । यौधेय इत्यादि ॥

अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णाव
च्छ्रुमदणो यञ् ॥ ११८ ॥

आयुधजीवीति निवृत्तम् । एभ्यो अणन्तेभ्यः स्वार्थे यञ् स्यात् । अभिजितोपत्यम् आभिजितः । स एवाभिजित्यः । आभिजित्यौ । अभिजिताः । एवं वैदभृत्यः । शालावत्यः । शामीवत्यः । और्णावत्यः । श्रौमत्यः । गोत्राणाश्रयणादाभिजितो मुहूर्त इत्यादौ न ॥

ञ्यादयस्तद्राजाः ॥ ११९ ॥

पूगात् ञ्य(५।३।११२)इत्यारभ्य ये प्रत्ययास्ते तद्राजसंज्ञाः स्युः । बहुत्वे तद्राजस्ये(२।४।६२)ति लुक् । तथैवोदाहृतम् ॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यश्रीराघवसोमयाजिकुलावतंसश्रीतरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ व्याकरणमिताक्षरायां पञ्चमस्याध्यायस्य तृतीयः पादः ॥

पादशतस्यसंख्यादेर्वीप्सायां वुन् लोपश्च ॥ १ ॥

पादशतान्तस्य संख्यादेः प्रातिपदिकस्य वीप्सायां द्योत्यायां वुन् तत्संनियोगे चान्तस्य लोपः स्यात् । यस्येति लोपस्य परनिमित्तकतया स्थानिवद्भावात्पादः पद्भावाभावात् पुनर्लोपवचनमनिमित्तत्वस्फोरकम् । तद्धितार्थे(२।१।५१)ति समासे कृते प्रत्ययः । वुन्नन्तं स्त्रियामेव । द्वौ द्वौ पादौ ददाति द्विपदिकाम् । द्विशतिकाम् । पादशतस्य किम् । द्वौ द्वौ माषौ ददाति । सङ्ख्यादेः किम् । पादं ददाति । वीप्सायां किम् । पादौ ददाति ॥

अन्यत्रापीष्यते ॥

द्विमोदकिकां ददाति ॥

दंडव्यवसर्गयोश्च ॥ २ ॥

अवीप्सार्थमिदम् । पादशतस्य संख्यादेरेतयोर्वुन् स्यात् लोपश्च । दमनं दण्डः । दानं व्यवसर्गः । द्वौ पादौ दण्डयति व्यवसृजति वा द्विपदिकां दण्डयति विसृजति वा । एवं द्विशतिकाम् ॥

स्थूलादिभ्यः प्रकारवचने कन् ॥ ३ ॥

जातीयरोपवादः । स्थूलप्रकारः स्थूलकः । अणुक इत्यादि ॥

चञ्चद्बृहतोश्च ॥

घस्त्रकः। बृहत्कः। चश्चक इत्यपीष्यते॥

अनत्यन्तगतौ क्तात् ॥ ४ ॥

क्रियया अशेषस्य व्याप्तिरत्यन्तगतिः। क्तान्तात्कन् स्यात्। छिन्नकः। भिन्नकः। अत्यंतगतौ तु छिन्नम्। भिन्नम्॥

न सामिवचने ॥ ५ ॥

सामिवचने उपपदे क्तान्तात्कन् न स्यात्। सामिकृतम्। अर्धकृतम्। नेमकृतम्। अनत्यन्तगतेः साम्यादिशब्दैरेव(ब्दैर)प्रतिपादनेन कनोऽप्रसंगान्निषेधानुपपत्तेः स्वार्थेऽपि कन् प्रतिषेधेन ज्ञाप्यते। तेनाभिन्नतरकं बहुतरकमित्याद्युपपन्नम्॥

बृहत्या आच्छादने ॥ ६ ॥

अस्मादाच्छादने कन् स्यात्। बृहतिका। आच्छादने किम्। बृहती छन्दः॥

अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः ॥ ७ ॥

अषडक्षादिभ्योऽध्युत्तरपदाच्च स्वार्थे खः स्यात्। अविद्यमानानि षडक्षीणि यस्मिन् अषडक्षीणो मन्त्रः। यो विचारा(रो) द्वाभ्यामेव क्रियते न बहुभिः स उच्यते। आशिता गावो यस्मिन्नित्याशितङ्गवीनमरण्यम्। निपातनात्पूर्वपदस्य मुमागमः। कर्मणे अलम् अलङ्कर्मीणः। एवमलंपुरुषीणः। अधेः शौण्डादित्वाच्चदुत्तरपदस्तत्पुरुषः। राजाधीनः। नित्यश्चायं प्रत्ययः। उत्तरसूत्रे विकल्पारम्भात्। अन्येऽपि स्वार्थिका नित्याः केचित् तरवादयः प्राक्कनः ज्यादयः प्राग्वुनः आमादयः प्राङ्मयटः बृहतीजात्यन्तौ समासान्ताश्चेति॥

## विभाषाञ्चेरदिक्स्त्रियाम् ॥ ८ ॥

अञ्चत्यन्तात्स्वार्थे वा खः स्यात् न तु दिक्स्त्रियाम् । प्राक् प्राचीनः । अदिक्स्त्रियां किम् । प्राची दिक् । दिक्किम् । प्राचीना ब्राह्मणी । स्त्रियां किम् । प्राचीनं दिग्रमणीयम् । अञ्चेर्लुगि(५।३।३०)त्यस्तातेर्लुक्यव्ययत्वात्प्राक्शब्दात् खे सति प्राचीनमिति नपुंसकम् । लोकाश्रयत्वाल्लिङ्गस्य ॥

## जात्यन्ताच्छ बन्धुनि ॥ ९ ॥

बध्यतेऽस्मिन् जातिरिति बन्धु द्रव्यम् । जात्यन्ताच्छः स्यात् द्रव्येऽभिधेये । ब्राह्मणजातीयः । क्षत्रियजातीयः । ब्राह्मणादिरेवोच्यते । द्रव्ये किम् । ब्राह्मणजातिः शोभना ॥

## स्थानान्ताद्विभाषा सस्थानेनेति चेत् ॥ १० ॥

स्थानान्तात्तुल्यार्थाच्छो वा स्यात् समानं स्थानं यस्येति बहुव्रीहिणा सस्थानशब्दस्तुल्यपर्यायस्तदर्थेन चेत् स्थानान्तमर्थवद्भवतीति विवक्षायां तुल्यार्थादिति विशेषणं संपद्यते । इतिशब्दादेतावल्लभ्यते । पितृस्थानीयः । पितृस्थानः । पितुः स्थानमिव स्थानं यस्येति सप्तम्युपमानपूर्वस्ये-(२।२।२४वा)ति बहुव्रीहिणा स्थानान्तस्य तुल्यार्थत्वम् । तुल्यार्थात्किम् । गोस्थानमश्वस्थानम् । अत्र तत्पुरुषत्वात्तुल्यार्थता ॥

## किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ॥ ११ ॥

किम् एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादाम् स्यान्न तु द्रव्यप्रकर्षे । गुणक्रियाद्वारको द्रव्यस्य प्रकर्षः । किंतराम् । किंतमाम् । प्राह्णेतराम् । प्राह्णेतमाम् । घकालतने(६।३।१७)ष्विति सप्तम्या अलुक् । पचतितराम् । पचतितमाम् । उ-

चैस्तराम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु उच्चैस्तरस्तरुः ॥

अमु चच्छन्दसि ॥ १२ ॥

पूर्वविषये छन्दस्यमुप्रत्ययः स्यात् चादामु च । प्रतरं न आयुः । प्रतरां न आयुः । स्वरादिषु अमु आमु इति पाठात्तदन्तमव्ययम् ॥

अनुगादिनष्ठक् ॥ १३ ॥

अस्मात्स्वार्थे ठक् स्यात् । अनुगदतीत्यनुगादी स एवानुगादिकः ॥

णचः स्त्रियामञ् ॥ १४ ॥

कर्मव्यतीहारे णच् स्त्रिया(३।३।४३)मितिविहितणजन्तात्स्वार्थेञ् स्यात् स्त्रियाम् । व्यावक्रोशी । व्यावहारी । णचः स्त्रियामेव विधानात् स्त्रीग्रहणं स्वार्थिकानां प्रकृतिलिङ्गव्यभिचारज्ञापनार्थम् । तेन देवतेत्यादि सिद्धम् ॥

अणिनुणः ॥ १५ ॥

अभिविधौ भाव इनुणि(३।३।४४)तीनुणन्तात्स्वार्थेण् स्यात् । सांराविणं वर्तते । इनण्यनपत्य(६।४।१६४)इति टिलोपो न ॥

विसारिणो मत्स्ये ॥ १६ ॥

अस्मात्स्वार्थेऽण् स्यात् मत्स्ये । वैसारिणो मत्स्यः । पूर्ववत्प्रकृतिभावः । मत्स्ये किम् । विसारी देवदत्तः ॥

संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ॥ १७ ॥

क्रियापौनःपुन्यगणनार्थेभ्यः सङ्ख्याशब्देभ्यः स्वार्थे कृत्वसुच् स्यात् । एककर्तृकतुल्यजातीयभिन्नकालानेकक्रियोत्पत्तेः सङ्ख्यानं क्रियाभ्यावृत्तिगणनम् । पञ्चकृत्वः । कतिकृत्वो

भुङ्क्ते। कतिवारानित्यर्थः। सङ्ख्यायां किम्। भूरीन् वारान् भुङ्क्ते। अभ्यावृत्तेः क्रियामात्रधर्मत्वात्क्रियाग्रहणमेकस्य सकृच्च-(५।४।१९)त्यत्र क्रियागणनमात्रे प्रत्ययसिध्यर्थम्। अभ्यावृत्तीति किम्। पञ्चपाकाः। अत्रैककालाः पाका गण्यन्ते न भिन्नकाला इति नाभ्यावृत्तिः। गणनग्रहणं किम् यावता सङ्ख्या गणनात्मिकैव। अभ्यावृत्तौ सङ्ख्येयायां वर्तमानेभ्यः सङ्ख्येयवचनेभ्य एव प्रत्ययः स्यात् शतवारान् भुङ्क्ते शतकृत्व इति। अभ्यावृत्तिगतसङ्ख्यामात्रवृत्तिभ्यो न स्यात् शतं वाराणां भुङ्क्ते शतकृत्व इति। गणनग्रहणेनोभयत्र सिद्धम्॥

द्वित्रिचतुर्भ्यः सुच्॥ १८॥

कृत्वसुचोपवादः। द्विस्त्रिश्चतुर्भुङ्क्ते॥

एकस्य सकृच्च॥ १९॥

अस्य सकृदादेशः स्यात्सुच् प्रत्ययश्च क्रियागणने। संयोगान्तलोपः। सकृद्भुङ्क्ते। एकः पाक इत्यत्रानभिधानान्न॥

विभाषाबहोर्धाविप्रकृष्टकाले॥ २०॥

अस्मात्पूर्वविषये धा वा स्यात् कालाविप्रकर्षे। बहुधा बहुकृत्वो वा दिवसस्य भुङ्क्ते। आसन्नकाले किम्। बहुकृत्वो मासस्य भुङ्क्ते॥

तत्प्रकृतवचने मयट्॥ २१॥

तदिति प्रथमासमर्थात्प्राचुर्येण प्रस्तुतमित्यर्थे मयट् स्यात्। अन्नं प्राचुर्येण प्रकृतमन्नमयम्। उच्यतेऽस्मिन् वचनमित्यपि व्याख्यानादन्नमयो यज्ञः॥

समूहवच्च बहुषु॥ २२॥

बहुषु प्रकृतेषु समूहवत्प्रत्ययः स्याच्चान्मयट्। मोदकाः

प्राचुर्येण प्रकृताः मौदकिकं मोदकमयम् । अचित्तहस्तिधे-
नो(४।२।४७)रिति सामूहिकष्ठक् ॥

अनन्तावसथेतिहभेषजाञ्ञ्यः ॥ २३ ॥

एभ्यः स्वार्थे ञ्यः स्यात् । आनन्त्यम् । आवसथ्यम् । ऐतिह्यम् । इतिहेत्युपदेशपारम्पर्यमाह । भैषज्यम् । महाविकल्पेन भेषजमित्याद्यपि ॥

देवतान्तात्तादर्थ्ये यत् ॥ २४ ॥

चतुर्थ्यन्तादस्मात्तादर्थ्ये यत्स्यात् । तदर्थमेव तादर्थ्यम् । अग्निदेवतायै इदम् अग्निदेवत्यम् । पितृदेवत्यम् ॥

पादार्घाभ्यां च ॥ २५ ॥

यत् । पादार्थं पाद्यम् । अर्घ्यम् । चकारोनुक्तसमुच्चयार्थः । सप्तदशाक्षरश्छन्दस्यः ॥

वसु आपस्(अयस्) ओक कवि क्षेम वर्चस् निष्केवल उक्थ जन पूर्व नव सूर मर्त यविष्ठ एभ्यश्छन्दसि यत्स्वार्थे ॥

अग्निरीशे वसव्यस्य, आवस्यो(अयस्यो) वसानाः । द्वितीयाया अलुक् । आपो वसाना इत्यर्थः । ओक्यः । कव्यः । क्षेम्यः । वर्चस्यम् । निष्केवल्यम् । उक्थ्यम् । जन्यम् । पूर्व्या दि(वि)शः । नव्यम् । सूर्यः । मर्त्यः । यविष्ठ्यः ॥

आमुष्यायणामुष्यपुत्रिकेत्यलुक् ॥

नडादित्वात् मनोज्ञादित्वाच्च फगवुञौ सिद्धौ ॥

समशब्दात् आवतुप् ॥

समापद्विद्ध(समावद्वसति) ॥

नवस्य नूआदेशः त्नप्तनखाश्च प्रत्यया वाच्याः ॥

नूत्नम् । नूतनम् । नवीनम् ॥

नञ्च पूरणे मात् ॥

चात् त्वपादयः । प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् ॥

भागरूपनामभ्यो धेयः ॥

भागधेयम् । रूपधेयम् । नामधेयम् ॥

मित्राच्छन्दसि ॥

मित्रधेयम् ॥

आग्नीध्रसाधारणादञ् ॥

आग्निध्री । साधारणी ॥ वाप्रकरण एतान्युपसंख्येयानि ॥ तेन यथाप्राप्तमपि । आग्नीध्रा शाला । साधारणा भूमिः ॥

अयवसमरुद्भ्यां छन्दस्यञ्वाच्यः ॥

आयवसे रमन्ते । मारुतं श्राद्धम् ॥

अतिथेः कः ॥ २६ ॥

तादर्थ्य इत्येव । अतिथ्यर्थमातिथ्यम् ॥

देवात्तल् ॥ २७ ॥

तादर्थ्य इति निवृत्तम् । अस्मात्स्वार्थे तल् स्यात् । देव एव देवता ॥

अवेः कः ॥ २८ ॥

अविरेवाविकः ॥

यावादिभ्यः कन् ॥ २९ ॥

याव एव यावकः । मणिकः इत्यादि ॥ ऋतावुष्णशीते ॥ उष्णकः शीतको वा ऋतुः । उष्णोऽन्यः । एवमुत्तरत्र पशौ लूनवियाते ॥ अणु निपुणे ॥ पुत्र कृत्रिमे ॥ स्नात वेदसमाप्तौ ॥ शून्य रिक्ते ॥ तनु सूत्रे ॥ कुमारीक्रीडनकानि च ॥ कुमारीणां यानि क्रीडनानि तानि कनमुत्पादयन्ति । क-

न्दुक इत्यादि ॥

लोहितान्मणौ ॥ ३० ॥

कन्। लोहितको मणिः ॥

वर्णे चानित्ये ॥ ३१ ॥

सत्याश्रये यदागमापायि तदनित्यम्। लोहितात्कन् स्याद-नित्ये वर्णे। लोहितकः कोपेन। अनित्ये किम्। लोहितं रुधिरम् ॥

लोहिताल्लिङ्गबाधनं वेति वाच्यम् ॥

लोहितिका लोहिनिका वा कोपेन ॥

रक्ते ॥ ३२ ॥

लाक्षादिना रक्ते लोहितात्कन् स्यात्। लोहितकः पटः। लोहितिका लोहिनिका वा शाटी ॥

कालाच्च ॥ ३३ ॥

अस्मात्कन् स्यादनित्ये वर्णे रक्ते च। कालकं मुखं वै-लक्षण्येन। रक्ते। कालकः पटः ॥

विनयादिभ्यष्ठक् ॥ ३४ ॥

एभ्यष्ठक् स्यात्स्वार्थे। विनय एव वैनयिकः। सामयि-कः ॥ उपायाद्ध्रस्वत्वं च ॥ औपयिक इत्यादि। वाप्रकरणा-त्पक्षे विनय इत्यादि ॥

वाचो व्याहृतार्थायाम् ॥ ३५ ॥

संदेशवाग्व्याहृतार्था। तस्यां वर्तमानाद्वाक्शब्दात्स्वार्थे ठक् स्यात्। वाचिकं कथयति ॥

तद्युक्तात्कर्मणोण् ॥ ३६ ॥

वाचिकयुक्तार्थाभिधायिनः कर्मशब्दात्स्वार्थेण् स्यात् । वाचिकं श्रुत्वा तथैव यत्क्रियते तत्कार्मणम् ॥

अण्प्रकरणे कुलालबुरु(वरु)डनिषाद[कर्मार]चण्डालमित्रामित्रेभ्यश्छन्दस्युपसङ्ख्यानम् ॥

कुलाल एव कौलालः । बौरु(वारु)डः । नैषादः । [कार्मारः ।] चाण्डालः । मैत्रः । आमित्रः ॥

सान्नाय्यानुजावरानुष्टुभ(षूक)चातुःप्राश्ये(तुष्प्राश्य)राक्षोघ्नवैकृतवैयातदारि(वादि)वस्कृताग्र(ग्रा)यणाग्रहायणसान्तपना अग्न्ताश्छन्दसि भाषायां चेष्यन्ते ॥

ओषधेरजातौ ॥ ३७ ॥

अस्मात्स्वार्थे अण् स्यात् । औषधं पिबति । अजातौ किम् । ओषधयः क्षेत्रे रूढाः ॥

प्रज्ञादिभ्यश्च ॥ ३८ ॥

एभ्यः स्वार्थेण् स्यात् । प्रज्ञ एव प्राज्ञः । प्राज्ञी । प्रज्ञावती तु प्राज्ञा । आसुरः । राक्षसः । पायस इत्यादि ॥

मृदस्तिकन् ॥ ३९ ॥

अस्मात् स्वार्थे तिकन् स्यात् । मृदेव मृत्तिका ॥

सस्नौ प्रशंसायाम् ॥ ४० ॥

मृद एतौ नित्यं स्तः प्रशंसायाम् । रूपपोपवादौ । प्रशस्ता मृत् मृत्सा मृत्स्ना ॥ नित्याविष्येते ॥

वृकज्येष्ठाभ्यां तिल्तातिलौ चच्छदसि ॥ ४१ ॥

आभ्यां यथासङ्ख्यमेतौ प्रशंसायां छन्दसि । रूपपोपवादः । वृकतिः । ज्येष्ठतातिः ॥

बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥ ४२ ॥

बह्वल्पपर्यायात्कारकवाचिनः शस् वा स्यात् । प्रयोजनाभावान्न सस्येत्त्वम् । बहूनि बहुभिः बहुभ्य इत्याद्यर्थे बहुशो ददाति । भूरिशः । अल्पशः । स्तोकशः । कारकात्किम् । बहूनां स्वामी । बह्वल्पार्थात्किम् । गां ददाति ॥

बह्व[ल्पा]र्थान्मङ्ग[लामङ्ग]ले ॥

बहुशो ददातीरपाभ्युदयिकेषु । अल्पशः इत्यनिष्टेषु ॥

संख्यैकवचनाच्च वीप्सायाम् ॥ ४३ ॥

सङ्ख्याया एकवचनाच्च कारकवाचिनो वीप्सायां शस् स्यात् । द्वौ द्वौ ददाति द्विशः । त्रिशः । माषं माषं ददाति माषशः । मस्थशः । माषादिशब्दानां नियतपरिमाणवाचित्वाद्वृत्तावप्येकार्थत्वम् । सङ्ख्यैकवचनात्किम् । घटं घटं ददाति । घटशब्दस्य वृत्तौ जातिवाचित्वान्नैकार्थत्वम् । यदा प्रकरणादिवशादेकार्थत्वं तदा भवत्येव । वीप्सायां किम् । द्वौ ददाति । कारकात्किम् । द्वयोर्द्वयोः स्वामी ॥

प्रतियोगे पञ्चम्यास्तसिः ॥ ४४ ॥

प्रतियोगे पञ्चम्यन्तात्तसिर्वा । प्रद्युम्नः कृष्णतः प्रति कृष्णाद्वा ॥

आदिमध्यान्तपार्श्वपृष्ठादेश्च ॥

आदौ आदितः इत्यादि । अकृतिगणोऽयम् ॥

अपादाने चाहीयरुहोः ॥ ४५ ॥

अपादानपञ्चम्यन्तात्तसिर्वा । ग्रामत आयाति ग्रामाद्वा । चोरतो बिभेति चोराद्वा । अहीयरुहोः किम् । सार्था-

द्धीयते । पर्वतादवरोहति । हीय इति विकारनिर्देशाज्जहातेर्ग्रहणं न तु जिहीतेः । तेन भूमेरुज्जिहीते भूमित इति सिध्यति ॥

अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ॥ ४६ ॥

अतिक्रम्य ग्रहोतिग्रहः । अचलनमव्यथनम् । क्षेपो निन्दा । अतिग्रहादिविषयाकर्तृतृतीयान्तात्तसिर्वा । वृत्तेन वृत्ततो वातिगृह्यते । वृत्तेनातिक्रम्य गृह्यत इत्यर्थः । वृत्तेन वृत्ततो वा न व्यथते न चलतीत्यर्थः । वृत्तेन वृत्ततो वा क्षिप्तः । कर्तरि तु देवदत्तेन क्षिप्तः ॥

हीयमानपापयोगाच्च ॥ ४७ ॥

हीयमानपापयुक्तादकर्तृतृतीयान्तात्तसिर्वा । वृत्तेन वृत्ततो वा हीनः पापो वा । अक्षेपार्थमिदम् । कर्तरि तु देवदत्तेन हीनः ॥

षष्ठ्या व्याश्रये ॥ ४८ ॥

नानापक्षसंश्रयो व्याश्रयः । तस्मिन् गम्ये षष्ठ्यन्तात्तसिर्वा । देवा अर्जुनतो भवन्नादित्याः कर्णतः । षष्ठी चात्र पक्षापेक्षैव । अर्जुनस्य पक्षे कर्णस्य पक्ष इत्यर्थः । व्याश्रये किम् । वृक्षस्य शाखा ॥

रोगाच्चापनयने ॥ ४९ ॥

व्याधिवाचिनः षष्ठ्यन्तात्तसिर्वा प्रतीकारे गम्ये । ज्वरतः कुरु । ज्वरस्य प्रतीकारं कुर्वित्यर्थः । अपनयने किम् । ज्वरस्य प्रकोपनं कुरु ॥

अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः ॥ ५० ॥

सम्पद्य कर्तरीत्यवात एव निपातनाच्चिङ्पमासस्तिङ्गोपश्च । भावे यत्प्रत्ययो वा । सम्पत्तेः कर्ता यस्तद्वाचिनः क्रादि-

योगे च्विः स्यादतथाभूतस्य तथाभावे गम्ये । अशुक्लः शुक्लः सम्पद्यते तं करोति शुक्लीकरोति । शुक्ली-भवति स्याद्वा । अभूततद्भावे किम् । शुक्लं करोति । अत्र प्रकृतिर्न विवक्षितेति नाभूततद्भावो गम्यते । कृादियोगे किम् । अशुक्लः शुक्लो जायते । सम्पद्यकर्तरि किम् । अदेवगृहे देवगृहे सम्पद्यते देवः । अत्राधिकरणस्याभूततद्भावो न तु कर्तुः ॥

अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ॥ ५१ ॥

पूर्वेणैव सिद्धे लोपार्थमिदम् । एभ्यश्च्विः स्यादन्त्यलोपश्च । अरूकरोति । उन्मनीकरोति । उच्चक्षूकरोति । विचेतीकरोति । विरहीकरोति । विरजीकरोति । विरहीभवति । विरहीस्यात् [1] एवं पूर्वत्र ॥

विभाषा साति कार्त्स्न्ये ॥ ५२ ॥

च्विविषये सातिः स्यात्साकल्ये च्विश्च । कृत्स्नं लवणं जलं सम्पद्यते जलसाद्भवति जलीभवति । कार्त्स्न्ये किम् । एकत्र शुक्लीभवति पटः ॥

अभिविधौ संपदा च ॥ ५३ ॥

च्विविषये सातिः स्याद्व्याप्तौ सम्पदा कृादिभिश्च योगे च्विश्च । मतु न संपदा(संपदा)योगे। लवणमात्सम्पद्यते। लवणसाद्भवति । लवणीभवति । एकद्रव्यस्य सर्वात्मनान्यथात्वं कार्त्स्न्यम् । सर्वस्यानेकद्रव्यस्यैकदेशेनान्यथात्वमभिविधिः ॥

तदधीनवचने ॥ ५४ ॥

अभूततद्भाव इति निवृत्तम् । तदधीनत्वार्थे सातिः स्यात्सम्पदा कृभ्वस्तिभिश्च योगे । राजाधीनं करोति राजसात्करोति । राजसाद्भवति । राजसात्सम्पद्यते ॥

## देये त्रा च ॥ ५५ ॥

तदधीने देये त्रा स्यात्सातिश्च क्रादियोगे सम्पदा च । विप्राधीनं देयं करोति विप्रत्रा करोति विप्रसात्करोति । विप्रत्रा सम्पद्यते विप्रसात्सम्पद्यते । देये किम् । राजसाद्भवति राष्ट्रम् ॥

## देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ॥५६॥

त्रामात्रमनुवर्तते न सातिः । क्रादयश्च न सम्बध्यन्ते । द्वितीयासप्तम्यन्तेभ्य एभ्यो बहुलं त्रा स्यात् । देवान् गच्छति देवत्रा गच्छति । देवेषु वसति देवत्रा वसतीत्यादि । विभाषानुवृत्त्या सिद्धेर्बहुलोक्तिरन्यत्रापि । बहुषु बहून् वा बहुत्रा जीवतो मम ॥

## अव्यक्तानुकरणाद्व्यजवरार्धादनितौ डाच् ॥ ५७॥

अवरशब्दोपकर्षे । द्विरुक्तस्य यस्यापकर्षे क्रियमाणे सुष्ठु न्यूनमर्धं द्व्यचकं संपद्यते तस्मादव्यक्तवर्णध्वर्य(न्य)नुकरणात् डाच् स्यात् क्रादियोगे न त्विति । डाचि बहलं द्वे भवत(८।१।१२) इति डाचि विवक्षिते द्वित्वं ततो डाच् । पटपटा-करोति भवति स्याद्वा । अव्यक्तानुकरणात्किम् । दृषत्करोति । द्व्यच् किम् । श्रत्करोति । अवरेति किम् । खरटखरटाकरोति । अनितौ किम् । पटिति करोति ॥

## कृञो द्वितीयतृतीयशम्बबीजात्कृषौ ॥ ५८ ॥

कृञो ग्रहणं भ्वस्तिनिवृत्त्यर्थम् । एभ्यो डाच् स्यात्कृञो योगे कर्षणेऽर्थे । बहुलोक्तेरत्र न द्वित्वम् । द्वितीयं तृतीयं कर्षणं करोति द्वितीयाकरोति तृतीयाकरोति । पुनस्तिर्यक्कृषति शम्बा-

करोति । बीजेन सह कृषति बीजाकरोति । कृषौ किम् । द्वितीयं पटं करोति ॥

संख्यायाश्च गुणान्तायाः ॥ ५९ ॥

गुणशब्दान्तात्संख्यावाचिनो डाच् स्यात्कृञो योगे कर्षणे । द्विगुणाकरोति क्षेत्रम् । कृषौ किम् । द्विगुणां करोति रज्जुम् ॥

समयाच्च यापनायाम् ॥ ६० ॥

अस्मात् डाच् स्यात्कृञो योगे यापने । समयाकरोति । कालक्षेपं करोतीत्यर्थः । यापनायां किम् । समयं करोति ॥

सपत्रनिष्पत्रादतिव्यथने ॥ ६१ ॥

आभ्यां डाच् स्यात्कृञो योगेऽतिपीडायाम् । सपत्राकरोति मृगं व्याधः । शरं तच्छरीरे प्रवेशयतीत्यर्थः । सह पत्रेण सपत्रः । निष्पत्राकरोति । शरमपरपार्श्वे निर्गमयतीत्यर्थः । निर्गतं पत्रं यस्मान्निष्पत्रः । पत्रं शरः । अतिव्यथने किम् । सपत्रं वृक्षं करोति जलसेचकः । निष्पत्रं वृक्षतलं करोति भूशोधकः ॥

निष्कुलान्निष्कोषणे ॥ ६२ ॥

अन्तरवयवानां वहिर्निष्कासनं निष्कोषणम् । अस्मादस्मिन् डाच् स्यात् कृञो योगे । निष्कुलाकरोति दाडिमम् । निष्कोषणे किम् । निष्कुलं करोति शत्रुम् ॥

सुखप्रियादानुलोम्ये ॥ ६३ ॥

आभ्यां डाच् स्यात्कृञो योगे आनुलोम्ये । सुखाकरोति प्रियाकरोति स्वामिनम् । तच्चित्तमनुवर्तत इत्यर्थः । अनुलोम्ये किम् । सुखं प्रियं च करोत्यौषधपानम् ॥

दुःखात्प्रातिलोम्ये ॥ ६४ ॥

दुःखाकरोति स्वामिनम् । तच्चित्तं पीडयतीत्यर्थः । प्रातिलोम्ये किम् । दुःखं करोति कदन्नम् ॥

शूलात्पाके ॥ ६५ ॥

अस्माद् डाच् स्याद् कृञो योगे 'पाके' । शूलाकरोति मांसम् । शूलेन करणेन पचतीत्यर्थः । पाके किम् । शूलं करोति कदन्नम् ॥

सत्यादशपथे ॥ ६६ ॥

अनृतप्रतिपक्षात्सत्याद् डाच् स्यात्कृञो योगे न तु शपथे । सत्याकरोति भाण्डं वणिक् । क्रेतव्यमिति तथ्यं करोतीत्यर्थः । शपथे तु सत्यं करोति विप्रः ॥

मद्रात्परिवापणे ॥ ६७ ॥

अस्माद् डाच् स्याद् कृञो योगे मुण्डनेऽर्थे । मद्रशब्दो मङ्गलार्थः । मद्राकरोति । माङ्गल्यं मुण्डनं करोतीत्यर्थः ॥

भद्राच्चेति वाच्यम् ॥

भद्राकरोति ॥

समासान्ताः ॥ ६८ ॥

अन्तशब्दोऽवयववाची । इत ऊर्ध्वमापादसमाप्तेः ये प्रत्ययास्ते समासस्यान्तावयवा ज्ञेयाः । तद्ग्रहणेन गृह्यन्त इत्यर्थः । अव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः प्रयोजनम् । उपराजम् । नाव्ययीभावा(२।४।८३)दित्यम् । द्विपुरी । द्विगो(४।१।२१)रिति ङीप् । स्रक्त्वचिनी । द्वन्द्वोपताप(५।२।१२८) तीनिः । विधुरः । तत्पुरुषे तुल्यार्थे(६।२।२)ति स्वरः । उच्चै-

धुरः। वहुव्रीहौ मक्थ्ये(६।२।१)ति स्वरः। एते विषयो -ऽनवयवत्वे न स्युः॥

न पूजनात्॥ ६९॥

पूजनार्थात्परेषां समासान्ता न। सुराजा। अतिराजा॥

·स्वतिभ्यामेव॥

नेह। परमराजः॥

वहुव्रीहौ सक्थ्यक्ष्णोरनिषेधः॥

सुसक्थः। स्वक्षः॥

किमः क्षेपे॥ ७०॥

निन्दार्थात्किमः परस्य समासान्ता न। किंराजा। किंसखा। कुत्सित इत्यर्थः। क्षेपे किम्। कस्य राजा किंराजः॥

नञस्तत्पुरुषात्॥ ७१॥

नञ उत्तरात्तत्पुरुषात्समासान्ता न। अराजा। असखा। तत्पुरुषात्किम्। अनृचो माणवकः॥

पथो विभाषा॥ ७२॥

पूर्वसूत्रमाप्तस्य निषेधस्य विकल्पः। अपथम्। अपन्थाः॥

वहुव्रीहौ संख्येये डजवहुगणात्॥ ७३॥

सङ्ख्येये यो वहुव्रीहिस्तस्मात् डच् स्यात् न तु वहुगणात्। सङ्ख्ययाव्ययासन्ने(२।२।२५)ति विहितस्येह ग्रहणम्। उपदशाः। आसन्नविंशाः। सङ्ख्येये किम्। चित्रगुः। अवहुगणात्किम्। उपवहवः। उपगणाः। उपगणा इत्यत्र स्वरे विशेषः॥

सङ्ख्यायास्तत्पुरुषस्य डच् निस्त्रिंशाद्यर्थम्॥

चैत्रस्य। निर्गतस्त्रिंशतोऽङ्गुलिभ्यः निस्त्रिंशः खड्गः॥

ऋक्पूरब्धूःपथामानक्षे ॥ ७४ ॥

बहुव्रीहाविति नानुवर्तते। सामान्येन विधीयते। अ अनक्ष इतिच्छेदः। एषामकारप्रत्ययः समासान्तः धुरस्त्वनक्षे। अर्धर्चः। अनृचबह्वृचावध्येतर्येव। नेह। अनृक्साम। बह्वृक्सूक्तं। विष्णुपुरं। विमलापं सरः। द्वीपं। समीपं। राजधुरः। महाधुरः। जलपथः। रम्यपथो देशः। अक्षे तु-अक्षधूः दृढधूरक्षः॥

अच् प्रत्यन्ववपूर्वात्सामलोम्नः ॥ ७५ ॥

एभ्यः पराभ्यां सामलोमभ्यामच् स्यात्। प्रतिसामम्। अनुसामम्। अवसामम्। एवं प्रतिलोमादि॥

कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरच्॥

कृष्णभूमः उदग्भूमः पाण्डुभूमः त्रिभूमः प्रासादः॥

संख्याया नदीगोदावरीभ्यां च॥

पञ्चनदम्। सप्तगोदावरम्॥

अन्यत्रापि दृश्यते॥

पद्मनाभः। ऊर्णनाभः। दीर्घरात्रः। वर्षारात्रः। अजिति योगविभागात्सिद्धमेतत्॥

अक्ष्णोऽदर्शनात् ॥ ७६ ॥

अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः। गवामक्षीव गवाक्षम्। चक्षुषि तु विप्राक्षि॥

अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाह-

द्वित्रमरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुष-
जातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ॥ ७७ ॥

एते अजन्ता निपात्यन्ते । समासव्यवस्था अलाक्षणिककार्यं च निपातनादवसेयम् । तत्राद्यास्त्रयो बहुव्रीहयः । अविद्यमानानि विगतानि शोभनानि वा चत्वार्यस्य अचतुरः [विचतुरः] सुचतुरः । तत एकादश द्वन्द्वाः । स्त्रीपुंसौ । धेन्वनडुहौ । ऋक्सामे । वाङ्मनसे । अक्षिभ्रुवम् । प्राण्यङ्गत्वादेकवद्भावः । दाराश्च गावश्च दारगवम् । सर्वो द्वन्द्वो विभाषैकवदि-(परिभाषा)त्येकवद्भावः । ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम् । निपातनाट्टलोपः । प्राण्यङ्गत्वादेकवत् । पादौ च अष्ठीवन्तौ च पदष्ठीवम् । निपातनात्पद्भावः । शेषं पूर्ववत् । नक्तंदिवम् । रात्रिंदिवम् । पूर्वपदस्य मान्तत्वं निपातनात् । अहर्दिवम् । अहन्यहनीत्यर्थः । वीप्सायां द्वन्द्वो निपातनात् । रजसा सकलमित्ति सरजसम् । साकल्येऽव्ययीभावः । निश्चितं श्रेयो निश्रेयसमिति कर्मधारयः । पुरुषस्यायुः पुरुषायुषमिति तत्पुरुषः । ततो द्विगू । द्व्यायुषम् । त्र्यायुषम् । ततो द्वन्द्वः । ऋग्यजुषम् । ततस्त्रयः कर्मधारयाः । जातोक्षः । महोक्षः । वृद्धोक्षः । शुनः समीपमुपशुनमित्यव्ययीभावः । टिलोपाभावः संप्रसारणश्च निपातनात् । गोष्ठश्व इति तत्पुरुषः । उक्तसमासेष्वेवाजन्तत्वं नान्यत्र । स्त्रियाः पुमान् स्त्रीपुमानित्यादि ॥

त्र्युपाभ्यां चतुरोच् ॥

त्रिचतुराः । उपचतुराः ॥

ब्रह्महस्तिभ्यां वर्चसः ॥ ७८ ॥

आभ्यां वर्चसोच् स्यात् । ब्रह्मवर्चसम् । हस्तिवर्चसम् ॥

अल्प(पल्य)राजभ्यां च ॥

अल्प(पल्य)वर्चसम् । राजवर्चसम् ॥

अवसमन्धेभ्यस्तमसः ॥ ७९ ॥

एभ्यस्तमसोच् । अवतमसम् । सन्तमसम् । अन्धतमसम् ॥

श्वसोवसीयःश्रेयसः ॥ ८० ॥

अस्मादाभ्यामच् । श्वोवसीयसम् । श्वश्रेयसम् । शुभार्थावेतौ ॥

अन्ववतप्ताद्रहसः ॥ ८१ ॥

एभ्यो रहसोच् । अनुरहसम् । अवरहसम् । तप्तरहसम् ॥

प्रतेरुरसः सप्तमीस्थात् ॥ ८२ ॥

प्रतेः परात्सप्तम्यन्तादुरसोच् स्यात् । उरसि प्रति वर्तते प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः । सप्तमीस्थात्किम् । प्रतिगतमुरः प्रत्युरः ॥

अनुगवमायामे ॥ ८३ ॥

अनुगवं यानम् । यस्य चायाम(२।१।१६)इति समासः । आयामे किम् । गोः पश्चादनुगु ॥

द्विस्तावा त्रिस्तावा वेदिः ॥ ८४ ॥

सुजन्ताभ्यां तावतीशब्दस्य समासाच्प्रत्ययष्टिलोपा निपात्यन्ते । यस्येति लोपानन्तरं टिलोपः । यावती प्रकृतौ वेदिः ततो द्विगुणा विकृतिविशेषे द्विस्तावा । त्रिस्तावा । वेदिः किम् । द्विस्तावती त्रिस्तावती रज्जुः ॥

उपसर्गादध्वनः ॥ ८५ ॥

अच् । प्रगतोध्वानं प्राध्वो रथः । उपसर्गात् किम् । परमाध्वा ॥

तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ॥ ८६ ॥

सङ्ख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्याच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम् । तद्धितार्थे द्विगुः । द्विगोर्नित्य-(५।२।३७वा)मिति मात्रचो लुक् । निर्गतमङ्गुलिभ्यो निरङ्गुलम् । तत्पुरुषस्य किम् । पञ्चाङ्गुलिर्हस्तः । द्वन्द्वाच्चुदषहान्ता-(५।४।१०६)दिति यावत्तत्पुरुषाधिकारः ॥

अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ॥ ८७ ॥

एभ्यो रात्रेरच् स्यात्सङ्ख्याव्ययादेः ॥

अहर्ग्रहणं द्वन्द्वार्थम् । तत्पुरुषासम्भवात् ॥

अहोरात्रः । सर्वरात्रः । पूर्वरात्रः । अपररात्रः । सङ्ख्यातरात्रः । पुण्यरात्रः । द्वे रात्री समाहृते द्विरात्रः । अतिरात्रः । सर्व[त्र] रात्राह्नाहाः पुंसी(२।४।२९)ति पुंस्त्वम् । अहोरात्रद्विरात्रयोः क्लीवता कौमुद्यामुक्ता ॥

अह्नोह्न एतेभ्यः ॥ ८८ ॥

एतेभ्यः सर्वादिभ्योहन्शब्दस्याह्नादेशः स्याट्टचि । सर्वाह्णः । सङ्ख्याताह्नः । द्वयोरह्नोर्भव इत्यत्राणो लुक् । द्व्यहः द्व्यह्नमियः । अत्यह्नः । निरह्नः ॥

न संख्यादेः समाहारे ॥ ८९ ॥

सङ्ख्यापूर्वस्याहन्शब्दस्याह्नादेशो न स्यात्समाहारे । द्वे अहनी समाहृते द्व्यहः । समाहारे किम् । द्व्यह्नमियः ॥

उत्तमैकाभ्यां च ॥ ९० ॥

आभ्यां परस्याह्नो नाह्नादेशः । उत्तमशब्दोन्त्यार्थः पुण्यशब्दमाह । पुण्याहः । एकाहः । पुण्यसुदिनाभ्यामह्नः क्लीबतेति कौमुद्याम् । पुण्येति त्यक्तोत्तमग्रहणमुपान्त्यस्यापि ग्रहणार्थम् ।

तेनोत्तमा(न संख्याता)हः सिध्यति ॥

राजाहःसखिभ्यष्टच् ॥ ९१ ॥

राजाद्यन्तात्तत्पुरुषाट्टच् स्यात्। महाराजः। मद्रराजः। उत्तमाहः। राजसखः। राजेति पुंसो ग्रहणान्नेह। मद्राणां राज्ञी मद्रराज्ञी ॥

गोरतद्धितलुकि ॥ ९२ ॥

गोन्तात्पुरुषाट्टच् समसान्तः न तु तद्धितलुकि। परमगवः। अतद्धितलुकि किम्। पञ्चभिर्गोभिः क्रीतः पञ्चगुः। तेन क्रीत(५।१।३७)मिति ठकोध्यर्धपूर्वे(५।१।२८)ति लुक्। तद्धितेति किम्। सुब्लुकि मा भूत्। राजगवमिच्छति राजगवीयति। लुकि किम्। तद्धिते मा भूत्। पञ्चभ्यो गोभ्य आगतं पञ्चगवरूप्यम् ॥

अग्रयाख्यायामुरसः ॥ ९३ ॥

उरोन्तात्तत्पुरुषाट्टच् स्यात् श्रैष्ठ्ये। अश्वानामुरः अश्वोरसम्। मुख्योश्व इत्यर्थः। श्रैष्ठ्ये किम्। देवदत्तोरः ॥

अनोश्मायःसरसां जातिसंज्ञयोः ॥ ९४ ॥

एतदन्तात्तत्पुरुषाट्टच् जातौ संज्ञायां च। उपानसम्। अमृताश्मः। कालायसम्। मण्डूकसरसम्। इति जातिः ॥ महानसम्। पिण्डाश्मः। लोहितायसम्। जलसरसम्। इति संज्ञा। जातिसंज्ञयोः किम्। सदनः। सदश्मा। सदयः। सत्सरः ॥

ग्रामकौटाभ्यां च तक्ष्णः ॥ ९५ ॥

आभ्यां तक्ष्णष्टच् स्यात्। ग्रामस्य तक्षा ग्रामतक्षः। कुट्यां भवः कौटः। स चासौ तक्षा च कौटतक्षः। आभ्यां कि-

म् । राजतक्षा ॥

अतेः शुनः ॥ ९६ ॥

अतेः पराच्छुनष्टच् स्यात् । अतिश्वो वराहः । अतिश्वी शिवा ॥

उपमानादप्राणिषु ॥ ९७ ॥

प्राणिवर्जादुपमानाच्छुनष्टच् स्यात् । आकर्षः श्वेव आकर्षश्वः । उपमितसमासः । उपमानात्किम् । अश्वा लोष्टः । अप्राणिषु किम् । वानरः श्वेव वानरश्वा ॥

उत्तरमृगपूर्वाच्च सक्थ्नः ॥ ९८ ॥

एभ्यः सक्थ्नष्टच् स्यात् उपमानाच्च । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । उपमानात्फलकसक्थम् ॥

नावो द्विगोः ॥ ९९ ॥

नौशब्दान्ताद्विगोष्टच् स्यात् । द्विनावम् । द्विनावप्रियः । द्वाभ्यां नौभ्यामागतः द्विनावरूप्यः । अतद्धितलुकीत्येव । पञ्चभिर्नौभिः क्रीतः पञ्चनौः ॥

अर्धाच्च ॥ १०० ॥

अर्धात्परतो नावष्टच् स्यात् । अर्धनावम् । क्लीबत्वं लोकात् ॥

खार्याः प्राचाम् ॥ १०१ ॥

द्विगोरर्धाच्च खार्याष्टज्वा स्यात् । द्विखारम् । द्विखारी । अर्धखारम् । अर्धखारी ॥

द्वित्रिभ्यामञ्जलेः ॥ १०२ ॥

आभ्यामञ्जलेष्टज्वा स्यात् । द्वौ अञ्जली समाहृते द्व्यञ्जलम् । द्व्यञ्जलि । त्र्यञ्जलम् । त्र्यञ्जलि । द्विगोरित्येव । द्वयोर-

ञ्जलिः द्व्यञ्जलिः। अतद्धितलुकीत्येव। द्वाभ्यामञ्जलिभ्यां क्रीतः द्व्यञ्जलिः॥

अनसन्तान्नपुंसकाच्छन्दसि॥ १०३॥

अन्नन्तादसन्ताच्च क्लीबात्तत्पुरुषाट्टच् स्याच्छन्दसि। हस्तिचर्मे जुहोति देवच्छन्दसानि। अनसन्तात्किम्। बिलदारुणि जुहोति। क्लीबात्किम्। सुत्रामाणं पृथिवीम्॥

वेत्येव॥

ब्रह्मसामम्। ब्रह्मसाम। देवच्छन्दसम्। देवच्छन्दः॥

ब्रह्मणो जानपदाख्यायाम्॥ १०४॥

जनपदे भवो जानपदः। भावप्रधानो निर्देशः। ब्रह्मान्तात्तत्पुरुषाट्टच् स्यात् जानपदत्वद्योतकं चेदुपपदम्। सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः। सप्तमी(२।१।४०)ति योगविभागात्समासः। जानपदाख्यायां किम्। देवब्रह्मा नारदः॥

कुमहद्भ्यामन्यतरस्याम्॥ १०५॥

आभ्यां ब्रह्मणष्टज्वा स्यात्। कुब्रह्मः। कुब्रह्मा। महाब्रह्मः। महाब्रह्मा। ब्राह्मणपर्यायो ब्रह्मशब्दः॥

द्वन्द्वाच्चुदषहान्तात्समाहारे॥ १०६॥

तत्पुरुषाधिकारो गतः। चवर्गान्तादषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे। वाक्त्वचम्। श्रीस्रजम्। शमीदृषदम्। वाग्विप्रुषम्। छत्रोपानहम्। द्वन्द्वात्किम्। पञ्च वाचः समाहृताः पञ्चवाक्। चुदषहान्तात्किम्। वाक्समित्। समाहारे किम्। प्रावृट्छरदौ॥

अव्ययीभावे शरत्प्रभृतिभ्यः॥ १०७॥

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे। उपशरदम्।

प्रतिविपाशम् ॥ प्रतिपरसमनुभ्योऽक्ष्णः ॥ प्रत्यक्षम् । परोक्षम् । परोक्षे लिडिति निपातनादोत्वम् । समक्षम् । अन्वक्षम् ॥ जराया जर च ॥ उपजरसम् ॥

अनश्च ॥ १०८ ॥

अन्नन्तादव्ययीभावाट्टच् स्यात् । उपराजम् । अध्यात्मम् ॥

नपुंसकादन्यतरस्याम् ॥ १०९ ॥

अन्नन्तं यत्क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात् । उपचर्मम् । उपचर्म ॥

नदीपौर्णमास्याग्रहायणीभ्यः ॥ ११० ॥

एतदन्तादव्ययीभावाट्टज्वा स्यात् । उपनदम् । उपनदि । उपपौर्णमासम् । उपपौर्णमासि । उपाग्रहायणम् । उपाग्रहायणि ॥

झयः ॥ १११ ॥

झयन्तादव्ययीभावाट्टज्वा स्यात् । उपसमिधम् । उपसमित् ॥

गिरेश्च सेनकस्य ॥ ११२ ॥

गिर्यन्तादव्ययीभावाट्टज्वा स्यात् । उपगिरम् । उपगिरि । सेनकग्रहणं पूजार्थम् ॥

बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ॥ ११३ ॥

स्वाङ्गार्थयोरनयोः षच् स्यात् बहुव्रीहौ । दीर्घसक्थः । विकलाक्षः । जलजाक्षी । बहुव्रीहौ किम् । परमसक्थि । सक्थ्यक्ष्णोः किम् । दीर्घबाहुः । स्वाङ्गात्किम् । दीर्घसक्थि शकटम् ।स्थूलाक्षिरिक्षुः । आपादसमाप्तेर्बहुव्रीहावधिकारः ॥

अङ्गुलेर्दारुणि ॥ ११४ ॥

अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्याद्दारुणि । पञ्चाङ्गुलं दारु । अङ्गुलिसदृशावयवं धान्यानां विक्षेपकारणं काष्ठमुच्यते दारुणि किम् । पञ्चाङ्गुलिर्हस्तः ॥

द्वित्रिभ्यां ष मूर्ध्नः ॥ ११५ ॥

आभ्यां मूर्ध्न. षच्(षः) स्यात् बहुव्रीहौ । द्विमूर्धः। त्रिमूर्धः ॥

अप्पूरणीप्रमाण्योः ॥ ११६ ॥

पूरणप्रत्ययान्ताः स्त्रीलिङ्गाः पूरण्यः । पूरण्यन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् । कल्याणी पञ्चमी यासां रात्रीणां कल्याणीपञ्चमा रात्रयः । स्त्री प्रमाणी येषां स्त्रीप्रमाणाः कुटिम्बिनः । स्त्रीप्रधाना इत्यर्थः । अपूरणीप्रियादि(६।३।३४)-ष्विति पुंवद्भावप्रतिषेधोऽप्प्रत्ययश्च प्रधानपूरण्यामेव । यत्र पूरण्या अन्यपदार्थत्वं तत्र प्राधान्यम् । कल्याणीपञ्चमा रात्रय इत्यत्र रात्रिः पूरणी वाच्ये(वार्त्तिकम )ति प्राधान्यम् । तेनेह पुंवद्भावः अप्प्रत्ययाभावश्च कल्याणपञ्चमीकः पक्षः ॥

नेतुर्नक्षत्रेप् वाच्यः ॥

मृगो नेता आसां रात्रीणां मृगनेत्राः । पुष्यनेत्राः । नक्षत्रे किम् । देवदत्तनेतृकः ॥

छन्दस्यनक्षत्रेपि ॥

बृहस्पतिनेत्रा देवाः । सोमनेत्रा मासाः ॥

मासाद्भृतिप्रत्ययपूर्वाट्ठञ्वाच्यः ॥

पञ्चास्य भृतयः । सोस्यांशवस्नभृतयः(५।१।५६) । संख्याया अतिशदन्तायाः कन्(५।१।२२) । पञ्चको मासः । पञ्चको मासोस्य पञ्चकमासिकः कर्मकरः ॥

अन्तर्बहिर्भ्यां च लोम्नः ॥ ११७ ॥

आभ्यां लोम्नोप् स्यात् । अन्तर्लोम[। वहिर्लोमः] ॥

अङ्नासिकायाः संज्ञायां नसं चास्थूलात् ॥ ११८ ॥

नासिकान्ताद्बहुव्रीहेरच् स्यान्नासिकाशब्दश्च नसं प्राप्नोति संज्ञायां न तु स्थूलपूर्वात् । द्रुरिव नासिकास्य द्रुणसः । पूर्वपदात्संज्ञायामगः(८।४।३)इति णत्वम् । संज्ञायां किम् । तुङ्गनासिकः । अस्थूलात्किम् । स्थूलनासिकः ॥

खुरखराभ्यां वा नस् ॥

खुरणाः । खरणाः । पक्षे अच् । खुरणसः । खरणसः ॥

शितिना अहिना अर्चना इति निगम इष्यते ॥

अर्चायां इव नासिकास्य । ङ्यापो(६।३।६३)रिति ह्रस्वः ॥

उपसर्गाच्च ॥ ११९ ॥

उपसर्गान्नासिकाया अच् स्यान्नसमादेशश्चासंज्ञायामपि । उन्नता नासिकास्य उन्नसः । प्रणसः । उपसर्गाद्बहुल(८।४।२८)मिति णत्वम् ॥

वेर्ग्रो वक्तव्यः ॥

विगता नासिकास्य विग्रः ॥

सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ॥ १२० ॥

एतेऽजन्ता बहुव्रीहौ निपात्यन्ते । शोभनं कर्म प्रातः श्वो दि[वा] वास्य सुप्रातः सुश्वः सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रोऽश्रयोऽस्य चतुरश्रः । एण्या इव अजस्येव प्रोष्ठस्येव पादावस्य एणीपदः अजपदः प्रोष्ठपदः । प्रोष्ठो गौः

### नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ॥ १२१ ॥

एभ्यो हलिसक्थ्योरज्वा स्यात् बहुव्रीहौ । अविद्यमानो हलिर्यस्य अहलः अहलिः । असक्थः असक्थिः । एवं दुःसुभ्याम् ॥

### नित्यमसिच् प्रजामेधयोः ॥ १२२ ॥

नञ्दुःसुभ्यः प्रजामेधयोर्नित्यमसिच् स्याद्बहुव्रीहौ । अप्रजाः । दुष्प्रजाः । सुप्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः । नित्यग्रहणादल्पमेधाः ॥

### बहुप्रजाश्छन्दसि ॥ १२३ ॥

निपातोयम् । बहुप्रजा निर्ऋतिमाविवेश । छन्दसि किम् । बहुप्रजः ॥

### धर्मादनिच्केवलात् ॥ १२४ ॥

केवलात्पदाद्यो धर्मशब्दः केवलस्तदन्ताद्बहुव्रीहेरनिच् स्यात् । कल्याणधर्मा । केवलात्किम् । परमः स्वधर्मो यस्य परमः स्वो धर्मो यस्येति वा परमस्वधर्मः ॥

### जम्भा सुहरिततृणसोमेभ्यः ॥ १२५ ॥

जम्भेति स्वादिभ्यः परस्य जम्भशब्दस्यानिजन्तो निपातः । शोभनो जम्भोऽस्य सुजम्भा । हरितजम्भा । तृणजम्भा । सोमजम्भा । जम्भो दन्तोऽभ्यवहार्यो वा । एभ्यः किम् । पतितजम्भः ॥

### दक्षिणेर्मा लुब्धयोगे ॥ १२६ ॥

अयं निपात्यते । दक्षिणमीर्ममस्य दक्षिणेर्मा मृगः । व्या-

येन कृतग्रण इत्यर्थः । लुब्धयोगे ।कम् । वक्षियोगे शकटम् ॥

इच् कर्मव्यतिहारे ॥ १२७ ॥

कर्मव्यतिहारबहुव्रीहेरिच् स्यात्समासान्तः । तिष्ठद्गुप्रभृतिषु पाठात्तदन्तमव्ययम् । केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तम् केशाकेशि । दण्डादण्डि ॥

द्विदण्ड्यादिभ्यश्च ॥ १२८ ॥

द्विदण्ड्यादय इच् प्रत्ययान्ता निपाताः । सूत्रे तादर्थ्ये चतुर्थी । द्विदण्ड्यादिसिद्ध्यर्थमिच्प्रत्ययो वाच्य इत्यर्थः । द्वौ दण्डावस्मिन्निति द्विदण्डि प्रहरणम् । द्विमुसलि । अर्थविशेष एव । नेह । द्विदण्डा शाला । तत्पुरुषा अप्यत्र पठ्यन्ते । निकुच्य कर्णौ धावति निकुच्यकर्णि । मोह्य पादौ मोह्यपादि । मयूरव्यंसकादित्वात्समासः ॥

प्रसंभ्यां जानुनोर्ज्ञुः ॥ १२९ ॥

आभ्यां जानुशब्दे ज्ञुरादेशः स्याद् बहुव्रीहौ । प्रगते जानुनी अस्य प्रज्ञुः । संज्ञुः । जानुनोरिति द्विवचनं षष्ठीप्रतिपत्त्यर्थम् । अन्यथा पञ्चमीसन्देहेन ज्ञोः प्रत्ययत्वसन्देहः स्यात् ॥

ऊर्ध्वाद्विभाषा ॥ १३० ॥

जानुनोर्ज्ञुः । ऊर्ध्वे जानुनी अस्य ऊर्ध्वज्ञुः ऊर्ध्वजानुः ॥

ऊधसोनङ् ॥ १३१ ॥

ऊधसन्ताद्बहुव्रीहेरनङादेशः स्यात् । कुण्डोध्नी ॥

स्त्रियामेवानङ् ॥

नेह । महोधाः पर्जन्यः ॥

धनुषश्च ॥ १३२ ॥

धनुरन्ताद्बहुव्रीहेरनङ् स्यात्। शार्ङ्गधन्वा ॥

वा संज्ञायाम् ॥ १३३ ॥

शतधनुः। शतधन्वा ॥

जायाया निङ् ॥ १३४ ॥

जायान्ताद्बहुव्रीहेर्निङादेशः स्यात्। यलोपः पुंवद्भावः। युवजानिः ॥

गन्धस्येदुत्पूतिसुसुरभिभ्यः ॥ १३५ ॥

एभ्यो गन्धस्येदादेशः स्यात् बहुव्रीहौ। उद्गतो गन्धोस्य उद्गन्धिः। पूतिगन्धिः। सुगन्धिः। सुरभिगन्धिः। द्रव्यवाचि-गन्धशब्दो बहुवचनान्तः। गन्धस्येत्येकवचननिर्देशान्नेह। शोभना गन्धा अस्य सुगन्ध आपणिकः ॥

अल्पाख्यायाम् ॥ १३६ ॥

अल्पत्वकथने गन्धस्य प्राग्वत्। सूपोऽल्पोऽस्मिन्निति सू-पगन्धि भोजनम्। अल्पपर्यायो गन्धशब्दः ॥

उपमानाच्च ॥ १३७ ॥

उपमानाद्गन्धस्य प्राग्वत्। कुमुदस्येव गन्धोस्य कुमु-दगन्धिः ॥

पादस्य लोपोऽहस्त्यादिभ्यः ॥ १३८ ॥

हस्त्यादिवर्जादुपमानात्पादस्यान्तलोपः स्याद्बहुव्रीहौ। व्याघ्रस्येव पादावस्य व्याघ्रपात्। सिंहपात्। अहस्त्यादिभ्यः किम्। हस्तिपादः ॥

कुम्भपदीषु च ॥ १३९ ॥

एषु पादस्यान्तलोपो ङीप् च निपात्यते स्त्रियाम् । पादः पत् (६।४।१३०) । कुम्भपदी । शतपदी । स्त्रियां किम् । कुम्भपदः ॥

संख्यासुपूर्वस्य ॥ १४० ॥

एतत्पूर्वस्य पादस्यान्तलोपः स्याद्बहुव्रीहौ । द्विपात् । सुपात् ॥

वयसि दन्तस्य दतृ ॥ १४१ ॥

संख्यासुपूर्वस्य दन्तस्य दतृ आदेशः स्याद्बहुव्रीहौ वयसि द्योत्ये । द्विदन् चतुर्दन् सुदन् कुमारः । वयसि किम् । द्विदन्तः करी । सुदन्तो दाक्षिणात्यः ॥

छन्दसि च ॥ १४२ ॥

अनयोर्थमसंख्यापूर्वपदार्थं चेदम् । छन्दसि दन्तस्य दतृ स्याद्बहुव्रीहौ । उभयतोदतः ॥

स्त्रियां संज्ञायाम् ॥ १४३ ॥

दन्तस्य दतृ स्यात् स्त्रियां बहुव्रीहौ संज्ञायाम् । अयोदती । संज्ञायां किम् । समदन्ती । नासिकोदरे (४।१।५५) त्यादिना ङीप् ॥

विभाषा श्यावारोकाभ्यां ॥ १४४ ॥

आभ्यां परस्य दन्तस्य दतृ वा स्याद्बहुव्रीहौ संज्ञायाम् । श्यावदन् । श्यावदन्तः । अरोकदन् । अरोकदन्तः । संज्ञायां किम् । श्यावदन्तः । अरोकदन्तः । अरोको निर्दीप्तिः ॥

अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ॥ १४५ ॥

एभ्यो दन्तस्य दतृ वा स्यात् बहुव्रीहौ । कुड्मलाग्रदन् ।

कुद्मलाग्रदन्तः । शुद्ध्रदन् । शुद्धदन्तः इत्यादि । चकारादहिदन् अहिदन्तः मूषिकदन् मूषिकदन्तः ॥

ककुदस्यावस्थायां लोपः ॥ १४६ ॥

ककुदस्यान्तलोपः स्यादवस्थायां द्योत्यायां बहुव्रीहौ । असञ्जातककुत् । बालक इत्यर्थः । अवस्थायां किम् । श्वेतककुदः ॥

त्रिककुत्पर्वते ॥ १४७ ॥

अयं निपात्यते । त्रीणि ककुदाकाराणि शृङ्गाण्यस्य त्रिककुत्पर्वतः । पर्वतविशेषसंज्ञेयम् । त्रिककुदोन्यः ॥

उद्विभ्यां काकुदस्य ॥ १४८ ॥

आभ्यां काकुदस्यान्तलोपः स्याद्बहुव्रीहौ । उत्काकुत् । विकाकुत् । काकुदं तालु ॥

पूर्णाद्विभाषा ॥ १४९ ॥

काकुदस्य लोपः । पूर्णं काकुदमस्य पूर्णकाकुत् पूर्णकाकुदः ॥

सुहृद्दुर्हृदौ मित्रामित्रयोः ॥ १५० ॥

सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । शोभनं हृदयं यस्य सुहृन्मित्रम् । दुर्हृदमित्रः । अन्यत्र सुहृदयः । दुर्हृदयः ॥

उरःप्रभृतिभ्यः कप् ॥ १५१ ॥

एतदन्ताद्बहुव्रीहेः कप् स्यात्समासान्तः । व्यूढोरस्कः । प्रियसर्पिष्कः । अत्र पुमान् अनड्वान् पयः नौः लक्ष्मीरिति त्रिभक्त्यन्तपाठस्यैतत्प्रयोजनम् । एकवचनान्तानामयं नित्यः कप् । द्विबहुवचनान्तानां तु शेषाद्विभाषे(५।४।१५४)ति विकल्प एव ।

द्विपुमान् । द्विपुंस्कः । त्रिपुमान् । त्रिपुंस्कः इत्यादि ॥

इनः स्त्रियाम् ॥ १५२ ॥

इन्नन्ताद्बहुव्रीहेः कप् स्यात् स्त्रियाम् । बहुदण्डिका । स्त्रियां किम् । बहुदण्डी बहुदण्डिकः ॥

नद्यृतश्च ॥ १५३ ॥

नद्यन्तादृदन्ताच्च बहुव्रीहेः कप्स्यात् । बहुकुमारीकः । बहुकर्तृकः ॥

शेषाद्विभाषा ॥ १५४ ॥

यस्माद्बहुव्रीहेः समासान्तो नोक्तस्तस्मात्कब्वा स्यात् । बहुदण्डी । बहुदण्डिकः ॥

न संज्ञायाम् ॥ १५५ ॥

संज्ञायां बहुव्रीहेः कप् न स्यात् । विश्वे देवा अस्य विश्वेदेवः । विश्वयशाः ॥

ईयसश्च ॥ १५६ ॥

ईयसन्ताद्बहुव्रीहेः कप् न स्यात् । बहवः श्रेयांसोऽस्य बहुश्रेयान् । बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी । ईयसो बहुव्रीहेर्नेति (वार्तिकम्) इति ह्रस्वोऽपि न ॥

वन्दिते भ्रातुः ॥ १५७ ॥

भ्रात्रन्तात्कप् न स्यात् पूजायाम् । शोभनो भ्रातास्य सुभ्राता । अन्यत्र मूर्खभ्रातृकः ॥

ऋतश्छन्दसि ॥ १५८ ॥

ऋदन्ताद्बहुव्रीहेश्छन्दसि कप् न स्यात् । हता मातास्य हतमाता ॥

नाडीतन्त्र्योः स्वाङ्गे ॥ १५९ ॥

स्वाङ्गवाचिनाडीतन्त्र्यन्ताद्बहुव्रीहेः कप् न स्यात् । बह्व्यः नाड्योऽस्य बहुनाडिः कायः । बहुतन्त्रिर्ग्रीवा । धमनीवचन-स्तन्त्रीशब्दः । स्वाङ्गे किम् । बहुनाडीकः स्तम्भः । बहुतन्त्रीका वाणी ॥

निष्प्रवाणिश्च ॥ १६० ॥

कप्लन्दीलक्षण कवभावो निपात्यते । प्रवयन्तेस्यामिति प्रवाणी तन्तुवायशलाका । निर्गता प्रवाणी अस्य निष्प्रवाणिः पटः । अपनीतशलाकः समाप्तवानक्रियः प्रत्यग्रोत्पन्न उच्यते ॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यश्रीराघवसोमयाजिकुलावतंस-श्रीतिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ व्याकरणमिताक्ष-रायां पञ्चमस्याध्यायस्य चतुर्थः पदः ।
अध्यायश्च समाप्तः* ॥

* एतदनन्तरं मातृकायाम् "श्रीशारदाम्बायै नमः ॥ पञ्चाध्या-य्या ग्रन्थसंख्या ॥ ५००० ॥" इति वर्तते ।

## एकाचो द्वे प्रथमस्य ॥ १ ॥

प्राक्संप्रसारणादयमधिकारः । लिटि धातो(६।१।८)रित्यादौ वक्ष्यमाणं द्वित्वं धात्ववयवस्य प्रथमस्यैकाचः स्यात् । जजागार ॥

एकाजिति बहुव्रीहिः ॥

समुदायोऽन्यपदार्थः । समुदायावयवमभिधौ समुदायस्यैव द्विर्वचनं नावयवस्य । अन्यथा अनेनिजुरित्यत्र निशब्दमात्रद्वित्वे निनि(नेनी)त्यस्याभ्यस्तत्वे जकारेण व्यवधानादभ्यस्तात्जुस् न स्यात् । समुदायद्वित्वे जकारस्याप्यभ्यस्तप्रवेशादिष्टसिद्धिः ॥

## अजादेर्द्वितीयस्य ॥ २ ॥

अजादेर्धातोर्द्वितीयावयवस्यैकाचो द्वे स्तः । पूर्वापवादः । अटिटिषति । अजादेरिति कर्मधारयात्पञ्चमीव्याख्याने द्वितीयस्येति स्पष्टार्थम् ॥

## न न्द्राः संयोगादयः ॥ ३ ॥

द्वितीयस्यैकाचोऽवयवाः संयोगादयो नदरा द्विर्नोच्यन्ते । इन्दिदिषति । अड्डिडिषति । अड्ड अभियोग इत्ययं दकारोपधः । अर्चिचिषति । न्द्राः किम् । ईचिक्षिषते । ईक्ष दर्शने । संयोगादय किम् । प्राणिणिषति । उभौ साभ्यासस्ये(८।४।२४)ति णत्वम् । द्वितीयस्य किम् । दिद्रासति । कर्मधारयाजादेरित्यनुवर्तनादिन्द्रीयिषतीत्यत्राचोऽनन्तरस्य नस्य न द्वित्वम् । द्वितीयस्य

तु दकारस्य द्वित्वमेव । बकारस्यापि न द्वित्वम् । उब्जिजिषति । उब्ज आर्जवे । बकारोपधोयम् । उाब्जतौ(?) उब्जितुमिति यथा स्यात् । अन्ये तु दकारोपधं पठन्ति । अभ्युद्गः समुद्गः इत्याद्यर्थम् । तत्रोब्जितेति सिध्यर्थं दस्य बत्वं वाच्यम् ॥

यकारपरस्य न द्वित्वनिषेधः ॥

अर्णयते ॥

ईर्ष्यतेस्तृतीयस्य द्वित्वं वाच्यम् ॥

व्यंजनस्यैकाचो वा । ईर्ष्यियिषति । ईर्ष्यिषिषति ॥

कण्ड्वादीनां तृतीयस्यैकाचः ॥

कण्डूयियियिषति ॥

नामधातोस्तृतीयस्यैकाचो वा ॥

अश्वीयितुमिच्छति अश्वीयियिषति ॥ नामधातोर्यथेष्टं द्वित्वमिति केचित् ॥ पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति ॥

## पूर्वोऽभ्यासः ॥ ४ ॥

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् । पापच्यते । अभ्यासप्रदेशा अत्र लोपोऽभ्यासस्ये(७।४।५८)त्येवमादयः॥

## उभे अभ्यस्तं ॥ ५ ॥

द्वे इति वर्तमाने उभग्रहणं समुदायप्रतिपत्त्यर्थम् । अत्र ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः । ददत् । उभे किम् । अभ्यस्तानामादि(६।१।१८९)रिति समुदाये यथा स्यात् । प्रत्येकं पर्यायेण वा मा भूत् ॥

## जक्षित्यादयः षट् ॥ ६ ॥

जक्षिति पृथक्पदम् । इत्यादय इसत्रेतिशब्देन प्रकृता ज-

क्षिरेव पराम्रुश्यते इति जक्षधातुरादिर्येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिः । षड्धातवोऽन्ये जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः । जक्षत् । जाग्रत् । दरिद्रत् । चकासत् । शासत् । दीध्यत् । वेव्यत् ॥

## तुजादीनां दीर्घोऽभ्यासस्य ॥ ७ ॥

अविहितलक्षणाभ्यासदीर्घास्तुजादयः । एषामभ्यासस्य दीर्घः साधुः । तूतुजानः । मामहानः । तुजिमह्योर्लिटः कानच् । आने परतश्छन्दसि चैतदिष्यते । नेह । तुतोज ॥

## लिटि धातोरनभ्यासस्य ॥ ८ ॥

लिटि परेऽनभ्यासस्य धात्ववयवस्य प्रथमस्य द्वितीयस्य वैकोचा द्वे स्तः । पपाच । प्रोर्णुनाव । वाच्य ऊर्णोर्णुवद्भाव इति वचनादिजादे(३।१।३६)रिति नाम । लिटि किम् । कर्ता । धातोः किम् । विशृण्विरे । छन्दस्युभयथे(३।४।११७)ति लिटः सार्वधातुकत्वात् श्रुवः शृ चे(३।१।७४)ति श्नुप्रत्ययः । लिटस्तझयोरेशिरेच्(३।४।८१) । हुश्नुवो(६।४।८७)रिति यण् । धातुग्रहणाद्विकरणस्य न । विकरणेन व्यवधानाद्धातोर्न । अनभ्यासस्य किम् । कृष्णो नोनाव । नोनूयतेर्यङ्लुकि रूपम् ॥

द्वित्वं छन्दसि वेति वाच्यम् ॥

जागार ॥

## सन्यङोः ॥ ९ ॥

षष्ठ्यन्तमिदम् । सन्नन्तस्य यङन्तस्य च धातोरनभ्यासस्य प्रथमस्य द्वितीयस्य वैकाचो द्वे स्तः । पिपक्षति । अटिटिषति । पापच्यते । अदाट्यते । अनभ्यासस्य किम् । जुगुप्सिषते ॥

श्लौ ॥ १० ॥

श्लौ सत्यनभ्यासस्य धात्ववयवस्य द्वे स्तः । जुहोति ॥

चङि ॥ ११ ॥

चङि परेनभ्यासस्य धात्ववयवस्यैकाचो द्वितीयस्य प्रथमस्य वा यथायोगं द्वे स्तः । अपीपचत् । आटिटत् ॥

दाश्वान् साह्वान् मीढ्वांश्च ॥ १२ ॥

एते निपाताः सर्वत्र । दाशृ दान इत्यस्य क्वसावद्वित्वमनिट्त्वं च । दाश्वांसो दाशुषः । षह मर्षण इत्यस्य परस्मैपदमुपधादीर्घत्वमद्वित्वमनिट्त्वं च । साह्वान् वलाहकः । मिह सेचन इत्यस्य उपधादीर्घत्वमद्वित्वमनिट्त्वं ढत्वं च । मीढ्वः स्तोकाय । वचनमतन्त्रम् ॥

कृञादीनां के द्वे स्त इति वाच्यम् ॥

चक्रम् । चिक्लिदम् । कृञः क्लिदेश्च घञर्थे कः ॥

चरिचलिपतिवदीनामच्याक् चाभ्यासस्य ॥

एषामच्प्रत्यये द्वित्वमभ्यासस्याक् चागमः । अभ्यासदीर्घमविधायागमविधानाद्धलादिशेषो न । चराचरः । चलाचलः । पतापतः । वदावदः ॥

वेति वाच्यम् ॥

चरः । चलः । पतः । वदः ॥

हन्तेर्घत्वं च ॥

अभ्यासहकारस्य । चात् द्वित्वमागागमः । द्वितीयस्याभ्यासाच्चे(७।३।५५)ति कुत्वम् । घनाघनः ॥

पाटेर्णिलुक् चोक् चाभ्यासस्य ॥

पाटेरचि णिलुक् द्वित्वमभ्यासस्य ऊगागमः । पाटूपटः ॥

## ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ॥ १३ ॥

अनयोरुत्तरपदयोः ष्यङः संप्रसारणं स्यात्तत्पुरुषे। कौमुदगन्ध्यायाः पुत्रः कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। कुमुदस्येव गन्धोऽस्य कुमुदगन्धिः। तस्यापत्यं(४।१।९२) स्त्रीत्वण्। तस्याणिञोरनार्षयोः(४।१।७८) इति ष्यङादेशः। तश्चाप्। अनेन संप्रसारणम्। पूर्वरूपत्वम्। संप्रसारणस्ये(६।३।१३९)ति दीर्घः। ष्यङः किम्। इभ्यापुत्रः। इभमर्हतीति दण्डादिभ्यो यः(५।१।६६)। पुत्रपत्योः किम्। कौमुदगन्ध्याकुलम्। तत्पुरुषे किम्। कौमुदगन्ध्या पतिरस्य कौमुदगन्ध्यापतिर्ग्रामः। पुत्रपत्योः केवलयोर्ग्रहणम्। नेह। कौमुदगन्ध्यापुत्रकुलम्। कौमुदगन्ध्यापरमपुत्रः। निर्दिश्यमानस्य(प) इति न्यायाद्वाराहीपतिरित्यत्र वस्य न संप्रसारणम्। स्त्रीप्रत्यये चानुपसर्जने न(प) इति प्रत्ययग्रहणे यस्मादितिपरिभाषानुपस्थानात्परमकारीषगन्धीपतिः। उपसर्जने तु अतिकौमुदगन्ध्यापुत्रः॥

## बन्धुनि बहुव्रीहौ ॥ १४ ॥

बन्धुशब्द उत्तरपदे ष्यङः संप्रसारणं स्याद्बहुव्रीहौ। बन्धुनीति शब्दस्वरूपापेक्षया क्लीबत्वम्। कौमुदगन्ध्या बन्धुरस्य कौमुदगन्धीबन्धुः। बहुव्रीहौ किम्। कौमुदगन्ध्याबन्धुः॥

मातच्मातृकमातृषु वेति वाच्यम्॥

अस्मादेव निपातनान्मातृशब्दस्याऽस्मिन्विषये मातजादेशः। चित्त्वं बहुव्रीहिस्वरबाधनार्थम्। मातृशब्दग्रहणात्कपोऽपि विकल्पः। कौमुदगन्ध्या माताऽस्य कौमुदगन्ध्यामातः। कौमुदगन्धीमातः। कौमुदगन्ध्यामातृकः। कौमुदगन्धीमातृकः। कौमुदगन्ध्यामाता। कौमुदगन्धीमाता॥

वचिस्वपियजादीनां किति ॥ १५ ॥

वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात्किति । उक्तः । सुप्तः । इष्टः । वपि । उप्तः । वहि । ऊढः । वसि । उषितः । वेञ् । ऊतः । व्येञ् । वीतः । ह्वेञ् । हूतः । वद । उदितः । श्वि । शूनः ॥ धात्वधिकारविहितप्रत्यय एव । नेह । वाचमिच्छतीति वाच्यति । एकदेशविकृतस्यानन्यत्वात्क्यजन्ता धातुत्वं न जहतीत्युक्तेश्च प्राप्तिः ॥

ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ॥ १६ ॥

एषां किति ङिति च संप्रसारणं स्यात् । गृहीतः । गृह्णाति । जीनः । ल्वादिभ्य(८।२।४४) इति निष्ठानत्वम् ॥ हलः(६।४।२)इति दीर्घः । प्वादीनां ह्रस्वः(७।३।८०) । जिनाति ॥ वेञो वयिः(२।४।४१) । ऊयतुः । ऊयुः । लिट्येव स इति ङित्युदाहरणाभावः ॥ विद्धः । विध्यति ॥ उशितवान् । उशन्ति ॥ विचितः । विचति । व्यचेः कुटादित्वमनसी-(१।२।२वा)ति वचनात् विचितव्यम् ॥ वृक्णः । ओदित-(८।२।४५)श्चेति निष्ठानः । वृश्चति ॥ पृष्टः । पृच्छति ॥ भृष्टः । भृज्जति ॥

लिट्यभ्यासस्योभयेषाम् ॥ १७ ॥

वच्यादीनां ग्रह्यादीनां चाभ्यासस्य संप्रसारणं स्याल्लिटि । अकिदर्थमिदम् । उवाच । सुष्वाप । इयाज । उवाप । जिज्यौ । उवायेत्यादि । अधिकारादेवोभयग्रहणे लब्धे उभयेषां ग्रहणं हलादिशेषात्पूर्वं संप्रसारणार्थम् । विव्याध । विव्याच ॥

स्वापेश्चङि ॥ १८ ॥

ण्यन्तस्य स्वपेश्चङि संप्रसारणं स्यात्। असूषुपत्। चङि किम्। स्वाप्यते ॥

स्वपिस्यमिव्येञां यङि ॥ १९ ॥

एषां यङि संप्रसारणं स्यात्। सोषुप्यते। सेसिम्यते। वेवीयते ॥

न वशः ॥ २० ॥

वष्टेर्यङि संप्रसारणं न स्यात्। वावश्यते ॥

चायः की ॥ २१ ॥

चायतेः की स्याद्यङि। चेकीयते। दीर्घोच्चारणं यङ्लुगर्थम्। चेकीतः ॥

स्फायः स्फी निष्ठायाम् ॥ २२ ॥

स्फायतेः स्फी स्यान्निष्ठायाम्। स्फीतम्। स्फीतवान् ॥

स्त्यः प्रपूर्वस्य ॥ २३ ॥

प्रपूर्वस्य स्त्यायतेष्ट्यायतेश्च संप्रसारणं स्यान्निष्ठायाम्। प्रस्तीतः। प्रस्तीतवान्। प्रस्तीमः। प्रस्त्योऽन्यतरस्यामि(८।२।५४)ति मः। प्रपूर्वस्येति किम्। संस्त्यानः। प्रस्य इति वाच्ये पूर्वग्रहणात् व्यवधानेपि। प्रसंस्तीतः ॥

द्रवमूर्तिस्पर्शयोः श्यः ॥ २४ ॥

द्रवकाठिन्ये स्पर्शे च वर्तमानस्य श्यैङ्गतावित्यस्य संप्रसारणं स्यान्निष्ठायाम्। शीनं घृतम्। घनीभूतमित्यर्थः। श्योऽस्पर्शे(८।२।४७) इति निष्ठानत्वम्। शीतः स्पर्शः। एतयोः किम्। संश्यानो वृश्चिकः ॥

प्रतेश्च ॥ २५ ॥

प्रतेः परस्य श्यैङः संप्रसारणं स्यात्पूर्वविषयादन्यत्रापि । प्रतिशीनः ॥

विभाषाभ्यवपूर्वस्य ॥ २६ ॥

एतत्पूर्वस्य श्यैङः संप्रसारणं वा स्यात् निष्ठायाम् । अभिशीनः । अभिश्यानः । अवशीनः । अवश्यानः । उभयत्र विभाषेयम् । अवशीनं घृतम् ॥

शृतं पाके ॥ २७ ॥

श्रातेर्ण्यन्तस्याण्यन्तस्य च शृभावो वा निपात्यते निष्ठायां पाके । व्यवस्थितविभाषात्वात् क्षीरहविषोर्नित्यम् । अन्यत्र न । शृतं क्षीरं हविर्वा । अन्यत्र श्राणा यवागूः श्रपिता वा ॥

प्यायः पी ॥ २८ ॥

ओप्यायी वृद्धावित्यस्य वा प्यादेशः स्यान्निष्ठायाम् । पीनः । अत्रापि व्यवस्थितविभाषात्वादनुपसर्गस्य नित्यम् । सोपसर्गस्य न भवत्येव । प्रप्यानः ॥

आङ्पूर्वस्यान्धूधसोरिष्टिः ॥

आपीनोऽन्धुः । आपीनमूधः ॥

लिड्यङोश्च ॥ २९ ॥

लिटि यङि च प्यायः पीभावः स्यात् । पिप्ये । पेपीयते ॥

विभाषा श्वेः ॥ ३० ॥

श्वयतेः संप्रसारणं वा स्याल्लिटि यङि च । शुशाव । शुशुवतुः । शिश्वाय । शिश्वियतुः ॥

यदा धातोर्न तदा अभ्यासस्यापि नेष्यते ॥

शोशूयते । शेश्वीयते । लिटि प्राप्ते यङ्यप्राप्ते विभाषेयम् ॥

णौ च संश्चङोः ॥ ३१ ॥

सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात्। संप्रसारणं तदाश्रितं च कार्यं बलवदिति वचनादादौ संप्रसारणम्। वृद्ध्यावादेशौ। ओः पुयणज्यपरे(७।४।८०) इति ज्ञापकादावादेशस्य स्थानिवत्त्वादुकारः। शुशावयिषति। शिश्वाययिषति। अशूशुवत्। अशिश्वियत्॥

ह्वः संप्रसारणम् ॥ ३२ ॥

सन्परे चङ्परे च णौ ह्वयतेः संप्रसारणं स्यात्। संप्रसारणस्य बलीयस्त्वान्न युक्। जुहावयिषति। अजूहवत्। पुनः संप्रसारणग्रहणं विभाषानिवृत्त्यर्थम्॥

अभ्यस्तस्य च ॥ ३३ ॥

अभ्यस्तप्रकृतेर्ह्वेरभ्यासात्पूर्वमेव संप्रसारणं स्यात्। जुहाव। जुहूषति। जोहूयते। योगविभागोऽभ्यस्तनिमित्तप्रत्ययव्यवधाने संप्रसारणाभावार्थः। ह्वायकमिच्छति ह्वायकीयति। तस्य सन्। जिह्वायकीयिषति॥

बहुलं छन्दसि ॥ ३४ ॥

ह्वयतेः संप्रसारणं वा स्याच्छन्दसि अनभ्यस्तस्यापि। हुवे देवीं सरस्वतीम्। ह्वेञो लडात्मनेपदोत्तमपुरुषैकवचने बाहुलके शपो लुकि संप्रसारणोवङौ। क्वचिन्न। ह्वयामि मरुतः।

चायः की ॥ ३५ ॥

बहुलं छन्दसीत्येव। निचिक्युः। लिट्युसि रूपम्। क्वचिन्न। अग्निर्ज्योतिर्निचाय्य॥

अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रि-

## तमाशीराशीर्ताः ॥ ३६ ॥

एते छन्दसि निपात्यन्ते । स्पर्ध संघर्षे इत्यस्य लङ्थाथामि द्विर्वचनं रस्य संप्रसारणमकारलोपश्च निपात्यते । यदपस्पृधेथाम् । अस्पर्धेथामिति भाषायाम् । यद्वा । अपपूर्वस्य स्पर्धेर्लङ्याथामि संप्रसारणमकारलोपश्च । अडभावश्छान्दसः । अर्च पूजायाम् अर्ह पूजायामित्यनयोर्लिट्युसि संप्रसारणमकारलोपश्च निपातनात् । द्वित्वम् । उरत्(७।४।६६) अत आदेः(७।४।७०) तस्मान्नुट् द्विहलः(७।४।८१) । [आनृचुः । आहुः ।] आनर्चुरानर्हुरिति भाषायाम् । चिच्युषे । च्युङो लिटि सेशब्दे परे अभ्यासस्य संप्रसारणमनित्त्वं च निपात्यते । चुच्युविषे इत्यस्यान्यत्र । त्यज हानावित्यस्य णल्यभ्यासस्य संप्रसारणम् । तित्याज । तत्याजेत्यन्यत्र । श्रीञ् पाक इत्यस्य निष्ठायां आभावः । श्रातास्त इन्द्र । श्रीणातेरेव ह्रस्वत्वम् । सोमो गौरी अधिश्रितः । तस्यैव श्रीणातेराङ्पूर्वस्य क्विपि निष्ठायां च शीरादेशो निष्ठानत्वाभावश्च । आशीरं(रा)दुहन्ति । आशीर्त ऊर्जम् ॥

## न संप्रसारणे संप्रसारणम् ॥ ३७ ॥

संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् । अत एव ज्ञापकादन्त्यस्य यण [पूर्वं]संप्रसारणम् । व्यध विद्धः । व्यच विचितः । यूनः ॥

ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि ॥

तिस्रो ऋचो अस्मिन्निति तृचं सूक्तम् । ऋक्पू(५।४।७४)रित्यच् समासान्तः । छन्दसि किम् । त्र्यृचं कर्म ॥

रयेर्मतौ छन्दसि वा ॥

रेवान् । रयिमान् ॥

लिटि वयो यः ॥ ३८ ॥

वयो यस्य न संप्रसारणं स्याल्लिटि । उवाय । लिड्ग्रहण-मुत्तरार्थम् ॥

वश्चास्यान्यतरस्यां किति ॥ ३९ ॥

वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः । ऊवुः । ऊयतुः । ऊयुः । किति किम् । उवाय ॥

वेञः ॥ ४० ॥

वेञो न संप्रसारणं स्याल्लिटि । प्राप्तिमात्रनिषेधः । ववौ । ववतुः । ववुः ॥

ल्यपि च ॥ ४१ ॥

वेञो न संप्रसारणं स्याल्ल्यपि । प्रवाय ॥

ज्यश्च ॥ ४२ ॥

जिनातेर्ल्यपि न संप्रसारणम् । प्रज्याय ॥

व्यश्च ॥ ४३ ॥ ४३ ॥

व्येञोपि प्राग्वत् । प्रव्याय ॥

विभाषा परेः ॥ ४४ ॥

अस्मात्परस्य व्येञो ल्यपि वा संप्रसारणम् । परिवीय । परिव्याय ॥

आदेच उपदेशेऽशिति ॥ ४५ ॥

उपदेशे एजन्तस्य धातोरेच आत्स्यान्न तु शिति । गाता । गातव्यम् । एचः किम् । कर्ता । उपदेशे किम् । चेता ।

अशिति किम् । गायति । शिदिति कर्मधारयः । तेन यस्मिन्विधिस्तदादावल्ग्रहणे(प) इतीत्संज्ञकशकारादिप्रत्यये निषेधलाभादेशि न निषेधः । जगे ॥

न व्यो लिटि ॥ ४६ ॥

व्येञ आत्वं न स्याल्लिटि । वृद्धिः । विव्याय ॥

स्फुरतिस्फुलत्योर्घञि ॥ ४७ ॥

एतयोरेच आत्वं स्यात् घञि । विस्फारः । विस्फालः ॥

क्रीङ्जीनां णौ ॥ ४८ ॥

एषामेच आत्वं स्याण्णौ । क्रापयति । अध्यापयति । जापयति ॥

सिध्यतेरपारलौकिके ॥ ४९ ॥

अस्यैच आत्वं स्यान्न तु पारलौकिकेऽर्थे । अन्नं साधयति । अदृष्टार्थे तु तपः सेधयति ॥

मीनातिमिनोतिदीङां ल्यपि च ॥ ५० ॥

मीञ् हिंसायां डुमिञ् प्रक्षेपणे दीङ् क्षये एषामन्तस्यात्वं स्यात् ल्यपि । चकाराद्शित्येज्निमित्तविषये । प्रमाता । प्रमाता । प्रमाय । प्रमाय । प्रदाता । प्रदाय ॥

विभाषा लीयतेः ॥ ५१ ॥

लीङ् श्लेषण इति दिवादिः । ली श्लेषणे इति क्र्यादिः । यका निर्देशादुभयोर्ग्रहणम् । एतयोरात्वं वा स्यात् ल्यप्येज्विषये च । विलाता । विलाता । विलेता । विलेता । विलाय । [विलाय] । विलीय । विलीय ॥

निमी[मि]लियां खलचोः प्रतिषेधः ॥

ईषन्निमयः निमयो वर्तते। ईषत्प्रमयः प्रमयो वर्तते। ईषद्विलयः विलयो वर्तते ॥

प्रलम्भनाभिभवयोर्लियो नित्यमात्वं णौ वाच्यम् ॥

बालमुल्लापयते। श्येनो वर्तिकामुल्लापयते ॥

खिदेश्छन्दसि ॥ ५२ ॥

खिद दैन्य इत्यस्यैव आत्वं वा स्याच्छन्दसि। चखाद चिखाद चिखेद। छन्दसि किम्। मां खेदयति ॥

अपगुरो णमुलि ॥ ५३ ॥

अपपूर्वस्य गुरी उद्यमन इत्यस्यैव आत्वं वा स्याण्णमुलि। अपगारमपगारम्। अपगोरमपगोरम्। आभीक्ष्ण्ये णमुल्। [अस्यपगारम्]अस्यपगोरं युध्यन्ते। द्वितीयायां चे(३।४।५३)ति णमुल् ॥

चिस्फुरोर्णौ ॥ ५४ ॥

एतयोरेव आत्वं वा स्याण्णौ। चापयति। चाययति ॥ स्फारयति। स्फोरयति ॥

प्रजने वीयतेः ॥ ५५ ॥

वी गतिप्रजनकान्त्यसनखादनेषु। अस्यैव आत्वं वा स्याण्णौ प्रजनर्थे। वापयति वाययति वा गाः पुरोवातः। गर्भं ग्राहयतीत्यर्थः। प्रजनो गर्भग्रहणम् ॥

बिभेतेर्हेतुभये ॥ ५६ ॥

अस्यैव आत्वं वा स्यात्प्रयोजकाद्भयं चेद्वाच्यम्। मुण्डो भापयते। भीषयते। भीस्म्योर्हेतुभय(१।३।६८)इत्यात्मनेपदम्। भियो हेतुभये षुक्(७।३।४०)। स च नात्वपक्षे। विभिया(भियः)

इतीकारप्रश्लेषादीकारान्तस्यैव पुग्विधानात् । हेतुभये किम् । कुञ्चिकयैनं भापयति । अत्र कुञ्चिकातो भयं न देवदत्तात्प्रयोजकात् ॥

नित्यं स्मयतेः ॥ ५७ ॥

स्मिङ् ईषद्धसने । अस्यैचो नित्यमात्वं स्याण्णौ हेतुभये । जटिलो विस्मापयते । हेतुभये किम् । कुञ्चिकयैनं विस्माययति । भयशब्देनात्र स्मितमुच्यते ऽनेकार्थत्वाद्धातूनाम् ॥

सृजिदृशोर्झल्यमकिति ॥ ५८ ॥

अनयोरमागमः स्याज्झलादावकिति । स्रष्टा । द्रष्टा । अस्राक्षीत् । अद्राक्षीत् । झलि किम् । सर्जनम् । अकिति किम् । दृष्टः । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानादिह न । विश्वसृड्भ्याम् । देवदृग्भ्याम् ॥

अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥ ५९ ॥

उपदेशेऽनुदात्तो य ऋदुपधस्तस्यामागमो वा स्याज्झलादावकिति । त्रप्ता । तर्प्ता । दर्प्ता । द्रप्ता । तृप दृपावनुदात्तोपदेशौ रधादिषु पठ्येते । अनुदात्तस्य किम् । वर्धा । वर्धुम् । वृहू उद्यमन इत्ययमुदात्तोपदेशः । ऊदित्त्वादिड्वा । ऋदुपधस्य किम् । भेत्ता । झलि किम् । तर्पणम् । अकिति किम् । तृप्तः ॥

शीर्षंश्छन्दसि ॥ ६० ॥

शीर्षन्निति शिरःशब्दसमानार्थकं शब्दान्तरम् छन्दसि निपात्यते । शीर्ष्णा सोमं क्रीतं हरन्ति । छन्दसि किम् । शिरः ॥

ये च तद्धिते ॥ ६१ ॥

यादौ तद्धिते शिरसः शीर्षन् स्यात् । शिरसि भवः शी-

पर्ण्यः स्वरः। शरीरावयवाच्चे(४।३।५५)ति यत्। ये चाभावकर्मणो(६।४।१६८)रिति प्रकृतिभावः। तद्धिते किम्। शिर इच्छति शिरस्यति॥

वा केशेषु॥

शीर्षण्याः केशाः शिरस्याः॥

## अचि शीर्षः॥ ५२॥

अजादौ तद्धिते शिरसः शीर्षादेशः। हस्तिशिरसोऽपत्यं हास्तिशीर्षिः। बाह्वादित्वादिञ्। स्थूलशिरस इदं स्थौलशीर्षम्। शीर्षन्नादेशे त्वन्नि(६।४।१६७)ति प्रकृतिभावः स्यात्। हास्तिशीर्षि ब्दस्य स्त्रियां वृद्धावणिञो(४।१।७८)रितिष्यङादेशे शिरःशब्देन ग्रहणात् ये च तद्धिते(६।१।६१) इति शीर्षन्नादेशे ये चाभावे(६।४।१६८)ति प्रकृतिभावे हास्तिशीर्षण्येति स्यात्। हास्तिशीर्ष्येति चेष्यते। तत्राणिञन्तात् ष्यङः परत्वपक्षे यस्येति लोपस्य स्थानिवत्वाद्व्यवधानमितीष्टसिद्धिः। आदेशपक्षे त्विष्टिः कार्या॥

## पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु॥ ६२॥

पाद दन्त नासिका मास हृदय निशा असृज् यूष दोष यकृच्छकृदुदक आसन इत्येतेषां क्रमात्पदादय आदेशाः स्युः शसादौ वा। पदः। पदा॥ दतः। दता॥ नसः॥ नसा। हृन्दि। हृदा॥ निशः। निशा॥ असानि। अस्ना॥ यूष्णः। यूष्णा॥ दोष्णः। दोष्णा॥ यकानि। यक्ना॥ शकानि। शक्ना॥ उदानि। उद्ना॥ आसानि। आस्ना॥ प्रभृतिशब्दस्य प्रकारार्थत्वादन्यत्रापि। शला दोषणी॥

मांसपृतनासानूनां मांस्पृत्स्नवो वाच्याः ॥

मांस्पचन्या । यस्पुग्ने पृत्सु(?) पृतनास्विति प्राप्ते । पृथिव्या अधिस्नुषु ॥

यत्तसक्षुद्रेषु नासिकाया नस् ॥

नस्यम् । नस्तः । नःक्षुद्रः ॥

यति वर्णनगरयोर्न ॥

नासिक्यो वर्णः । नासिक्यं नगरम् ॥

धात्वादेः षः सः ॥ ६४ ॥

धातोरादेः षस्य सः स्यात् । सिञ्चति । धात्विति किम् । षोडश । आदेः किम् । लषति ॥

सेक्सृप्सृस्तृसृजस्तृस्त्यान्ये दन्त्याजन्तसादयः ।

षोपदेशाः स्मृताः ष्वष्कस्विद्स्वदूस्वञ्जस्वपस्मिङः ॥

सुब्धातुष्ठिवुष्वष्कतीनां सत्वनिषेधः ॥

षण्डीयति । ष्ठीवति । ष्वष्कते । ष्ठिवेर्द्वितीयष्ठस्य थष्ठ्यते । तेन टेष्ठीव्यते तेष्ठीव्यत इत्यभ्यासे रूपद्वयसिद्धिः ॥

णो नः ॥ ६५ ॥

धातोरादेर्णस्य नः स्यात् । नयति । आदेः किम् । अणति । सुब्धातोर्न । णकारीयति ॥

णोपदेशास्त्वनृन्नर्दनाट्नाथ्नन्दक्नॄनृतः ॥

लोपो व्योर्वलि ॥ ६६ ॥

धातोरधातोश्च यकारवकारयोर्लोपः स्याद्वलि परे । दिव् दिदिवान् दिदिवांसौ । क्नूय् क्नूतम् । गोधाया ढ्रक्(४।१।१२९)। गौधेरः । पचेरन् । जीवे रदानुक्(उणा०) । जीरदानुः । स्रीवेर्मनिक्(उणा०)। अ(आ)स्रेमाणम् । उणादयो बहुल(३।३।१)-मिति बहुलग्रहणात् च्छ्वोः शूडि(६।४।१९)त्यूठ् न । व्योर्लोप इति

वाच्ये लोपो व्योरिति निर्दिशो व्योर्लोपाद्वलि लोपः पूर्वमिति ज्ञापनार्थः । तेन कण्डूयतेः क्विपि कण्डूः लोलूरित्यादिसिद्धिः । ग्रश्चादिपूपवेशसामर्थ्याद्वलि लोपो न ॥

वेरपृक्तस्य ॥ ६७ ॥

अपृक्तस्य वेर्लोपः स्यात् । क्विादीनां सामान्यग्रहणम् । ब्रह्महा । घृतस्पृक् । अर्धभाक् । अपृक्तस्य किम् । जागर्तेर्विमत्ययः । जागृविः ॥

हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ॥ ६८ ॥

हलन्तात् ङ्यन्तादावन्ताद्दीर्घाच्च परं सुतिसीत्येतदपृक्तं हल्लुप्यते । राजा । कुमारी । शिवा । हलन्तादेव तिस्योर्लोपः । अबिभः । अबिभः । भृञो लङि श्लौ भृञा(७।४।७६)मित्यभ्यासस्येत्वम् । इतश्चे(३।४।१००)तीकारलोपस्ततस्तिलोपः सिलोपश्च । हल्ङ्याब्भ्यः किम् । ग्रामणीः । दीर्घात्किम् । निष्कौशाम्बिः । अतिखट्वः । तिपा साहचर्यात्सिपो ग्रहणं न सिचः । अभैत्सीत् । अपृक्तं किम् । भिनत्ति । हल्किम् । बिभेद । न च संयोगान्तलोपेनैव सिद्धेर्हलन्ताल्लोपविधानमनर्थकम् । राजेत्यत्र संयोगान्तलोपस्यासिद्धत्वान्नलोपो न स्यात् । अबिभर्भवानित्यत्र रात्सस्ये(८।२।२४)ति नियमात्तिलोपो न स्यात् ॥

एङ्ह्रस्वात्संबुद्धेः ॥ ६९ ॥

एङन्तात् ह्रस्वान्ताच्च हल्लुप्यते सम्बुद्धेश्चेत् । हरे । शम्भो । राम । गौरि । कुण्डेत्यत्रातोऽमि पूर्वत्वे च मलोपः । हे कतरदित्यत्र टिलोपे ह्रस्वाभावान्न संबुद्धिलोपः । एङ्ग्रहणं सम्बुद्धिगुणस्य बलीयस्त्वात् ॥

शेश्छन्दसि बहुलम् ॥ ७० ॥

शेश्छन्दसि वा लोपः स्यात् । अग्ने त्रि । ते वाजिना ।

त्रीणि वाजिनानीति प्राप्ते ॥

## ह्रस्वस्य पिति कृति तुक् ॥ ७१ ॥

ह्रस्वान्तस्य धातोः पिति कृति तुगागमः स्यात् । अग्निचित् । प्रकृत्य । ह्रस्वस्य किम् । ग्रामणीः । पिति किम् । कृतम् । कृति किम् । पटुतरः । ग्रामणिकुलमित्यत्र ह्रस्वस्य बहिरङ्गत्वेनासिद्धत्वात्तुग्न ॥

## संहितायाम् ॥ ७२ ॥

अनुदात्तं पदमेकवर्ज(६।१।१५८)मित्येतत्पर्यन्तमधिकारोऽयम् ॥

## छे च ॥ ७३ ॥

ह्रस्वस्यच्छे तुक् स्यात् संहितायाम् । इच्छति । यच्छति । गच्छति । ह्रस्व एवागमी न तु तदन्तः । तेन चिच्छिदतुरित्यत्राभ्यासग्रहणेनावयवावयवस्य तुकोऽग्रहणाद्धलादिशेषेण न निवृत्तिः ॥

## आङ्माङोश्च ॥ ७४ ॥

एतयोश्छे तुक् । पदान्ताद्वे(६।१।७६)ति विकल्पापवादः । आच्छादयति । माच्छिदत् । ङिद्ग्रहणं किम् । आ छाया । मा छन्दः ॥

## दीर्घात् ॥ ७५ ॥

आच्छे तुक् । ह्रीच्छति । म्लेच्छति ॥

## पदान्ताद्वा ॥ ७६ ॥

दीर्घात्पदान्ताच्छे तुग्वा । शिवा छाया । शिवाच्छाया ॥

### विश्वजनादीनां छन्दसि वा तुक् ॥

विश्वजनस्य छ(जनछ)त्रम् । विश्वजनस्यच्छ(जनच्छ)त्रम् । न छायाम् । नच्छायाम् ॥

## इको यणचि ॥ ७७ ॥

इको यणादेशः स्यादचि संहितायाम्। दध्यत्र। म-ध्वत्र। कर्त्रर्थम्॥

इकः प्लुतपूर्वस्य यण् वाच्यः सवर्णदीर्घबाधनार्थम्॥

अमा३ इ इन्द्रः। अमा३यिन्द्रः। पटा३ उ उदकम्। पटा३ वुदकम्। इकः किम्। वागत्र। अचि किम्। दधि करोति। समसारणाचे(६।१।१०८)ति यावदचीत्यधिकारः॥

## एचोऽयवायावः ॥ ७८ ॥

एचः क्रमादय् अव् आय् आव् एते स्युरचि। हरये। वि-ष्णवे। नायकः। पावकः॥

## वान्तो यि प्रत्यये ॥ ७९ ॥

यादौ प्रत्यये परे ओदौतोरवाव् एतौ स्तः। गव्यम्। ना-व्यम्। वान्तः किम्। रायमिच्छति रैयति। यीति किम्। गो-भ्याम्। प्रत्यये किम्। गोयानम्॥

गोर्यूतौ छन्दसि ॥

गव्यूतिमुक्ततम्॥

अध्वपरिमाणे च॥

गव्यूतिः॥

## धातोस्तन्निमित्तस्यैव ॥ ८० ॥

यादौ प्रत्यये परे तन्निमित्तयोर्धातोरोदौतोः स्थाने वा-न्तादेशः। लव्यम्। अवश्यलाव्यम्। धातोः किम्। प्राति-पदिकस्यातन्निमित्तस्यापि। गव्यम्। तन्निमित्तस्य किम्। आ ऊयते। ओयते। औयत। लौयमानिः। धातोरेव तन्निमित्त-स्येति विपरीतनियमनिरासायैवकारः। बाभ्रव्यः॥

क्षय्यजय्यौ शक्यार्थे ॥ ८१ ॥

अत्र यादौ यान्तादेशो निपात्यते । क्षय्यम् । जय्यम् । शक्यार्थे किम् । क्षेयं जेयं मनः ॥

क्रय्यस्तदर्थे ॥ ८२ ॥

अत्रापि यति यान्तादेशो निपात्यते । क्रयार्थं प्रसारितं क्रय्यम् । क्रेयमन्यत् ॥

भय्यप्रवय्ये चच्छन्दसि ॥ ८३ ॥

भी वी इत्यनयोर्यति यान्तादेशो निपात्यते । बिभेत्यस्मादिति भय्यम् । बाहुलकादपादाने कृत्यः । वत्सतरी प्रवय्या । स्त्रियामेव । प्रवेयम् । छन्दसि किम् । भेयम् । प्रवेया ॥

हृदय्या आप उपसङ्ख्यानम् ।

हृदय्या आपः । भवे छन्दसि (४।४।११०) इति यत् ॥

एकः पूर्वपरयोः ॥ ८४ ॥

ख्यत्यात्(६।१।११२)दिति पर्यन्तमयमधिकारः । स्थानिद्वित्वादादेशद्वयप्रसक्ताविदमुच्यते । आद्गुणः(६।१।८७) । उपेन्द्रः । पूर्वपरग्रहणम् युगपदादेशप्रतीत्यर्थम् । सप्तमीपञ्चम्योर्युगपत्प्रकल्पकत्वाभावात् ॥

अन्तादिवच्च ॥ ८५ ॥

योयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत्स्यात् । कारूरित्यत्र ऊङैकादेशस्य प्रातिपदिकान्ततया तद्ग्रहणेन ग्रहणात्प्रातिपदिकादिति स्वाद्युत्पत्तिः । वृक्षादिस्त्रात्राकारस्य सुप्ग्रहणेन ग्रहणात्पदत्वम् ॥

वर्णाश्रयविधौ नान्तादिवत् ॥

तेन खट्वाभिरित्यत्रान्तवद्भावाभावाद्भिस ऐस । हेञो जुहा-

वेत्यत्र संप्रसारणपूर्वत्वस्य पराविवद्भावाभावादात औ णलो न । अस्य भ्यः । आटश्चे(६।१।९०)ति वृद्धिः एङः पदान्तादती (६।१।१०९)ति विधावादिवन्न । समुदायस्य स्थानित्वश्रवणादव-यवयोरानुमानिकं स्थानित्वमिति तदाश्रयकार्यप्राप्तये इदं सूत्रम् ॥

## षत्वतुकोरसिद्धः ॥ ८६ ॥

षत्वे तुकि च कर्तव्ये एकादेशोऽसिद्धः स्यात् । कोसिच-दित्यत्रैङः पदान्तादती(६।१।१०९)त्येकादशस्य परं मत्यादिव-द्भावादिण उत्तरस्यादेशसकारस्य षत्वं प्राप्तमसिद्धात्वान्न । ए-त(वं) योस्येत्यत्र मत्ययसकारस्य न षत्वम् । अधीत्येत्यत्रैकादे-शस्यासिद्धत्वाद्ध्रस्वस्ये(६।१।७१)ति तुक् सिध्यति ॥

## संप्रसारणङीट्सु सिद्धत्वं वाच्यम् ॥

ब्रह्महूपु । परपूर्वस्य सिद्धत्वात् षत्वम् । वृक्षेच्छत्रम् । वृक्षे छत्रम् । अपचेच्छत्रम् । अपचे छत्रम् । आङ्गुणस्य सिद्धत्वात्पदा-न्ताद्वे(६।१।७६)ति विकल्पसिद्धिः । अन्यथा ह्रस्वाश्रयो नित्य-स्तुक्स्यात् ॥

## आद्गुणः ॥ ८७ ॥

आवर्णादचि पूर्वपरयोः स्थाने एको गुणोऽन्तरतमः स्या-त् । उपेन्द्रः । रमेशः । गङ्गोदकम् । कृष्णर्धिः । तवल्कारः ॥

## वृद्धिरेचि ॥ ८८ ॥

आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥

## एत्येधत्यूठ्सु ॥ ८९ ॥

एषु आद्वृद्धिः स्यात् । ऊठि गुणस्येतरयोरेङि पररूपस्य चापवादः । उपैति । उपैषि । उपैधते । प्रष्ठौहः । ओमाङोश्चे(६।१।९८)-

त्येतत्तु न बाध्यते । पुरस्तादपवादाः(५०)इति न्यायात् । उप आ इतः उपेतः । एचीत्येव । उप इतः उपेतः ॥

अक्षादूहिण्या(न्या)म् ॥

अक्षौहिणी ॥

स्वादीरेरिणोः ॥

स्वैरम् । स्वैरी । स्वैरमस्यास्तीति स्वैरीत्येव सिद्धौ ईरिन्-ग्रहणं न कर्तव्यमित्याकरे ॥

प्रादूहोढ्योढ्येषैष्येषु ॥

प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । प्रोह इत्यपि ॥

ऋते च तृतीयासमासे ॥

सुखेन ऋतः सुखार्तः । तृतीयेति किम् । परमर्तः । समासे किम् । सुखेनर्तः । ऋते किम् । सुखेतः ॥

प्रवत्स[त]रकम्बलवसनदशार्णानामृणे ॥

प्रार्णम् । वत्स[त]रार्णमित्यादि ॥

आटश्च ॥ ९० ॥

अटोचि परे वृद्धिरेकादेशः स्यात् । ऐन्दत् । चकारः उस्यो(६।१।९६)माङोश्च(६।१।९५)पररूपबाधनार्थः। औस्रीयत् । औङ्कारीयत् । आ ऊढा ओढा तामैच्छत् औढीयत् ॥

उपसर्गादृति धातौ ॥ ९१ ॥

ऋकारादौ धातावादुपसर्गात् वृद्धिरेकादेशः स्यात्। गुणापवादः । प्रार्च्छति । उपार्च्छति । उपसर्गात्किम् । प्रगता ऋच्छका अस्मात्प्रर्च्छको देशः । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञाः । ऋति किम् । उपेतः । तपरत्वं किम् । उप ऋकारी-

यति । उपकारीयति । उपसर्गादित्येव धातौ लब्धे धातुग्रहणम् ऋत्यकः(६।१।१२८) इति शाकलबाधनार्थम् ॥

वा सुप्यापिशलेः ॥ ९२ ॥

आदुपसर्गात्सुब्धातावृति प्रागुक्तं वा स्यात् । उपर्षभीयति । उपार्षभीयति । सावर्ण्याद्लृवर्णग्रहणम् । उपल्कारीयति । उपाल्कारीयति । आपिशलिग्रहणं पूजार्थम् ॥

औतोम्शसोः ॥ ९३ ॥

ओतः अम्शसोः परत आकार एकादेशः । गाम् । गाः । द्याम् । द्याः । शंसा साहचर्यादमपि सुप् गृह्यते । तेनेह न । अचिनवम् ॥

एङि पररूपम् ॥ ९४ ॥

आदुपसर्गादेङादौ धातौ पररूपमेकादेशः । प्रेजते । उपोषति ॥ एङादौ सुब्धातौ वा ॥ उपेडकीयति । उपैडकीयति । प्रोघीयति । प्रौघीयति ॥

शकन्ध्वादिषु [टेः] पररूपं वाच्यम् ॥

शकन्धुः । कुलटा । सीमन्तः केशेषु । अन्यत्र सीमान्तः । केचिन्मनीषा हलीषा लाङ्गलीषेत्यपि पठन्ति ॥

एवे चानियोगे ॥

क्वेव । नियोगे तु क्वैव गच्छ ॥

ओत्वोष्ठयोः समासे वा ॥

स्थूलोतुः । स्थूलौतुः । बिम्बोष्ठः । बिम्बौष्ठः । समासे किम् । तवौष्ठः ॥

एमन्नादिषु छन्दसि ॥

अपां त्वेमन्नपां त्वोध्म(द्म)न् ॥

ओमाङोश्च ॥ ९५ ॥

अवर्णादोमि आङि च पररूपं स्यात् । शिवायोन्नमः । शिव आ इहि शिवेहि ॥

उस्यपदान्तात् ॥ ९६ ॥

अपदान्तादवर्णादुसि पररूपमेकादेशः । भिन्द्युः । छिन्द्युः । अपदान्तात्किम् । का उस्रा । कोस्रा । आदित्येव । चक्रुः ॥

अतो गुणे ॥ ९७ ॥

अपदान्तादकाराद्गुणे परतः पररूपमेकादेशः स्यात् । पचन्ति । पचे । अतः किम् । यान्ति । गुणे किम् । अपचे । अपदान्तात्किम् । दण्डाग्रम् ॥

अव्यक्तानुकरणस्यात इतौ ॥ ९८ ॥

अव्यक्तानुकरणशब्दस्यात इतौ परे पररूपमेकादेशः स्यात् । फटत् इति फटिति । अव्यक्तानुकरणस्य किम् । जगदिति । अतः किम् । मरुदिति । इतौ किम् । पटदत्र ॥

एकाचो न ॥

श्रदिति । अत इत्युक्तेर्दकारान्तस्य न । घटदिति ॥

नाम्रेडितस्यान्त्यस्य तु वा ॥ ९९ ॥

आम्रेडितस्याव्यक्तानुकरणस्योक्तं न अन्त्यस्य तकार- मात्रस्य तु वा स्यात् । पटत्पटदिति । पटत्पटेति । नित्यवी- प्सयो(८।१।४)रिति द्विर्वचनम् । यदा समुदायानुकरणं तदा पूर्वविधिरेव । पटत्पटिति ॥

नित्यमाम्रेडिते डाचि ॥ १०० ॥

आम्रेडिते परे पूर्वान्त्यस्य पररूपं नित्यं स्यात् डाचि परे ।

इति पूर्वान्त्यस्य तकारस्य पकारः। पटपटाकरोति॥

अकः सवर्णे दीर्घः॥ १०१॥

अकः सवर्णेऽचि दीर्घ एकादेशः। दैत्यारिः। श्रीशः। विष्णूदयः। अकः किम्। अग्नये। सवर्णे किम्। दध्यत्र। अचि किम्। कुमारी शेते। नाज्झलौ(१।१।१०)विति सावर्ण्यनिषेधो न दीर्घशकारयोः॥

ऋकारस्य ऋति ऋकारो वा॥

हेतृकारः॥

ऋकारस्य ऌति ऌ वा॥

हेतॢकारः। पक्षे ऋकारः सावर्ण्यात्। हेतॄकारः॥

प्रथमयोः पूर्वसवर्णः॥ १०२॥

अकः प्रथमाद्वितीयाविभक्त्योरचि पूर्वसवर्णदीर्घ एकादेशः स्यात्। अग्नी। वायू। वृक्षाः। अतो गुण(६।१।९७) इति पररूपं सवर्णदीर्घत्वमेव बाधते। न तु पूर्वसवर्णदीर्घत्वम्। पुरस्तादपवादाः(प०)इति न्यायात्। अचि किम्। वृक्षः। अकः किम्। नावौ। पूर्वसवर्णेति किम्। अग्नी इत्यत्र पक्षे परसवर्णो मा भूत्। दीर्घग्रहणं किम्। त्रिमात्रस्थानिनि त्रिमात्रादेशो मा भूत्॥

तस्माच्छसो नः पुंसि॥ १०३॥

तस्मात्पूर्वसवर्णदीर्घात्परस्य शसः सस्य नः स्यात्पुंसि। वृक्षान्। अग्नीन्। रामान्। कर्तॄन्॥ इह चञ्चाः पुरुषान् पश्य वध्रिकाः पश्येति लुम्मनुष्य(५।३।९८) इति कनो लुपि युक्तवद्भावेन स्त्रीत्वातिदेशात् पुंस्यपि नत्वाभावः। तस्मादिति किम्। एतान् गाश्चरतः पश्य। शसः किम्। वृक्षाः। पुंसि किम्। कुमारीः पश्य॥

नादिचि ॥ १०४ ॥

अवर्णान्तादिचि न पूर्वसवर्णदीर्घः । वृक्षौ । खट्वे । आतिकम् । अग्नी । इचि किम् । वृक्षाः ॥

दीर्घाज्जसि च ॥ १०५ ॥

दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात् । कुमार्यौ । कुमार्यः ॥

वा छन्दसि ॥ १०६ ॥

दीर्घाज्जसि इचि चच्छन्दसि पूर्वसवर्णदीर्घो वा न स्यात् । मारुतीः । मारुत्यः ॥

अमि पूर्वः ॥ १०७ ॥

अकोमि परतः पूर्वरूपमेकादेशः स्यात् । वृक्षम् । अग्निम् । वायुम् ॥

वाच्छन्दसीत्येव ॥

गौरीं च । गौर्यश्च ॥

संप्रसारणाच्च ॥ १०८ ॥

संप्रसारणादचि पूर्वरूपमेकादेशः स्यात् । इष्टम् । उप्तम् ॥

वा छन्दसीत्येव ॥

मित्रावरुणौ यज्यमानौ । मित्रावरुणौ इज्यमानौ । पूर्वत्वाभावे यणादेशः । शकन्धर्मिस्रवौ अन्तरङ्गेचि चरितार्थे पूर्वत्वं बहिरङ्गे न भवति । समानाङ्ग एवान्तरङ्गत्वम् ॥

एङः पदान्तादति ॥ १०९ ॥

पदान्तादेङोति परे पूर्वरूपमेकादेशः स्यात् । अग्नेत्र । वायोत्र । अयवपवादः । एङः किम् । दध्यत्र । पदान्तात्किं

म्। नयनम्। अति किम्। वायविति। तपरः किम्। वायवायाहि॥

ङसिङसोश्च॥ ११०॥

एङो ङसिङसोरति परे पूर्वरूपमेकादेशोऽपदान्तेपि। अग्नेः। अग्नेः। वायोः। वायोः॥

ऋत उत्॥ १११॥

ऋदन्ताद् ङसिङसोरति परे उकार एकादेशः स्यात्। धातुः। धातुः। रपरत्वे रात्सस्ये(८।२।२४)ति सलोपः॥

ख्यत्यात्परस्य॥ ११२॥

खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरकारस्य उत्स्यात्। सख्युः। सख्युः। पत्युः। पत्युः। दीर्घयोरपि। सह खेन वर्तत इति सखः। तमिच्छतीति सखीः सख्युः। सुतमिच्छतीति सुतीः सुत्युः। नत्वस्यासिद्धत्वाल्लूनमिच्छतीति लूनीः लून्युः। कृतयणग्रहणं किम्। अतिसखेरागच्छति। सेनापतेरागच्छति। सख्युः समासे घिसंज्ञास्त्येव॥

अतो रोरप्लुतादप्लुते॥ ११३॥

अप्लुतादतः परस्यरोरुः स्यादप्लुते अति। भो भगो इति मात्तयत्वापवादः। रुत्वैकाश्रयमुत्वं प्रति रुत्वं नासिद्धम्। वृक्षोत्र। अतः किम्। अग्निरत्र। तपरः किम्। वृक्षा अत्र। रोः किम्। मातरत्र। अति किम्। वृक्ष इह। तपरः किम्। वृक्ष आश्रितः। अप्लुतात्किम्। सुस्रोता३ अत्र। अप्लुते किम्। तिष्ठतु पय आ३ग्निदत्त। प्लुतप्रगृह्या अची(६।२।१२५)ति प्लुतग्रहणेन स्वरसन्धिषु प्लुतस्य सिद्धत्वज्ञापनादप्लुतादप्लुत इति न वक्तव्यं तपरत्वेनैव व्यावृत्तेरित्याकरे॥

हशि च ॥ ११४ ॥

अतो रुः स्याद्धशि । पुरुषो हसति ॥

प्रकृत्यान्तःपादमव्यपरे ॥ ११५ ॥

अत्रकारयकारपरे अति परत एङ् प्रकृत्या स्यात् न सन्धि याति निमित्तनिमित्तिनौ चेदेकपा(चेदेकपा)दमध्ये स्याताम् । सुजाते अश्वसूनृते। अध्वर्यो अद्रिभिः सुतम् । अन्तःपादं किम् । तेऽर्चन्ति । अव्यपरे किम् । तेऽवदन् तेऽयजन् । एङ् किम् । अन्वग्निरुषसाम् । केचिदिदं सूत्रं नान्तःपादमव्यपर इति पठन्ति तत्र संहिताकार्यनिषेधः सूत्रार्थः ॥

अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ॥ ११६ ॥

व्यपरार्थमिदम् । एषु परेष्वन्तःपादमेङ् प्रकृत्या स्यात् । वसुभिर्नो अव्यात् । मित्रमहे अवद्यात् । मस्त्वांसो अवक्रमुः । तेनो अव्रताः । शतधारो अयं मणिः । तेनो अवन्तु । कुशिकासो अवस्यव(व)ः ॥

यजुष्युरः ॥ ११७ ॥

उरःशब्द एङन्तोऽति प्रकृत्या स्याद्यजुषि। उरो अन्तरिक्षम् । यजुष्युरो इति सूत्रं केचित्पठन्ति । तत्र उरो अन्तरिक्षेति सम्बुद्ध्यन्तमुदाहरणम् ॥

आपोजुषाणोवृष्णोवर्षिष्ठेम्बेम्बालेम्बिकेपूर्वे ॥ ११८ ॥

आपो इत्यादयश्चत्वारोऽम्बेऽम्बाले इत्येतौ चाम्बिकेशब्दात्पूर्वौ यजुष्यति प्रकृत्या स्युः । आपो अस्मान्मातरः । जुषाणो अग्नि(प्तु)राज्य(ज्य)स्य । वृष्णो अंशुभ्याम् । वर्षिष्ठे अधिनाके । अम्बे अम्बाले अम्बिके । यजुषीदृशमेव पठ्यते ॥

अङ्ग इत्यादौ च ॥ ११९ ॥

अङ्गशब्दे य एङ् तदादौ चाकारे यः पूर्वः स यजुषि प्रकृत्या स्यात् । इन्द्रप्राणो अङ्गे अङ्गे ॥

अनुदात्ते च कुधपरे ॥ १२० ॥

कवर्गधकारपरेनुदात्तेचि पूर्व एङ् प्रकृत्या स्याद्यजुषि । अयं सो अग्नि । अय सो अध्वरः । अनुदात्ते किम् । अधोग्रम् । ऋज्रेन्द्र(उ०१८६)त्यादिनाग्निशब्द आद्युदात्तो निपातितः । कुधपरे किम् । सोयमग्निः ॥

अवपथासि च ॥ १२१ ॥

अस्मिन्परत एङ् प्रकृत्या स्याद्यजुषि । रुद्रेभ्यो अवपथाः । वपेर्लुङ् थास् । अनुदात्त इत्येव । यद्रुद्रेभ्योऽवपथाः ॥

सर्वत्र विभाषा गोः ॥ १२२ ॥

लोके वेदे च गोरति वा प्रकृतिभावः । गोअग्रम् । गोग्रम् ॥

अवङ् स्फोटायनस्य ॥ १२३ ॥

अतीति निवृत्तम् । अचि परे गोरवङ्वा पदान्ते । गोअग्रम् । गवाग्रम् ॥ अवङ्यद्युदात्त इष्यते ॥ उपदेशिवद्भावश्च । तेन बहुव्रीहौ अवगाम् । तत्पुरुषे तु समासांतोदात्तत्वेन बाध्यते॥ व्यवस्थितविभाषया गवाक्ष इत्यत्र नित्यम् ॥ पदान्ते किम् । गवे ॥

इन्द्रे च नित्यम् ॥ १२४ ॥

इन्द्रशब्दस्थेचि गोर्नित्यमवङ् । गवेन्द्रः । गवेन्द्राय यज्ञश्चरुः ॥

प्लुतप्रगृह्या अचि ॥ १२५ ॥

प्लुताश्च प्रगृह्याश्चाचि प्रकृत्या स्युः । देवदत्ता३ अत्र न्वसि ।

अग्नी इति । वायू इति । खट्व इति ॥

अजीति वर्तमाने पुनरज्ग्रहणमादेशनिमित्तस्याचः परिग्रहार्थम् ॥

तेनेह न । जानु उ अस्य रुजति । जानू अस्य रुजति । अप्रगृह्यादुकारात्परस्याचः सवर्णदीर्घनिमित्तत्वात्प्रकृतिभावाभावः । एकादेशस्य त्वादिवद्भावात् प्रगृह्यत्वादिको यणची(६।१।७७)ति यणभावात्प्रकृतिभावः । मय उञो वे(८।३।३३)ति पक्षे वकारो भवत्येव । जान्वस्य रुजति । नित्यग्रहणानुवर्तनात् प्लुतप्रगृह्याणां शाकलं न भवति ॥

आङोनुनासिकश्छन्दसि ॥ १२६ ॥

आङोऽच्यनुनासिकः स्याच्छन्दसि संहितायाम् । अभ्र आँ अपः ॥

बहुलमिति वक्तव्यम् ॥

इह मा भूत् । इन्द्रो बाहुभ्यामातरत् ॥

इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ॥ १२७ ॥

असवर्णेऽचि इकः ह्रस्वो वा स्यात् । विधिसामर्थ्यात् ह्रस्वपक्षे प्रकृतिभावः । दधि अत्र । दध्यत्र । कुमारि अत्र । कुमार्यत्र । इकः किम् । खट्वेन्द्रः । असवर्णे किम् । कुमारीन्द्रः ॥

सिन्नित्यसमासयोः शाकलप्रतिषेधः ॥

अयन्ते योनि ऋत्वियः । नित्यसमासे कुमार्यर्थम् । नित्यग्रहणेन नार्थः । समासे शाकलं नेत्येव । वाप्यामश्वो वाप्यश्वः । नद्यामातिर्नद्यातिः ॥

ईषाक्षादिषुच्छन्दसि प्रकृतिभावमात्रं वाच्यम् ॥

ईष अक्षोज्या इय अस्वधा असि(?) ॥

ऋत्यकः ॥ १२८ ॥

ऋति परे अको वा ह्रस्वः स्यात् ॥

सवर्णार्थमनिगर्थं च वचनम् ॥

होतृऋश्यः । खट्व ऋश्यः । ऋति किम् । खट्वेन्द्रः । अकः किम् । वृक्षे ऋश्यः ॥

## अप्लुतवदुपस्थिते ॥ १२९ ॥

उपस्थितोनार्ष इतिकरणः । उपस्थिते परतः प्लुतोऽप्लुतवत् स्यात् । प्लुताश्रितः प्रकृतिभावो न भवतीत्यर्थः । सुश्लोका३ इति । सुश्लोकेति । सुमङ्गला३ इति । सुमङ्गलेति । वत्करणं किम् । प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं यथा स्यात् । अग्नी३ इति ॥

## ई३ चाक्रवर्मणस्य ॥ १३० ॥

ईकारः प्लुतोऽच्यप्लुतवद्वा स्यात् । चिनुही३ इदम् । चिनुहीदम् । अस्तुही३ इत्यब्रवीत् । अस्तुहीत्यब्रवीत् ॥

उपस्थितेऽनुपस्थिते चोभयत्र विभाषेयम् ॥

अज्मात्रस्याप्लुतवद्भावो वेष्यते ॥ वशा३ इयम् । वशेयम् ॥

## दिव उत् ॥ १३१ ॥

दिविति प्रातिपदिकस्य उत्स्यात्पदान्ते । द्युभ्याम् । द्युभिः । विमलद्यु दिनम् । तपरकरणं भाव्यमानस्याप्युकारस्य सर्वत्र(सवर्ण)ग्रहज्ञापनार्थम् । तेनामूभ्यामित्यादिसिद्धिः । पदान्ते किम् । दिवौ । दिवः ॥

## एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ॥ १३२ ॥

एतत्तदोरककारयोरनञ्समासे सोर्लोपः स्यात् हलि । एष विष्णुः । स शम्भुः । एतत्तदोः किम् । यो विष्णुः । सुकिम् । एतौ गावौ । अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असः शिवः । हलि किम् । एषोऽत्र ॥

स्यश्छन्दसि बहुलम् ॥ १३३ ॥

स्य इत्यस्य सोर्बहुलं लोपो हलिच्छन्दसि । एष स्य वाजी[१] एष स्यो निपतेत् ॥

सोचि लोपे चेत्पादपूरणम् ॥ १३४ ॥

स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे पूर्यते । सेम(मु)ऽतौ । सौषधीरनुरुध्यसे । श्लोकपादस्यापि ग्रहणम् । सैष दाशरथी रामः ॥

सुट् कात्पूर्वः ॥ १३५ ॥

पारस्करप्रभृतीनि च संज्ञाया(६।१।१५७)मित्येतत्पर्यन्तमधिकारोयम् । एकाच उपदेशेनुदात्ता(७।२।१०)दित्यत उपदेशग्रहणमृतश्च संयोगादे(७।२।४३)रित्यत्रानुवर्तते । तेनोपदेशे संयोगादित्वाभावात्संस्कृषीष्टेत्यत्रेट् न भवति । गुणोर्तिसंयोगाद्यो(७।४।२९)रित्यत्र नित्यं छन्दसी(७।४।८)त्यतो नित्यग्रहणानुवृत्त्या नित्यं यः संयोगादिस्तस्य गुणविधानात्संस्क्रियत इत्यत्र गुणाभावः ॥

अडभ्यासव्यवायेपि ॥ १३६ ॥

अड्व्यवायेभ्यासव्यवायेपि सुट्कात्पूर्वः स्यात् । समस्कार्षीत् । संचस्कार । धातूपसर्गकार्यस्यान्तरङ्गत्वात्पूर्वं सुटि पश्चाद्द्विर्वचनमडागमश्चेति सूत्रमेतन्न्यर्थम् । न च सुटोऽभक्तत्वमाश्रित्य सकारात्परावडभ्यासौ मा भूतामित्येतदर्थमिदम् अस्मिंस्तु सत्यंत एव वचनात्पूर्वमडभ्यासयोः कृतयोः सुट्कात्पूर्वः(६।१।१३५) क्रियत इतीष्टं सिध्यतीति काशिका युक्ता । अभक्तत्वे संस्करोतीत्यत्र तिङतिङः(८।१।२८) इति सुड्व्यवधानान्निघातो न स्यात् । न च स्वरविधौ व्य-

ज्ञनमविद्यमानवत्। हलः स्वरभास्त्वविद्यमानवद्भावात्। अत्र तु व्यवधानमेवेति कैयटः॥

सम्पर्युपेभ्यः करोतौ भूषणे ॥ १३७ ॥

एभ्यः कृञः सुट् स्यात् भूषणेऽर्थे। संस्करोति। परिष्कर्ता। उपस्कर्तुम्। भूषणे किम्। उपकरोति। संपूर्वस्याभूषणेपि क्वचिदिष्यते। संस्कृतमन्नम्॥

समवाये च ॥ १३८ ॥

संपर्युपेभ्यः कृञः सुट् स्यात्संघेऽर्थे। संस्कृतम् परिष्कृतम् उपस्कृतं वा मनुष्याणाम्॥

उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु ॥ १३९ ॥

सतो गुणान्तराधानं प्रतियत्नः। विकृतमेव वैकृतम्। प्रज्ञादित्वादण्। गम्यमानस्य वाक्यस्य स्वरूपेणोपादानं वाक्याध्याहारः। उपात्कृञः सुट् स्यादेष्वर्थेषु। एधोदकस्योपस्कुरुते। उपस्कृतं भुङ्क्ते। उपस्कृतं जल्पति। एषु किम्। उपकरोति॥

किरतौ लवने ॥ १४० ॥

उपात्किरतेः सुट् स्याल्लवने विषये। उपस्किरति। लवनविषयविक्षेपं करोतीत्यर्थः॥

णमुलप्यत्र वक्तव्यः॥

आभीक्ष्ण्याद्यभावेपि। उपस्कारं मद्रका लुनन्ति। विक्षिप्य लुनन्तीत्यर्थः॥

हिंसायां प्रतेश्च ॥ १४१ ॥

उपात्प्रतेश्च किरतेः सुट् स्याद्धिंसायां विषये। उपस्कि-

रति। प्रतिस्किरति। हिनस्तीत्यर्थः॥

अपाच्चतुष्पाच्छकुनिष्वालेखने ॥ १४२ ॥

दाक्षिणात्यास्तु अपादिति सूत्रं पठन्ति। अपात्किरतेः सुट् स्याच्चतुष्पाच्छकुनिषु यदालेखनं तस्मिन् विषये। अपस्किरते वृषो हृष्टः कुक्कुटो भक्षार्थी श्वा आश्रयार्थी वा। आलिख्य विक्षिपतीत्यर्थः। चतुष्पाच्छकुनिषु किम्। अपकिरति देवदत्तः॥

किरतेर्हर्षजीविकाकुलायकरणेष्विति (१।३।२१वा) त्मनेपदमुक्तमतस्त्रैवायं सुडिष्यते नान्यत्र॥

अपकिरति श्वा ओदनपिण्डम्॥

कुस्तुम्बुरूणि जातिः ॥ १४३ ॥

अत्र सुट् निपात्यते जातौ। कुस्तुम्बुरुर्नामौषधिविशेषः। तत्फलान्यपि कुस्तुम्बुरूणि। लिङ्गवचने अतन्त्रम्। जातिः किम्। कुत्सितानि तुम्बुरूणि कुतुम्बुरूणि। तुम्बुरुशब्देनात्र तिन्दुकफलान्युच्यन्ते। समानेन च तेषां कुत्सा॥

अपरस्पराः क्रियासातत्ये ॥ १४४ ॥

अत्र सुट् निपात्यते। अपरस्पराः सार्था गच्छन्ति। सततमविच्छेदेन गच्छन्तीत्यर्थः। क्रियासातत्ये किम्। अपरपरा गच्छन्ति। अपरे परे च सकृदेव गच्छन्तीत्यर्थः। कथं सातत्य इति। समस्तते वा मलोपः। सततस्य भावः सातत्यम्। अव्ययविकन्यागेन न(च) सान्तत्यमिति न भाव्यं किं तु सातत्यमित्येवेति कैयटः॥

लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि।
समो वा हिततयोर्मांसस्य पचि युड्घञोः॥

संहितायां समासे चैषां मकारलोप इष्यते नान्यत्र ॥

गोष्पदं सेवितासेवितप्रमाणेषु ॥ १४५ ॥

अत्र सुट्पत्वे निपात्येते । सेविते गोष्पदो देशः । गोभिर्यत्र पद्यते स उच्यते । असेविते अगोष्पदान्यरण्यानि । प्रमाणे गोष्पदमात्रं क्षेत्रम् । सेवितादिषु किम् । गोः पदं गोपदम् ॥

आस्पदं प्रतिष्ठायाम् ॥ १४६ ॥

सुडत्र निपात्यते । आस्पदमनेन लब्धम् । प्रतिष्ठाऽनेन लब्धेत्यर्थः । प्रतिष्ठायां किम् । आ पदात् आपदम् ॥

आश्चर्यमनित्ये ॥ १४७ ॥

अद्भुते अश्चर्यमिति निपात्यते । चरेराङि चागुरा-(३।१।१००वा)विति यत्प्रत्यये निपातनात्सुट् । अनित्ये किम् । आचर्यं कर्म ॥

वर्चस्केऽवस्करः ॥ १४८ ॥

कुत्सितं वर्चो वर्चस्कम् । तस्मिन्नवस्कर इति निपात्यते अवकीर्यत इत्यवस्करः । ऋदोरप्(३।३।५७)। अन्यत्र अवकरः ॥

अपस्करो रथाङ्गं ॥ १४९ ॥

रथाङ्गे अपस्करो निपातितः । अन्यत्रापकरः । पूर्ववदप् प्रत्ययः ॥

विष्किरः शकुनिर्विकिरो वा ॥ १५० ॥

इगुपधे(३।१।१३५)ति कप्रत्ययान्तस्य विकिरशब्दस्य सुड्विकल्प्यते शकुनौ । विष्किरो विकिरो वा शकुनिः । अन्यत्र विकिर

इत्येव । अत्र विष्किरः शकुनिर्वेत्येव सिद्धे विकिरग्रहणं शकुनेरन्यत्र विकिरशब्दप्रयोगो मा भूदित्येवमर्थमिति काशिकायाम् । श्राद्धाङ्गविशेषे विकिरशब्दप्रयोगात् भाष्ये च विष्किरः शकुनौ वेति सूत्रपाठमाश्रित्य सुड्विकल्पप्रतिपादनाच्चान्यत्र विकिरशब्दः साधुरित्याभाति ॥

## ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ॥ १५१ ॥

ह्रस्वादुत्तरपदस्य चन्द्रस्य सुट् स्यान्मन्त्रे । सुश्चन्द्रः । पुरुश्चन्द्रः । ह्रस्वात्किम् । सूर्याचन्द्रमसौ । मन्त्रे किम् । सुचन्द्रा पौर्णमासी ॥

## प्रतिष्कशश्च कशेः ॥ १५२ ॥

कश गतिशातनयोरित्यस्याजन्तस्य प्रतिपूर्वस्य सुट्षत्वे निपात्यते । वार्ताहारः पुरोयायी वा प्रतिष्कशः । प्रतेः कशिं प्रत्युपसर्गत्वे अयं निपातः कशेरित्यनेन सूच्यते । तेन प्रतिगतः कशां प्रतिकशोऽश्व इत्यत्र न ॥

## प्रस्कण्वहरिश्चन्द्रावृषी ॥ १५३ ॥

ऋषिवाचकयोरेतयोः सुट् निपात्यते । ऋषी किम् । प्रकण्वो देशः । हरिचन्द्रो माणवकः । अनृषावपि क्वचिद्धरिश्चन्द्रशब्दः पृषोदरादित्वेन गौणत्वेन संज्ञात्वेन वा साधुः ॥

## मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥ १५४ ॥

एतयोरेतौ यथाक्रमं ससुट्कौ निपात्येते । मस्करो वेणुः । मस्करी परिव्राजकः । मकरशब्दस्य वेणौ सुट् परिव्राजके इनिश्च । वेणुपरिव्राजकयोः किम् । मकरो ग्राहः । मकरी समुद्रः । केचित् माङ्पूर्वस्य कृञः करणेऽच् प्रत्ययः माङो ह्रस्वत्वं च निपात्यते । मा क्रियते निवार्यते येन स मस्करो वेणुः । माङ

कृञस्ताच्छील्ये इनिर्निपात्यते माङो ह्रस्वत्वं च । मा कुरुत कर्माणि शान्तिर्वः श्रेयसीति माकरणशीलो मस्करीति ॥

## कास्तीराजस्तुन्दे नगरे ॥ १५५ ॥

एतयोर्नगरे सुट् निपात्यते । ईषत्तीरमस्य अजस्येव तुन्द-मस्येति व्युत्पत्तिः । रूढौ त्वेतौ नगरे । कास्तीरं नाम नगर-म् । अजस्तुन्दं नाम नगरम् । अन्यत्र कातीरमजतुन्दमित्येव ॥

## कारस्करो वृक्षः ॥ १५६ ॥

वृक्षेऽयं निपातः । वृक्षे किम् । कारकरः । दिवाविभा-निशे(३।२।२१)ति टः ॥

## पारस्करप्रभृतीनि च संज्ञायां ॥ १५७ ॥

एतानि ससुट्कानि निपात्यन्ते संज्ञायाम् । पारस्करो देशः । रथस्पा नदी । किष्कुः । किष्किन्धा ॥ तद्बृहतोः क-रपत्योश्चोरदेवतयोः सुट् तलोपश्च ॥ तस्करः । बृहस्पतिः ॥ प्रात्तुम्पतौ गवि कर्तरि ॥ प्रस्तुम्पति गौः । गवि किम् । प्रतुम्प-ति । अविहितलक्षणः सुट् पारस्करादिषु द्रष्टव्यः । प्राय-श्चित्तं प्रायश्चित्तिर्वनस्पतिरित्यादि ॥

## अनुदात्तं पदमेकवर्जम् ॥ १५८ ॥

परिभाषेयम् । यत्रोदात्तः स्वरितो वा विधीयते तत्रैकं वर्जयित्वा शिष्टं पदमनुदात्तं स्यात् । यथा राजपुरुष इत्यत्र समासान्तोदात्तत्वे शिष्टमनुदात्तम् ॥

सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः ॥

यस्मिन् सति यः शिष्यते स सतिशिष्टः । स स्वरो ब-लीयान् विकरणस्वरं वर्जयित्वा । गोपायितेत्यादौ धातुस्वरे

सति प्रत्ययस्वरः शिष्यत इति धातोरनुदात्तत्वम् । विकरणस्वरस्तु सतिशिष्टोपि सार्वधातुकस्वरं न बाधते । लुनीतः । अत्र तस्स्वर एव ॥

विभक्तिस्वरान्नञ्स्वरो बलीयान् ॥

अतिस्रः । तिसृभ्यो जसः(६।१।१६६) इति सतिशिष्टोपि नञ्स्वरेण बाध्यते ॥

विभक्तिनिमित्तस्वराच्च नञ्स्वरः ॥

अचत्वारः । विभक्तिनिमित्तास्स्वरः नञ्स्वरेण बाध्यते । पदग्रहणं वाक्यनिवृत्त्यर्थम् । गामानय शुक्लां दण्डेन । प्रतिपदं पृथक् स्वरः ॥

आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च ।
पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥

## कर्षात्वतो घञोन्त उदात्तः ॥ १५९ ॥

कर्षतेराकारवतश्च धातोर्घञन्तस्यान्त उदात्तः स्यात् । ञ्नित्यादिर्नि(६।१।१९७)त्यस्यापवादः । कर्षः । पाकः । त्यागः । दायः । कर्षेतिनिर्देशात्कृषतेराद्युदात्त एव । हलस्य कर्षः ॥

## उञ्छादीनां च ॥ १६० ॥

एतेषामन्तोदात्तः । उञ्छम्लेच्छञ्जजल्पा घञन्ताः । जपवधावबन्तौ । केचिद्व्यध इति पठन्ति । युगो घञन्तः । निपातनादगुणत्वम् ॥ गरो दूष्ये ॥ गरो विषम् । अन्यत्राद्युदात्त एव । वेगवेदवे(चे)ष्टबन्धाः करणे ॥ भावे आद्युदात्त एव । उत्तमशश्वत्तमौ सर्वत्र । भक्षमन्थभोगदेहा घञन्ता इत्यादि ॥

## अनुदात्तस्य च यत्रोदात्तलोपः ॥ १६१ ॥

यस्मिन्ननुदात्ते उदात्तो लुप्यते तस्योदात्तः स्यात् । दध्ना ।

दध्नः । अनड्वाहः । विभक्तौ परतस्तस्य लोप इति विभक्तेरुदात्तत्वम् । उदात्ते स्वरिते वा परतः पूर्वस्य शेपनिघातेन अनुदात्तत्वादुदात्तलोपोऽनुदात्ते परत एवेत्यनुदात्तस्येति व्यर्थमिति भाष्ये। अन्त इत्यनुवृत्तेराद्युदात्तार्थं तदिति काशिकायाम्। मा हि धुक्षाताम् । यञेति किम् । भार्गवः। भार्गवौ। भृगवः। भाक्स्नुयुत्पत्तेर्गोत्रप्रत्ययस्य लुक् । उदात्तलोपः किम् । वैदी ॥

धातोः ॥ १६२ ॥

धातोरन्त उदात्तः स्यात् । पचति ॥

चितः ॥ १६३ ॥

चिदन्तोदात्तः स्यात् । घुरच् । भङ्गुरम् ॥

चितः सप्रकृतिकस्येष्यते ॥

बहुपटुः । उच्चकैः ॥

तद्धितस्य ॥ १६४ ॥

चितस्तद्धितस्यान्तोदात्तः स्यात् । कौञ्जायनाः । चित्करणसामर्थ्याञ्ञित्स्वरं बाधते । कर्मणि घटोठच्(५।२।३५) । कर्मठः ॥

कितः ॥ १६५ ॥

कितस्तद्धितस्यान्तोदात्तः । नाडायनः ॥

तिसृभ्यो जसः ॥ १६६ ॥

अन्तोदात्त इत्येव । तिस्रस्तिष्ठन्ति । शस्युदात्तयणो हल्पूर्वादि(६।१।१७४)त्युदात्तत्वेन भाव्यम् । अन्यत्र षट्त्रिचतुर्भ्यो हलादि(६।१।१७९)रिति । तेन जस्ग्रहणसामर्थ्यादुपसर्गसमासेऽप्ययं स्वर इष्यते । अतितिस्रः । जसः किम् । अतितिसृौ ॥

## चतुरः शसि ॥ १६७ ॥

अन्तोदात्तः । चतुरः पश्य ॥

चतस्रादेशस्याद्युदात्तनिपातनादयं स्वरो नेष्यते ॥

चतस्रो धेनूः ॥

## सावेकाचस्तृतीयादिर्विभक्तिः ॥ १६८ ॥

सप्तमीबहुवचने य एकाच् तस्मात्परा तृतीयादिविभक्तिरुदात्ता स्यात् । वाचा । वाग्भ्याम् । साविति किम् । राज्ञा । एकाचः किम् । राजसु । तृतीयादिः किम् । वाचौ । विभक्तिः किम् । वाक्तरा । सप्तमीग्रहणात् इह न । त्वया ॥

## अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ॥ १६९ ॥

अनित्यसमासे यदुत्तरपदमेकाजन्तोदात्तं तस्मात्परा तृतीयादिविभक्तिरुदात्ता स्यात् अन्यतरस्याम् । परमवाचा । पक्षे समासान्तोदात्तत्वमेव । अन्तोदात्तात्किम् । सुवाचा । अत्राव्ययपूर्वपदस्वरः । उत्तरपदात्किम् । एकाच्त्वमुत्तरपदविशेषणं यथा स्यात्समासविशेषणं मा भूत् । समासविशेषणत्वे हि शुन ऊर्क् श्वोर्क् । श्वोर्जे । अत्रैव स्यात् । अनित्यसमासे किम् । अग्निचिता । अत्र उपपदसमासः कृदुत्तरपदप्रकृतिस्वर एव । नित्याधिकारविहितसमास एव पर्युदस्यते । विग्रहाभावान्नित्यसमासे तु स्यादेव विकल्पः । सुवाचा ॥

## अञ्चेश्छन्दस्यसर्वनामस्थानम् ॥ १७० ॥

अञ्चेः परा असर्वनामस्थानविभक्तिरुदात्ता स्याच्छन्दसि । इन्द्रो दधीचः ॥

## ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ॥ १७१ ॥

एभ्योऽसर्वनामस्थानविभक्तिरुदात्ता स्यात् । प्रष्ठौहः । प्रष्ठौहा ।

ऊत्यु(दृयु)पधाग्रहणम ॥

इह मा भूत् । अक्षद्युत्रा । अक्षद्युवे । इवम् । आभ्याम् । एभिः । अन्तोदात्तादित्यधिकारादन्वादेशे न भवति । अथो आभ्यां निपुणमधीतम् । पदादयः पद्दन्नोमासादयो निशान्ता गृह्यन्ते । पदः प्रतिदधत् । दतो धावत इत्यादि । अमन्नभृंतपु विभक्तिरनुदात्तैव । अपि कस्य आसनि । अपः पश्य । अ- ग्निर्मार्जयित्वा पुंस्तः पुत्रान् । रायो नो विश्वा । विश्वो नो दृष्टिम् ॥

## अष्टनो दीर्घात् ॥ १७२ ॥

दीर्घान्तादष्टनोऽसर्वनामस्थानविभक्तिरुदात्ता । अष्टाभिः । अ ष्टाभ्यः । ऋन्युपोत्तमस्वरापवादः । दीर्घात्किम् । अष्टसु प्रक्रमेषु ॥ दीर्घग्रहणमात्त्वविकल्पमात्त्वपक्षे पद्मसंज्ञां च ज्ञापयति ॥

## शतुरनुमो नद्यजादी ॥ १७३ ॥

अनुम् यः शता तदन्तादन्तोदात्तात्परा नद्यसर्वनाम- स्थानजाविविभक्तिश्चोदात्ता स्यात् । तदति । तुदता । अनुमः किम् । तुदन्ति । अत्र लसार्वधातुकानुदात्तत्वे एकादेश उदा- त्तेनोदात्त(८।२।५)इति शत्रन्तमन्तोदात्तम् । नद्यजादी किम् । तुद- द्भ्याम् । अन्तोदात्तात्किम् । दधती । अभ्यस्तानामादि(६।१।१८९)- रित्याद्युदात्तः ॥

बृहन्महतोरुपसंख्यानम् ॥

बृहती । बृहता । महती । महता । शतृवद्भावादेव सिद्धे पृषदादिभ्यो माभूदिति नियमार्थमेतदिति कैयटः ॥

## उदात्तयणो हल्पूर्वात् ॥ १७४ ॥

उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नद्यसर्वनाम-

स्थानमजादिर्विभक्तिश्चोदात्ता स्यात्। कर्त्री। कर्त्रा। तृजन्तमेतत्। उदात्तेति किम्। कर्त्रा। तृन्नन्तमेतत्। हल्पूर्वात्किम्। बहुतितवा(बहति नावा)ब्राह्मण्या॥

उदात्तस्थानिकनकारादपीष्यते॥

वाक्पत्नी॥

## नोङ्धात्वोः॥ १७५॥

एतयोरुक्तं न। ब्रह्मबन्ध्वा। उदात्तोङ्स्थानिको यण्। उदात्तत्वे प्रतिषिद्धे उदात्तस्वरितयोर्यणः(८।२।४) इति विभक्तिः स्वर्यते। धातुयणोपि सुल्वा। कृदुत्तरपदप्रकृतिस्वरेणोदात्तस्य ओः सुपी(६।४।८)ति यण्॥

## ह्रस्वनुड्भ्यां मतुप्॥ १७६॥

ह्रस्वान्तादन्तोदात्तान्नुटश्च मतुबुदात्तः स्यात्। अग्निमान्॥ अक्षण्वता। अन्तोदात्तात्किम्। वसुमान्॥ नुड्ग्रहणं ज्ञापकम् स्वरविधौ व्यञ्जनमविद्यमानवदिति परिभाषा अत्र नाश्रीयत इति॥ तेन मरुत्वानित्यत्र न भवति॥

रेशब्दाच्च॥

आरेवान्। रयिरस्यस्तीति मतुपि रयेर्मतौ बहुल(६।१।३७वा)मिति संप्रसारणे पूर्वरूपे गुणे च रूपम्॥

त्रेः प्रतिषेधः॥

त्रिवतीर्याज्यानुवाक्या भवन्ति॥

## नामन्यतरस्याम्॥ १७७॥

मतुपि परतो यो ह्रस्वस्तदन्तादन्तोदात्तान्नामुदान्तो वा स्यात्। अग्नीनाम्। वायूनाम्। मतुपा ह्रस्वविशेषणं भूतपूर्वे

ह्रस्वे यथा स्यात्। अन्यथा तिसृणामित्यत्र सामितिक एव स्यात्। सनुड्ग्रहणं किम्। घन्वाम्। उदात्तयणो हल्पूर्वादिति नित्योदात्तत्वहेतुः। ह्रस्वान्तात्किम्। कुमारीणाम्। अन्तोदात्तात्किम्। अपूणाम्॥

ङ्याश्छन्दसि बहुलम्॥ १७८॥

ङ्यन्तानां छन्दसि बहुलमुदात्तः स्यात्। अभिभञ्जतीनाम्। न च भवति। नदीनां सर्वासाम्॥

षट्त्रिचतुर्भ्यो हलादिः॥ १७९॥

षट्संज्ञकेभ्यस्त्रिचतुर्भ्यां च हलादिविभक्तिरुदात्ता स्यात्। षड्भ्यः। पञ्चानाम्। त्रयाणाम्। चतुर्णाम्। हलादिः किम्। चतस्रः पश्य॥

झल्युपोत्तमम्॥ १८०॥

झलादिविभक्त्यन्तानां षट्त्रिचतुरामुपोत्तममुदात्तं स्यात्। त्र्यादीनामन्त्यमुत्तमं तस्य समीपमुपोत्तमम्। पञ्चभिः। तिसृभिः। चतसृभिः। झलि किम्। सप्तानाम्। उपोत्तमं किम्। षड्भिः॥

विभाषा भाषायाम्॥ १८१॥

झल्युपोत्तममित्येतद्भाषायां वा स्यात्। पञ्चभिः। तिसृभिः। चतुर्भिः। पक्षे षट्त्रिचतुर्भ्यो हलादि(६।१।१७९)रिति विभक्त्युदात्तत्वम्॥

नगोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः॥ १८२॥

सौ प्रथमैकवचने यदवर्णान्तं तस्माद्गवादिभ्यश्च यथाप्राप्तस्वरो न स्यात्। गवा। सुशुना। शुना। परमशुना। अत्र सावेकाचः(६।१।१६८)इति अन्तोदात्तादुत्तरपदा(६।१।१६९)-

दिति च प्राप्तिः । सावर्णान्तात् । केभ्यः । राजा । परगराजा । अश्वतिः स नकारो गृह्यते । प्राञ्चम् । प्राञ्चे । नलोपे विभक्त्युदात्तत्वमेव । प्राचा । क्रुञ्चा । परमक्रुञ्चा । कृता । परमकृता ॥

दिवो झल् ॥ १८३ ॥

दिवः परा झलादिविभक्तिर्नोदात्ता । द्युभिः । झलिति किम् । दिवा ॥

नृ चान्यतरस्याम् ॥ १८४ ॥

नुर्झलादिर्विभक्तिर्नोदात्ता वा । नृभिः । नृभिः । झलिकम् । नॄणाम् ॥

तित्स्वरितम् ॥ १८५ ॥

प्रत्ययाद्युदात्तत्वापवादः । कार्यम् । वायव्यम् ॥

तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः ॥ १८६ ॥

तासेरनुदात्तेतो ङितोऽकारोपदेशाच्च परं लसार्वधातुकमनुदात्तं स्यात् ह्नुङ्भ्यां परं वर्जयित्वा । प्रत्ययस्वरापवादः । कर्ता । आस्ते । शेते । पचतः । पचमानः । चित्स्वरोऽप्यनेन वाध्यते । एभ्यः किम् । चिनुतः । श्नुः पूर्वकार्यं प्रति ङित् न परकार्यम् । उपदेशेति किम् । इह यथा स्यात् । पचावः । इह मा भूत् हतः । लग्रहणं किम् । पचमानः । सार्वधातुके किम् । शिश्ये । शिश्यिरे । अह्न्विङोः किम् । ह्नुते । अधीते ॥

आदिः सिचोऽन्यतरस्याम् ॥ १८७ ॥

सिजन्तस्यादिर्वोदात्तः स्यात् । मा हि कार्ष्टाम् । पक्षेऽन्तोदात्तः । मा हि लाविषम् । पक्षे मध्योदात्तः सिचश्चित्करणस्याग्रमार्थत्वात् ॥

सिच आद्युदात्तत्वेऽनिटः पित उपसंख्यानम् ॥

अनिटः परः पित्पक्षे उदात्तः पक्षे अनुदात्तः । तेन मा हि कार्षीमिति पक्षे आद्युदात्तं पक्षे अन्तोदात्तम् । अनिटः किम् । मा हि लाविषम् । आद्युदात्तत्वाभावपक्षे मध्योदात्तमेव ॥

स्वपादिहिंसामच्यनिटि ॥ १८८ ॥

स्वपादीनां हिंसेश्च अजादावनिटि लसार्वधातुके परत आद्युदात्तो वा स्यात् । स्वपन्ति । श्वसन्ति । हिंसन्ति । पक्षे प्रत्ययस्वरेण मध्योदात्तः । अचि किम् । स्वप्यात् । आ वृत्क-रणात्स्वपादिः ॥

अभ्यस्तानामादिः ॥ १८९ ॥

अजादावनिटि लसार्वधातुकेऽभ्यस्तानामादिरुदात्तः स्यात् । ददति । जक्षति । जाग्रति । अचि किम् । दद्यात् । अनिटि किम् । जाक्षितः । पुनरादिग्रहणं नित्यार्थम् ॥

अनुदात्ते च ॥ १९० ॥

अविद्यमानोदात्ते लसार्वधातुके परतोऽभ्यस्तानामादिरुदा-त्तः स्यात् । ददाति । जिहीते । अनुदात्ते इति बहुव्रीहिनिर्दे-शो लोपयणादेशार्थः । मा हि ददात् । ददात्यत्र ॥

सर्वस्य सुपि ॥ १९१ ॥

आद्युदात्तः । सर्वः । सर्वे । सुपि किम् । सर्वत्र ॥ प्रत्ययल-क्षणेनाप्ययं स्वर इष्यते ॥ सर्वस्तोमः ॥

सर्वः स्वरोऽनकच्कस्य ॥

सर्वकः । चित्स्वर एव ॥

भीह्रीभृहुमदजनधनदरिद्राजागरां

प्रत्ययात्पूर्वं पिति ॥ १९२ ॥

एतेषामभ्यस्तानां लसार्वधातुके पिति प्रत्ययात्पूर्वमुदात्तं स्यात् । बिभेति । जिहेति । बिभर्ति । जुहोति । ममत्तु नः ॥ बहुलं छन्दसी(२।४।७६)ति शपः श्लुः । जजनदिन्द्रम् । जन जनन इत्यस्य लोटि रूपम् । धन धान्य इत्यस्य दधनत् । दरिद्राति । जागर्ति । भ्यादीनां किम् । ददाति । पिति किम् । दरिद्रति ॥

लिति ॥ १९३ ॥

लिति प्रत्ययात्पूर्वमुदात्तं स्यात् । चिकीर्षकः ॥

आदिर्णमुल्यन्यतरस्याम् ॥ १९४ ॥

णमुलि प्रकृतेरादिरुदात्तो वा स्यात् । लोलूयं लोलूयम् । आम्रेडितानुदात्तत्वे कृते पूर्वो लोलूयंशब्द आद्युदात्तः । पक्षे लित्स्वरेण मध्योदात्तः ॥

अचः कर्तृयकि ॥ १९५ ॥

उपदेशेऽजन्तानां कर्तृयक्यादिरुदात्तो वा स्यात् । लूयते केदारः स्वयमेव । तीर्यते नदी स्वयमेव । पक्षे लसार्वधातुकानुदात्तत्वे यक एव स्वरः ॥

जनादीनामुपदेशे एवात्त्वमेतत्स्वरसिद्ध्यर्थमिष्यते ॥

जायते सायते खायते स्वयमेव । अचः किम् । भिद्यते स्वयमेव । कर्तृग्रहणं किम् । लूयते केदारो देवदत्तेन ॥

थलि च सेटीडन्तो वा ॥ १९६ ॥

सेटि थलि सति थलन्तस्य पदस्यादिर्वान्तो वा इण्वोदात्तः स्यात् । पक्षे लित्स्वरः । तेन पर्यायेण चत्वारः स्वराः । लुलविथ ४ । सेटीति किम् । ययाथ । लित्स्वर एव ॥

ञ्नित्यादिर्नित्यम् ॥ १९७ ॥

ञिति निति च प्रत्यये प्रकृतेरादिरुदात्तः स्यात् । गार्ग्यः । क्रमकः ॥ प्रत्ययलक्षणमत्र नेष्यते ॥ गर्गाः ॥

आमन्त्रितस्य च ॥ १९८ ॥

आमन्त्रितस्यादिरुदात्तः स्यात् । अग्ने । कारकाद्दत्तश्रुतयोरेवाशिषी(६।२।१४८)त्यस्यायमपवाद इष्यते । देवदत्त ॥ लुमता लुप्तेऽपि प्रत्ययलक्षणमत्रेष्यते ॥ सर्पिरागच्छ । सप्तागच्छत ॥

पथिमथोः सर्वनामस्थाने ॥ १९९ ॥

आद्युदात्तः । पन्थानः । मन्थानः । पथिमथिन्शब्दावौणादिकेनिप्रत्ययान्तौ प्रत्ययस्वरेणान्तोदात्तौ । सर्वनामस्थाने किम् । पथः पश्य । उदात्तनिवृत्तिस्वरेणान्तोदात्तः । पथिप्रिय इत्यत्र पूर्वपदप्रकृतिस्वरेणान्तोदात्त एव । प्रत्ययलक्षणं तु नेष्यते ॥

अन्तश्च तवैयुगपत् ॥ २०० ॥

तवैप्रत्ययान्तस्याद्यन्तावुदात्तौ युगपत्स्याताम् । कर्तवै । एकवर्जमितिवचनात्पर्यायनिवृत्त्यर्थं युगपद्ग्रहणम् ॥

क्षयो निवासे ॥ २०१ ॥

आद्युदात्तः । निवासे किम् । क्षयो दस्यूनाम् । प्रत्ययस्वरेणान्तोदात्तः ॥

जयः करणम् ॥ २०२ ॥

करणेऽयमाद्युदात्तः । जयन्त्यनेनेति जयः । पुंसि संज्ञाया-(३।३।११८)मिति घः । करणे किम् । जयः । भावे एरच् ॥

वृषादीनां च ॥ २०३ ॥

आद्युदात्तः । वृषः । जनः । ज्वरः । ग्रहः । हयः । गय

इत्यादि । आकृतिगणोयम् ॥

संज्ञायामुपमानम् ॥ २०४ ॥

उपमानशब्दः संज्ञायामाद्युदात्तः स्यात् । चञ्चा । वध्रिका । खरकुटी । उपमानशब्दा एते उपमेयसंज्ञाः । इवे प्रतिकृता (५।३।९६)विति कनो लुम्मनुष्य(५।३।९८) इति लुप् । प्रत्ययलक्षणेनैव सिद्धे स्वरविधौ क्वचित्प्रत्ययलक्षणं नेति ज्ञापनार्थमेतत्सूत्रम् । तेन पथिप्रियं इत्यादावन्तोदात्तत्वमेव ॥

निष्ठा च द्व्यजनात् ॥ २०५ ॥

निष्ठान्तं द्व्यच्कमाद्युदात्तं स्यात् संज्ञायाम् न चेदादिराकारः । दत्तः । गुप्तः । बुद्धः । निष्ठा किम् । देवः । भीमः । द्व्यच् किम् । चिन्तितः । रक्षितः । अनात्किम् । त्रातः । आप्तः । संज्ञायां किम् । कृतम् । प्रत्ययस्वरः प्रत्युदाहरणम् ॥

शुष्कधृष्टौ ॥ २०६ ॥

एतावाद्युदात्तौ । असंज्ञार्थमिदम् ॥

आशितः कर्ता ॥ २०७ ॥

आद्युदात्तः । आङ्पूर्वादशेरविवक्षिते कर्मणि कर्तरि क्तः । आशितः । थादिस्वरापवादः । कर्तरि किम् । आशितमन्नम् ॥

रिक्ते विभाषा ॥ २०८ ॥

आद्युदात्तः । रिक्तः । संज्ञायां तु निष्ठा च द्व्यजनादि(६।१।२०५)ति नित्यमाद्युदात्तत्वम् पूर्वविप्रतिषेधेन ॥

जुष्टार्पिते चच्छन्दसि ॥ २०९ ॥

एते शब्दरूपेच्छन्दसि वा आद्युदात्ते ॥

नित्यं मन्त्रे ॥ २१० ॥

जुष्टार्पितशब्दौ नित्यमाद्युदात्तौ मन्त्रे। केचिज्जुष्टशब्दमेव अनुवर्तयन्ति अर्पितस्य तु मन्त्रेपि विकल्पः ॥

युष्मदस्मदोर्ङसि ॥ २११ ॥

अद्युदात्तः। तव। मम। युष्यसिभ्यां मदिक् इति प्रत्ययस्वरेणान्तोदात्तः ॥

ङयि च ॥ २१२ ॥

युष्मदस्मदोराद्युदात्तः। तुभ्यम्। मह्यम्। यथासंख्यनिरासाय योगविभागः ॥

यतोऽनावः ॥ २१३ ॥

यदन्त अच्कमाद्युदात्त स्यान्नौशब्दं वर्जयित्वा। चेयम्। कण्ठ्यम्। अनावः किम्। नाव्यम्। तित्स्वर एव। अच् कम्। चिकीर्ष्यम् ॥

ईडवन्दवृशंसदुहां ण्यतः ॥ २१४ ॥

ण्यदन्तानामेषामाद्युदात्तः स्यात्। ईड्यम्। वन्द्यम्। वार्यम्। शंस्यम्। दोह्यम्। वार्यमिति वृङो ण्यत। क्यप्तु वृञ एवेष्यते ॥

विभाषा वेण्विन्धानयोः ॥ २१५ ॥

एनयोर्वादिरुदात्तः। वेणुः। इन्धानः। वेणुरिव वेणुरिति संज्ञात्वे वेणुशब्दस्य संज्ञायामुपमानमिति पूर्वविप्रतिषेधेन नियमाद्युदात्तत्वम् ॥

त्यागरागहासकुहश्वठक्रथानाम् ॥ २१६ ॥

एषामादिर्वोदात्तः स्यात्। पक्षे आद्यानां त्रयाणां घञन्तानां कर्षात्वत(३।१।१५९) इत्यन्तोदात्तत्वं परेषामजन्तानां चित(६।१।१६३) इति ॥

## उपोत्तमं रिति ॥ २१७ ॥

रिदन्तस्योपोत्तममुदात्तं स्यात्। करणीयम्। पटुजातीयः॥

## चङ्यन्यतरस्याम् ॥ २१८ ॥

चङन्तस्योपोत्तममुदात्तं वा स्यात्। मा हि चीकरताम्। माङ्योटि निषिद्धे हि चे(८।१।३४)ति निघाते च लसार्वधातुकानुदात्तत्वे कृते चङ एव उदात्तत्वे प्राप्ते पक्षे ककाराकारस्योदात्तत्वं विधीयते। उपोत्तमं किम्। मा हि दधत्॥

## मतोः पूर्वमात्संज्ञायां स्त्रियाम् ॥ २१९ ॥

मतोः पूर्व आकार उदात्तः स्यात् स्त्रियां संज्ञायाम्। शरावती। पुष्करावती। शरादीनां मतौ बह्वच(६।३।११९) इति च दीर्घः। आत्किम्। इक्षुमती। संज्ञायां किम्। खट्वावती। स्त्रियां किम्। शरावान्॥

## अन्तोऽवत्याः ॥ २२० ॥

अवतिशब्दान्तस्यान्त उदात्तः स्यात् स्त्रियां संज्ञायाम्। अजरवती। खादिरवती। ङीपोनुदात्तत्वे प्राप्ते इदं वचनम्। वत्या इत्येवोच्यमाने राजवतीत्यत्रापि स्यात्। स्वरविधौ न लोपस्यासिद्धत्वादन्वतिशब्दोयम्। नावतिशब्दः। वत्वन्तत्वाश्रयात्सिद्धम्॥

## ईवत्याः ॥ २२१ ॥

ईवत्यन्तस्यापि स्त्रियां संज्ञायामन्तोदात्तः। अहीवती। मुनीवती॥

## चौ ॥ २२२ ॥

लुप्तनकारेऽश्चतौ परे पूर्वस्यान्तोदात्तः स्यात्। दधीचः पश्य। दधीचा। दधीचे। उदात्तनिवृत्तिस्वरापवादोयम्॥

चावतद्धित इति वाच्यम् ॥

दाधीचः । माधूचः । प्रत्ययस्वर एवात्र ॥

समासस्य ॥ २२३ ॥

समासस्यान्त उदात्तः स्यात् । राजपुरुषः । ब्राह्मणसमित् । स्वरविधौ व्यञ्जनमविद्यमानव(८०प)दिति हलन्तानामप्ययस्वरः ॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यश्रीराघवसोमयाजिकुलावतंसश्रीविरमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ व्याकरणमिताक्षरायां षष्ठस्याध्यायस्य प्रथमः पादः ॥



अथ षष्ठाध्यायद्वितीयपादः ।

## बहुव्रीहौ प्रकृत्या पूर्वपदम् ॥ १ ॥

बहुव्रीहौ पूर्वपदं प्रकृतिस्वरं स्यात् । समासान्तोदात्ताप-वादः । कार्ष्णोत्तरासङ्गः । कृष्णस्य विकार इति प्राण्यञन्त आद्युदात्तः । उदात्तस्वरितानुवृत्त्या सर्वानुदात्ते पूर्वपदे समा-सान्तोदात्तत्वमेव । समभागः । समशब्दः सर्वानुदात्तः ॥

## तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्यय-द्वितीयाकृत्याः ॥ २ ॥

तत्पुरुषे तुल्यार्थादीनि पूर्वपदानि प्रकृतिस्वराणि स्युः । तु-ल्यश्वेतः । सदृक्श्वेतः । कृत्यतुल्याख्या(२।१।६८) इति कर्म धारयः । तुल्यशब्दो यतोऽनाव(६।१।२१३) इत्याद्युदात्तः सदृक्छब्दः समानान्ययोश्चे(३।२।६०वा)ति क्विन्नन्तःकृदुत्तरप-दप्रकृतिस्वरेणान्तोदात्तः । तृतीया शङ्कुलाखण्डः । शङ्कुलच् अन्तोदात्तः । सप्तमी अक्षशौण्डः । अक्षैर्देवन इति सप्रत्ययान्तो-ऽक्षशब्दोन्तोदात्तः । उपमान शस्त्रीश्यामा । शस्त्रीति ङीषन्तो-न्तोदात्तः । अव्यय अब्राह्मणः । कुब्राह्मणः । निष्कौशाम्बिः । एतान्यव्ययान्युदात्तानि ॥

अव्यये नञ्कुनिपातानामिति वाच्यम् ॥

नेह स्नात्वाकालकः ॥ द्वितीया मुहूर्तसुखम् । अत्यन्त-संयोगे चे(२।१।२९)ति समासः । मुहूर्तशब्दः पृषोदरादित्वाद-न्तोदात्तः । कृत्य भोज्योष्णं । कृत्ये(२।१।६९)ति समासः । भोज्यशब्दो ण्यदन्तोन्तस्वरितः ॥

## वर्णो वर्णेष्वनेते ॥ ३ ॥

वर्णवाचि पूर्वपदमेतवर्जितवर्णवाचिषु परतः प्रकृतिस्वरं स्यात्तत्पुरुषे। कृष्णसारङ्गः। कृषेर्वर्णे(उ०२८४) इति नक्प्रत्ययान्तः कृष्णशब्दोन्तोदात्तः। वर्णः किम्। परमकृष्णः। वर्णेषु किम्। कृष्णतिलाः। अनेते किम्। कृष्णैतः॥

## गाधलवणयोः प्रमाणे ॥ ४ ॥

परिच्छेदवाचिनि तत्पुरुषे गाधलवणयोरुत्तरपदयोः पूर्वपदं प्रकृतिस्वरं स्यात्। अरित्रगाधम्। तत्प्रमाणमित्यर्थः। गोलवणम्। गवे यावद्दीयते तावदित्यर्थः। षष्ठीसमासः। अरित्रशब्दोर्तिलधूस्वि(३।२।१८४)ति त्रान्तो मध्योदात्तः। गोशब्दोन्तोदात्तः। प्रमाणे किम्। परमगाधम्॥

## दायाद्यं दायादे ॥ ५ ॥

दायाद उत्तरपदे दायाद्यवाचि पूर्वपदं प्रकृतिस्वरं स्यात्तत्पुरुषे। विद्यादायादः। धनदायादः। विद्याशब्दः संज्ञायां समजे(३।३।९९)ति क्यबन्तोऽप्यन्तोदात्त इष्यते। धनशब्दो बाहुलकादौणादिके क्युन्याद्युदात्तः। दायाद्यं किम्। परमदायादः। दायादे किम्। धनपतिः॥

## प्रतिबन्धि चिरकृच्छ्रयोः ॥ ६ ॥

एतयोरुत्तरपदयोः प्रतिबन्धवद्वाचि पूर्वपदं प्रकृतिस्वरं स्यात् तत्पुरुषे। गमनचिरम्। गमनकृच्छ्रम्। गमनशब्दो लित्स्वरेणाद्युदात्तः। गमनं च तच्चिरं चेति मयूरव्यंसकादित्वात्समासः। कारणविकलतया चिरभावि कृच्छ्रयोगि च गमनं प्रतिबन्धि विज्ञायते। प्रतिबन्धि किम्। मूत्रकृच्छ्रम्॥

पदेऽपदेशे ॥ ७ ॥

अपदेशो व्याजः। तद्वाचिनि तत्पुरुषे पदशब्दे परतः पूर्वपदं प्रकृतिस्वरं स्यात् । मूत्रपदेन प्रस्थितः । मूत्रव्याजेनेत्यर्थः। मूत्रं च तत्पदं चेति मयूरव्यंसकादिः । मूत्रयतिर्घञन्तोन्तोदात्तः । अपदेशे किम् । विष्णोः पदं विष्णुपदम् ॥

निवाते वातत्राणे ॥ ८ ॥

निवातशब्द उत्तरपदे वातत्राणवाचिनि तत्पुरुषे पूर्वं पदं प्रकृतिस्वरं स्यात्। कुटीनिवातम्। वाताभावो निवातम् इत्यव्ययीभावः । निरुद्धोऽस्मिन् वात इति बहुव्रीहिर्वा । कुटीहेतुके निवाते वर्तमानः कुटीशब्दः समानाधिकरणो निवातेन समस्यते । ङीषन्तः कुटीशब्दोन्तोदात्तः। वातत्राणे किम्। राजनिवाते वसति । अत्र निवातशब्दः पार्श्ववाची ॥

शारदेऽनार्तवे ॥ ९ ॥

ऋतौ भवमार्तवम्। अनार्तववाचिनि शारद उत्तरपदे पूर्वपदं प्रकृतिस्वरं स्यात्तत्पुरुषे । रज्जुशारदमुदकम् । प्रत्यग्रवच्यत्र शारदशब्दः॥ नित्यसमासोऽत्रेष्यते ॥ सद्यो रज्ज्वोद्धृतमुदकं प्रत्यग्रमनुपहतं रज्जुशारदम् । रज्जुशब्द आद्युदात्तः। अनार्तवे किम्। परमशारदः। शरदि भवमत्र शारदम् ॥

अध्वर्युकषाययोर्जातौ ॥ १० ॥

एतयोरुत्तरपदयोर्जातिवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात्। प्राच्याध्वर्युः। समानाधिकरणसमासः।जातिविशेषवाची प्राच्यशब्दो यदन्त आद्युदात्तः। सर्पिर्मण्डकषायः। षष्ठीसमासः जातिविशेषे रूढः। सर्पिर्मण्डशब्दः षष्ठीसमासोन्तोदात्तः ।

जातौ किम्। परमाध्वर्युः। परमकषायः॥

सदृशप्रतिरूपयोः सादृश्ये ॥ ११ ॥

एतयोरुत्तरपदयोः सादृश्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात्। पितृसदृशः। मातृप्रतिरूपः। पितृमातृशब्दौ उणादिष्वन्तोदात्तौ। सादृश्ये किम्। परमसदृशः। पूज्यमानतात्र समासार्थो न सादृश्यम्॥

द्विगौ प्रमाणे ॥ १२ ॥

प्रमाणवाचिनि तत्पुरुषे द्विगौ उत्तरपदे पूर्वपदं प्रकृतिस्वरं स्यात्। प्राच्यसप्तसमः। सप्तसमाः प्रमाणमस्येति मात्रचः प्रमाणे लो द्विगोर्नित्य(५।२।३७ वा)मिति लुक्। प्राच्यश्चासौ सप्तसमश्चेति विग्रहः। प्राच्यशब्दो यतोऽनाव(६।१।२१३)इत्याद्युदात्तः। द्विगौ किम्। व्रीहिप्रस्थः। प्रमाणे किम्। परमसप्तसमम्॥

गन्तव्यपण्यं वाणिजे ॥ १३ ॥

वाणिज उत्तरपदे गन्तव्यवाचि पण्यवाचि च पूर्वपदं प्रकृतिस्वरं स्यात्तत्पुरुषे। मद्रवाणिजः। मद्रान् गत्वा व्यवहरतीत्यर्थः। सप्तमीसमासः। रगन्तो मन्त्रशब्दोन्तोदात्तः। गोवाणिजः। गन्तव्यपण्यं किम्। परमवाणिजः॥

मात्रोपज्ञोपक्रमच्छाये नपुंसके ॥ १४ ॥

मात्रादिषूत्तरपदेषु नपुंसकाभिधायिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात्। भिक्षामात्रम्। मात्रशब्दस्तुल्यपर्यायो वृत्तिविषय एव तुल्यप्रमाणो वर्तते। तत्र भिक्षायास्तुल्यं प्रमाणमस्येत्यस्वपदविग्रहः। षष्ठीसमासः। भिक्षाशब्दो गुरोश्च हल(३।३।१०३) इत्यकारप्रत्ययान्तोन्तोदात्तः। पाणिनोपज्ञम्।

पाणिनशब्दोण्प्रत्ययान्तः । नन्दोपक्रमम् । षष्ठीसमासः । नन्दशब्दोऽन्तः । इषुच्छायम् । इषुशब्द उप्रत्ययान्तो निदित्यनुवर्तनदाद्युदात्तः । नपुंसके किम् । कुड्यच्छाया ॥

सुखप्रिययोर्हिते ॥ १५ ॥

एतयोरुत्तरपदयोर्हितवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात् । गमनसुखम् । गमनप्रियम् । कर्मधारयः । आयत्यां प्रीतिकरं हितमित्युच्यते । सुखसाधनत्वाद्गमनं सुखम् । हिते किम् । परमसुखम् ॥

प्रीतौ च ॥ १६ ॥

प्रीतौ गम्यायां सुखप्रिययोः परतः पूर्वपदं प्रकृतिस्वरं स्यात्तत्पुरुषे । ब्राह्मणसुखं पायसम् । छात्रप्रियोऽनध्यायः । सुखप्रिययोः प्रीत्यव्यभिचारात्प्रीतिग्रहणम् प्रकर्षपरिग्रहार्थम् । ब्राह्मणच्छात्रावन्तोदात्तौ । प्रीतौ किम् । राजसुखम् ॥

स्वं स्वामिनि ॥ १७ ॥

स्वामिन्युत्तरपदे स्ववाचि पूर्वपदं प्रकृतिस्वरं स्यात्तत्पुरुषे । गोस्वामी । स्वं किम् । परमस्वामी ॥

पत्यावैश्वर्ये ॥ १८ ॥

पतिशब्द उत्तरपदे ऐश्वर्यवाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात् । गृहपतिः । गेहे कः(३।१।१४४) इति गृहशब्दोन्तोदात्तः । ऐश्वर्ये किम् । ब्राह्मणो वृषलीपतिः । वृषल्या भर्तेत्यर्थः ॥

न भूवाक्चिद्दिधिषु ॥ १९ ॥

एषां प्रागुक्तं न स्यात् । भूपतिः । वाक्पतिः । चित्पतिः । दिधिषूपतिः । अन्तोदात्ता एव ॥

## वा भुवनम् ॥ २० ॥

पत्यावैश्वर्ये भुवनं वा प्रकृतिस्वरं स्यात्। भुवनपतिः। भुवनशब्दः क्युन्प्रत्ययान्त आद्युदात्तः॥

## आशङ्काबाधनेदीयस्सु सम्भावने ॥ २१ ॥

एषु परेषु पूर्वपदं प्रकृतिस्वरं स्यात्सम्भावनवाचिनि तत्पुरुषे। गमनाशङ्कं वर्तते। गमनमाशङ्क्यत इति सम्भाव्यते। गमनाबाधम्। गमनमाबाध्यत इति सम्भाव्यते। गमननेदीयः। गमनमन्तिकमिति सम्भाव्यते। सम्भावने किम्। परमनेदीयः॥

## पूर्वे भूतपूर्वे ॥ २२ ॥

पूर्वशब्द उत्तरपदे भूतपूर्ववाचिनि तत्पुरुषे पूर्वपदं प्रकृतिस्वरं स्यात्। दर्शनीयो भूतपूर्वः दर्शनीयपूर्वः। वृत्तिविषये पूर्वशब्दो भूतपूर्वे वर्तते। मयूरव्यंसकादित्वात्समासः। दर्शनीयस्य रित्स्वरः। भूतपूर्वे किम्। परमपूर्वः॥

## सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ॥ २३ ॥

एषु परेषु पूर्वपदं प्रकृतिस्वरं स्यात् सामीप्यवाचिनि तत्पुरुषे। मद्राणां सविधं मद्रसविधम्। मद्रसमीपमित्यर्थः। मद्रसनीडम्। मद्रसमर्यादम्। मद्रसवेशम्। मद्रसदेशम्। सामीप्ये किम्। मर्यादया सहितं समर्यादम्। क्षेत्रसमर्यादं देवदत्तस्य॥

## विस्पष्टादीनि गुणवचनेषु ॥ २४ ॥

गुणवचनेषु परतो विस्पष्टादीनि प्रकृतिस्वराणि स्युः। विस्पष्टकटुकम्। सुप्सुपे(२।१।४)ति समासः। विस्पष्टादयः प्रवृत्तिनिमित्तस्य विशेषणं न द्रव्यस्येति कर्मधारयाभावः। विस्पष्ट-

शब्दो गतिरनन्तर(६।२।४९)इत्याद्युदात्तः । विस्पष्टादीनि किम् । परमकटुकम् । गुणवचनेषु किम् । विस्पष्टो ब्राह्मणः ॥

श्रज्यावमकन्पापवत्सु भावे कर्मधारये ॥ २५ ॥

श्र ज्या अवम कन् एतेषु पापवति चोत्तरपदेषु भाववाचि पूर्वपदं प्रकृतिस्वरं स्यात्कर्मधारये । गमनश्रेष्ठम् । गमनज्येष्ठम् । गमनावमम् । गमनकनिष्ठम् । गमनपापिष्ठम् । श्रज्याकन आदेशा गृह्यन्ते । श्रादिषु किम् । गमनशोभनम् । भावे किम् । गम्यतेऽनेनेति गमनश्रेयः । कर्मधारये किम् । गमनस्य श्रेयः गमनश्रेयः ॥

कुमारश्च ॥ २६ ॥

कुमारशब्दः पूर्वपदं प्रकृतिस्वरं स्यात्कर्मधारये । कुमारश्रमणा । कुमारकुलटा । कुमारशब्दोऽन्तोदात्तः । कुमारः श्रमणादिभि(२।१।७०)रिति समासोऽत्र गृह्यते । केचित्कर्मधारयमात्रमिच्छन्ति ॥

आदिः प्रत्येनसि ॥ २७ ॥

प्रतिगतमेनो यस्य प्रत्येनाः । तस्मिन्नुत्तरपदे कुमारस्यादिरुदात्तः स्यात्कर्मधारये । कुमारप्रत्येनाः ॥

पूगेष्वन्यतरस्याम् ॥ २८ ॥

सङ्ख्यावाचिन्युत्तरपदे कुमारस्यादिर्वोदात्तः स्यात्कर्मधारये । कुमारलोहध्वजाः । अयं पूगवाची । तस्मात् पूगाञ्ञ्योऽग्रामणीपूर्वा(५।३।११२)दिति ञ्यस्य तद्राजस्ये(२।४।६२)ति लुक् । कुमारश्चे(६।२।२६)ति पूर्वपदप्रकृतिस्वरः । प्रतिपदोक्तग्रहणेन समासान्तोदात्तत्वमेव ॥

## इगन्तकालकपालभगालशरावेषु द्विगौ ॥ २९ ॥

इगन्ते कालवाचिनि कपालादौ चोत्तरपदे पूर्वपदं प्रकृतिस्वरं स्याद् द्विगौ । पञ्चारत्निः । पञ्चारत्नयः प्रमाणमस्येति मात्रचो द्विगोर्नित्य(५।२।३७वा)मिति लुक् । पञ्चमास्यः । पञ्च मासान् भूत इति द्विगोः यत् प्रत्ययः । पञ्चकपालः । पञ्चभगालः । पञ्चशरावः । संस्कृतं भक्षा(४।२।१६) इत्यणो द्विगोर्लुगनपत्य(४।१।८८) इति लुक् । इगन्तादिषु किम् । पञ्चभिरश्वैः क्रीतः पञ्चाश्वः । द्विगौ किम् । परमशरावः । पञ्चारत्न्यः । पञ्चारत्नय इत्यत्रयण्गुणयोर्वहिरङ्गत्वादिगन्तलक्षणस्वरसिद्धिः ॥

## बह्वन्यतरस्याम् ॥ ३० ॥

इगन्तादिषु बह्वित्येतत्प्रकृतिस्वरं वा स्यात् द्विगौ । बह्वरत्निः । बहुमास्यः । बहुकपालः । बहुभगालः । बहुशरावः । बहुशब्दोऽन्तोदात्तः । पक्षे समासान्तोदात्तः ॥

## दिष्टिवितस्त्योश्च ॥ ३१ ॥

एतयोः परतः पूर्वपदं प्रकृतिस्वरं वा स्यात् द्विगौ । इगन्ते(६।२।२९)ति प्राप्तिर्विकल्प्यते । पञ्चदिष्टिः । पञ्चवितस्तिः। दिष्टिवितस्त्योः प्रमाणत्वान्मात्रचो लुक् ॥

## सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ॥ ३२ ॥

अकालवाचि सप्तम्यन्तं सिद्धादिषु प्रकृतिस्वरं वा स्यात् । साङ्काश्यसिद्धः। साङ्काश्यशब्दो ण्यप्रत्ययान्तोऽन्तोदात्तः। साङ्काश्यकाम्पिल्यनासिक्यदार्वाघाटानामतः पूर्वो वे(फि० ६९)ति फिट्सूत्रेण मध्योदात्तत्वमपि । ऊकशुष्कः। ऊकशब्दोन्तोदात्तः । कुम्भीशब्दो ङीपन्तोन्तोदात्तः। चक्रवन्धः। चक्रशब्दोन्तोदात्तः ।

अकालात्किम् । पूर्वाह्णसिद्धः । सप्तमीस्वरः कृत्स्वरेण बाधितः प्रतिप्रसूयते ॥

परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ॥ ३३ ॥

पर्यादयो वर्ज्यमानादिषूत्तरपदेषु प्रकृतिस्वराः स्युः । परित्रिगर्तं वृष्टो देवः । प्रत्यपराह्णम् । प्रतिपूर्वरात्रम् । उपपूर्वाह्णम् । उपपूर्वरात्रम् । अपत्रिगर्तं वृष्टो देवः । अपपरी वर्जने वर्तेते । एतयोरेव वर्ज्यमानमुत्तरपदम् । वर्ज्यमानादिषु किम् । प्रत्यग्नि शलभाः पतन्ति । परिवनमित्यत्र तु परत्वाद्वनं समासे (६।२।१७८) इत्येव भवति । बहुव्रीहितत्पुरुषयोः सिद्धत्वादव्ययीभावार्थमिदं सूत्रम् ॥

राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ॥ ३४ ॥

राजन्यवाचिनां बहुवचनान्तानां यो द्वन्द्वोऽन्धकवृष्णिविषयस्तत्र पूर्वपदं प्रकृतिस्वरं स्यात् । श्वाफल्कचैत्रकाः । शिनिवासुदेवाः । श्वाफल्कशब्द ऋष्यन्धके(४।१।११४)त्यणन्तोऽन्तोदात्तः । शिनिराद्युदात्तस्तदपत्येऽप्यभेदेन वर्तते । राजन्यानां किम् । द्वैप्यभैमायनाः । द्वीपादनुसमुद्रं यञ् (४।३।१०) । भैमेरपत्यं युवा भैमायनः । अन्धकवृष्णय एते न तु राजन्याः । अभिषिक्तवंश्या राजन्या इह गृह्यन्ते । बहुवचनेति किम् । सङ्कर्षणवासुदेवौ । द्वन्द्वे किम् । वृष्णीनां कुमाराः वृष्णिकुमाराः । अन्धकवृष्णिषु किम् । कुरुपञ्चालाः ॥

संख्या ॥ ३५ ॥

सङ्ख्यावाचि पूर्वपदं द्वन्द्वे प्रकृतिस्वरं स्यात् । एकादश । द्वादश । कन्नन्त एकशब्द आद्युदात्तः । द्विरन्तोदात्तः ॥

## आचार्योपसर्जनश्चान्तेवासी ॥ ३६ ॥

आचार्योपसर्जनान्तेवासिनां द्वन्द्वे पूर्वपदं प्रकृतिस्वरं स्यात्। आपिशलपाणिनीयाः। आपिशलस्यापत्यमापिशलिराचार्यः। तेन प्रोक्तमापिशलम्। इञश्चेत्यण्। तदधीयतेऽन्तेवासिन आपिशलाः। प्रोक्ताल्लुग(४।२।६४)त्यध्येतृप्रत्ययस्य लुक्। आचार्योपसर्जनग्रहणं किम्। पाणिनीयदेवदत्ताः। आचार्यग्रहणं किम्। छान्दसवैयाकरणाः। अन्तेवासीति किम्। आपिशलपाणिनीये शास्त्रे॥

## . कार्तकौजपादयश्च ॥ ३७ ॥

एषु द्वन्द्वे पूर्वपदं प्रकृतिस्वरं स्यात्। कार्तकौजपौ। सावर्णिमाण्डूकेयावित्यादि। कृतस्यापत्यं कुजपस्यापत्यमित्यणन्तौ। इतराविञ्ढगन्तौ॥

## महान् व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ॥ ३८ ॥

द्वन्द्व इति निवृत्तम्। महानित्येतद्व्रीह्यादिषु परतः प्रकृतिस्वरं स्यात्। महाव्रीहिः। महापराह्णः। महागृष्टिः। महेष्वासः। महाजाबालः। महाभारः। महाभारतः। महाहैलिहिलः। महारौरवः। महाप्रवृद्धः। महच्छब्दोऽन्तोदात्तः। सन्महदि(२।१।६१)ति प्रतिपदोक्तः समासोऽत्र गृह्यते। कर्मधारयेऽनिष्ठे(६।२।४६)त्यश्रेण्यादिसमासग्रहणादिह महद्धशब्दपाठः॥

## क्षुल्लकश्च वैश्वदेवे ॥ ३९ ॥

वैश्वदेवे परे क्षुल्लकमहान्तौ प्रकृतिस्वरौ। क्षुल्लकवैश्वदेवम्।

महावैश्वदेवम्। क्षुल्लतीति क्षुल्लः। अज्ञातार्थे कः। क्षुल्लकोन्तोदात्तः॥

उष्ट्रः सादिवाम्योः॥ ४०॥

एतयोरुष्ट्रः प्रकृतिस्वरः स्यात्। उष्ट्रसादिः। उष्ट्रवामिः। उष्ट्रशब्दः ष्ट्रन्नन्त आद्युदात्तः॥

गौः सादसादिसारथिषु॥ ४१॥

एषु गौः प्रकृतिस्वरः स्यात्। गोसादः। गोसादिः। गोसारथिः॥

कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपापारेवडवातैतिलकद्रूः पण्यकम्बलो दासीभाराणां च॥ ४२॥

कुरुगार्हपतादीनां दासीभारादीनां च पूर्वपदं प्रकृतिस्वरं स्यात्। कुरुगार्हपतम्। कुरुशब्दोन्तोदात्तः॥

कुरुवृज्योर्गार्हपत इति वाच्यम्॥

वृजिगार्हपतम्। वृजिशब्द आद्युदात्तः। रिक्तगुः। रिक्तो(क्ते) विभाषे(६।१।२०८)त्युक्तःस्वरः। असूता जरती असूतजरती। असूतशब्दो नञ्स्वरेणाद्युदात्तः। अश्लीला दृढरूपा अश्लीलदृढरूपा। श्रीरस्यास्तीति सिध्मादेराकृतिगणत्वाल्लच्। कपिलादित्वाल्लत्वम्। पारे वडवेव पारेवडवा। निपातनादिवार्थे समासोऽलुक् च। घृतादित्वात्पारशब्दोन्तोदात्तः। तैतिलानां कद्रूः तैतिलकद्रूः। तैतिलिनोपसन्तेतिलः। पण्यः कम्बलः पण्यकम्बलः। पण्यशब्दो यतोऽनाव(६।१।२१३)इत्याद्युदात्तः॥

पण्यकम्बलं संज्ञायाम्॥

अन्यत्र समासान्तोदात्तत्वमेव। कृत्स्वरस्य प्रतिपदोक्त-

समासविषयत्वात् । दास्याः भारः दासीभारः । देवहूतिरित्यादि । अविहितलक्षणपूर्वपदप्रकृतिस्वरस्तत्पुरुषो दासीभारादिः ॥

## चतुर्थी तदर्थे ॥ ४३ ॥

चतुर्थ्यन्तं चतुर्थ्यन्तार्थार्थवाचिन्युत्तरपदे प्रकृतिस्वरं स्यात् । यूपदारु । यूपशब्द आद्युदात्तः । प्रकृतिविकार एवायं स्वरः । तदर्थे किम् । कुबेरबलिः ॥

## अर्थे ॥ ४४ ॥

अर्थे च परे चतुर्थ्यन्तं प्रकृतिस्वरं स्यात् । मात्र इदं मात्रर्थम् । मातृशब्द उणादिष्वन्तोदात्तः ॥

## क्ते च ॥ ४५ ॥

क्तान्ते परे चतुर्थ्यन्तं प्रकृत्या स्यात् । गोहितम् । गोरक्षितम् ॥

## कर्मधारयेऽनिष्ठा ॥ ४६ ॥

क्तान्ते परे अनिष्ठान्तं पूर्वपदं प्रकृतिस्वरं स्यात् । श्रेण्यादिसमासोऽत्र प्रतिपदविहितः क्तान्तः समासो गृह्यते । श्रेणीकृताः । श्रेणीशब्द आद्युदात्तः । अनिष्ठा किम् । कृताकृतम् ॥

## अहीने द्वितीया ॥ ४७ ॥

अहीनवाचिनि समासे क्तान्त उत्तरपदे पूर्वपदं प्रकृतिस्वरं स्यात् । कष्टश्रितः । कष्टशब्दोऽन्तोदात्तः । अहीन इति किम् । कान्तारातीतः । हीनं त्यक्तं विभक्तमित्यनर्थान्तरम् ॥

द्वितीयाऽनुपसर्ग इति वाच्यम् ॥

सुखप्राप्तः । सुखापन्नः । थाथादिस्वरापवादोऽयं योगः ॥

तृतीया कर्मणि ॥ ४८ ॥

कर्मवाचिनि क्तान्त उत्तरपदे तृतीयान्तं प्रकृतिस्वरं स्यात्। रुद्रहतः। रुद्रशब्दो रगन्तः। कर्मणि किम्। रथयातः। गत्यर्थत्वात्कर्तरि क्तः॥

गतिरनन्तरः ॥ ४९ ॥

कर्मवाचिनि क्तान्त उत्तरपदेनन्तरो गतिः प्रकृतिस्वरः स्यात्। प्रकृतः। अनन्तरः किम्। अभ्युद्धृतः। अभेर्न। उदात्विष्यत एव। कारकपूर्वस्य तु थाथादिस्वर एवेष्यते। दूरादागतः। पञ्चम्या अलुक्। अनन्तरग्रहणादेव कृद्ग्रहणपरिभाषा नाद्रियते। कर्मवाचिनि किम्। प्रकृतः कटं देवदत्तः। थाथादिस्वरापवादोयं योगः॥

तादौ च निति कृत्यतौ ॥ ५० ॥

तुशब्दवर्जिते तादौ निति कृत्यनन्तरो गतिः प्रकृतिस्वरः स्यात्। प्रकर्तुम्। प्रकृतिः। तादौ किम्। प्रजल्पाकः। निति किम्। प्रकर्ता। तृच्॥

कृद्ग्रहणमुपदेशे ताद्यर्थम्॥

प्रलवितुम्। अतौ किम्। गा(आ)गन्तुः। कृत्स्वरापवादः॥

तवै चान्तश्च युगपत् ॥ ५१ ॥

तवैप्रत्ययान्तोन्तोदात्तः स्याद्गतिश्चानन्तरः प्रकृतिस्वरो युगपत् स्यात्। अन्वेतवै॥

अनिगन्तोञ्चतौ वप्रत्यये ॥ ५२ ॥

अप्रत्ययेञ्चतौ परेनन्तरो गतिः प्रकृतिस्वरः। प्राङ्। प्राञ्चौ। प्राञ्चः। स्वरितो वानुदात्त(८।२।६) इत्येकादेशः स्वरित उ-

दाक्षो वा। अनिगन्तः किम्। प्रत्यङ्। कृत्स्वर एव। अप्रत्यये किम्। उदञ्चनः। अञ्चुस्वरादयं स्वरो विप्रतिषेधेन। पराचः। पराचा॥

न्यधी च॥ ५३॥

अप्रत्ययेऽञ्चतावेतौ प्रकृतिस्वरौ स्याताम्। न्यङ्। अध्यङ्॥

ईषदन्यतरस्याम्॥ ५४॥

ईषदित्येतत्पूर्वपदं प्रकृतिस्वरं स्यात्। ईषत्कडारः। ईषदित्यन्तोदात्तम्। ईषद्भेद इत्यादौ कृत्स्वर एव॥

हिरण्यपरिमाणं धने॥ ५५॥

धने परे हिरण्यपरिमाणवाचि प्रकृतिस्वरं वा स्यात्। द्विसुवर्णधनम्। द्विसुवर्णपरिमाणं द्विसुवर्णं तच तद्धनं च। बहुव्रीहावपि परत्वादयमेव विकल्पः। हिरण्येति किम्। प्रस्थधनम्। परिमाणं किम्। काञ्चनधनम्। धने किम्। निष्कमाला॥

प्रथमोऽचिरोपसम्पत्तौ॥ ५६॥

प्रथमः पूर्वपदं प्रकृतिस्वरं वा स्यादभिनवत्वे द्योत्ये। प्रथमवैयाकरणः। संप्रत्यधीत इत्यर्थः। अचिरोपसम्पत्तौ किम्। प्रथमवैयाकरणः। आद्य इत्यर्थः। प्रथेरमच्(उ० ७४६)इत्यन्तोदात्तः प्रथमशब्दः॥

कतरकतमौ कर्मधारये॥ ५७॥

एतौ प्रकृतिस्वरौ वा स्तः कर्मधारये। कतरकठः। कतमकठः। प्रतिपदोक्तत्वादेवेह ग्रहणात्कर्मधारयग्रहणमुत्तरार्थम्॥

आर्यो ब्राह्मणकुमारयोः॥ ५८॥

एतयोरार्यः प्रकृतिस्वरो वा स्यात् कर्मधारये। आर्यब्रा

क्षणः । आर्यकुमारः । ण्यदन्तोन्तस्वरित आर्यः । कर्मधारये किम् । आर्यस्य ब्राह्मणः आर्यब्राह्मणः । आर्यः किम् । परमब्राह्मणः । एतयोः किम् । आर्यक्षत्रियः ॥

राजा च ॥ ५९ ॥

वा प्रकृतिस्वरः । राजब्राह्मणः । राजकुमारः । कर्मधारय एव । राज्ञां ब्राह्मणः राजब्राह्मणः । ब्राह्मणकुमारयोरेव । राजपुरुषः । योगविभाग उत्तरार्थः ॥

षष्ठी प्रत्येनसि ॥ ६० ॥

एतस्मिन् षष्ठ्यन्तो राजशब्दः प्रकृतिस्वरो वा स्यात् । राज्ञः प्रत्येनाः राजप्रत्येनाः । षष्ठी किम् । कर्मधारये न ॥

क्ते नित्यार्थे ॥ ६१ ॥

क्तान्त उत्तरपदे नित्यार्थे समासे पूर्वपदं प्रकृतिस्वरं वा स्यात् । नित्यप्रहसितः । कालाः(२।१।२८) इति द्वितीयासमासः । नित्यशब्दस्त्यबन्त आद्युदात्तः । नित्यार्थे किम् । मुहूर्तप्रहसितः ॥

ग्रामः शिल्पिनि ॥ ६२ ॥

शिल्पिवाचिन्युत्तरपदे ग्रामः प्रकृतिस्वरो वा स्यात् । ग्रामनापितः । ग्रामकुलालः । ग्रामशब्दो ग्रसतेरा चेति(उ० १.४०) मन्प्रत्ययान्त आद्युदात्तः । ग्रामः किम् । परमनापितः । शिल्पिनि किम् । ग्रामभार्या ॥

राजा च प्रशंसायाम् ॥ ६३ ॥

शिल्पिनि राजा प्रकृतिस्वरो वा स्यात्प्राशस्त्ये गम्ये । राजनापितः । राजा किम् । परमनापितः । प्राशस्त्ये किम् । राज-

नापितः । स्वरूपकथनमात्रमेतत् । शिल्पिनि किम् । राजहस्ती ॥

आदिरुदात्तः ॥ ६४ ॥

पूर्वपदस्यादिरुदात्त इत्यधिकारोयम् । आदिरिति प्रागन्ताधिकारात् । उदात्त इति प्रकृत्या भगाल(६।२।१३७)मिति यावत् ॥

सप्तमीहारिणौ धर्म्येऽहरणे ॥ ६५ ॥

हरणभिन्ने धर्म्यवाचिन्युत्तरपदे सप्तम्यन्तं हारिवाचि च पूर्वपदमाद्युदात्तं स्यात् । हरति देयं स्वीकरोतीति हारी । धर्म्यमित्याचारनियतं देयमुच्यते । स्तूपेशाणाः । मकुटेकार्षापणाः । हलेद्विपदिका । पूपादि(वर्षे, दृषदि) माषकाः । सञ्ज्ञायामिति सप्तमीसमासः । कारनाम्नी(६।३।१०)त्यलुक् । हारिणि । याज्ञिकाश्वः । वैयाकरणहस्ती । मातुलाश्वः । पितृव्यगवः । क्वचिदयमाचारो व्यवस्थितस्तूपादिषु शाणादि देयम् याज्ञिकादीनां चाश्वादिदिति । धर्म्ये किम् । स्तम्बेरमः । अहरणे किम् । वाडवहरणम् । वडवाया अयं वाडवः । तस्य बीजनिषेकादुत्तरकालं शरीरपुष्ट्यर्थं यद्दीयते तद्धरणमुच्यते । परोपि कृत्स्वरो हारिस्वरेण बाध्यत इत्येतदहरणग्रहणेन ज्ञाप्यते । तेन वाडवहार्यमिति हारिस्वर एव ॥

युक्ते च ॥ ६६ ॥

युक्तवाचिन्युत्तरपदे पूर्वपदमाद्युदात्तं स्यात् । गोवल्लभः । युक्तः कर्तव्ये समाहित इत्यर्थः ॥

विभाषाध्यक्षे ॥ ६७ ॥

अस्मिन् परे पूर्वपदमाद्युदात्तं वा स्यात् । गवाध्यक्षः । पूर्व[पद]प्रकृतिस्वरोऽन्यत्र ॥

पापं च शिल्पिनि ॥ ६८ ॥

शिल्पिवाचिनि पापशब्दो वाद्युदात्तः । पापनापितः । पापाणके कुत्सितै(२।१।५४)रिति समासग्रहणात् षष्ठीसमासे न ॥

गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ॥ ६९ ॥

गोत्रवाचिन्यन्तेवासिवाचिनि ब्राह्मणमाणवयोश्च परेषु क्षेपवाचिनि समासे पूर्वपदमाद्युदात्तं स्यात् । गोत्रे जङ्घावात्स्यः । यो जङ्घादानं करोमीति वात्स्यः सम्पतस्यते स जङ्घावात्स्य इति क्षेप्यते । जङ्घादानं किमप्याचारनियतं देयम् । भार्यासौश्रुतः । सुश्रुतोपत्यं सौश्रुतः । तस्य भार्याप्रधानतया क्षेपः । अन्तेवासि कुमारीदाक्षाः । कम्बलचारायणीयाः । ओदनपाणिनीयाः । कुमार्यादिलाभकामा ये दाक्ष्यादिप्रोक्तान्यधीयते तच्छिष्यास्त एवं क्षिप्यन्ते । भिक्षामाणवः । यो भिक्षां लप्स्य इति माणवः स एवं क्षिप्यते । वृषलीब्राह्मणः । यत्र लक्षणं समासस्य नास्ति तत्र सुप्सुपे(२।१।४वा०)ति समासः । गोत्रादिषु किम् । दासीश्रोत्रियः । क्षेपे किम् । महाब्राह्मणः ॥

अङ्गानि मैरेये ॥ ७० ॥

मैरेये परतस्तदङ्गान्याद्युदात्तानि स्युः । मैरेयो मद्यविशेषः । गुडमैरेयः । मधुमैरेयः । अङ्गानि किम् । परममैरेयः । मैरेये किम् । पौष्पासवः ॥

भक्ताख्यास्तदर्थेषु ॥ ७१ ॥

अन्नवाचिनस्तदर्थेषु परेष्वाद्युदात्ताः स्युः । भिक्षाकंसः । श्राणाकंसः । भिक्षादयोऽन्नवचनाः । भक्ताख्याः किम् । सम्पन्नशालयः । समशनं समाश इति क्रियावचनोयं न द्रव्यवचनः । तदर्थेषु किम् । भिक्षाप्रियः । अत्र बहुव्रीहिस्वरः ॥

## गोबिडालसिंहसैन्धवेषूपमाने ॥ ७२ ॥

उपमानवाचिष्वेषु परेषु पूर्वपदं प्रकृतिस्वरं स्यात् । धान्यगवः । भिक्षाबिडालः । तृणसिंहः । सक्तुसैन्धवः । धान्यं गौरिवेति विगृह्य व्याघ्रादेराकृतिगणत्वात्समासः । उपमार्थोपि यथासम्भवं योज्यः । गवाकृत्या व्यवस्थितं धान्यं धान्यगवशब्देनोच्यते । उपमाने किम् । परमसिंहः ॥

## अके जीविकार्थे ॥ ७३ ॥

अकान्ते परे पूर्वपदमाद्युदात्तं स्याज्जीविकार्थे समासे । दन्तलेखकः । अके किम् । दन्तकर्ता । जीविकार्थे किम् । इक्षुभक्षिका ॥

## प्राचां क्रीडायाम् ॥ ७४ ॥

प्राग्देशवर्तिनी या क्रीडा तद्वाचिनि समासेऽकेपरे पूर्वपदमाद्युदात्त स्यात् । उद्दालकपुष्पभञ्जिका । संज्ञायामिति ण्वुल् । नित्यं क्रीडे(२।२।१७)ति समासः । प्राचां किम् । जीवपुष्पप्रचायिका । उदीचामियं क्रीडा । क्रीडायां किम् । रथपुष्पप्रचायिका । पर्याये ण्वुच् ॥

## अणि नियुक्ते ॥ ७५ ॥

अणन्त उत्तरपदे नियुक्तवाचिनि समासे पूर्वपदमाद्युदात्त स्यात् । छत्रधारः । नियुक्तोऽधिकृतः युक्तस्तु कस्मिंश्चित्कर्तव्ये तत्पर इति भेदाद्युक्त इत्यनेन न सिध्यतीति वचनम् । नियुक्ते किम् । काण्डलावः ॥

## शिल्पिनि चाकृञः ॥ ७६ ॥

शिल्पिवाचिनि समासे अणन्त उत्तरपदे पूर्वपदमाद्युदात्त

स्यात् न चेदण् कुत्सः। तन्तुवायः। शिल्पिनि किम्। काण्डलावः। अकृञः किम्। कुम्भकारः॥

## सञ्ज्ञायां च ॥ ७७ ॥

संज्ञायामण्यन्ते पूर्वपदमाद्युदात्तं स्यात्। तन्तुवायो नाम कीटः। वालवायो नाम पर्व(र्व)तः। अकृञ इत्येव। रथकारो नाम ब्राह्मणः॥

## गोतन्तियवं पाले ॥ ७८ ॥

पाले परे गवादीन्याद्युदात्तानि। गोपालः। तन्तिपालः। यवपालः। अनियुक्तार्थमिदम्। गवादीनि किम्। वत्सपालः। पाल किम्। गोरक्षः॥

## णिनि ॥ ७९ ॥

णिन्यन्ते पूर्वपदमाद्युदात्तम्। पुष्पहारि॥

## उपमानं शब्दार्थप्रकृतावेव ॥ ८० ॥

उपमानवाचिपूर्वपदं शब्दार्थप्रकृतौ णिनन्ते आद्युदात्तं स्यात्। पूर्वेणैव सिद्धे नियमार्थमिदम्। उष्ट्रक्रोशी। ध्वांक्षरावी। खरनादी। पूर्वसूत्रस्य विषयविभागार्थमुपमानग्रहणम्। अन्यथा तस्यैव नियमे पुष्पहारि न सिध्येत्। शब्दार्थेति किम्। वृकप्रेक्षी। प्रकृतिग्रहणं प्रकृतिरेव यत्रोपसर्गनिरपेक्षा शब्दार्था तत्रैव यथा स्यात्। इह मा भूत्। कोकिलाभिव्या(व्यव)हारी। एवकार इष्टतोऽवधारणार्थः। उपमानं नियम्यते। शब्दार्थप्रकृतौ तूपमानमनुपमानं चाद्युदात्तम्। सिंहनादी। पुष्कलजल्पी॥

## युक्तारोह्यादयश्च ॥ ८१ ॥

एते समासा आद्युदात्ताः। युक्तारोही। आगतयोधीसा-

दि। अत्र णिन्यन्तानां केषां चित्पाठः पूर्वोत्तरपदनियमार्थः। तेनेह न। वृक्षारोही। युक्ताध्यायी। पात्रसमितादयोऽपि युक्तारोह्यादयस्तेऽप्याद्युदात्ताः॥

दीर्घकाशतुषभ्राष्ट्रवटं जे॥ ८२॥

दीर्घान्तं काशादि च जे आद्युदात्तम्। कुटीजः। काशजः। तुषजः। भ्राष्ट्रजः। वटजः॥

अन्त्यात्पूर्वं बह्वचः॥ ८३॥

जे परे बह्वचः पूर्वपदस्यान्त्यात्पूर्वमुदात्तं स्यात्। उपसरजः। आमलकीजः। बह्वचः किम्। दग्रजानि तृणानि॥

ग्रामेऽनिवसन्तः॥ ८४॥

ग्रामे परे पूर्वपदमाद्युदात्तं स्यान्न चेन्निवसद्वाचि पूर्वपदम्। मल्लग्रामः। समूहवाच्यत्र ग्रामशब्दः। अनिवसन्तः किम्। दाक्षिग्रामः। दाक्ष्यादयो यत्र निवसन्ति स एवमुच्यते॥

घोषादिषु च॥ ८५॥

एषु पूर्वपदमाद्युदात्तं स्यात्। दाक्षिघोषः। दाक्षिकटः इत्यादि। केचिदत्रानिवसन्त इत्यनुवर्तयन्ति॥

छात्र्यादयः शालायाम्॥ ८६॥

शालायामुत्तरपदे छात्र्यादय आद्युदात्ताः स्युः। छात्रिशाला। आपिशलिशालेत्यादि। यदा शालान्तस्य नपुंसकत्वं तदा तत्पुरुषे शालायां (६।२।१२३) मित्यस्मात्पूर्वविप्रतिषेधेनायमेव स्वर इष्यते। छात्रिशालम्॥

प्रस्थेऽवृद्धमकर्क्यादीनाम्॥ ८७॥

प्रस्थे परे कर्क्यादिवर्जमवृद्धमाद्युदात्तं स्यात्। इन्द्रप्रस्थः।

तिलप्रस्थः । अशब्दं किम् । दाक्षिप्रस्थः । अकर्क्यादीनां किम् । कर्किप्रस्थः ॥

मालादीनां च ॥ ८८ ॥

प्रस्थे परे मालादीनामाद्युदात्तः । मालाप्रस्थः । शालाप्रस्थः ॥

अमहन्नवं नगरेऽनुदीचाम् ॥ ८९ ॥

नगरे परे महन्नववर्जं पूर्वपदमाद्युदात्तं स्यात् तच्चेदुदीचां न । सुह्मनगरम् । विराटनगरम् । अमहन्नवं किम् । महानगरम् । नवनगरम् । अनुदीचां किम् । कार्तिनगरम् ॥

अर्मे चावर्णं द्व्यच् त्र्यच् ॥ ९० ॥

अर्मे परे द्व्यच् त्र्यजवर्णान्तमाद्युदात्तं स्यात् । दत्तार्मम् । अवर्णं किम् । बृहदर्मम् । द्व्यच्त्र्यच् किम् । कपिञ्जलार्मम् । अमहन्नवमित्येव । महार्मम् । नवार्मम् ॥

न भूताधिकसञ्जीवमद्राश्मकज्जलम् ॥ ९१ ॥

अर्मे परे नैतान्याद्युदात्तानि । भूतार्मम् । सञ्जीवार्मम् । मद्रार्मम् । अश्मार्मम् । मद्राश्मग्रहणं सङ्घातार्थमपि । मद्राश्मार्मम् । कज्जलार्मम् ॥

आद्युदात्तप्रकरणे छन्दसि दिवोदासादीनामुपसङ्ख्यानम् ॥

दिवोदासाय गायत ॥

अन्तः ॥ ९२ ॥

पूर्वपदस्यान्त उदात्त इत्यधिकारः ॥

## सर्वं गुणकार्त्स्न्ये ॥ ९३ ॥

गुणकार्त्स्न्ये वर्तमानं सर्वमिति पूर्वपदमन्तोदात्तं स्यात्। सर्वश्वेतः। सर्वं किम्। परमश्वेतः। गुणग्रहणं किम्। सर्वसौवर्णः। कार्त्स्न्ये किम्। सर्वेषां श्वेततरः सर्वश्वेतः॥
गुणात्तरेण समासस्तरलोपश्च वाच्यः--इति समासतरलोपौ॥

## संज्ञायां गिरिनिकाययोः ॥ ९४ ॥

एतयोः पूर्वपदमन्तोदात्तं स्यात्संज्ञायाम्। अञ्जनागिरिः। मौण्डनिकायः। संज्ञायां किम्। परमगिरिः। ब्राह्मणनिकायः॥

## कुमार्यां वयसि ॥ ९५ ॥

कुमार्यामुत्तरपदे पूर्वपदमन्तोदात्तं स्यात् वयसि द्योत्ये। वृद्धकुमारी। कुमारस्य स्त्री कुमारी। वयसि किम्। परमकुमारी॥

## उदकेऽकेवले ॥ ९६ ॥

अकेवलं मिश्रम्। तद्वाचिनि समासे पूर्वपदमुदके परेऽन्तोदात्तं स्यात्। गुडमिश्रमुदकं गुडोदकम्। तिलोदकम्। अकेवले किम्। उष्णोदकम्॥

## द्विगौ क्रतौ ॥ ९७ ॥

द्विगौ उत्तरपदे क्रतुवाचिनि समासे पूर्वपदमन्तोदात्तं स्यात्। गर्गत्रिरात्रः। चरकसप्तरात्रः। द्विगौ किम्। अतिरात्रः। क्रतौ किम्। बिल्वसप्तरात्रः। बिल्वहोमस्य सप्तरात्रः बिल्वसप्तरात्रः॥

## सभायां नपुंसके ॥ ९८ ॥

सभायामुत्तरपदे नपुंसके समासे पूर्वपदमन्तोदात्तं स्यात्।

गोपा(गोविडा)लसभम् । सभायां किम् । ब्राह्मणसेनम् । नपुंसके किम् । राजसभा । प्रतिपदोक्तनपुंसकग्रहणादिह न । रमणीयसभं ब्राह्मणकुलम् ॥

पुरे प्राचाम् ॥ ९९ ॥

पुरे परे पूर्वपदमन्तोदात्तं स्यात् प्राचां देशे । शशदत्तपुरम् । प्राचां किम् । कार्तिपुरम् ॥

अरिष्टगौडपूर्वे च ॥ १०० ॥

एतत्पूर्वपदे समासे पुरे परतः पूर्वपदमन्तोदात्तं स्यात् । अरिष्टपुरम् । गौडपुरम् । पूर्वग्रहणादिहापि । अरिष्टसितपुरम् । गौडभृत्यपुरम् ॥

न हास्तिनफलकमार्देयाः ॥ १०१ ॥

एतानि पुरे नान्तोदात्तानि । पुरे प्राचाम(६।२।९९)-त्यस्य निषेधः । हास्तिनपुरम् । फलकपुरम् । मार्देयपुरम् । मृदोरपत्यं मार्देयः । शुभ्रादित्वाड्ढक् ॥

कुसूलकूपकुम्भशालं बिले ॥ १०२ ॥

बिले परे एतान्यन्तोदात्तानि । कुसूलबिलम् । कूपबिलम् । कुम्भबिलम् । शालाबिलम् । कुसूलादि किम् । सर्वबिलम् । बिले किम् । कुसूलस्वामी ॥

दिक्छब्दा ग्रामजनपदाख्यानचानरादेषु ॥ १०३ ॥

ग्रामादिवाचिषु चानराटे च परतो दिक्छब्दा अन्तोदात्ताः स्युः । ग्राम पूर्वेषुकामशमी । जनपद पूर्वपञ्चालाः । आख्यान पूर्वाधिका(रा)मकम् । का(रा)ममधिकृत्य कृतो ग्रन्थः आधिका(रा)मकः । पूर्वचानराटम् । शब्दग्रहणं कालवाचिनोऽपि दिक्छ-

न्दस्य ग्रहणार्थम् ॥

आचार्योपसर्जनान्तेवासिनि ॥ १०४ ॥

एतद्वाचिन्युत्तरपदे दिक्छब्दा अन्तोदात्ताः । पूर्वपाणिनीयाः । अपरपाणिनीयाः । आचार्योपसर्जनेति किम् । पूर्वशिष्याः । अन्तेवासिनि किम् । पूर्वपाणिनीयं शास्त्रम् ॥

उत्तरपदवृद्धौ सर्वं च ॥ १०५ ॥

उत्तरपदाधिकारविहितवृद्धिमत्युत्तरपदे सर्वशब्दो दिक्छब्दाश्चान्तोदात्ताः स्युः । सर्वपाञ्चालकः । अपरपाञ्चालकः । सर्वे च ते पाञ्चालाः । तेषु भव इति सुसर्वार्धादिक्छब्देभ्यो जनपदस्येति तदन्तविधिना जनपदलक्षणो वुञ् । सुसर्वार्धादिशोऽमद्राणा(७।३।१२)मित्युत्तरपदवृद्धिः । उत्तरपदाधिकारेति किम् । सर्वकारकः ॥

बहुव्रीहौ विश्वं संज्ञायाम् ॥ १०६ ॥

विश्वं पूर्वपदमन्तोदात्तं स्यात् बहुव्रीहौ संज्ञायाम् । विश्वेदेवा अस्य विश्वदेवः । विश्वयशाः । बहुव्रीहौ किम् । विश्वे च ते देवाश्च विश्वेदेवाः । संज्ञायां किम् । विश्वे देवा अस्य विश्वदेवः ॥ विश्वामित्रः विश्वाजिन इत्यत्र संज्ञायां मित्राजिनयो(६।२।१६५)रिति भवति ॥

उदराश्वेषुषु ॥ १०७ ॥

एषु परेषु बहुव्रीहौ पूर्वपदमन्तोदात्तं स्यात् । वृकोदरः । हर्यश्वः । महेषुः ॥

क्षेपे ॥ १०८ ॥

निन्दायामपि प्राग्वत् । घटोदरः । स्व(नि)न्दिताश्वः ।

लाचलेषु: ॥

अनुदरः सूदर इत्यत्र, नञ्सुभ्यामित्येव ॥

नदी बन्धुनि ॥ १०९ ॥

बन्धुनि परे नद्यन्तमन्तोदात्तं बहुव्रीहौ । गार्गिबन्धुः । नदी किम् । ब्रह्मबन्धुः । बन्धुनि किम् । गार्गिप्रियः । बन्धुनीति शब्दस्वरूपनिर्देशान्नपुंसकत्वम् ॥

निष्ठोपसर्गपूर्वोन्यतरस्याम् ॥ ११० ॥

सोपसर्गनिष्ठान्तं पूर्वपदमन्तोदात्तं वा स्यात् बहुव्रीहौ । प्रक्षालितपादः । पक्षे बहुव्रीहौ प्रकृत्ये(६।२।१)ति गतिरनन्तरः(६।२।४९)इत्याद्युदात्तत्वम् । निष्ठा किम् । प्रसेवकमुखः । उपसर्गपूर्वः किम् । शुष्कमुखः । मुखं स्वाङ्ग(६।२।१६७)मिति स्वरः ॥

उत्तरपदादिः ॥ १११ ॥

उत्तरपदादिरुदात्त इत्यधिकारः । उत्तरपदग्रहणमापादसमाप्तेः । आदिरिति प्रकृत्या भगाल(६।२।१३७)मिति यावत् ॥

कर्णो वर्णलक्षणात् ॥ ११२ ॥

वर्णवाचिनश्चिह्नवाचिनश्च परः कर्णशब्द आद्युदात्तः स्यात् बहुव्रीहौ । शुक्लकर्णः । शङ्कुकर्णः । कर्णे लक्षणस्ये(६।३।११५)ति दीर्घः । पशूनां विभागज्ञानाय शंकुप्रतिरूपकं कर्णे यत् क्रियते चिन्हं तदिह लक्षणं गृह्यते । तेन स्थूलकर्णः इत्यत्र न । कर्णः किम् । श्वेतपादः । कूटशृङ्गः । वर्णलक्षणात्किम् । शोभनकर्णः ॥

संज्ञौपम्ययोश्च ॥ ११३ ॥

संज्ञायामौपम्ये च यो बहुव्रीहिस्तत्र कर्णशब्द उत्तरप-

दमाद्युदात्तं स्यात्। कुक्षिकर्णः। औपम्ये गोकर्णः॥

कण्ठपृष्ठग्रीवाजङ्घं च ॥ ११४ ॥

बहुव्रीहावेतान्युत्तरपदान्याद्युदात्तानि स्युः संज्ञौपम्ययोः। शितिकण्ठः। नाकपृष्ठः। सुग्रीवः। नीलग्रीवः। तालजङ्घः। औपम्ये उष्ट्रकण्ठः। गोपृष्ठः। गोग्रीवः। गोजङ्घः॥

शृङ्गमवस्थायां च ॥ ११५ ॥

बहुव्रीहौ शृङ्गमुत्तरपदमाद्युदात्तं स्यात् अवस्थायां संज्ञौपम्ययोश्च। अवस्थायाम् उद्गतशृङ्गः। संज्ञायाम् ऋश्यशृङ्गः। औपम्ये गोशृङ्गः। अवस्थादिषु किम्। स्थूलशृङ्गः॥

नञो जरमरमित्रमृताः ॥ ११६ ॥

नञः परे एते आद्युदात्ताः बहुव्रीहौ। अजरः। अमरः। अमित्रः। अमृतः। नञः किम्। ब्राह्मणमित्रः। जरादयः किम्। अशत्रुः। नञ्सुभ्या(६।२।१७२)मिति स्वरः॥

सोर्मनसी अलोमोषसी ॥ ११७ ॥

सोरुत्तरं मन्नन्तमसन्तं च बहुव्रीहावाद्युदात्तं स्यात् लोमोषसी वर्जयित्वा। सुशर्मा। सुयशाः। सोः किम्। कृतकर्मा। कृतयशाः। मनसी किम्। सुराजा। अलोमोषसी किम्। सुलोमा। सूषाः। नञ्सुभ्या(६।२।१७२)मित्यस्यापवादः। कपि तु परत्वात्कपि पूर्व(६।२।१७३)मित्येव। सुकर्मकः। सुस्रोतस्कः॥

क्रत्वादयश्च ॥ ११८ ॥

एते सोः पर आद्युदात्ता बहुव्रीहौ। सुक्रतुः। सुप्रतीकः। एवं प्रति(ती)क मतूर्ति हव्य कव्य भग॥

## आद्युदात्तं द्व्यच्छन्दसि ॥ ११९ ॥

द्व्यचमाद्युदात्तं सोरुत्तरं बहुव्रीहावाद्युदात्तमेव स्याच्छन्दसि। स्वश्वा यशसा। सुरथामर्जयेम। नित्स्वरेणाश्वरथावाद्युदात्तौ। आद्युदात्तं किम्। सुबाहुः। बाहुशब्दः प्रत्ययस्वरेणान्तोदात्तः। द्व्यच् किम्। सुहिरण्यः। नञ्सुभ्या(६।२।१७२)मित्यस्यापवादः॥

## वीरवीर्यौ च ॥ १२० ॥

सोः परावेतावाद्युदात्तौ छन्दसि बहुव्रीहौ। सुवीरम्। सुवीर्यस्य। वीर्यमिति यदन्तस्यापि यतोऽनाव(६।१।२१४) इत्याद्युदात्तत्वाभावो वीर्यग्रहणेन ज्ञाप्यते। अन्यथा पूर्वेणैव सिद्धं स्यात्॥

## कूलतीरतूलमूलशालाक्षसममव्ययीभावे ॥ १२१ ॥

कूलादीन्युत्तरपदान्यव्ययीभावे आद्युदात्तानि। उपकूलम्। उपतीरम्। उपतूलम्। उपमूलम्। उपशालम्। पर्यक्षम्। सुषमम्। कूलादि किम्। दीपकुम्भम्। अव्ययीभावे किम्। परमकूलम्। परिप्रत्युपे(६।२।३३)त्येतस्मादयं स्वरो भवति विप्रतिषेधेन। परिकूलम्। प्रतिकूलम्। उपकूलम्॥

## कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ॥ १२२ ॥

कंसादीन्युत्तरपदानि द्विगावाद्युदात्तानि। द्विकंसम्। द्विमन्थम्। द्विशूर्पम्। द्विपाय्यम्। द्विकाण्डम्॥

## तत्पुरुषे शालायां नपुंसके ॥ १२३ ॥

शालान्ते तत्पुरुषे उत्तरपदमाद्युदात्तं स्यात् नपुंसके। द्विजशालम्। विभाषा सेने(२।४।२५)ति क्लीबता। तत्पुरुषे किम्।

दृढशालं द्विजकुलम्। शालायां किम्। द्विजसेनम्। क्लीबे किम्। द्विजसेना॥

कन्था च ॥ १२४ ॥

कन्थान्ते तत्पुरुषे उत्तरपदमाद्युदात्तं स्यात् क्लीबे। सौशमिकन्थम्। संज्ञायां कन्थो(२।४।२०)ति क्लीबत्वम्। षष्ठीसमासः। क्लीबे किम्। दाक्षिकन्था॥

आदिश्चिहणादीनाम् ॥ १२५ ॥

कन्थान्ते तत्पुरुषे क्लीबे एषामादिरुदात्तः। चिहणकन्थम्। मन्दकन्थमित्यादि। आदिरिति वर्तमाने पुनरादिग्रहणं पूर्वपदाद्युदात्तार्थम्॥

चेलखेटकटुककाण्डं गर्हायाम् ॥ १२६ ॥

चेलादीन्युत्तरपदान्याद्युदात्तानि स्युस्तत्पुरुषे गर्हायाम्। पुत्रचेलम्। उपानत्खेटम्। दधिकटुकम्। भूतकाण्डम्। चेलादिसादृश्येन पुत्रादीनां गर्हा। पुत्रश्चेलमिवेति व्याघ्रादेराकृतिगणत्वात्समासः। गर्हायां किम्। परमचेलम्॥

चीरमुपमानम् ॥ १२७ ॥

चीरमुत्तरपदमुपमानवाचि तत्पुरुषे आद्युदात्तम्। कम्बलश्चीरमिव कम्बलचीरम्। उपमाने किम्। परमचीरम्॥

पललसूपशाकं मिश्रे ॥ १२८ ॥

एतान्युत्तरपदान्याद्युदात्तानि स्युः मिश्रवाचिनि तत्पुरुषे। घृतपललम्। घृतसूपः। घृतशाकम्। घृतेन मिश्रमिति भक्ष्येण मिश्रीकरण(२।१।३५)मिति समासः। मिश्रे किम्। परमसूपः॥

कूलसूदस्थलकर्षाः संज्ञायाम् ॥ १२९ ॥

एतान्युत्तरपदानि तत्पुरुषे आद्युदात्तानि संज्ञायाम् । दाक्षिकूलम् देवसूदम् दाण्डायनस्थली दाक्षिकर्षः ग्रामनामानि । प्रातिपदिकस्य ग्रहणे लिङ्गविशिष्टस्यापीति स्थलीग्रहणम् । जानपदे(४।१।४२)त्यादिना ङीष् । संज्ञायां किम् । परमकूलम् ॥

अकर्मधारये राज्यम् ॥ १३० ॥

अकर्मधारये तत्पुरुषे राज्यमुत्तरपदमाद्युदात्तम् । ब्राह्मणराज्यम् । कर्मधारये तु परमराज्यम् ॥

चेलराज्यादिस्वरादव्ययस्वरः पूर्वविप्रतिषेधेन ॥

कुचेलम् । कुराज्यम् ॥

वर्ग्यादयश्च ॥ १३१ ॥

एतान्याद्युदात्तानि तत्पुरुषे । वासुदेववर्ग्यः इत्यादि । अकर्मधारये इत्येव । परमवर्ग्यः । दिगादिषु वर्गपूर्वपक्षेत्यादयः पठ्यन्ते । त एव यत्प्रत्ययान्ता वर्ग्यादयः ॥

पुत्रः पुंभ्यः ॥ १३२ ॥

पुंशब्देभ्यः परः पुत्रशब्द आद्युदात्तः । कौलटी(कानाडि)पुत्रः । पुंभ्यः किम् । गार्गीपुत्राः । पुत्रः किम् । कौलटीमातुलः ॥

नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ॥ १३३ ॥

संयुक्ताः स्यालादयः । ज्ञातयः पितृसम्बन्धिनः । एभ्यः पुत्रो नाद्युदात्तः । आख्याग्रहणात्स्वरूपपर्यायविशेषाणां ग्रहणम् । आचार्यपुत्रः । उपाध्यायपुत्रः । शाकटायनपुत्रः । राजपुत्रः । ईश्वरपुत्रः । नन्दनपुत्रः । ऋत्विक्पुत्रः । याजकपुत्रः ।

होतुःपुत्रः। संयुक्तपुत्रः। सम्बन्धिपुत्रः। ज्ञातिपुत्रः। बन्धुपुत्रः। भ्रातुःपुत्रः। ऋतो विद्यायोनी(६।३।२३)ति षष्ठ्या अलुक्॥

चूर्णादीन्यप्राणिषष्ठ्याः॥ १३४॥

अप्राणिवाचिनः षष्ठ्यन्तात्पराण्येतानि आद्युदात्तानि तत्पुरुषे। मुद्गचूर्णमित्यादि। अप्राणीति किम्। मत्स्यचूर्णम्। चूर्णादीन्यप्राण्युपग्रहादिति पाठान्तरम्। तत्रोपग्रह इति षष्ठ्यन्तस्य पूर्वाचार्यसंज्ञा॥

षट् च काण्डादीनि॥ १३५॥

अप्राणिषष्ठ्याः काण्डादीनि षडाद्युदात्तानि। पूर्वेणैव सिद्धे उपाधिनिरासार्थं वचनम्। दर्भकाण्डम्। दर्भचीरम्। तिलपललम्। मुद्गसूपः। मूलकशाकम्। नदीकूलम्। गर्होपमानार्थसज्ञानामभावेऽपि भवति। षट्किम्। राजसूपः॥

कुण्डं वनम्॥ १३६॥

वनवाचिकुण्डशब्द उत्तरपदमाद्युदात्तम्। शरकुण्डम्। समुदायवाची वनशब्दः। वनं किम्। मृत्कुण्डम्॥

प्रकृत्या भगालम्॥ १३७॥

भगालवाच्युत्तरपदं तत्पुरुषे प्रकृतिस्वरं स्यात्। कुम्भीभगालम्। कुम्भीकपालम्। भगालादयो मध्योदात्ताः। प्रकृत्येत्येतदन्त(६।२।१४३) इति यावदधिक्रियते॥

शितेर्नित्याबह्वज् बहुव्रीहावभसत्॥ १३८॥

शितेः परं नित्यबह्वज्वर्जितं बहुव्रीहौ प्रकृतिस्वरं स्यात् भसच्छब्दं वर्जयित्वा। शितिः पादोऽस्य-शितिपादः। शित्योष्ठः।

पादशब्दो वृषादित्वादाद्युदात्तः। ओष्ठोपि निस्स्वरेणादयुदात्तः। शितेः किम्। दर्शनीयपादः। नित्येति किम्। शितिककुत्। ककुदस्यान्तलोपाभावे ऽयचूकामिति न नित्यावहृच्। अवहृच् किम्। शितिललाटः। बहुव्रीहौ किम्। शितिः पादः शितिपादः। अभसत्किम्। शितिभसत्। शितिशब्द आद्युदात्तः। पूर्वपदप्रकृतिस्वरापवादो योगः॥

## गतिकारकोपपदात्कृत्॥ १३९॥

गतेः कारकादुपपदाच्च कृदन्तं प्रकृतिस्वरं स्यात्। प्रकरणम्। इध्मप्रव्रश्चनः। ईषत्करः। गतिकारकोपपदात्किम्। देवदत्तस्य कारकः देवदत्तकारकः। शेषलक्षणा षष्ठी। प्रपचतितरामित्यत्र तद्धितान्तेऽव्ययस्वर इष्यत इति कृद्ग्रहणं व्यर्थमित्याकरे। प्रपचतिदेश्यादिनिवृत्त्यर्थं कृद्ग्रहणमिति काशिका। तत्रामन्तवदत्रापीष्यत एवायं स्वरो भगवतेत्याहुः॥

## उभे वनस्पत्यादिषु युगपत्॥ १४०॥

एषु पदद्वयं युगपत्प्रकृतिस्वरं स्यात्। वनस्पतिः। बृहस्पतिरित्यादि। वनपतिशब्दावाद्युदात्तौ। बृहदित्यन्तोदात्तम्। आद्युदात्तमत्रेत्यन्ये॥

## देवताद्वन्द्वे च॥ १४१॥

अत्रापि पदद्वयं युगपत्प्रकृतिस्वरं स्यात्। इन्द्रवरुणौ। इन्द्राबृहस्पती। इन्द्रशब्द ऋज्रेन्द्र(१८६३०)सूत्रेण आद्युदात्तो निपातितः। वरुण उनन्प्रत्ययान्त आद्युदात्तः। देवता किम्। प्लक्षन्यग्रोधौ। द्वन्द्वे किम्। अग्निष्टोमः॥

## नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु॥ १४२॥

पृथिव्यादिवर्जितेऽनुदात्तादावुत्तरपदे देवताद्वन्द्वे नोक्तं स्या-

सू। इन्द्राग्नी। इन्द्रवायू। अनुदात्तादौ किम्। इन्द्रावरुणौ। अपृथिव्यादिषु किम्। द्यावापृथिव्यौ। सोमारुद्रौ। इन्द्रपूषणौ। शुक्रामन्थिनौ। द्यावा आद्युदात्तो निपातः। पृथिवी ङीपन्तोन्तोदात्तः। मन्नन्तः सोम आद्युदात्तः। रगन्तो रुद्रोन्तोदात्तः। श्वन्नुक्ष(१.५७३०)न्निति पूषन्शब्दोन्तोदात्तः। मन्थोस्यास्तीतीनन्तोन्तोदात्तः। पृथिव्यादिपूर्वे प्रकृतिस्वरे॥

अन्तः॥ १४३॥

समासस्यान्त उदात्त इत्यधिकारः॥

थाथघञ्क्ताजबित्रकाणाम्॥ १४४॥

थाथाद्यन्तानां गतिकारकोपपदात्परेषामन्तोदात्तः स्यात्। कृदुत्तरपदस्वरापवादः। अवभृथः। अवे भृञ इति क्थन्प्रत्ययान्तः। अथ आवसथः। उपसर्गे वसेरि(३०६३०)त्यथप्रत्ययः। घञ् प्रभेदः। क्त दूरादागतः। अच् प्रक्षयः। प्रजयः। क्षयो निवासे (६।१।२०१)जयः करण(६।१।२०२)मित्याद्युदात्तौ। अप् प्रलवः। इत्र पवित्रम्। क गोवृषः। मूलविभुजादित्वात्कः। वृषादीना(६।१।२००)मिति वृष आद्युदात्तः। गतिकारकोपपदादित्येव। सुस्तुतम्। प्रतिस्तुतम्। अव्ययस्वर एव॥

सूपमानात् क्तः॥ १४५॥

सूपमानाभ्यां क्तान्तमन्तोदात्तं स्यात्। सुकृतम्। शशप्लुतम्। सोर्गतिरनन्तर(६।२।४९) इत्यस्योपमानात्तृतीया कर्मणी-(६।२।४८)त्यस्यापवादः। गतिकारकोपपदादित्येव। सुस्तुतम्। अव्ययस्वर एव॥

संज्ञायामनाचितादीनाम्॥ १४६॥

गतिकारकोपपदात् क्तान्तमन्तोदात्तं स्यात् संज्ञायाम्

आचितादीन्वर्जयित्वा । संभूतो राणायणः । उपहूतः शाकल्यः । कुद्दालखातं नगरम् । अनाचितादीनां किम् । आचितं पर्याचितमित्यादि । गतिरनन्तरस्वर एव ॥

प्रवृद्धादीनां च ॥ १४७ ॥

क्तान्तमन्तोदात्तमित्येव । असंज्ञार्थमिदम् । प्रवृद्धः । प्रयातः । आकृतिगणोयम् ॥

कारकाद्दत्तश्रुतयोरेवाशिषि ॥ १४८ ॥

आशिषि गम्यमानायां कारकात् दत्तश्रुतयोरेव क्तान्तयोरन्त उदात्तः स्यात्संज्ञायाम् । देवा एनं देयासुः देवदत्तः । विष्णुरेनं श्रूयात् विष्णुश्रुतः । कारकात्किम् । अकारकान्नियमो मा भूत् । संभूतो राणायनः । दत्तश्रुतयोः किम् । देवपालितः । एतस्मान्नियमात्संज्ञायामनचितादीना(६।२।१४६)मिति न भवति । किन्तु तृतीया कर्मणी(६।२।४८)त्येव । एवकारः कारकावधारणार्थः । दत्तश्रुतयोस्त्वकारकादपि अन्तोदात्तः । संश्रुतः सुदत्तः । आशिषि किम् । अनाशिषि मा भूत् । देवैः खाता देवखाता ॥

आशिष्येवेत्यपि नियम इष्यते ॥

तेनाहतो नदति देवदत्त इत्यत्र तृतीया कर्मणी(६।२।४८)त्येव भवति ॥

इत्थंभूतेन कृतमिति च ॥ १४९ ॥

कं चित्प्रकारं प्राप्त इत्थंभूतः । तेन कृतमित्यर्थे गम्ये क्तान्तमुत्तरपदमन्तोदात्तं स्यात् । सुप्तप्रलपितम् । मत्तगीतम् । तृतीया कर्मणी(६।२।४८)त्यस्यापवादः । भावे तु थाथादिसूत्रेणैव सिद्धम् ॥

## अनो भावकर्मवचनः ॥ १५० ॥

कारकात्पर भावकर्मवचनमनान्तमन्तोदात्तं स्यात् । भावे ओदनभोजन मित्यम् । कर्मणि राजभोजनाः शाल्यः । अनः किम् । हस्तहार्यमुदश्वित् । भावकर्मवचनः किम् । दन्तधावनं काष्ठम् । करणे ल्युट् । कारकात्किम् । निदर्शनम् । कृत्स्वर एव सर्वमत्युदाहरणेषु ॥

## मन्क्तिन्व्याख्यानायनशयनासनस्थानयाजकादिक्रीताः ॥ १५१ ॥

मन्नन्तं क्तिन्नन्तं व्याख्यानादयो याजकादयः क्रीतशब्दश्चोत्तरपदमन्तोदात्त स्यात् । रथवर्त्म । पाणिनिकृतिः । छन्दोव्याख्यानम् । ऋगयनम् । राजशयनम् । राजासनम् । गोस्थानम् । ब्राह्मणयाजकः । याजकादिभिश्चे(२।२।९)ति सूत्रोक्ता याजकादय इह गृह्यते । गोक्रीतः । कृत्स्वरापवादो योगः क्रीते तृतीया कर्मणी(६।७।४८)त्यस्य । व्याख्यानादीनामभावकर्मार्थं ग्रहणम् । कारकादित्येव । प्रकृतिः ॥

## सप्तम्याः पुण्यम् ॥ १५२ ॥

सप्तम्यन्तात्पुण्यमन्तोदात्तम् । अध्ययने पुण्यमध्ययनपुण्यम् । सप्तमी(२।१।४०)ति योगविभागात्समासः । तत्पुरुषे तुल्यार्थे(६।२।२)त्यस्यापवादः । सप्तम्याः किम् । वेदेन पुण्य वेदपुण्यम् ॥

## ऊनार्थकलहं तृतीयाः ॥ १५३ ॥

ऊनेऽर्थग्रहणम् । ऊनार्था अर्थकलहौ च तृतीयान्तावन्तोदात्ताः स्युः । मापोनम् । माषविकलः । धान्यार्थम् । वाक्कलहः । तृतीयापूर्वपदस्वरापवादः । प्रतिपदसमासग्रहणेनैव सिद्धे तृतीयाग्रहण स्पष्टार्थम् ॥

## मिश्रं चानुपसर्गमसन्धौ ॥ १५४ ॥

तृतीयान्तात्परमनुपसर्गं मिश्रमन्तोदात्तं स्यात् असन्धौ गम्यमाने। गुडमिश्रम्। मिश्रं किम्। गुडधानाः। अनुपसर्गं किम्। गुडसंमिश्रः। इहानुपसर्गग्रहणमन्यत्र सोपसर्गग्रहणं ज्ञापयति। तेन मिश्रश्लक्ष्णैरि(२।१।३१)त्यत्र सोपसर्गेणापि मिश्रेण समासः। असन्धौ किम्। ब्राह्मणमिश्रो राजा। ब्राह्मणैः सह राज्ञ एकार्थसम्बन्धः सन्धिः। अन्ये तु गृह्यमाणविशेषा प्रत्यासत्तिः सन्धिः राज्ञो ब्रह्मणैः सह देशमत्यासत्तौ सत्यामपि मूर्तिविभागो गृह्यत इति गुडमिश्रा इत्यत्र त्वविभागः ॥

## नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिताः ॥ १५५ ॥

गुणप्रतिषेधान्नञ उत्तराणि सम्पाद्याद्यर्थतद्धितान्तान्युत्तरपदान्यन्तोदात्तानि स्युः। सम्पादि कर्णवेष्टकाभ्यां सम्पादि कार्णवेष्टकिकम् न कार्णवेष्टकिकं अकार्णवेष्टकिकम्। छेदमर्हति छैदिकः अच्छैदिकः। वत्सेभ्यो हितः वत्सीयः अवत्सीयः। अलमर्थं सन्तापाय प्रभवति सान्तापिकः असान्तापिकः। नञः किम्। गर्दभरथमर्हति गार्दभरथिकः। गुणप्रतिषेधे किम्। गार्दभरथिकादन्यदगार्दभरथिकम्। तद्धितप्रवृत्तिनिमित्तसंपादित्वादिप्रतिषेधेयं विधिः। एतदर्थाः किम्। पाणिनीयमधीयते पाणिनीयाः। अपाणिनीयाः। तद्धिताः किम्। वोढुमर्हतीति वोढा। अवोढा ॥

## ययतोश्चातदर्थे ॥ १५६ ॥

गुणप्रतिषेधविषयान्नञ उत्तरौ अतदर्थयगदन्तावन्तोदात्तौ स्याताम्। पाशादिभ्यो यः(४।२।४९)। अपाश्या। शरीरावयवाच्च(४।३।५५)। अदन्त्यम्। अतदर्थे किम्। पादार्थं पा-

यम् अपायम् । तद्धिता इत्येव । अदेयम् । गुणप्रतिषेधे किम् । दन्त्यादन्यद्दन्त्यम् । निरनुबन्धकैकानुबन्धकग्रहणादिह न । अनामदेव्यम् ॥

अच्कावशक्तौ ॥ १५७ ॥

नञ उत्तरमच्कान्तमन्तोदात्तं स्यादशक्तौ गम्यायाम् । अवचः । वक्तुमशक्तः इत्यर्थः । अविक्षिपः । अशक्तौ किम् । अवचो दीक्षितः ॥

अक्रोशे च ॥ १५८ ॥

अक्रोशे गम्यमाने नञ उत्तरमचूकान्तमन्तोदात्तम् । अपचः ओंवासपो जल्पः । शक्तोपि यो न पाकादि करोति स निन्द्यते ॥

संज्ञायाम् ॥ १५९ ॥

नञ उत्तरमन्तोदात्तं स्यात् अक्रोशे संज्ञायाम् । अदेवदत्तः ॥

कृत्योकेष्णुच्चार्वादयश्च ॥ १६० ॥

कृत्याद्यन्ताश्चार्वादयश्च नञ उत्तरेन्तोदात्ताः । अकर्तव्यम् । अनलमापुकः । अनलंकरिष्णुः । खिष्णुजपि गृह्यते । अनाढ्यंभविष्णुः । अचारुः । असाधुः ॥

विभाषा तृन्नन्नतीक्ष्णशुचिषु ॥ १६१ ॥

नञ उत्तराण्येतानि वान्तोदात्तानि । अकर्ता । अनन्नम् । अतीक्ष्णम् । अशुचि । पक्षेव्ययस्वरः ॥

बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ॥ १६२ ॥

एभ्यः परयोः प्रथमपूरणप्रत्ययान्तयोः क्रियागणने वर्त-

कस्य काचन सुपरिशुद्धा मुद्रणयोग्या प्रतिकृतिः। तदनुसारेण ३२० पृष्ठपर्यन्तं संमुद्र्य प्रकृतीसंवेदनालस्येन तूष्णींस्थितेऽस्मदग्रजे वेङ्कटरङ्गनाथस्वामिन्यार्यवरगुरौ काशीस्थः संस्कृतविद्यासमुपबृंहणरसिकः प्रधीवर्यः श्रीयुतगोविन्ददासमहाशयश्चौखाम्बासंस्कृतपुस्तकालयाध्यक्षं प्रचीनापूर्वमहाग्रन्थप्रकाशनोद्युक्तं श्रीहरिदासगुप्तं प्रैरयत्। सोपि मुद्रितांशमस्मद्भ्रातृसकाशात्क्रीत्वा परिशिष्टमुद्रणाय मां शोधने समचोदयत्। श्रीतातपादपुस्तकानुसारेण संशोधनाय चारभे। पञ्चमाध्यायपर्यन्तं मुद्रिते चास्मिन् अस्मन्मित्रवर्यस्यास्मत्पितामहच्छात्रस्य काकिनाडपुरीवास्तव्यस्य काशीभट्टवंशजश्रीसुब्रह्मण्यशास्त्रिणः पुरुषकारेण तत्रत्यवैयाकरणोत्तमानां कप्पगन्तुलकुलोद्भवश्रीरामशास्त्रिणां बहुशः शुद्धं पुस्तकमप्यलभ्यत। अस्मदग्रजमुद्रणकाले रामानुजीयसंप्रदायरसिकस्य विंजमूरुकुलजस्य प्रतिवादिभयङ्कराचार्यसन्ततेः श्रीवेङ्कटाचार्यस्य पुस्तकमप्यासीत्। तत्पुनरपि तेन नीतमतो मदीयशोधने न तस्य साहाय्यम्। पुत्रिकात्रयमिदमेकस्या एव मातृकाया इति प्रतिभाति।

अत्र च मदीयात्प्रमादाद्बह्वोऽशुद्धयो जाताः, पूर्वभागे मद्भ्रात्रा सर्वथा व्याकुलीकृतो ग्रन्थ इत्यादिदोषजातं पुनर्मुद्रणे संस्करिष्यते।

इति विज्ञापयिता
भट्टनाथस्वामी विद्यारत्नम्

---

जैमिनीयोपरि च लघ्वी वृत्तिरपि विरचितेति केचिद्वदन्ति । यद्यपि तर्कसंग्रहदीपिकयोरयं राघवसोमयाजिकुलजत्वेन तिरुमलार्यवर्यसूनुत्वेन च नोल्लिखितः तथापि मङ्गलश्लोकसाम्येन अन्नम्भट्टान्तरानुपलम्भेन च स एवायमिति निश्चीयते । अयं च प्रक्रियाकौमुदीकारान्नवीनः सिद्धान्तकौमुदीकारात्प्राचीनश्चेति निश्चेतुं शक्यते इति तातचरणाः । ६–४–१५१ सूत्रे मल्लिनाथग्रन्थस्मापि स्मरति ।

एतत्कृता व्याकरणमिताक्षरा नाम पाणिनीयलघुवृत्तिः व्युत्पित्सूनामत्यन्तोपकारिणी । अस्यां काशिका सर्वापि गतार्था; स्थानविशेषेषु बहुषु भाष्यकाशिकाकारयोर्मतभेदाः सुविशदं निरूपिताः । अस्याश्चैकं पुस्तकमस्मत्प्रपितामहचरणसम्पादितेषु पुस्तकेष्वासीत् । परमस्मात्पितामहानां प्राथमिकमहामहोपाध्यायानां श्रीपरवस्तुवेङ्कटरङ्गनाथाचार्याणामार्यवरगुरूणामधिकारे नष्टमिति तन्मुखादेव श्रुतम् । ग्रन्थस्यात्युत्तमत्वेन पुनः सञ्जिघृक्षा पुनरासीदस्मत्पितामहानाम् । बहोः पुनरत्तेहसः पश्चात्तूणी(TUNI)पुरे कृतावासेभ्यस्तेभ्यो मीमांसामधीयन्नन्तेवासिष्वन्यतमः कश्चिभट्टकुलतिलकः श्रीभानुमामहेश्वरशास्त्री स्वसमीपे व्याकरणमिताक्षरायाः सत्तामुवाच; तदाभिलाषं विदित्वा पुस्तकं पुत्रिकानिर्माणाय प्रादाच्च । तदेव सौम्यवरस्य महानुभावस्यास्य पुस्तकं मम समीपेऽद्यापि वर्तते । विदित्वापि निर्मितां पुत्रिकां नाद्यावधि प्रत्यर्पयादिति नैव वाच्यं तत्कथामल्पकुर्वन्ति । तदिदं पुस्तकमनुसृत्य लिखितां पुत्रिकां प्राप्यास्मत्तातपादैः सर्वशास्त्रपारावारीणैः प्रातःस्मरणीयनामधेयैः श्रीनिवासजगन्नाथस्वामिभिः आर्यवरगुरुभिः सुदुर्लभोऽयं ग्रन्थोऽवश्यमेव मुद्रणं प्रापणीय इति समपन्यत; निर्मिता च सम्पूर्णस्यास्य पुस्त-

# निवेदनम् ।

एतस्याः पाणिनीयलघुवृत्तेर्व्याकरणमिताक्षरायाः प्रणेता श्रीमानन्नंभट्टो राघवसोमयाजिकुलोद्भवः महोपाध्यायाद्वैतविद्याचार्यविरुदाभ्यामलंकृतस्य श्रीतिरुमलार्यस्य पुत्रश्चेति स्वयमेव प्रतिपादितवान् । अयं ग्रन्थकारः कृष्णातीरदेशस्थ इति किंवदन्ती । अन्नंभट्टेति प्रसिद्धाभिजननामान ऋग्वेदिनः प्रकृते केशवपुर(केशवरं)ग्रामे निवसन्ति । ते च पाश्चात्त्य(कोंडवीडु)देशादेवागता इति तत्रत्याः कथयन्ति । परं तु राघवसोमयाजिकुलीयाः केपि नाद्यावधि मया श्रुताः । तस्मादेवमनुमीयते अन्नंभट्टात्पूर्वं राघवसोमयाजिनस्तत्पूर्वजस्यातिप्रसिद्धत्वाचन्नाम्नैव वंशो व्यवह्रियते स्म, जाते च सकलजगद्विख्यातपाण्डितीप्रकर्षे तत्रभवत्यन्नंभट्टे स एव वंशस्य नामास्पदं समजनीति ।

"काशीगमनमात्रेण नान्नंभट्टायते द्विजः ।
अपि गङ्गाजलस्नानान्नाधःकेशः कुशायते"

इति सर्वैरेव भारतवर्षीयैर्विद्वद्भिरनुगीयमानो न केवलं स्वकीयस्य वंशस्य किं तु भारतवर्षस्यैव स्वनाम्ना व्यवहारं सम्पादयेचेदपि नाद्भुतं स्यात् । यावदृढतरं प्रमाणान्तरं नोपलभे माहे तावदुक्तदिशा तैलिङ्गदेशीय ऋग्वेदी चान्नंभट्ट इति निश्चेतुं शक्यते । आलोकसिद्धाञ्जने "अत्रास्मदग्रजचरणाः" इति क्वचिद्दर्शनेनान्नंभट्टस्य भ्रातापि कश्चिद्विद्वानासीदित्यवगम्यते । ( १ ) तर्कभाषातत्त्वबोधिन्याख्यटीका ( २ ) तर्कसंग्रहः ( ३ ) तर्कसंग्रहदीपिका ( ४ ) व्याकरणमिताक्षरा ( ५ ) भाष्यप्रदीपोद्द्योतनम् ( ६ ) चिन्तामण्यालोकसिद्धाञ्जनम् ( ७ ) राणकोज्जीवनी चेति ग्रन्था एतत्कृता मया अंशतः पूर्णाश्च विलोकिताः । अन्नंभट्टेन ब्रह्मसूत्रोपरि

BENARES SANSKRIT SERIES;
A
COLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH, M. A., C. I. E.
AND
G. THIBAUT, PH. D.
*Nos. 76, 77, 82, 85, 93, 98, 115, 121, 122, & 126.*

# व्याकरणमिताक्षरा ।

सर्वतन्त्रस्वतन्त्रश्रीमदन्नंभट्टप्रणीता ।

श्रीपरवस्तुश्रीनिवासजगन्नाथस्वामिभिरार्यवरगुरुभिस्तत्सुत्रेण
भट्टनाथस्वामिविद्यारत्नेन च संशोधिता ।

# VYAKARANAMITÂKSHARÂ,

A gloss on PÂNINI's Grammatical Aphorisms,

BY ŜRÎ ANNAMBHATTA.
EDITED BY
S. P. S. JAGANNÂTHASWÂMY ÂRYAVARAGURU
AND HIS SON
BHATTANÂTHA SWÂMYVIDYÂRATNA.

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.,*
AND SOLD BY H D. GUPTA,
*Secretary, Chowkhambâ Sanskrit Book Depôt.*
Printed at the Vidyâ Vilâs Press,
BENARES.
1906.

विवृतो मा भूदित्येवमर्थमिदं सूत्रम् । एको विवृतः । अन्यः संवृतः । यः शास्त्रादौ विवृतः प्रतिज्ञातः स संवृतो ज्ञेयः । प्रयोगे सर्वत्र संवृत एव प्रयोक्तव्य इत्यर्थः ॥

ग्रन्थविस्तरभीरुभ्य इयं वृत्तिर्मया कृता ॥
यया व्याकरणं सर्वं करस्थामलकायते ॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्नम्भट्टस्य कृतौ व्याकरणमिताक्षरायामष्टमस्याध्यायस्य चतुर्थः पादः ॥



हलो यमां यमि लोपः ॥ ६४ ॥

हलः परस्य यमो लोपो वा स्याद्यमि । शौर्य्येयत्र अ-चो रहाभ्यामिति यस्य द्वित्वे मध्यमस्य वा लोपः। हलः किम्। अन्नम्। यमां किम्। अर्घ्यम्। यमि किम्। शार्ङ्गम् ॥

झरो झरि सवर्णे ॥ ६५ ॥

हलः परस्य झरो लोपो वा स्यात्सवर्णे झरि । मत्तम्। अत्र त्रयस्तकाराः। अनचि चेति द्वित्वे चत्वारः। तत्र मध्यमस्य मध्यमयोर्वा लोपः। झरः किम्। शार्ङ्गम्। झरि किम्। प्रियपञ्च्चा। अल्लोपस्य स्थानिवत्त्वनिषेधात् ईकारे परे चस्य लोपः स्यात्। सवर्णे किम्। तर्प्ता। सवर्णग्रहणं सवर्णमात्रे यथा स्यात्सङ्ख्यातानुदेशो मा भूदिति। शिण्ढि। ढकारस्य घे परतो लोपः सिध्यति ॥

उदात्तादनुदात्तस्य स्वरितः ॥ ६६ ॥

उदात्तात्परस्यानुदात्तस्य स्वरितः स्यात्। गार्ग्यः पचति ॥

नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ॥ ६७ ॥

उदात्त उदयः परो यस्य स दात्तोदयः। एवं स्वरितोदयः। उदात्तपरस्य स्वरितपरस्य चानुदात्तस्योक्तं न स्याद्वा। गार्ग्यस्तत्र। गार्ग्यः क्व। अगार्ग्यादीनां किम्। एतेषां स्वरितः, अन्येषां नेतिविकल्पः। नोदात्तस्वरितपरमिति वाच्ये उदयग्रहणं मङ्गलार्थम्। अनेकाचार्यकीर्तनमपि मङ्गलार्थम् पूजार्थञ्च ॥

अ अ ॥ ६८ ॥

दीर्घप्लुतयोरवर्णयोर्विकृतत्वं संवृतत्वं ह्रस्वस्य। तत्र शास्त्रार्थे ह्रस्वोऽपि विवृतः प्रतिज्ञातः सावर्ण्यार्थम्। प्रयोगेऽपि स

श्च णत्वम् । यथि किम् । आक्रंस्यते ॥

वा पदान्तस्य ॥ ५९ ॥

पदान्तस्यानुस्वारस्य यथि परे परसवर्णो वा स्यात् । त्वङ्करोषि । त्वं करोषि । सय्यन्ता । संयन्ता । सव्वत्सरः । संवत्सरः । यल्लोकम् । यं लोकम् ॥

तोर्लि ॥ ६० ॥

तवर्गस्य लकारे परसवर्णः । तल्लयः । विद्वाल्लिखति ॥

उदस्थास्तम्भ्वोः पूर्वस्य ॥ ६१ ॥

उदः परयोः स्थास्तम्भ्वोः पूर्वसवर्णः स्यात् । आदेः परस्य । उत्थानम् । उत्तम्भनम् । एतयोः किम् । उत्स्नातः ॥

स्कन्देश्छन्दसि ॥

उत्कन्दे ॥

रोगे च ॥

उत्कन्दको रोगः ॥

झयो होऽन्यतरस्याम् ॥ ६२ ॥

झयः परस्य हस्य पूर्वसवर्णो वा स्यात् । वाग्घसति । वाग्हसति । वर्गचतुर्थो हस्य सवर्णः । महाप्राणत्वादिसाम्यात् । झयः किम् । प्राङ्हसति ॥

शश्छोऽटि ॥ ६३ ॥

झयः परस्य शस्यच्छो वा स्यादटि । वाक्छेते । वाक्शेते । त्रिष्टुप्छ्रूयते । त्रिष्टुप्श्रूयते ।

छत्वममीति वाच्यम् ॥

तच्छ्लोकेन । अमि किम् । वाक्श्च्योतति ॥

## दीर्घादाचार्याणाम् ॥ ५२ ॥

दीर्घात्परस्य न द्वित्वमित्याचार्याः । दात्रम् । सूत्रम् ॥

## झलां जश् झशि ॥ ५३ ॥

झलां जश् स्याज्झशि । लब्धा । दोग्धा । झशि किम् । वध्यः ॥

## अभ्यासे चर्च ॥ ५४ ॥

अभ्यासे झलां चरः स्युर्जशश्च । खयां चरो झशां जश इति विवेकः । चिखनिष्पति । पिफकारयिषति । चिच्छादयिषति । तिनकारयिषति । तिष्ठासति । प्रकृतिचरां चरः । पिपक्षति । बुभूषति । जिघत्सति । प्रकृतिजशां प्रकृतिजशः । जिजनिषते ॥

## खरि च ॥ ५५ ॥

खरि झलां चरः स्युः । चानुकृष्टत्वात् जश् नानुवर्तते । भेत्ता ॥

## वावसाने ॥ ५६ ॥

अवसाने झलां चरो वा स्युः । वक् । वाग् । लिट् । लिड् ॥

## अणोऽप्रगृह्यस्यानुनासिकः ॥ ५७ ॥

अप्रगृह्यस्याणोनुनासिको वा स्यादवसाने । दधिँ । दधि । मधुँ । मधु । कुमारिँ । कुमारि । अणः किम् । कर्तृ ॥

## अनुस्वारस्य ययि परसवर्णः ॥ ५८ ॥

अनुस्वारस्य ययि परे परसवर्णः स्यात् । शङ्किता । कुण्ठिता । नन्दिता । कम्पिता । कुर्वन्ति । कृषन्ति । णत्वस्यासिद्धत्वात्पूर्वमनुस्वारः । परसवर्णेन नकारः । तस्यासिद्धत्वा-

पूर्वत्र स्थाली। स्थाता। परत्र वत्ससरः। अप्सरा इत्यादि॥

अनचीति प्रसज्यप्रतिषेधादवसानेपि॥

वाक्क्। त्वक्क्। वाक्किति भगवतोदाहरणाद्दीर्घादाचार्याणामिति न निषेधः॥

नादिन्याक्रोशे पुत्त्रस्य॥ ४८॥

आदिनि परे पुत्रस्य द्वित्वं न स्यान्निन्दायाम्। पुत्रादिनी त्वमसि पापे। निन्दायां किम्। तत्त्वकथने स्यादेव। पुत्त्रादिनी शिशुमारी॥

तत्परे चेति वाच्यम्॥

पुत्रपुत्रादिनि पापे॥

हतजग्धपरे वेति वाच्यम्॥

पुत्त्रहती। पुत्रहती। पुत्त्रजग्धी। पुत्रजग्धी॥

चयो द्वितीयाः शरि पौष्करसादेः॥

तस्य थः। वथ्त्सरः। कस्य खः। ख्क्षीरम्। पस्य फः। अफ्प्सराः॥

शरोचि॥ ४९॥

अचि परे शरो न द्वे स्तः। अचो रहाभ्यामितिप्राप्तेर्निषेधः। कर्षति। दर्शः। अचि किम्। कर्ष्ष्यते। कश्श्यते॥

त्रिप्रभृतिषु शाकटायनस्य॥ ५०॥

त्रिप्रभृतिषु संयुक्तेषु द्वित्वं नेति शाकटायनः। इन्द्रः। मन्त्रः। राष्ट्रम्। वस्त्रम्॥

सर्वत्र शाकल्यस्य॥ ५१॥

शाकल्यस्तु सर्वत्रापि द्वित्वं न मेने। अर्कः। मर्कः। ब्रह्म। द्वित्वमात्रमेव शाकल्यस्य नेष्टमित्यप्याहुः। दध्यत्र॥

अनाम्नवतिनगरीणामिति वाच्यम् ॥

षण्णाम् । षण्णवतिः । षण्णगर्यः । पदान्तात्किम् । ईट्टे । ईट्टे । टोः किम् । सर्पिष्टमम् ॥

## तोः षि ॥ ४३ ॥

तवर्गस्य षकारे परे न ष्टुत्वम् । सन् षष्ठः ॥

## शात् ॥ ४४ ॥

शात्तोरुक्तं न । विश्नः । मश्नः ॥

## यरोऽनुनासिकेऽनुनासिको वा ॥ ४५ ॥

यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः ॥

मयटि नित्यम् ॥

चिन्मयम् ॥

## अचो रहाभ्यां द्वे ॥ ४६ ॥

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे[वा]स्तः । अर्क्कः । ब्रह्म्म । अचः किम् । ह्नुते ॥

## अनचि च ॥ ४७ ॥

अचः परस्य यरो द्वे[वा]स्तः न त्वचि परतः । दद्ध्यत्र । अचः परस्य किम् । स्मितम् ॥

यणो मयो द्वे वाच्ये ॥

यण इति पञ्चमी मय इति षष्ठी, विपरीतं वेति पक्षद्वयमत्रेष्यते । पूर्वत्र तवल्क्कारः । द्वितीये दद्ध्यत्र ॥

शरः खयो द्वे वाच्ये ॥

अत्रापि शरः परस्य खयः खयः परस्य शर इति पक्षद्वयम् ।

पदव्यवायेपि ॥ ३८ ॥

पदेन व्यवधानेपि णत्वं न स्यात् । माषकुम्भवापेन । चतुरङ्गयोगेन ॥

अतद्धित इति वाच्यम् ॥

नेह । आर्द्रगोमयेण । शुष्कगोमयेण ॥

क्षुभ्नादिषु च ॥ ३९ ॥

एषु णत्वं न । क्षुभ्नाति । क्षुभ्नीतः । क्षुभ्नन्ति । नृनमन । तृप्नु । नर्दि । नन्दन । नगर । नृति । गहन । निवेश । निवास । अग्नि । अनूप ॥

आचार्यादणत्वं च ॥

आचार्यभोगीनः । आचार्यानी । आकृतिगणोयम् ॥

स्तोः श्चुना श्चुः ॥ ४० ॥

स्तोः सकारतवर्गयोः शकारचवर्गाभ्यां पूर्वाभ्यां पराभ्यां वा योगे शकारचवर्गौ क्रमात् स्तः । रामः शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय । यज्ञः । याच्ञा । निमित्तस्थानिनोर्यथासङ्ख्याभावे शात्प्रतिषेधो ज्ञापकः ॥

ष्टुना ष्टुः ॥ ४१ ॥

स्तोः षकारटवर्गाभ्यां योगे षकारटवर्गौ स्तः । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे । अत्रापि यथासङ्ख्याभावे तोः षीति ज्ञापकम् ॥

न पदान्ताट्टोरनाम् ॥ ४२ ॥

पदान्ताट्टवर्गात्परस्य स्तोः ष्टुर्न स्यात् । षट्सन्तः । षट्ते ॥

इजादेः सनुमः ॥ ३२ ॥

इजादेः सनुमो हलन्ताद्यो विहितः कृत् तन्नस्य णो वा स्यात् । प्रेङ्खणम् । प्रेङ्खनम् । इजादेरेव सनुम इति नियमाश्रयणात् प्रमङ्कनमित्यादौ णत्वाभावः ॥

वा निंसनिक्षनिन्दाम् ॥ ३३ ॥

उपसर्गस्थान्निमित्तात्परस्यैषां नस्य णो वा स्यात् । प्रणिंसनम् । प्रनिंसनम् । प्रणिक्षणम् । प्रनिक्षणम् । प्रणिन्दनम् । प्रनिन्दनम् । प्रणिन्दति । प्रनिन्दति । णोपदेशस्येति प्राप्तविकल्पः ॥

न भाभूपूकमिगमिप्यायिवेपाम् ॥ ३४ ॥

एषां कृत्यच इति णत्वं न । प्रभानम् । प्रभवनम् । प्रपवनम् । प्रकमनम् । प्रगमनम् । प्रप्यायनम् । प्रवेपनम् ॥

पूञ्ग्रहणेन पूञो ग्रहणमिष्यते ॥

पूङस्तु प्रवपणं सोमस्य । भादीनां ण्यन्तानामपि निषेधः । प्रभावनम् ॥

पात्पदान्तात् ॥ ३५ ॥

पदान्तात् पात्परस्य नस्य णत्वं न स्यात् । निष्पानम् । सर्पिष्पानम् । पात्किम् । निर्णयः । पदान्तात्किम् । पुष्णाति ॥

नशेः षान्तस्य ॥ ३६ ॥

षान्तस्य नशेः णत्वं न । प्रनष्टः । षान्तस्य किम् । प्रणश्यति । अन्तग्रहणेन भूतपूर्वषान्तस्यापि णत्वं न । प्रनङ्क्ष्यति ॥

पदान्तस्य ॥ ३७ ॥

पदान्तस्य नस्य णत्वं न । रामान् । गिरीन् ॥

णाः । पितृगाणाः । अवग्रहादित्यनेन ऋदन्तं पूर्वपदं लभ्यते ॥

नश्च धातुस्थोरुषुभ्यः ॥ २७ ॥

धातुस्थान्निमित्तादुरुषुभ्यां च परस्य नसो णः स्याच्छन्दसि । अग्ने रक्षाणः । ऊरुणस्कृधि । ऊर्ध्वं ऊषुणः ॥

उपसर्गाद्बहुलम् ॥ २८ ॥

उपसर्गस्थान्निमित्तात्परस्य नसो णो वा स्यात् । प्रणोमद्रः । प्रनोमुञ्च । लोकेपि प्रणसं मुखम् ॥

कृत्यचः ॥ २९ ॥

उपसर्गस्थान्निमित्तात्परस्य कृत्स्थनकारस्याच उत्तरस्य णः स्यात् । प्रयाणम् । प्रयाणीयम् । प्रहीणः । प्रहीणवान् । अचः किम् । प्रमग्नः ॥

निर्विण्णस्योपसंख्यानम् ॥

निर्विण्णोहं खलसङ्गेन ॥

णेर्विभाषा ॥ ३० ॥

ण्यन्ताद्विहिते कृत्यचो नस्योपसर्गस्थान्निमित्ताण्णो वा स्यात् । प्रयापणीयम् । प्रयापनीयम् । प्रयापिणौ । प्रयापिनौ । विहितविशेषणं किम् । प्रयाप्यमाणम् । प्रयाप्यमानम् । यका व्यवधानेपि यथा स्यात् । अथ वा अड्व्यवाय इत्यनुवर्तते ॥

हलश्चेजुपधात् ॥ ३१ ॥

हलादिरिजुपधश्च यो धातुस्तस्मात्कृत्यच इति प्राप्तणत्वं वा स्यात् । प्रकोपणम् । प्रकोपनम् । हलः किम् । प्रेहणम् । इजुपधात्किम् । प्रवपणम् । अच इत्येव । प्रभुग्नम् । इजुपधस्य हलन्तत्वाव्यभिचाराद्धलादित्वलाभः ॥

केचित्तु पर्यणितीति णत्वमिष्यत एवेति नार्थः पूर्वसूत्रेन्तग्रहणेनेत्याहुः ॥

## उभौ साभ्यासस्य ॥ २१ ॥

उपसर्गस्थान्निमित्तादनितेः साभ्यासस्योभौ नकारौ णत्वं प्राप्नुतः। प्राणिणिषति। प्राणिणत्। पूर्वत्रासिद्धीयमद्विर्वचन इत्यस्यानित्यत्वमेतत्सूत्रारम्भेण ज्ञाप्यते। अन्यथा कृतणत्वद्विर्वचनेनैव सिद्धत्वात् ॥

## हन्तेरत्पूर्वस्य ॥ २२ ॥

उपसर्गस्थान्निमित्तात्परस्य हन्तेरकारपूर्वस्य नस्य णः स्यात्। प्रहण्यते। अत्पूर्वस्य किम्। प्रघ्नन्ति। तपरत्वं किम्। प्राघानि ॥

## व्मोर्वा ॥ २३ ॥

उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य णो वा स्यान्मवयोः परयोः। प्रहण्वः। प्रहन्वः। प्रहण्मः। प्रहन्मः ॥

## अन्तरदेशे ॥ २४ ॥

अन्तःपरस्य हन्तेरत्पूर्वस्य नस्य णः स्यान्न तु देशे। अन्तर्हण्यते। अन्तर्हणनं वर्तते। अदेशे किम्। अन्तर्हननो देशः। अत्पूर्वस्य किम्। अन्तर्घ्नन्ति। अन्तरघानि ॥

## अयनं च ॥ २५ ॥

अन्तःपरस्यैतन्नकारस्यादेशो णः स्यात्। अन्तरयणं वर्तते। देशे तु अन्तरयनो देशः ॥

## छन्दस्यृदवग्रहात् ॥ २६ ॥

अवग्रहांवपपादृदन्तात्परस्य नस्य णः स्याच्छन्दसि। नृम-

पतिवहतिशाम्यतिचिनोतिदेग्धिषु च ॥ १७ ॥

उपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं स्याद्गदादौ परे । प्रणिगदति । प्रणिनदति । प्रणिपतति । प्रणिपद्यते । प्रणिददाति । प्रणिदधाति । प्रणिमिमीते । प्रणिमयते । प्रणिस्यति । प्रणिहन्ति । प्रणियाति । प्रणिवाति । प्रणिद्राति । प्रणिप्साति । प्रणिवपति । प्रणिवहति । प्रणिशाम्यति । प्रणिचिनोति । प्रणिदेग्धि ॥

नेर्णत्वमड्व्यवायेपि ॥

प्रण्यगदत् ॥

शेषे विभाषा कखादावषान्त उपदेशे ॥ १८ ॥

उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन् धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं वा स्यात् । प्रणिपचति । प्रनिपचति । कादिवर्जे किम् । प्रनिकरोति । प्रनिखनति । प्रनिपिनष्टि । उपदेशे किम् । इह च प्रतिषेधो यथा स्यात् । प्रनिपेक्ष्यति । प्रनिचकार । प्रनिचखान । इह च मा भूत् । प्रनिपेष्टा ॥

अनितेः ॥ १९ ॥

उपसर्गस्थान्निमित्तात्परस्यानितेर्नस्य णः स्यात् । प्राणिति । पराणिति ॥

अन्तः ॥ २० ॥

उपसर्गस्थान्निमित्तात्परस्यानितेरन्तस्य नस्य णः स्यात् । पदान्तस्येति निषेधापवादः । हे प्राण् । हे पराण् । भाष्येन्तग्रहणं निमित्तसामीप्यार्थकं पूर्वसूत्रशेषः तेनैकव्यवधाने णत्वं नानेकव्यवधाने पर्यनितीति पक्षान्तरं स्थितम् । सम्बुद्ध्यर्थं तन्त्रेणावृत्त्या वा द्वितीयमन्तग्रहणं तस्मिन् मते व्याख्येयम् ।

एकाजुत्तरपदे णः ॥ १२ ॥

एकाजुत्तरपदं यस्य तस्मिन् समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिषु नस्य णः स्यात् । वृत्रहणः । नुमि क्षीरपाणि । विभक्तौ क्षीरपेण । पुनर्णग्रहणं नित्यार्थम् ॥

कुमति च ॥ १३ ॥

कवर्गवत्युत्तरपदे च पूर्वपदस्थान्निमित्तादुत्तरस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः स्यात् । वस्त्रयुगिणः । वस्त्रयुगाणि । वस्त्रयुगेण ॥

उपसर्गादसमासेपि णोपदेशस्य ॥ १४ ॥

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात् असमासे समासेपि । प्रणमति । प्रणामः । उपसर्गात्किम् । प्रगतो नायकोऽस्माद्देशात्प्रनायको देशः । णोपदेशस्य किम् । प्रनन्दकः ॥

हिनु मीना ॥ १५ ॥

उपसर्गस्थान्निमित्तात्परस्यानयोर्नस्य णः स्यात् । प्रहिणोति । प्रहिणुतः । प्रमीणाति । प्रमीणीतः । एकदेशविकृतस्यानन्यत्वादजादेशस्य स्थानिवद्भावाद्वा प्रमीणीतीत्यत्रापि णत्वम् ॥

आनि लोट् ॥ १६ ॥

उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात् । प्रवपाणि । लोट् किम् । प्रवपानि मांसानि ॥

आनि लोड्ग्रहणादर्थवत्परिभाषा ।

नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिव-

मित्यर्थः । यदा वाक्षेर्वाह्यत्वाविवक्षा तदा भवत्येव णत्वमिति कैयटः ॥

पानं देशे ॥ ९ ॥

पूर्वपदस्थान्निमित्तात्परस्य नस्य णत्वं स्याद्देशे। पीयत इति पानम् । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । सुरापाणाः प्राच्याः । मनुष्याभिधानेपि देशाभिधानं गम्यते । देशे किम् । दाक्षीणां पानम् दाक्षिपानम् ॥

वा भावकरणयोः ॥ १० ॥

पूर्वपदस्थान्निमित्तात्परस्य भावकरणयोर्निष्पन्नस्य पानस्य णत्वं वा स्यात् । क्षीरपानम् । क्षीरपाणम् । करणे क्षीरपाणम् क्षीरपानं वा पात्रम् ॥

गिरिनद्यादीनां वा ॥

गिरिणदी । गिरिनदी । वक्रणदी । वक्रनदी । वक्रणितम्बा । वक्रनितम्बा ॥

प्रातिपदिकान्तनुम्विभक्तिषु च ॥ ११ ॥

पूर्वपदस्थान्निमित्तात्परस्यैषु स्थितस्य नस्य णत्वं वा स्यात्। प्रातिपदिकान्ते माषवापीणः । माषवापीनः । नुमि माषवापाणि । माषवापानि । विभक्तौ माषवापेण । माषवापेन । गर्गाणां भगिनी गर्गभगिनीत्यत्र नकारस्य प्रातिपदिकान्तत्वाभावान्न णत्वम् । यदा गर्गाणां भगो गर्गभगः सोस्या अस्तीति तदा गर्गभगिणीति भवत्येव ॥

युवादेर्न ॥

आर्ययूना । प्रपक्वानि । परिपक्वानि । दीर्घाह्नी शरद् ॥

मिश्रकावणम् । सिध्रकावणम् । शारिकावणम् । कोटरावणम् । अग्रेवणम् । एभ्य एव किम् । कुबेरवनम् । कर्णिकारवनम् ॥

प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयुक्षाभ्योऽसंज्ञायामपि ॥ ५ ॥

एभ्यो वनस्य णत्वं स्यात्संज्ञायामसंज्ञायां च । प्रवणम् । निर्वणम् । अन्तर्वणम् । शरवणम् । इक्षुवणम् । प्लक्षवणम् । कार्ष्यवणम् । खदिरवणम् । पीयुक्षावणम् ॥

विभाषौषधिवनस्पतिभ्यः ॥ ६ ॥

एभ्यो वनस्य णत्वं वा स्यात् । दूर्वावणम् । मूर्वावणम् । शिरीषवणम् । बदरीवणम् । पक्षे दूर्वावनमित्यादि ॥

द्व्यक्षरत्र्यक्षरेभ्य एव ॥

नेह । देवदारुवनम् । भद्रदारुवनम् ॥

इरिकादिभ्यो न ॥

इरिकावनम् । इषीकावनम् । अत्र वनस्पतिरिति वृक्षमात्रं गृह्यते ।
फली वनस्पतिर्ज्ञेयो वृक्षाः पुष्पफलोदयाः ।
ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः ॥

अह्नोऽदन्तात् ॥ ७ ॥

अदन्तपूर्वपदस्थान्निमित्तात्परस्याह्नस्य नः णः स्यात् । पूर्वाह्णः । अपराह्णः । अदन्तात्किम् । निरह्नः । अह्नाह्न एतेभ्य इत्यह्नादेशः । अह्न इत्यदन्तस्यैव ग्रहणान्नेह । दीर्घाह्नी प्रावृट् ॥

वाहनमाहितात् ॥ ८ ॥

आहितवाचिपूर्वपदस्थान्निमित्ताद्वाहनस्य णत्वं स्यात् । इक्षुवाहणम् । आहितात्किम् । दाक्षिवाहनम् । दाक्षिस्वामिक-

## अथाष्टमाध्यायचतुर्थपादः ॥

### रषाभ्यां नो णः समानपदे ॥ १ ॥

एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात् । शीर्णम् । पुष्णाति । षग्रहणमुत्तरार्थम् । ष्टुत्वेनैव सिद्धत्वात् । समानपदे किम् । अग्निर्नयति । क्षुभ्नादिषु नृनमनतृप्नोतिग्रहणं ज्ञापकमृवर्णाण्णत्वस्य । पितॄणाम् ॥

### अट्कुप्वाङ्नुम्व्यवायेपि ॥ २ ॥

अट् कवर्ग पवर्ग आङ् नुम् एतैर्व्यस्तैः समस्तैश्च व्यवधानेपि रषाभ्यां परस्य नस्य णः स्यात्समानपदे । करणम् । अर्केण । दर्पेण । पर्याणद्धम् । आङ्ग्रहणं पदव्यवायेपीत्यस्य बाधनार्थम् । बृंहणम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थम् । तेनासत्यपि नुम्यनुस्वारव्यवाये तृंहणमित्यादौ णत्वम् । सत्यपि नुम्यनुस्वाराभावे प्रेन्वनमित्यादावणत्वं च सिध्यति ॥

### पूर्वपदात्संज्ञायामगः ॥ ३ ॥

पूर्वपदस्थान्निमित्तादुत्तरस्य नस्य णः स्यात्संज्ञायां न तु गकारव्यवधाने । द्रुणसः । खरणसः । शूर्पणखा । संज्ञायां किम् । चर्मनासिकः । अगः किम् । ऋगयनम् ॥

गकारव्यवधाने चाव्यवधाने चोत्तरपदतद्धितनकारस्य णत्वमिष्यते ॥

सर्वाङ्गीणः । मातृभोगीणः ॥

### वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः ॥ ४ ॥

एभ्य एव वनस्य णत्वं स्यात्संज्ञायाम् । पुरगावणम् ।

ष्यत् । सनि । अभिसुसूषतेरसत्ययः । अभिसुषूः । अत्र षणोऽभावात् स्तौतिण्योरिति न प्रवर्तते । सुसूषतीत्यत्र स्तौतिण्योरिति नियमात् । अभिसुसूषतीत्यत्र स्थादिष्वभ्यासेनेति नियमात् ॥

सदिस्वञ्ज्योः परस्य लिटि ॥ ११८ ॥

अनयोरभ्यासात्परस्य षो न स्याल्लिटि । निषसाद । परिषसाद । परिषस्वजे । स्वञ्जेः संयोगादपि लिटो वा कित्त्वम् । परिषस्वञ्जे ॥

निव्यभिभ्योऽड्व्यवाये वा छन्दसि ॥ ११९ ॥

एभ्यः परस्य सस्याड्व्यवाये षो न स्याद्वा छन्दसि । न्यषीदत् । न्यसीदत् । व्यषीदत् । व्यसीदत् । अभ्यसीदत् । सदिस्वञ्ज्योरिति नानुवर्तते । न्यस्तौत् । न्यष्टौत् । व्यष्टौत् । व्यस्तौत् । अभ्यष्टौत् । अभ्यस्तौत् ॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्नम्भट्टस्य कृतौ व्याकरणमिताक्षरायामष्टमस्याध्यायस्य प्रथमः पादः ॥

अविस्पृशम् । निःस्पृहः । सवने सवने । सवनमुखे सवनमुखे । अश्वसनिम् । गोसनिम् । अश्वसनिग्रहणमनिण्कोरपि सस्य षत्वज्ञापनार्थम् । तेन माषः जलाषाहमित्यादि सिध्यति ॥

सात्पदाद्योः ॥ १११ ॥

सातेः पदादेश्च सस्य षो न स्यात् । अग्निसात् । दधि सिञ्चति ॥

सिचो यङि ॥ ११२ ॥

सिचः सस्य षो न स्याद्यङि । उपसर्गाभ्यासनिमित्तषत्वापवादः । निसेसिच्यते । यङि किम् । अभिषिषिक्षति ॥

सेधतेर्गतौ ॥ ११३ ॥

गत्यर्थस्य सेधतेर्न षत्वम् । अभिसेधति गाः । चालयतीत्यर्थः । गतौ किम् । शिष्यं कार्यात्प्रतिषेधति ॥

प्रतिस्तब्धनिस्तब्धौ च ॥ ११४ ॥

एतौ निपातौ । स्तम्भेरिति प्राप्तिः प्रतिषिध्यते ॥

सोढः ॥ ११५ ॥

सोढ्रूपस्य सहेः षो न स्यात् । परिनिविभ्य इति प्राप्तप्रतिषेधः । विसोढा । विसोढुम् । सोढः किम् । विषहते ॥

स्तम्भुसिवुसहां चङि ॥ ११६ ॥

एषां सस्य षो न स्याच्चङि । उपसर्गनिमित्तस्य प्रतिषेध इष्यते नाभ्यासनिमित्तस्य । अव्यतस्तम्भत् । पर्यसीषिवत् । व्यसीषहत् ॥

सुनोतेः स्यसनोः ॥ ११७ ॥

स्ये सनि च सुञः षो न स्यात् । विसोष्यति । व्यसो-

स्तुतस्तोमयोश्छन्दसि ॥ १०५ ॥

अनयोः सस्य षो वा स्याच्छन्दसि । नृभिः ष्टुतस्य । नृभिः स्तुतस्य । गोष्टोमम् । गोस्तोमम् । पूर्वपदादित्यस्यैवायं मपञ्चः ॥

पूर्वपदात् ॥ १०६ ॥

पूर्वपदस्थान्निमित्तात्परस्य सस्य षो वा स्याच्छन्दसि । द्विषन्धिः । द्विसन्धिः । द्विषाहस्रम् । द्विसाहस्रम् । त्रिष्षधस्थाय ॥

सुञः ॥ १०७ ॥

पूर्वपदस्थान्निमित्तात्परस्य सुञो निपातस्य षः स्याच्छन्दसि । अभीषुणः सखीनाम् । ऊर्ध्व ऊषुण ऊतये । इकः सुञीति दीर्घः ॥

सनोतेरनः ॥ १०८ ॥

सनोतेरनकारान्तस्य सस्य मूर्धन्यः स्यात् । गोषाः । नृषाः । अनः किम् । गोसनिं वाचमुदीरयत् । पूर्वपदादित्येव सिद्धे नियमार्थमिदम् गोसनिमिति ॥

सवनादित्वेपि ॥

सिसनिपतेरमत्ययः । सिसनिपतीति मत्युदाहार्यम् ॥

सहेः पृतनर्ताभ्यां च ॥ १०९ ॥

आभ्यां सहेः सस्य षः स्यात् । पृतनाषाहम् । ऋताषाहम् । चकारात् ऋतिषाहम् ॥

न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ॥ ११० ॥

रपरस्य सस्य सृप्यादेः सवनादीनां च षो न स्यात् । विस्रंसितायाः विस्रम्भः कथयति । क्रूरस्य विसृपः । वाचो विसर्जनम् ।

## नक्षत्राद्वा ॥ १०० ॥

एतिसंज्ञायामगादित्येव । रोहिणिषेणः । रोहिणिसेनः । भरणिषेणः । भरणिसेनः । अविहितलक्षणो मूर्धन्यः सुषामादिः ॥

## ह्रस्वात्तादौ तद्धिते ॥ १०१ ॥

ह्रस्वात्परस्य सस्य षः स्यात्तादौ तद्धिते । यजुष्टरम् । यजुष्टमम् । यजुष्ट्वम् । यजुष्टा । चतुष्टयम् । यजुष्टः । त्यप् । आविष्ट्यो वर्धते । ह्रस्वात्किम् । गीस्तराम् । तादौ किम् । सर्पिस्साद्भवति । सात्पदाद्योरिति सातेः षत्वनिषेधे प्रकृतिसकारस्य स्यात् । तद्धिते किम् । सर्पिस्तरति ॥

तिङां निषेधः ॥

भिन्द्युस्तराम् ॥

## निसस्तपतावनासेवने ॥ १०२ ॥

निसः सस्य षः स्यात्तपतावनासेवनेऽर्थे । आसेवनं पुनः पुनः करणम् । निष्टपति । सकृदग्निं स्पृशतीत्यर्थः । आसेवने तु निस्तपति । पुनः पुनस्तपतीत्यर्थः ॥

## युष्मत्तत्ततक्षुष्वन्तःपादम् ॥ १०३ ॥

एषु तादिषु परतः पूर्वस्य सस्य षः स्यात्स चेत्सकारः पादमध्ये । अप्स्वग्ने सधिष्टव । अग्निष्टद्विश्वम् । द्यावापृथिवी निष्टतक्षुः । अन्तःपादं किम् । यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनः ॥

## यजुष्येकेषाम् ॥ १०४ ॥

पूर्वोक्तं यजुषि वा । अग्निभिष्ट्वम् । अग्निभिस्त्वम् । अग्निष्टेग्रम् । अग्निस्तेग्रम् । अग्निष्टतक्षुः । अग्निस्ततक्षुः ॥

## गवियुधिभ्यां स्थिरः ॥ ९५ ॥

आभ्यां स्थिरः सकारस्य षः स्यात् । गविष्ठिरः । युधिष्ठिरः । गोशब्दादहलन्तादप्यस्मादेव निपातनात्सप्तम्या अलुक् ॥

## विकुशमिपरिभ्यः स्थलम् ॥ ९६ ॥

एभ्यः स्थलसस्य षः स्यात् । विष्ठलम् । कुष्ठलम् । शमिष्ठलम् । परिष्ठलम् ॥

## अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ॥ ९७ ॥

एभ्यः स्थसकारस्य षः स्यात् । अम्बष्ठः । आम्बष्ठः । गोष्ठः । भूमिष्ठः । सव्यष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुष्ठः । शङ्कुष्ठः । अङ्गुष्ठः । मञ्जिष्ठः । पुञ्जिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठः ॥

स्थास्थिन्स्थूनामिति वाच्यम् ॥

सव्येष्ठाः । परमेष्ठी । सव्येष्ठुः सारथिः ॥

## सुषामादिषु ॥ ९८ ॥

एषु सस्य षः स्यात् । शोभनं साम यस्य सुषामा ॥

## एति संज्ञायामगात्* ॥ ९९ ॥

एकारपरस्य सस्य मूर्धन्यः स्यात्संज्ञायां न तु गात्परस्य । परिषेणः । भानुषेणः । एतीति किम् । हरिसिंहः । संज्ञायां किम् । पृथ्वी सेना यस्य पृथुसेनः । अगात्किम् । विष्वक्सेनः । इण्कोरित्येव । देवसेनः ॥

---

* इदं परं च सूत्रं सुषामादिगणान्तर्गतम् न तु अष्टाध्याय्यन्तर्गतमिति मिताक्षराशैली स्फुटं कथयति ।

सुविनिर्दुर्भ्यः सुपिसूतिसमाः ॥ ८८ ॥

एभ्यः सुप्यादेः सस्य षः स्यात् । कृतसंप्रसारणः स्वपिः सुपिरित्युच्यते । सुषुप्तः । विषुप्तः । निष्षुप्तः । दुष्षुप्तः । सुषूतिः । निष्षूतिः । दुष्षूतिः । सुषमम् । विषमम् । निष्षमम् । दुष्षमम् । सुपेः किम् । सुस्वप्नक् । पूर्वत्रासिद्धीयमद्वित्वे इति कृते षत्वे द्वित्वम् । विषुषुपतुः । स्वपेर्द्वित्वे तु न । विसुष्वाप ॥

निनदीभ्यां स्नातेः कौशले ॥ ८९ ॥

आभ्यां स्नातेः षः स्यात् कौशले गम्यमाने । निष्णातः । नदीष्णः । सुपि स्थ इत्यत्र योगविभागात्कप्रत्ययः । कौशले किम् । नि स्नातः । नदीस्नातः ॥

सूत्रं प्रतिष्णातम् ॥ ९० ॥

एतत्सूत्रे निपात्यते । प्रतिष्णातं सूत्रम् । प्रतिस्नातमन्यत् ॥

कपिष्ठलो गोत्रे ॥ ९१ ॥

गोत्रे एतन्निपात्यते । यस्य कापिष्ठलिः पुत्रः स कपिष्ठलः । गोत्रे किम् । कपिना स्थलम् कपिस्थलम् ॥

प्रष्ठोऽग्रगामिनि ॥ ९२ ॥

अग्रे गामिन्ययं निपातः । प्रष्ठोऽश्वः । प्रस्थोऽन्यः ॥

वृक्षासनयोर्विष्टरः ॥ ९३ ॥

वृक्षे आसने च विष्टर इति निपात्यते । विस्तरोऽन्यः ॥

छन्दोनाम्नि च ॥ ९४ ॥

विष्टर इति प्रकृतेर्दीर्घे विष्टार इति निपातः । छन्दोनाम्नि स्तृञो घञ्विधानात् । विष्टारपङ्क्तिश्छन्दः । छन्दोनाम्नि किम् । पटस्य विस्तारः ॥

ज्योतिरायुषः स्तोमः ॥ ८३ ॥

आभ्यामस्य षः स्यात्। ज्योतिःष्टोमः। आयुःष्टोमः। समास एव। ज्योतिः स्तोमं हराति ॥

मातृपितृभ्यां स्वसा ॥ ८४ ॥

आभ्यां परस्य स्वसुः सस्य षः स्यात्। मातृष्वसा। पितृष्वसा ॥

मातुःपितुर्भ्यामन्तरस्याम् ॥ ८५ ॥

आभ्यां परस्य स्वसुः सस्य षः स्याद्वा समासे। मातुःष्वसा। पितुःष्वसा। मातुःस्वसा। पितुःस्वसा। रेफान्तयोरत्र ग्रहणम् एकदेशविकृतस्यानन्यत्वाद्विसर्जनीयान्तयोः सान्तयोश्च भवति। असमासे तु मातुः स्वसेत्येव ॥

अभिनिसः स्तनः शब्दसंज्ञायाम् ॥ ८६ ॥

आभ्यां स्तनस्य षः स्यात्। अभिष्टनो वर्णः। निष्टनो विसर्जनीयः। शब्दसंज्ञायां किम्। अभिस्तनति मृदङ्गः ॥

उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥ ८७ ॥

उपसर्गेणः प्रादुषश्च परस्यास्तेः सस्य षः स्याद्यकारे अचि च परे। निःष्यात्। प्रादुःष्यात्। निःषन्ति। प्रादुःषन्ति। आभ्यां किम्। दधि स्यात्। अस्तेः किम्। निःसृतम्। यद्यप्युपसर्गेण सकारे विशेष्यमाणे सकारमात्रस्य क्रियावाचित्वे षत्वमित्यन्यत्रामसङ्गः प्रादुश्च कृभ्वस्तिमात्रविषय इत्यस्ति ग्रहणं व्यर्थम्। तथापि अनुसूतेऽनुसूः। तस्यापत्यम्। शुभ्रादित्वाड्ढक्। आनुसेय इति प्रत्युदाहरणम्। यच्परः किम्। अभिस्तः ॥

इणः षीध्वंलुङ्लिटां धोङ्गात् ॥ ७८ ॥

इण्णन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य मूर्धन्यः स्यात् । च्योषीढ्वम् । अच्योढ्वम् । चकृढ्वे । इण्ग्रहणं कवर्गनिवृत्त्यर्थम् । पक्षे ध्वम् । षीध्वम्लुङ्लिटां किम् । स्तुध्वे । अङ्गात्किम् । परिषीध्वम् । अर्थवद्ग्रहणादप्येतत्सिद्धम् ॥

विभाषेटः ॥ ७९ ॥

इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यः स्यात् । भविषीढ्वम् । भविषीध्वम् । अभविढ्वम् । अभविध्वम् । बभूविढ्वे । बभूविध्वे । इणः किम् । आसिषीध्वम् । अङ्गादितीह नानुवर्तते । तेनेणोङ्गान्तत्वाभावेपि विकल्पः सिध्यति । उपदिदियिढ्वे । उपदिदियिध्वे । केचिदत्र ढत्वमनिच्छन्तोङ्गादित्यनुवर्तयन्ति ॥

समासेङ्गुलेः सङ्गः ॥ ८० ॥

अङ्गुलेः परस्य सङ्गस्य षः स्यात्समासे । अङ्गुलिषङ्गा यवागूः । समासे किम् । अङ्गुलेः सङ्गं पश्य ॥

भीरोः स्थानम् ॥ ८१ ॥

भीरोः परस्यास्य षः स्यात् । भीरुष्ठानम् । समास इत्येव । भीरोः स्थानम् ॥

अग्नेः स्तुत्स्तोमसोमाः ॥ ८२ ॥

अग्नेः परेषामेषां सस्य षः स्यात्समासे । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ ॥

अग्नेर्दीर्घात्सोमस्येष्यते ॥

नेह । अग्निसोमौ माणवकौ ॥

सिवादीनां वाड्व्यवायेपि ॥ ७१ ॥

परिनिविभ्यः परेषां सिवुसहसुट्स्तुस्वञ्जां अड्व्यवायेपि वा षत्वं स्यात् । तथैवोदाहृतम् ॥

अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥ ७२ ॥

एभ्यः परस्याप्राणिकर्तृकस्य स्यन्दतेर्वा षत्वं स्यात् । अनुष्यन्दते । अनुस्यन्दते । एवं विपर्यभिनिभ्यः । अप्राणिषु किम् । अनुस्यन्दते मत्स्य उदके । अप्राणिष्विति पर्युदासाश्रयणादनुष्यन्देते मत्स्योदके इत्यत्र स्यादेव वा षत्वम् ॥

वेः स्कन्देरनिष्ठायाम् ॥ ७३ ॥

वेः परस्य स्कन्देः वा षत्वं स्यान्न तु निष्ठायाम् । विष्कन्दति । विस्कन्दति । निष्ठायां तु विस्कन्नः ॥

परेश्च ॥ ७४ ॥

अस्मात्स्कन्देर्वा षत्वं स्यात् । परिष्कन्दति । परिस्कन्दति । पृथग्योगकरणान्निष्ठायामपि । परिष्कन्नः । परिस्कन्नः ॥

परिस्कन्दः प्राच्यभरतेषु ॥ ७५ ॥

षत्वाभावो निपात्यते । अन्यत्र परिष्कन्दः परिस्कन्दः ॥

स्फुरतिस्फुलत्योर्निर्निविभ्यः ॥ ७६ ॥

एभ्यः परयोरनयोर्वा षत्वं स्यात् । निःस्फुरति । निःष्फुरति । निःस्फुलति । निःष्फुलति । एवं निविभ्याम् ॥

वेः स्कभ्नातेर्नित्यम् ॥ ७७ ॥

वेः स्कभ्नातेर्नित्यं षः स्यात् । निष्कम्भिता । विष्कम्भितुम् ॥

स्तन्भेः ॥ ६७ ॥

उपसर्गस्थान्निमित्तात् स्तम्भेः सस्य षः स्यात् । अभिष्टभ्नाति । अभ्यष्टभ्नात् । अभितष्टम्भ । प्रतेरपि । प्रतिष्टभ्नाति ॥

अवाच्चालम्बनाविदूर्ययोः ॥ ६८ ॥

अवात्परस्य स्तन्भेरेतयोः षत्वं स्यात् । आलम्बनमाश्रयः । आविदूर्यमविदूरता । अवष्टभ्यास्ते । अवष्टब्धा सेना । एतयोः किम् । अवष्ट(स्त)ब्धो वृषलः शीतेन ॥

वेश्च स्वनो भोजने ॥ ६९ ॥

व्यवाभ्यां स्वनः सस्य षः स्यात् भोजने । विष्वणति । अवष्वणति । व्यष्वणत् । विषष्वाण । शब्दयुक्तभोजनक्रियोच्यते । भोजने किम् । विस्वनति वीणा । व्यवाभ्यां किम् । निस्वनति ॥

परिनिविभ्यः सेवसितसयसिवुसहसुट्-
स्तुस्वञ्जाम् ॥ ७० ॥

परिनिविभ्यः परेषामेषां सस्य षः स्यात् । परिषेवते । न्यषेवत । विषिषेवे । प्राक्सितात्पूर्णोवधिः । परिषितः । निषितः । विषितः । परिषयः । निषयः । विषयः । परिषीव्यति निषीव्यति । विषीव्यति । पर्यषीव्यत् । न्यषीव्यत् । व्यषीव्यत् । पर्यसीव्यत् । न्यसीव्यत् । व्यसीव्यत् । सह । परिषहते । निषहते । विषहते । अटि अड्व्यवाये विकल्पः पूर्ववत् । सुट् । परिष्करोति । पर्यष्कुरुत । पर्यष्करोत् । परिस्करोति(पर्यस्कुरुत) । पर्यस्करोत् । स्तु । परिष्टौति । निष्टौति । विष्टौति । पर्यष्टौत् । पर्यस्तौदित्यादि । स्वञ्ज. परिष्वङ्क्ते । परिष्वजते । निष्वजते । विष्वजते । पर्यष्वजत् । पर्यस्वजत् । एवं निविभ्याम् ॥

सस्य च । अभ्यासेनेत्वणोपदेशार्थम् । अभिषिषेणयिषति ॥

अवर्णाभ्यासार्थं च

अभितष्टौ ॥

पणि प्रतिषेधार्थं च ॥

परिषिषिक्षति ॥

अभ्यासस्येति नियमार्थम् ॥

स्थादिष्वेवाभ्यासस्य षत्वं नान्यत्र । अभिसुसूषति । परि-सिषासति ॥

## उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनय-सेधसिचसञ्जस्वञ्जाम् ॥ ६५ ॥

उपसर्गस्थान्निमित्तात्परस्यैषां सस्य षः स्यात् । अभिषुणोति । अभ्यषुणोत् । अभिषुवति । अभ्यषुवत् । अभिष्यति । अभ्यष्यत् । अभिष्टौति । अभ्यष्टौत् । अभिष्टोभते । अभ्यष्टोभत । अभिष्ठास्यति । अभ्यष्ठात् । अभितष्ठौ । अभिषेणयति । अभ्यषेणयत् । अभिषिषेणयिषति । अभिषेधयति । अभ्यषेधयत् । अभिषिञ्चति । अभ्यषिञ्चत् । अभिषिषिक्षति । परिषजति । पर्यषजत् । परिषिषिक्षति । परिष्वजते । पर्यष्वजत । परिषिष्वङ्क्षति । उपसर्गात्किम् । दधि सिञ्चति । निर्गताः सेचका अस्माद्ग्रामान्निःसेचको ग्राम इत्यत्र नायं सिचेरुपसर्ग इति षत्वाभावः ॥

## सदेरप्रतेः ॥ ६६ ॥

उपसर्गात्सदेः सस्य षः स्यान्न तु प्रतेः परस्य । निषीदति । न्यषीदत् । निषसाद । प्रतेस्तु प्रतिसीदति ॥

आदेशप्रत्यययोः ॥ ५९ ॥

इण्कुभ्यां परस्यादेशप्रत्यययोः सस्य षः स्यात् । सुषादा । आग्निषु । अपदान्तस्यैव । अग्निस्तत्र ॥

शासिवसिघसीनां च ॥ ६० ॥

इण्कुभ्यां परस्यैषां सस्य षः स्यात् । शिष्टः । उषितः । जक्षतुः । इण्कोः किम् । शास्ति । वसति । जघास ॥

स्तौतिण्योरेव षण्यभ्यासात् ॥ ६१ ॥

स्तौतिण्यन्तयोरेवाभ्यासेणः परस्य सस्य षः स्यात् षभूते सनि नान्यस्य । तुष्टूषति । सुष्वापयिषति । स्तौतिण्योरेव किम् । सुस्नूषति । आरम्भसामर्थ्यान्नियमे सिद्धे इष्टतोऽवधारणार्थ एवकारः । स्तौतिण्योः षण्येवेति विज्ञायमाने तुष्टावेत्यत्र न स्यात् । सिसिक्षतीत्यत्र च स्यात् । सनि किम् । सिषेवे । षभूते किम् । तिष्ठासति । सुषुप्सति । सानुबन्धः किम् । षमात्रे नियमो मा भूत् । सुषुवुष इन्द्रियम् । अभ्यासात्किम् । धातोर्विण्निमित्तः षः स्यादिण्कोः । प्रतीषिषिधिषति ॥

सः स्विदिस्वदिसहीनां च ॥ ६२ ॥

अभ्यसेणः परस्य ण्यन्तानामेषां सस्य सः स्यात् । सिस्वेदयिषति । सिस्वादयिषति । सिसहयिषति ॥

प्राक्सितादड्व्यावायेपि ॥ ६३ ॥

सेवसितेत्यत्र सितशब्दात्प्राग्ये सुनोत्यादयस्तेषामड्व्यवायेपि षत्वं स्यात् । अभिषुणोति । अभ्यषुणोत् ॥

स्थादिष्वभ्यासेन चाभ्यासस्य ॥ ६४ ॥

स्थादिषु प्राक्सितादभ्यासेन व्यवायेपि षत्वं स्यादभ्या-

पष्ठ्याः पतिपुत्रपृष्ठपारपदपयःपोषेषु ॥ ५३ ॥

एषु षष्ठ्या विसर्जनीयस्य सः स्याच्छन्दसि । वाचस्पतिम् । दिवस्पुत्राय । दिवस्पृष्ठे । तमसस्पारम् । इडस्पदे । दिवस्पयः । रायस्पोषम् । षष्ठ्याः किम् । मनुः पुत्रेभ्यः ॥

इडाया वा ॥ ५४ ॥

एतत्षष्ठीविसर्जनीयस्य सो वा स्यात्पत्यादौ । इडायाः पतिः । इडायास्पतिः । एवं पुत्रपृष्ठपारपदपयःपोषेषु ॥

अपदान्तस्य मूर्धन्यः ॥ ५५ ॥

पदस्येत्यधिकारो निवृत्तः । आ पादसमाप्तेरयमधिकारः ॥

सहेः साडः सः ॥ ५६ ॥

साड्रूपस्य सहेः सस्य मूर्धन्यः स्यात् । तुराषाट् । पृतनाषाट् । साडः किम् । तुरासाहौ । सहेः किम् । सह इन सहः तस्यापत्यं साडिः । अत्र यस्येति लोपे साड्रूपमिति षत्वं प्राप्नोति ॥

इण्कोः ॥ ५७ ॥

इण्कुभ्यां परस्यापदस्य सस्य मूर्धन्यादेशः स्यात् । अग्निषु । वायुषु । गीर्षु । वाक्षु । इण्कोः किम् । धास्यति । असौ ॥

नुम्विसर्जनीयशर्व्यवायेऽपि ॥ ५८ ॥

एभिः प्रत्येकं व्यवायेऽपि इण्कुभ्यां सस्य मूर्धन्यः स्यात् । सर्पिषे । यजूंषि । विसर्जनीयव्यवाये सुपीःषु । शर्व्यवाये सुपीष्षु । वा शरीति वैकल्पिको विसर्जनीयः । समस्तव्यवधाने तु न । निंस्से । अत्र नुमा धातुसकारेण च व्यवधानम् ॥

## कस्कादिषु च ॥ ४८ ॥

एषु विसर्जनीयस्य सकारषकारौ यथायोगं भवतः । कस्कः । कौतस्कुतः । शुनस्कर्णः । सद्यस्कारः । साद्यस्कः । क्रीणातेः क्विपि तत्र भत्र इसण् । कांस्कान् । सर्पिष्कुण्डिका । धनुष्कुण्डिका । भ्रनुष्कपालम् । यजुष्पात्रम् । अयस्कन्तः । पयस्काण्डम् । मेदस्पिण्डम् । अविहितलक्षण उपचारः कस्कादिषु ज्ञेयः ॥

## छन्दसि वाऽप्राम्रेडितयोः ॥ ४९ ॥

छन्दसि विसर्जनीयस्य सो वा स्यात् कुप्वोः परतः न तु प्रे आम्रेडिते च । अयस्पात्रम् । अयःपात्रम् । अप्राम्रेडितयोः किम् । अग्निः प्रविद्वान् । पुरुषः पुरुषः ॥

## कः करत्करतिकृधिकृतेष्वनदितेः ॥ ५० ॥

एषु विसर्जनीयस्य सः स्याच्छन्दसि न त्वदितेः । विश्वतस्कः । अपरस्करत् । उरुणस्कृधि । सदस्कृतम् । अदितेस्तु अदितिः करन् ॥

## पञ्चम्याः परावध्यर्थे ॥ ५१ ॥

उपरि भावार्थे परौ पञ्चम्या विसर्जनीयस्य सः स्याच्छन्दसि । दिवस्परि प्रथमम् । पञ्चम्याः किम् । अहिरिव भोगैः पर्येति । परौ किम् । लोकेभ्यः प्रजापतिः समैरयत् । अध्यर्थे किम् । पृथिव्याः पर्योज उद्भृतम् ॥

## पातौ च बहुलम् ॥ ५२ ॥

अस्मिन् परतो विसर्जनीयस्य सो वा स्याच्छन्दसि । दिवः पातु । दिवस्पातु ॥

सर्पिष्करोति । सर्पिः करोति । यजुष्करोति । यजुः करोति । सामर्थ्ये किम् । तिष्ठतु सर्पिः पिब त्वमुदकम् ॥

## नित्यं समासेऽनुत्तरपदस्थस्य ॥ ४५ ॥

समासे इसुसोर्विसर्जनीयस्यानुत्तरपदस्थस्य नित्यं षः स्यात्कुप्वोः परतः । सर्पिष्कुण्डिका । धनुष्कपालः । सर्पिष्पलम् । धनुष्पलम् । अनुत्तरपदस्थस्य किम् । परमसर्पिः कुण्डिका । अत्र पूर्वेण विकल्पो न भवति । तत्र व्यपेक्षालक्षणसामर्थ्यग्रहणेन वाक्य एव तद्विधेः एतदेवानुत्तरपदस्थस्येति वचनं ज्ञापकं इसुसोः प्रत्ययग्रहणे यस्मात्स तदादेरिति नियमाभावस्य । तेन परमसर्पिष्करोति परमसर्पिःकरोतीति पूर्वेण वाक्ये विकल्पः सिध्यति ॥

## अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ॥ ४६ ॥

अकारात्परस्यानव्ययविसर्जनीयस्य समासेऽनुत्तरपदस्थस्य नित्यं सः स्यात्कादिषु परतः । अयस्कारः । अयस्कामः । अयस्कंसः । अयस्कुम्भः । अयस्कुम्भी । अयस्पात्रम् । अयस्कुशा । अयस्कर्णी । शुनस्कर्ण इति कस्कादिषु ज्ञेयः । अतः किम् । धूःकरः । तपरः किम् । भाःकरणम् । भास्करस्तु कस्कादिषु ज्ञेयः । अनव्ययस्य किम् । स्वःकारः । समासे किम् । यशः करोति । अनुत्तरपदस्थस्य किम् । परमयशःकारः ॥

## अधःशिरसी पदे ॥ ४७ ॥

अनुत्तरपदस्थयोरेतयोर्विसर्जनीस्य सः स्यात् पदशब्दे परे समासे च । अधस्पदम् । शिरस्पदम् । मयूरव्यंसकादित्वात्समासः । समासे किम् । अधः पदम् । शिरः पदम् । अनुत्तरपदेति किम् । परमाधःपदम् ॥

निर्दुर्बहिराविश्चतुःप्रादुष्षु ॥

निष्क्रीतम् । निष्पीतम् । दुष्कृतम् । दुष्पीतम् । बहिष्कृतम् । बहिष्पीतम् । अविष्कृतम् । अविष्पीतम् । चतुष्कलम् । चतुष्पीतम् । प्रादुष्कलम् । प्रादुष्पीतम् । अप्रत्ययस्य किम् । अग्निः करोति । वायुः पिबति । मातुः करोति मातुः पिबतीत्यत्र रातसस्येति प्रत्ययसकारलोपे रेफस्य विसर्जनीयस्तस्याप्रत्ययविसर्जनीयत्वात् षत्वं प्राप्नोति । कस्कादिषु भ्रातुष्पुत्रग्रहणं ज्ञापकमकादर्शनिमित्तात् षत्वप्रतिषेधस्य ॥

पुंमुहुसोः प्रतिषेधः ॥

पुंस्कामा । मुहुस्कामा । सम्पुंकानामिति सत्वविधानात्पुंग्रहणं व्यर्थम् । नैष्कुल्याम् । दौष्पुरुष्याम् । निष्कुलम् दुष्पुरुष इत्यत्र वृद्धिप्लुतयोर्बहिरङ्गत्वादसिद्धत्वात् षत्वं प्रवर्तते ॥

तिरसोऽन्यतरस्याम् ॥ ४२ ॥

गतिसंज्ञस्य तिरसो विसर्जनीयस्य सो वा स्यात् कुप्वोः परतः । तिरस्कर्ता । तिरःकर्ता । गतेः किम् । तिरः कृत्वा । अन्तर्धावेव गतिरयम् ॥

द्विस्त्रिश्चतुरिति कृत्वोर्थे ॥ ४३ ॥

कृत्वोर्थानामेषां विसर्जनीयस्य षो वा स्यात् कुप्वोः परतः । द्विःकरोति । द्विᳲकरोति । द्विष्करोति । त्रिःकरोति । त्रिᳲकरोति । त्रिष्करोति । चतुः करोति । चतुᳲकरोति । चतुष्करोति । एवं द्विः पचतीत्यादि । एषां किम् । पञ्चकृत्वः करोति । कृत्वोर्थे किम् । चतुष्कपालः । सूत्रे इतिशब्दोऽसन्देहार्थः ॥

इसुसोः सामर्थ्ये ॥ ४४ ॥

अनयोर्विसर्जनीयस्य षो वा स्यात्कुप्वोः परतः सामर्थ्ये ।

ह्लीयोपध्मानीयोस्तः चाद्विसर्गः । क॒करोति । कः करोति । क॒पचति । कः पचति । सत्वापवादोयम् । शर्परे विसर्जनीय इत्येतत्तु न बाध्यते । कुप्वोः कः पावित्यत्रैतदनुवृत्त्यङ्गीकारात् । वासः क्षौमम् । अद्भिः प्सातम् ॥

सोपदादौ ॥ ३८ ॥

आपदाद्योः कुप्वोः परतः विसर्जनीयस्य सः स्यात् ॥

पाशकल्पककाम्येषु ॥

पयस्पाशः । पयस्कल्पम् । पयस्कम् । पयस्काम्यति। पदादौ पयः पिबतु ॥

अनव्ययस्य वाच्यम् ॥

प्रातःकल्पम् ॥

रोरेव काम्ये ॥

गीः काम्यति । अभ्युद्ध इत्येतद्रमे रूप नोव्जेः ॥

इणप्पः ॥ ३९ ॥

इणः परस्य विसर्जनीयस्य पः स्यादपदाद्योः कुप्वोः परतः पाशकल्पककाम्येषु । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति । अपदाद्योः किम् । काम्यति । इत उत्तरमिणः परस्य विसर्जनियस्य पोन्यस्य स इति ज्ञेयम् ॥

नमस्पुरसोर्गत्योः ॥ ४० ॥

गतिसञ्ज्ञयोरनयोर्विसर्जनीयस्य सः स्यात् कुप्वोः । नमस्करोति । पुरस्करोति । गत्योः किम् । पूः पुरौ पुरः करोति ॥

इदुदुपधस्य चाप्रत्ययस्य ॥ ४१ ॥

इकारोकारोपधस्याप्रत्ययविसर्जनीयस्य पः स्यात्कुप्वोः परतः ॥

ङमो ह्रस्वादचि ङमुण्नित्यम् ॥ ३२ ॥

ह्रस्वात्परात् ङमः पदान्तात्परस्याचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः । ङमः किम् । त्वमास्से । ह्रस्वात्किम् । प्राङास्ते । अचि किम् । प्रत्यङ्करोति । पदान्तात्किम् । दण्डिना । उञि च पद इत्यतः पद इत्यनुवृत्तेरजादौ पदेऽयं विधिः । तेन परमदण्डिनेत्यादौ न ङमुट् ॥

मय उञो वो वा ॥ ३३ ॥

मयः परस्योञोचि वो वा स्यात् । शम्वस्तु । शमु अस्तु । प्रकृतिभावापवादोयं वकारः । तस्यासिद्धत्वाद्धलीति मोनुस्वारो न भवति ॥

विसर्जनीयस्य सः ॥ ३४ ॥

खरि विसर्जनीयस्य सः स्यात् । कृष्णश्चिन्त्यः । हरिष्टीकते । शम्भुस्त्राता ॥

शर्परे विसर्जनीयः ॥ ३५ ॥

शर्परे खरि विसर्जनीयस्य विसर्जनीयो न त्वन्यत् । कः त्सरुः ॥

वा शरि ॥ ३६ ॥

शरि परे विसर्जनीयस्य विसर्जनीयो वा स्यात् । शिवः शेते । शिवश्शेते ॥

खर्परे शरि वा विसर्गलोपः ॥

शिव स्फुरति । शिवः स्फुरति ॥

कुप्वोः ≍क≍पौ च ॥ ३७ ॥

कुप्वोः सम्बन्धिनि खरि परे विसर्जनीयस्य क्रमाज्जिह्वामू-

शानि किम्। संयुत्। सम्ः किम्। किराट्। कौ किम्। संराजिता॥

हे मपरे वा ॥ २६ ॥

मपरे हकारे मस्य मो वा स्यात्। किम् ह्मलयति। किं ह्मलयति॥

यवलपरे यवला वा॥

यवलपरे हकारे मस्य यवला वा स्युः। किय् ह्यः। किं ह्यः। किव् ह्वलयति। किं ह्वलयति। किल् ह्लादयति। किं ह्लादयति॥

न परे नः ॥ २७ ॥

नपरे हकारे मस्य नो वा स्यात्। किन् ह्नुते। किं ह्नुते॥

ङ्णोः कुक् टुक् शरि ॥ २८ ॥

पदान्तयोः ङकारणकारयोः कुक्टुकावागमौ स्तः शरि परे। प्राङ् षष्ठः। प्राङ्क्षष्ठः। सुगण् षष्ठः। सुगण्ट् षष्ठः॥

डः सि धुट् ॥ २९ ॥

पदान्ताड्डात्परस्य सस्य धुड्वा स्यात्। षट्त्सन्तः। षट् सन्तः॥

नश्च ॥ ३० ॥

नान्तात्पदादुत्तरस्य सस्य धुड्वा। सन्त्सन्तः। सन् सन्तः॥

शि तुक् ॥ ३१ ॥

पदान्तस्य नकारस्य शे परे तुग्वा स्यात्। भवाञ्छेते। भवाञ्च्छेते। भवाञ्च्शेते। भवाञ् शेते। कुर्वञ्च्छेत इत्यत्र पदान्तस्य नस्य णत्वं न। स्तोः श्चुना श्चुरित्यत्र योगविभागेन श्चुना योगे न णत्वमिति निषेधात्। क्षुभ्नादेराकृतिगणत्वात्॥

ओतो गार्ग्यस्य ॥ २० ॥

ओतः परस्यालघुप्रयत्नस्य नित्यं लोपोशि । गार्ग्यग्रहणं पूजार्थम् । भो अत्र । लघुप्रयत्नपक्षे भोयत्र । भाष्ये तु सर्वयकारलोपः स्थितः । अत एव कैयटः भो अत्रेति नित्यं भवति न तु भोयत्रेति ॥

उञि च पदे ॥ २१ ॥

पदान्तयोर्यवयोर्लोपः स्यात्पदे उञि । स उ वेकविंशवर्तनिः । पदे किम् । तन्त्रे उतम् तन्त्रयुतम् । उतमिति वेञो रूपम् । उञः प्रतिपदोक्तस्य निपातस्यैव ग्रहणं न लाक्षणिकस्य वेञ इति । पद इति ङमो ह्रस्वादित्यादावुपयुज्यते ॥

हलि सर्वेषाम् ॥ २२ ॥

ओतः परस्यावर्णात्परस्य च पदान्तस्य यस्य लोपः स्याद्धलि सर्वेषां मते । भो हरे । भगो नमस्ते । अघो याहि । देवा नम्याः । सर्वग्रहणं लघुप्रयत्नस्यापि निवृत्त्यर्थम् ॥

मोनुस्वारः ॥ २३ ॥

हलि मस्यानुस्वारः पदान्ते । वनं यान्ति । हलि किम् । किमत्र । पदान्ते किम् । गम्यते । संहितायामेव । वनं याति ॥

नश्चापदान्तस्य झलि ॥ २४ ॥

नस्य मस्य चापदान्तस्य झल्यनुस्वारः स्यात् । यशांसि । आक्रंस्यते । पदान्तस्य तु राजन् भुङ्क्ष्व । झलि किम् । मन्यते । गम्यते ॥

मो राजि समः क्वौ ॥ २५ ॥

क्विबन्ते राजतौ समो मस्य म एव स्यान्नानुस्वारः । सम्राट् ।

## रो रि ॥ १४ ॥

रेफस्य रेफे लोपः स्यात् । पुना रमते । हरी रम्यः । जर्ढ़-धेः । अजर्घाः ॥

## खरवसानयोर्विसर्जनीयः ॥ १५ ॥

खरि अवसाने च पदान्ते रेफस्य विसर्जनीयः स्यात् । वृक्षश्छादयति । वृक्षश्चिनोति । वृक्षः । एतयोः किम् । अग्निरिति । नृकुव्यां भवं नार्कुटम् । नृपतेरपत्यं नार्पत्यम् । अत्र वृद्धेर्वहिरङ्गत्वाद्विसर्जनीयाभावः ॥

## रोः सुपि ॥ १६ ॥

सप्तमीवहुवचने रोरेव विसर्जनीयो नान्यरेफस्य । पयःसु । रोरेव किम् । गीर्षु ॥

## भोभगोअघोअपूर्वस्य योऽशि ॥ १७ ॥

एतत्पूर्वस्यरोर्यादेशोऽशि । भो अत्र । भगो अत्र । अघो अत्र । क आस्ते । एतत्पूर्वस्य किम् । अग्निरत्र । अश्ग्रहणं हलि सर्वेषामित्यत्रापि सम्बध्यते । अश्येव हलि लोपो यथा स्यात् । इह मा भूत् । वृक्षं वृक्षमाचष्टे वृक्षवयति । तस्मात्क्विप् वृक्षव् करोतीति । रोरित्येव । मातरत्र ॥

## व्योर्लघुप्रयत्नतरः शाकटायनस्य ॥ १८ ॥

यकारवकारयोर्लघूच्चारणौ यवौ वाशि । भो अत्र । भोयत्र ॥

## लोपः शाकल्यस्य ॥ १९ ॥

अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे । लोपस्यासिद्धत्वान्न संधिः । अस्मा उद्धर । अस्मायुद्धर । असा आदित्यः । असावादित्यः ।

स्य । भवाश्छादयति । भवांश्चिनोति । भवांस्तरीति । छाव किम् । भवान्करोति । अम्परे किम् । सन् त्सरुः । अप्रशान् किम् । प्रशान् तनोति ॥

उभयथर्क्षु ॥ ८ ॥

ऋक्षु नकारस्य रुर्वा नकार एव वा पूर्वविषये । तस्मिँस्त्वादधामि । तस्मिन्त्वादधामि ॥

दीर्घादटि समानपादे ॥ ९ ॥

दीर्घात्परस्य नस्य रुः स्यादटि समानपादे ऋक्षु । माहाँ इन्द्रो यः । दीर्घात्किम् । अहन्नहिम् । अटि किम् । त्यान्नु क्षत्रियान् । समानेति किम् । यातुधानानुपस्पृशत् । उभयथेत्येव । आदित्यान्याचिषामहे ॥

नॄन्पे ॥ १० ॥

नॄन्नकारस्य रुः स्यात्पे परे । नॄँः पाहि । पे किम् । नॄन् भोजयति । उभयथेत्येव । नॄन्पाहि ॥

स्वतवान्पायौ ॥ ११ ॥

पायौ परे स्वतवान्नकारस्य रुः स्यात् । स्वतवाँः पायुरग्ने ॥

कानाम्रेडिते ॥ १२ ॥

कान्नकारस्य रुः स्यादाम्रेडिते । कांस्कान् । काँस्कान् । आम्रेडिते किम् । कान्पश्यति ॥

ढो ढे लोपः ॥ १३ ॥

ढस्य लोपः स्यात् ढे परे । लीढम् । गूढम् । श्वलिड्ढौकत इत्यत्र जश्त्वेऽन्तरङ्गत्वात्कृते लोपाभावः ॥

अनुनासिकात्परोनुस्वारः ॥ ४ ॥

न विद्यतेनुनासिको यस्य सोनुनासिकः । प्रतिषेधार्थका-कारस्य पररूपेण निर्देशात् । अननुनासिकात्परोनुस्वार इत्यर्थः । यद्वा परशब्दस्तन्त्रेणोपात्तः । एकोन्यवाची द्वितीयस्तु देशवाची । अनुनासिकात्परोन्यः । यस्यानुनासिको न कृतः ततः परोनुस्वारः । एव चानुनासिकाभावपक्षे रोः पूर्वस्यानुस्वारागम इत्यर्थो लभ्यते । संस्कर्ता ॥

समः सुटि ॥ ५ ॥

समो रु स्यात्सुटि । संस्कर्ता । सꣳस्कर्ता । अत्र रोर्विसर्जनीये कृते पक्षे वा शरीति विसर्जनीयः प्राप्नोति । व्यवस्थितविभाषयात्र नित्यमेव सः स्यादित्यदोषः । अथ वा समम् सुटीति द्विसकारको निर्देशः । समो मस्य स एव विधियते । अयमेव च पुमः खय्यम्परे कानाम्रेडित इत्यत्र चानुवर्तते । अन्यथा रुविधौ पुंस्कोकिल इत्यत्र इदुदुपधस्येति षत्वं स्यात् । कास्कानित्यत्र च ≍क≍पौ स्याताम् ॥

संपुंकानां सो वक्तव्यः ॥

रुविधौ ह्यनिष्टप्रसङ्ग इति वार्तिकस्याप्ययमेवाभिप्रायः । समः किम् । उपस्कर्ता । सुटि किम् । सङ्कृतिः ॥

पुमः खय्यम्परे ॥ ६ ॥

पुम्शब्दस्य रु स्यादंपरे खयि । पुंश्चली । पुꣳश्चली । पुस्कामा । रुरनुवर्तमानोप्यत्र न सम्बध्यते । सम्बद्धानुवृत्तेः । खयि किम् । पुंदासः । अम्परे किम् । पुंक्षीरम् ॥

नश्छव्यप्रशान् ॥ ७ ॥

अम्परे छवि परे नस्य रुः स्यात् न तु प्रशान्शब्द-

## मतुवसो रु सम्बुद्धौ छन्दसि ॥ १ ॥

मत्वन्तस्य वस्वन्तस्य च पदस्य रुः स्यात्संबुद्धौ परतः छन्दसि । इन्द्रमरुत्व इह । हरिवो मेदिनं त्वा । वस्वन्तस्य मीढ्वस्तोकाय । मतुवसोः किम् । ब्रह्मन् प्रचरिष्यामः ॥ संबुद्धौ किम् । य एवं विद्वान् । छन्दसि किम् । हे गोमान् । हे वपिरान् ॥

वस उपसंख्यानम् ॥

मातरिश्वः ॥

विभाषा भवद्भगवदघवतामोच्चावस्य ॥

एषां रुः स्यादवस्योकारो वा सर्वत्र संबुद्धौ । हे भोः । हे भवन् । हेभगोः । हे भगवन् । हे अघोः । हे अघवन् । भोशब्दो निपातोऽप्यस्ति । तेन भो देवदत्त भो देवदत्ताः भो ब्राह्मणि इत्यादिसिद्धिः । भिन्नपदाश्रितकार्ये संहिताधिकारोपयोगः ॥

## अत्रानुनासिकः पूर्वस्य तु वा ॥ २ ॥

अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यात् । संस्कर्ता । सꣳस्कर्ता ॥

## आतोऽटि नित्यम् ॥ ३ ॥

अटि परतो रोः पूर्वस्यातो नित्यमनुनासिकः स्यात् । दीर्घादटि समानपाद इत्यत्र पूर्वेण विकल्पे नित्यार्थमिदम् । महाꣳ इन्द्रः । केषां चिदनुस्वाराध्ययनं व्यत्ययात् । अतः किम् । यो वा वनस्पतीं अनु । अटि किम् । भवाꣳश्चरति । भवांश्चरति ॥

एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्या-
दुत्तरस्येदुतौ ॥ १०७ ॥

अप्रगृह्यस्यैचोऽदूराद्धूते प्लुतविषये पूर्वस्यार्धस्याकारः प्लुतः स्यादुत्तरार्धस्येदुतौ स्तः ॥

प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति वाच्यम् ॥

प्रश्नान्ते । अगमा३ः पूर्वा३न् ग्रामा३न् यज्ञभूता३इ वटा३उ । अभिपूजिते । भद्रं करोपि माणवक यज्ञभूता३इ वटा३उ । विचार्यमाणे । होतव्यं दीक्षितस्य गृहा३इ । प्रत्यभिवादे । आयुष्मानेधि यज्ञभूता३इ वटा३उ । याज्यान्ते । उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे स्तोमैर्विधेमाग्नया३इ । अकारप्लुतश्च यथाविषयमुदात्तोऽनुदात्तः स्वरितो वा । इदुतावनुदात्तावेव । परिगणनं किम् । विष्णुभूते घातयिष्यामि त्वा । परिगणने अदूराद्धूत इति न वाच्यम् । पदान्तग्रहणं कर्तव्यम् । नेह । भद्रं करोपि गौ३रिति । अप्रगृह्यस्य किम् । शोभने खट्वे ॥

आमन्त्रिते चच्छन्दसि प्लुतविकारो वक्तव्यः ॥

अग्ना३इ पत्नीवाः ॥

तयोर्य्वावचि संहितायाम् ॥ १०८ ॥

तयोरिदुतोर्यकारवकारौ स्तोऽचि संहितायाम् । संहितायामित्येतस्याध्यायसमाप्तेरधिकारः । अग्ना३याशा । वटा३वाशा । अग्ना३यिन्द्रः । वटा३वुदकम् । अचि किम् । अग्ना३इ वटा३उ । संहितायां किम् । अग्ना३इ इन्द्रः । वटा३उ उदकम् । सवर्णदीर्घशाकलबाधनार्थमिदम् । यण् स्वरबाधनार्थं च । अस्य यणोऽसिद्धत्वादुदात्तस्वरितयोर्यण इत्येष स्वरो न भवति ॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोर्वरदभट्टस्य कृतौ व्याकरणमिताक्षरायामष्टमस्याध्यायस्य प्रथमः पादः ॥

शाक्तीक रिक्ता ते शक्तिः ॥

असूर्यादिषु वा वचनम् ॥

माणवक माणवक ॥

क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ॥ १०४ ॥

एषु साकाङ्क्षस्य तिङः स्वरितः प्लुतः स्यात् । क्षिया आचारभेदः । क्षिया । स्वयं रथेन याति३ उपाध्यायं पदातिं गमयति । पूर्वं तिङन्तमुत्तरमाकाङ्क्षतीत्याकाङ्क्षम् । आकाङ्क्षाया उभयत्र तौल्येपि प्रयोगवशात्पूर्वस्यैव प्लुतः । आशिषि पुत्रान् लभस्व ३ धनं च । प्रैषे कटं च कुरु ३ ग्रामं च गच्छ । आकाङ्क्षं किम् । दीर्घमायुरस्तु ॥

अनन्त्यस्यापि प्रश्नाख्यानयोः ॥ १०५ ॥

एतयोरनन्त्यस्यान्त्यस्य च पदस्य टेः स्वरितः प्लुतः स्यात् । अगमः३ पूर्वा३न् ग्रामा३न् । यज्ञभूता३इ । वटा३उ । अत्र सर्वेषां पदानामनेन स्वरितः प्लुतः । अन्त्यस्य तु अनुदात्तं प्रश्नान्ते(८.२.१००)ति पक्षेऽनुदात्तः । आख्याने अगमा३म् । पूर्वा३न् ग्रामा३न् भोः ३ ॥

प्लुतावैच इदुतौ ॥ १०६ ॥

ऐचः प्लुतप्रसङ्गे तयोरवयवाविदुतौ प्लुतौ स्तः । ऐ३तिकायन । औ३ पगव । अत्रैचोर्मात्रावर्णस्य मात्रेवर्णोवर्णयोरिति मते इदुतो दीर्घोनेन विधीयते । तेन वर्णमात्रया त्रिमात्रः प्लुतः संपद्यते इत्येकं मतम् । भाष्ये तु त्रिमात्रस्यैव प्लुतत्वादिदुतोस्त्रिमात्रत्वेऽवर्णमात्रया चतुर्मात्रः संपद्यत इत्युक्तम् । एवमवर्णस्यार्धमात्रपक्षेऽर्धत्रिमात्रः संपद्यते ॥

प्रतिश्रवणे च ॥ ९९ ॥

अत्र यद्वाक्यं तस्य टेः प्लुतः स्यात् । गां मे देहि भोः, अहन्ते वदामि३ ॥

अनुदात्तं प्रश्नान्ताभिपूजितयोः ॥ १०० ॥

एतयोर्वाक्यस्य टेः प्लुतोनुदात्तः स्यात् । अगमः३ पूर्वा३न् ग्रामा३न् । पञ्चभूता३इ वटा३उ । पञ्चमूते वटो इत्यनयोः प्रश्नान्तयोरनुदात्तः प्लुतः अगम इत्यादीनामनन्त्यस्यापि प्रश्नाख्यानयो(८।२।१०५)रिति स्वरितः प्लुतः । पूजिते । शोभनः खल्वसि माणवक ३ ॥

चिदिति चोपमार्थे प्रयुज्यमाने ॥ १०१ ॥

एतयोरुपमार्थयोः प्रयोगे वाक्यस्य टेरनुदात्तः प्लुतः स्यात् । राजा चिद्भूया३त् । अग्निश्चिद्भाया३त् । राजेवाग्निरिवेत्यर्थः । प्रयुज्यमाने किम् । अग्निर्माणवको भूयात् ॥

उपरिस्विदासीदिति च ॥ १०२ ॥

अस्य टेः प्लुतोनुदात्तः स्यात् । अधः स्विदासी३दुपरि स्विदासी३त् । पूर्वस्य विचार्यमाणाना(८।२।९७)मित्युदात्तः प्लुतः द्वितीयस्यानेनानुदात्तः ॥

स्वरितामाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ॥ १०३ ॥

आम्रेडिते परे पूर्वस्य स्वरितः प्लुतः स्यादसूयादिषु । असूयायां माणवक३ माणवक अभिरूपक अभिरूपक रिक्तं तेऽआभिरूप्यम् । सम्मतौ । माणवक३ माणवक अभिरूपक३ अभिरूपक शोभनः खल्वसि । कोपे माणवक ३ माणवक अविनीतक३ अविनीतक इदानीं ज्ञास्यसि । कुत्सने । शाक्तीक ३

निगृह्यानुयोगे च ॥ ९४ ॥

स्वमतात्मच्यावनं निग्रहः । अनुयोगस्तस्यैव मतस्याविष्करणम् । अत्र यद्वाक्यं तस्य टेः प्लुतो वा स्यात् । नित्यः शब्द इति कैश्चित्प्रतिज्ञातम् । कथं (तं)युक्तिभिर्निगृह्यानुयुङ्क्ते । नित्यः शब्दाइत्यस्य ३ । नित्यः शब्दः इत्यस्य ॥

आम्रेडितं भर्त्सने ॥ ९५ ॥

यदाम्रेडितं तस्य टेः प्लुतः स्यात् । चोर चोर ३ घातयामि त्वा ॥

भर्त्सने पर्यायेणेति वाच्यम् ॥

चोर ३ चोर ॥

अङ्गयुक्तं तिङाकाङ्क्षम् ॥ ९६ ॥

अङ्गेत्यनेन युक्तं तिङन्तमाकाङ्क्षं भर्त्सने प्लवते । अङ्ग कूज३ कूज । अङ्ग व्याहर३ व्याहार इदानीं ज्ञास्यसि । तिङ् किम् । अङ्ग देवदत्त मिथ्या वदसि । आकाङ्क्षं किम् । अङ्ग पच नैतदपरमाकाङ्क्षते । भर्त्सने किम् । अङ्गाधीष्व ओदनं ते दास्यामि ॥

विचार्यमाणानाम् ॥ ९७ ॥

प्रमाणैस्तत्त्वपरीक्षणं विचारः । तद्विषयवाक्यानां टेः प्लुतः स्यात् । होतव्यमग्निहोत्र३म् । न होतव्य३मिति ॥

पूर्वं तु भाषायां ॥ ९८ ॥

विचार्यमाणानां पूर्वमेव प्लवते लोके । अहिर्नु३ रज्जुर्नु । स्थाणुर्नु३ पुरुषो नु ॥

नेह । ये देवा दिवि । यज्ञकाले किम् । येनजामहइ इति पश्चा स्तरम् । अध्ययनकाले न ॥

प्रणवष्टेः ॥ ८९ ॥

यज्ञकर्मणि टेः प्रणव आदेशः स्यात् । देवान् जिगाति सुम्नयो३म् । यज्ञकर्मणि किम् । देवान् जिगाति सुम्नयुः ॥

याज्यान्तः ॥ ९० ॥

याज्या नाम मन्त्रास्तेषामन्त्यस्य टेः प्लुतः स्यात् यज्ञकर्मणि । जिह्वामग्ने चकृषे हव्यवाह३म् । अनेकवाक्यसमुदाया अपि याज्याः सन्ति । तत्र मध्यनिवृत्त्यर्थमन्तग्रहणम् ॥

ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ॥ ९१ ॥

एषामादेः प्लुतः स्याद्यज्ञे । अग्नयेऽनुब्रू३हि । अग्नये गोमयान्प्रे३ष्य । अस्तु श्रौ३षट् । सोमस्याग्नेवी वौ३षट् । अग्निमा३वह । आवह देवान्यजमानायेत्यादौ न । छन्दसि विधिमात्रविकल्पनात् ॥

अग्नीत्प्रेषणे परस्य च ॥ ९२ ॥

अग्नीधः प्रेषणे आदेस्तत्परस्य च प्लुतः स्यात् । आऽश्रावया । ओ३श्रावय । अत्रैवेष्यते नान्यत्र । अग्नीदग्नीन्विहर बर्हिस्तृणाहि । उद्धर३ उद्धर । अभिहर ३ अभिहर । अत्रच्छान्दसः प्लुतव्यत्ययः ॥

विभाषा पृष्टप्रतिवचने हेः ॥ ९३ ॥

पृष्टप्रतिवचने हेः प्लुतो वा स्यात् । अकार्षीः कटं देवदत्त । अकार्षं हि३ । पृष्टप्रतिवचने किम् । कटं करिष्यति हि । हेः किम् । करोमि ननु ॥

मेन् । त्रिश् । इन्द्रपालितोऽहं भोः । आयुष्मानेधीन्द्रपालित३ । इन्द्रपालित ॥

## दूराद्धूते च ॥ ८४ ॥

दूरादाह्वाने वाक्यस्य टेः प्लुत उदात्तः स्यात् । आगच्छ देवदत्त ३ । प्राकृतप्रयत्नाद्यत्नविशेषेण यत्र शब्दः श्रूयते तद्दूरमिह विवक्षितम् । अह्वानं सम्बोधनमात्रोपलक्षणम् । सक्तून्पिब देवदत्त३ ॥ अस्याश्च प्लुतेरेकश्रुत्या समावेश इष्यते ॥ दूरात्किम् । आगच्छ देवदत्त ॥

## हैहेप्रयोगे हैहयोः ॥ ८५ ॥

दूराद्धूते हैहेप्रयोगे तयोरेव प्लुतः स्यात् । है३ देवदत्त । देवदत्त है३ । हे३ देवदत्त । देवदत्त हे ३ । पुनर्हैहेग्रहणमनन्त्यार्थम् ॥

## गुरोरनृतोनन्त्यस्याप्येकैकस्य प्राचाम् ॥ ८६ ॥

ऋकारवर्जितस्य गुरोरनन्त्यस्यान्त्यस्यापि टेः पर्यायेण प्लुतो वा स्यात् । दे३वदत्त । देवद३त्त । देवदत्त३ । गुरोः किम् । वकारात्परस्य मा भूत् । अनृतः किम् । कृष्णमि३त्र । एकैकग्रहणं पर्यायार्थम् । प्राचां किम् । आयुष्मानेधि देवदत्त । सर्वस्यापि प्लुतस्य विकल्पोनेनेष्यते ॥

## ओमभ्यादाने ॥ ८७ ॥

ओमः प्लुतः स्यात्प्रारम्भे । ओ३म् । अग्निमीळे पुरोहितम् । अभ्यादाने किम् । ओमिति ब्रह्म ॥

## ये यज्ञकर्मणि ॥ ८८ ॥

ये इत्यस्य प्लुतः स्याद्यज्ञे । ये३यजामहे । येयजामहे एव ।

## एत ईद्बहुवचने ॥ ८१ ॥

अदसो दात्परस्य एत ईत्स्यादस्य च मः बहर्थोक्तौ। अमी। अमीभिः। अमीषु ॥

## वाक्यस्य टेः प्लुत उदात्तः ॥ ८२ ॥

आपादसमाप्तेरयमधिकारः। वाक्यस्य टेः प्लुत उदात्त इति च पदचतुष्टयमधिक्रियते ॥

## प्रत्यभिवादेऽशूद्रे ॥ ८३ ॥

अभिवादयमानस्याशीर्वचनं प्रत्यभिवादः। अशूद्रविषये प्रत्यभिवादे वर्तमानस्य वाक्यस्य टेः प्लुत उदात्तः स्यात्। अभिवादये देवदत्तोहं भोः, आयुष्मानेधि देवदत्त ३। वाक्यस्येत्यनन्त्यपदस्य निवृत्त्यर्थम्। टिग्रहणमांप्रचिविसत्र माप्त्यर्थम्। अशूद्रे किम्। अभिवादये तुषजकोहं भोः। आयुष्मानेधि तुषजक ॥

### स्त्रियामपि प्रतिषेधः ॥

अभिवादये गार्ग्यहम्भोः। आयुष्मती भव गार्गि ॥ असूयकेपीति केचित् ॥ अभिवादये स्थाल्यहं भोः। आयुष्मानेधि स्थालिन्। असूयकत्वेन ज्ञाते प्रत्यभिवाद एव नास्ति। उक्तं च भाष्ये असूयकस्त्वमसि जाल्म न त्वं प्रत्यभिवादमर्हसि भिद्यस्व वृषल स्थालिन्निति। अभिवादवाक्यस्थनाम गोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते। नेह। देवदत्त कुशल्यसि। देवदत्तायुष्मानेधि ॥

### भोराजन्यविशां वेति वाच्यम् ॥

आयुष्मानेधि देवदत्त भो३ः। देवदत्त भोः। राजन्य। इन्द्रवर्माहं भोः। आयुष्मानेधीन्द्रवर्म३न्। आयुष्मानेधीन्द्रव-

हलि च ॥ ७७ ॥

रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धल्यपदान्तेऽपि । कीर्णम् । पूर्णम् । दीव्यति । धातोः किम् । दिवमिच्छति । दिव्यति । चतुर इच्छति चतुर्यति । इकः किम् । स्वर्यते । भव्यम् ॥

उपधायां च ॥ ७८ ॥

धातोरुपधाभूतयो रेफवकारयोर्हल्परयोरिको दीर्घः स्यात् । हूर्छिता । तूर्दिता । हलि किम् । अरिणा (चिरिणोति) । विधतुः विधुरित्यत्र यणः स्थानिवत्त्वाद्बहिरङ्गत्वाद्वा हल्परत्वाभावः । चतुर्यितेत्यत्रातो लोपस्य बहिरङ्गत्वादसिद्धत्वाद्रेफस्योपधात्वाभावः । प्रतिदीव्नेत्यत्रातो लोपस्य दीर्घविधौ स्थानिवत्त्वाभावाद्धलि चे(८।२।७७)ति दीर्घः । उणादीनामव्युत्पन्नत्वात्किर्योः गिर्योरित्यत्र न दीर्घः ॥

न भकुर्छुराम् ॥ ७९ ॥

रेफवान्तस्य भस्य कुर्छुरोरुपधाया न दीर्घः । धुरं वहति धुर्यः । कुर्यात् । छुर्यात् । दिव्यम् । भस्य किम् । प्रतिदीव्ना ॥

अदसोऽसेर्दादु दो मः ॥ ८० ॥

अदसोऽसान्तस्य दात्परस्य उः स्याद्दस्य च मः । स्थानेऽन्तरतमः(१।१।५०) इति ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घः । अमुम् । अमू । अमून् । असेः किम् । अद इच्छति अदस्यति ॥

अदसो ऽसोऽद्र (ऽनोस्र) इति वाच्यम् ॥

ओकाररेफयोरपि प्रतिषेधो यथा स्यात् । अदोऽत्र । अदः । अदसोऽद्यादशोऽपि मुभावमिच्छन्ति । अदमुयङ् । अमुद्यङ् । अमुमुयङ् । अदद्यङ् । दात्परस्य किम् । अलोऽन्त्यस्य मा भूत् । अमुया ॥

वारित्यन्तरिक्षम् । महाव्याहृतेः किम् । भुवो मध्यम् । भुवस् इत्येतदव्ययमन्तरिक्षवाचि महाव्याहृतिः ॥

वसुस्रंसुध्वंस्वनडुहां दः ॥ ७२ ॥

सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । विद्वद्भ्याम् । उखास्रत् । पर्णध्वत् । अनडुद्भ्याम् । सान्तेति किम् । विद्वान् । पदान्ते किम् । विद्वांसौ । रुत्वापवादोयम् । नुम्विधिसामर्थ्याद्दत्वं न । अनड्वान् ॥

तिप्यनस्तेः ॥ ७३ ॥

धातोः सस्य पदान्तस्य दः स्यात्तिपि परे न त्वस्तेः । अचकात् । तिपि किम् । आचकाः । अनस्तेः किम् । अप एवेद सलिल सर्वमाः । आ इत्यस्तेर्लङि बहुल छन्दसी(७।३।९७)तीण्न कृतः ॥

सिपि धातो रुर्वा ॥ ७४ ॥

धातोः सस्य पदान्तस्य सिपि परे रुः स्याद्वा पक्षे दः । अचकाः अचकाद्वा त्वम् । धातो रुरिति चोत्तरार्थम् ॥

दश्च ॥ ७५ ॥

दान्तस्य धातोः पदान्तस्य सिपि रुः स्याद्वा । अभिनः अभिनद्वा त्वम् ॥

र्वोरुपधाया दीर्घ इकः ॥ ७६ ॥

रेफवकारान्तस्योपधाया इको दीर्घः स्यात्पदान्ते। गीः। पूः। वग्रहणमुत्तरार्थम्। उपधायाः किम् । अविभर्भवान्। इकः किम् । अविभः । अकारस्य मा भूत् । धातोरेव । अग्निः । पदान्ते किम् । गिरौ ॥

अहन् ॥ ६८ ॥

अहन्नित्यस्य रुः स्यात्पदान्ते । अहोभ्याम् । अहोभिः ॥

रूपरात्रिरथन्तरेष्वह्नो रुत्वं वाच्यम् ॥

अहोरूपम् । अहोरात्रम् । इकारलोपेप्येकदेशविकृतस्यानन्यत्वाद्रुत्वम् । रात्रग्रहणे तु गतमहो रात्रिरेषेत्यत्र न स्यात् । अहोरथन्तरम् ॥

रोऽसुपि ॥ ६९ ॥

अह्नो रेफादेशः स्यादसुपि । अहर्ददाति । अहर्भुङ्क्ते । असुपि किम् । अहोभ्याम् । अहर्ददातीत्यत्र लुका लुप्तत्वात्प्रत्ययलक्षणेनासुपीति निषेधाभावः । यत्र लोप इति लुप्यते तत्र प्रत्ययलक्षणेनासुपीति निषेधेऽहन्निति रुत्वमेव । दीर्घाहा निदाघ इति ॥

अम्नरूधरवरित्युभयथा छन्दसि ॥ ७० ॥

अम्नस् ऊधस् अवस् एषां छन्दसि रुर्वा रेफो वा स्यात् । अम्न एव । अम्नरेव । ऊध एव । ऊधरेव । अव एव । अवरेव ।

छन्दसि भाषायां च प्रचेतसो राजन्युपसंख्यानम् ॥

प्रचेतो राजन् । प्रचेता राजन् ॥

अहरादीनां पत्यादिषु वा रेफः ॥

विसर्गापवादः । अहर्पतिः । अहःपतिः । गीर्पतिः । गीःपतिः । धूर्पतिः । धूःपतिः । अहर्पुत्रः । अहःपुत्रः । गीर्पुत्रः गीःपुत्रः ॥

भुवश्च महाव्याहृतेः ॥ ७१ ॥

भुवस् इत्यस्य रुरेफौ स्याताम् । भुव इत्यन्तरिक्षम् । भु-

क्विन इति वाच्ये मत्ययग्रहणं बहुव्रीह्यर्थम् । तेन · क्विन्प्रत्ययो यस्माद्विहितस्तस्यान्यत्रापि मत्यये पदान्ते कुत्वम् । दृग्भ्याम् । दृग्भिः । रज्जुसृड्भ्यामित्यादौ तु नेष्यते ॥

नशेर्वा ॥ ६३ ॥

नशेः कवर्गोन्तादेशो वा स्यात्पदान्ते । नक् । नट् । संपदादित्वाद्भावे क्विप् ॥

मो नो धातोः ॥ ६४ ॥

मान्तस्य धातोर्नः स्यात्पदान्ते । मतान् । मशान्भ्याम् । नस्यासिद्धत्वान्नलोपो न । मः किम् । चित् । धातोः किम् । इदम् । पदान्ते किम् । मशामौ ॥

म्वोश्च ॥ ६५ ॥

मान्तस्य धातोर्मस्य नः स्यान्मवयोः परतोऽपदान्तेपि । अगन्म तमसस्पारम् । गमेर्लुङि छन्दसि शपो लुक् । वकारे जगन्वान् ॥

ससजुषो रुः ॥ ६६ ॥

पदान्तस्य सकारस्य सजुष्शब्दस्य च रुः स्यात् । अग्निरत्र । सजूर्ऋतुभिः । सहपूर्वस्य जुषः क्विपि रूपम् ॥

अवयाः श्वेतवाः पुरोडाश्च ॥ ६७ ॥

अत्वसन्तस्य(६।४।१४)सत्र सम्बुद्धाविसनुवृत्तः सम्बुद्धौ दीर्घार्थमेते निपाताः । अवपूर्वस्य यजेः श्वेतपूर्वस्य वहेः पुरःपूर्वस्य दाशेः क्विनि श्वेतवाहादीनां डस्पदस्य(३।२।७१) इति डस्प्रत्यये सम्बुद्धौ दीर्घो निपात्यते । हे अवयाः । हे श्वेतवाः । हे पुरोडाः । चकारादुक्थशाः ॥

न ध्याख्यापॄमूर्छिमदाम् ॥ ५७ ॥

एभ्यो निष्ठातस्य नत्वं न स्यात् । ध्यातवान् । ख्यातः । पूर्तः । मूर्तः । मत्तः । मत्तवान् ॥

वित्तो भोगप्रत्यययोः ॥ ५८ ॥

विदेर्लाभार्थान्नत्वाभावो निपात्यते । वित्तं धनम् । भुज्यत इति भोगः । वित्तो मनुष्यः । प्रतीत इत्यर्थः । प्रतीयत इति प्रत्ययः । एतयोः किम् । विन्नः ॥

भित्तं शकलम् ॥ ५९ ॥

शकले भित्तमिति निपात्यते । भिन्नमन्यत् ॥ भित्तशब्दः शकले रूढः ॥ तेन भिन्नं भित्तं छिन्नं शकलमिति छेदनक्रियापरेण भिन्नशब्देन सामानाधिकरण्यम् ॥

ऋणमाधमर्ण्ये ॥ ६० ॥

अधम ऋणे अधमर्णः । निपातनात्सप्तम्युत्तरपदसमासः । तस्य भाव आधमर्ण्यम् । तस्मिन् गम्यमाने ऋणमिति निपात्यते । ऋणं ददाति । धारयति वा । ऋतमन्यत् ॥

नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानिच्छन्दसि ॥ ६१ ॥

एते छन्दसि निपात्यन्ते । नञ्निपूर्वात्सदेर्निष्ठानत्वाभावः । नसत्तम् । निषत्तम् । नञ्पूर्वादुन्देरनुत्तम् । त्वरतेः प्रतूर्तम् । सर्तेः सूर्तम् । गुरी उद्यमने गूर्तम् । लोके तु नसन्नम् । निषण्णः । अनुन्नम् । प्रतूर्णम् । सृतम् । गूर्णम् ॥

क्विन्प्रत्ययस्य कुः ॥ ६२ ॥

क्विन्नन्तधातोः कवर्गोन्तादेशः स्यात्पदान्ते । घृतस्पृक् ।

## पचो वः ॥ ५२ ॥

निष्ठात इत्येव । पक्वः । पक्ववान् ॥

## क्षायो मः ॥ ५३ ॥

क्षायतेर्निष्ठातस्य मः स्यात् । क्षामः । क्षामवान् ॥

## प्रस्त्योन्यतरस्याम् ॥ ५४ ॥

प्रपूर्वात् स्त्यायतेर्निष्ठातस्य मो वा स्यात् । प्रस्तीमः । प्रस्तीमवान् । प्रस्तीतः । प्रस्तीतवान् । अत्र पूर्वे संप्रसारणप्रवृत्तेर्यण्वत्त्वाभावान्नत्वं न । प्रपूर्वात्किम् । स्त्यानः ॥

## अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ॥ ५५ ॥

एते निष्ठायां निपात्यन्ते न चेदुपसर्गात्परे स्युः । ञिफला । निष्ठातस्य लः । फुल्लः । फुल्लवान् । क्षीबकृशिभ्यामुत्पूर्वाच्च लाघेर्निष्ठातस्य लोप इडभावश्च निपात्यते । क्ते नेच्छब्दस्य लोपः । क्षीबो मत्तः । कृशस्तनुः । उल्लाघो रोगः । अनुपसर्गात्किम् । प्रफुल्ताः सुमनसः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः ॥

उत्फुल्लसंफुल्लपरिकृशाश्चोपसंख्येयाः ॥

## नुदविदोन्दत्राघ्राह्रीभ्योन्यतरस्याम् ॥ ५६ ॥

एभ्यो निष्ठातस्य नो वा स्यात् । नुन्नः । नुत्तः । विद विचारणे । विन्नः । वित्तः । उन्दी क्लेदने । उन्नः । उत्तः । त्राणः । त्रातः । घ्राणः । घ्रातः । ह्रीणः । ह्रीतः । वेत्तेस्तु विदितः । विद्यतेर्विन्नः ॥

क्षियो दीर्घात् ॥ ४६ ॥

दीर्घात् क्षियः परस्य निष्ठातस्य नः स्यात् । क्षीणाः केशाः । क्षीणस्तापसः । निष्ठायामण्यदर्थे(६।४।६०)इति दीर्घः । दीर्घात्किम् । अक्षितमसि मा मे क्षेष्ठाः । अत्र भावे क्तः । भावो ण्यदर्थ इति दीर्घाभावः ॥

श्योऽस्पर्शे ॥ ४७ ॥

श्यायतेर्निष्ठातस्य नः स्यान्न तु स्पर्शे । शीनं घृतम् । शीना वसा । अस्पर्शे किम् । शीतं वर्तते । शीतो वायुः ॥

अञ्चोऽनपादाने ॥ ४८ ॥

अञ्चेर्निष्ठातस्य नः न चेदपादानं प्रयुज्यते । समक्नौ शकुनेः पादौ । पशवोऽप्युक्ताः । प्रकाशन्त इत्यर्थः । अनपादाने किम् । उदक्तमुदकं कूपात् । उद्धृतमित्यर्थः । व्यक्तमित्यञ्जे रूपम् ॥

दिवोऽविजिगीषायाम् ॥ ४९ ॥

दिवो निष्ठातस्य नः स्यादविजिगीषायाम् । द्यूनः । द्यूनवान् । विजिगीषायां तु द्यूतम् ॥

निर्वाणोऽवाते ॥ ५० ॥

अयं निपात्यते न चेद्वाताभिधानम् । निर्वाणोऽग्निः । निर्वाणो भिक्षुः । अवाते किम् । निर्वातो वातः । निर्वाणोऽग्निर्वातेनेत्यत्रापि निष्ठान्तेन न वाय्वभिधानम् ॥

शुषः कः ॥ ५१ ॥

शुषेर्निष्ठातस्य कः स्यात् । शुष्कम् । शुष्कवान् ॥

रस्य च। आस्तीर्णम्। अस्तीर्णवान्। भिन्नम्। भिन्नवान्। रदाभ्यां किम्। कृतम्। निष्ठा किम्। कर्ता। तः किम्। चरितम्। पूर्वस्य किम्। परस्य मा भूत्। भिन्नवद्भ्याम्। कृतस्यापत्यं कार्तिरित्यत्र बहिरङ्गवृद्धेरासिद्धत्वान्न दत्वम्॥

संयोगादेरातो धातोर्यण्वतः॥ ४३॥

संयोगादिर्यो धातुराकारान्तो यण्वान् तस्मात्परस्य निष्ठातस्य नः स्यात्। द्राणः। द्राणवान्। ग्लानः। ग्लानवान्। संयोगादेः किम्। यातः। आतः किम्। च्युतः। धातोः किम्। निर्यातः। यण्वतः किम्। स्नातः॥

ल्वादिभ्यः॥ ४४॥

एभ्यो निष्ठातस्य नः स्यात्। लूनः। लूनवान्॥

ॠकारल्वादिभ्यः क्तिन्निष्ठावत्॥

कीर्णिः। गीर्णिः। लूनिः। पूनिः॥

दुग्वोर्दीर्घश्च॥

दूनः। गूनः॥

पूञो विनाशे॥

पूना यवाः। पूतमन्यत्र॥

सिनोतेर्ग्रासकर्मकर्तृकस्येति वाच्यम्॥

सिनो ग्रासः स्वयमेव। अन्यत्र सिता पाशेन सूकरी। सितो ग्रासो देवदत्तेन॥

ओदितश्च॥ ४५॥

ओदितो धातोर्निष्ठातस्य नः स्यात्। ओविजी। उद्विग्नः। उद्विग्नवान्। स्वादय ओदितः। सूनः। धीनः। दीनः। मीङ्। मीनः। रीङ्। रीणः। लीङ्। लीनः। व्रीङ्। व्रीणः॥

एकाचो वशो भष् झषन्तस्य स्ध्वोः ॥ ३७ ॥

एकाचो धातोर्झषन्तस्य वशः स्थाने भष् स्यात्सकारे ध्वे च परे प्रातिपदिकस्य तु झलि पदान्ते च । बुध । भोत्स्यते । अभुध्वम् । भुज । भुञ्ज्याम । एकाचः किम् । दामलिहमिच्छतीति दामलिह्यतेर्यप्रत्ययः । दामलिट् । वशः किम् । क्रुध । क्रोत्स्यति । झषन्तस्य किम् । दास्यति । स्ध्वोः किम् । बोद्धा । सवकारग्रहणं किम् । दादर्ढ्ढि । दृध धारण इत्यस्य यङ्लुगन्तस्य लोटि धिभावे सति रूपम् ॥

दधस्तथोश्च ॥ ३८ ॥

द्विरुक्तस्य धाञो झषन्तस्य वशो भष् स्यात्तथयोः स्ध्वोश्च परतः । विधिवलादालोपस्य न स्थानिवत्त्वम् । धत्तः । धत्थः । धत्से । धध्वम् । झषन्तस्य किम् । दधाति ॥

झलाञ्जशोन्ते ॥ ३९ ॥

पदान्ते झलां जशः स्युः । वागीशः । चिद्रूपम् । अन्तग्रहणाज्झलि न । वस्ता । वस्तुम् ॥

झषस्तथोर्धोऽधः ॥ ४० ॥

झषः परयोस्तथोर्धः स्यान्न तु दधातेः । लब्धा । दोग्धा । लेढा । झषः किम् । भेत्ता । अधः किम् । धत्तः ॥

षढोः कः सि ॥ ४१ ॥

षस्य ढस्य च कः स्यात्सादौ । वेक्ष्यति । वेक्ष्यति । सि किम् । पिनष्टि । लेढि ॥

रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ ४२ ॥

रदाभ्यां परस्य निष्ठानकारस्य नः स्यात्पूर्वस्य दका-

हो ढः ॥ ३१ ॥

झलि पदान्ते च हस्य ढः स्यात् । वोढा । वोढुम् । दित्यवाट् ॥

दादेर्धातोर्घः ॥ ३२ ॥

दकारादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च । ढत्वापवादः । दोग्धा । दोग्धुम् । गोधुक् । दादेः किम् । लेढा । लिट् ॥

वा द्रुहमुहष्णुहष्णिहाम् ॥ ३३ ॥

एषां हस्य वा घः स्याज्झलि पदान्ते च । द्रोग्धा । द्रोढा । मित्रध्रुक् । मित्रध्रुट् । मोग्धा । मोढा । मुक् । मुट् । स्नोग्धा । स्नोढा । स्नुक् । स्नुट् । स्नेग्धा । स्नेढा । स्निक् । स्निट् ॥

नहो धः ॥ ३४ ॥

नहो हस्य धः स्याज्झलि पदान्ते च । नद्धा । उपानत् ॥

आहस्थः ॥ ३५ ॥

आहो हस्य थः स्याज्झलि । आत्थ । धेनैव सिद्धे थविधानं झषस्तथो(८।२।४०)रित्यस्य निवृत्त्यर्थम् ॥

हृग्रहोर्भस्य भश्छन्दसि ॥

सम्भरति । जभ्रिरे । उद्ग्राभ च निग्राभं च ॥

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ॥ ३६ ॥

व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोन्तादेशः स्याज्झलि पदान्ते च । व्रष्टा । मूलवृट् । भ्रष्टा । भृट् । स्रष्टा । सृट् । म्रष्टा । मृट् । यष्टा । उपयट् । राट् । विभ्राट् । एतयोः सेट्त्वान्झलि नोदाहरणम् । केचित्तु राष्टिः भ्राष्टिरिति क्तिन्नन्तमिच्छन्ति । छ । प्रष्टा । शब्दप्राट् । श । वेष्टा । विट् ॥

झलो झलि ॥ २६ ॥

झलः परस्य सस्य लोपः स्याज्झलि। अभित्त। अभिद्धाः। अत्रात्तम् अत्रात्तेत्यत्र वसेः सलोपस्यासिद्धत्वात्सः स्यार्द्धधातुक(७।४।४९) इति तत्वम्। झलः किम्। अमंस्थाः। झलि किम्। अभित्साताम्। वयो धात्विति सोमसुत् स्थानमित्यादौ पदद्वये धि च झलो झलीत्यादिविधिर्नेष्यते ॥

ह्रस्वादङ्गात् ॥ २७ ॥

ह्रस्वादङ्गात्परस्य सस्य लोपः स्याज्झलि। अकृत। अकृथाः। अहृत। ह्रस्वात्किम्। अच्योष्ट। अङ्गात्किम्। अलाविष्टाम्। झलि किम्। अकृषाताम्। सिच एवायं लोपः। तेन द्विष्टरामित्यत्र तरपि सिचो न लोपः ॥

इट ईटि ॥ २८ ॥

इटः परस्य सस्य लोपः स्यादीटि। अचेतीत्। अकोषीत्। अमोषीत्। इटः किम्। अकार्षीत्। ईटि किम्। अलाविष्टाम् ॥

स्कोः संयोगाद्योरन्ते च ॥ २९ ॥

पदान्ते यः संयोगो झलि परतश्च यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात्। मस्जेः मग्नः। मग्नवान्। साधुमक्। तक्षेः तष्टः। तष्टवान्। साधुतट्। स्कोः किम्। नानन्ति। संयोगाद्योः किम्। शक्तः। अन्ते च किम्। तक्षिता ॥

चोः कुः ॥ ३० ॥

चवर्गस्य कवर्गादेशः स्याज्झलि पदान्ते च। वक्ता। वाक् ॥

ऽनवस्थितत्वात्त्वात्माण्यङ्गे नित्यम् । गलः । विपे न । गरः । निगाल्यते । निगार्यते । अत्र नलोपस्य स्थानिवत्त्वाद्विकल्पः । पूर्वत्रासिद्धे न स्थानिवदित्येनदत्र नास्ति । तस्य दोषः संयोगादिलोपणत्वेष्विति वचनात् । गिरौ गिर इत्यत्र तु धातुस्वरूपग्रहणे तत्प्रत्यये विज्ञानमिति लत्वं न ॥

परेश्च घाङ्कयोः ॥ २२ ॥

घेति स्वरूपग्रहणम् । एतयोः परेः रेफस्य लत्वं स्यात् । परिघः । पलिघः । पर्यङ्कः । पल्यङ्कः ॥

योगे च ॥

परियोगः । पलियोगः ॥

संयोगान्तस्य लोपः ॥ २३ ॥

संयोगान्तस्य पदान्तस्य लोपः स्यात् । धीमान् । कुलवान् । श्रेयानित्यादौ रुत्वमसिद्धत्वात्संयोगान्तलोपं न बाधते । जश्त्वं बाधते । नित्यमाप्ते तस्मिन् विधानात् । यशः । पयः । दध्यत्रेत्यादौ यणो बहिरङ्गस्यासिद्धत्वान्न संयोगान्तलोपः ॥

रात्सस्य ॥ २४ ॥

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य । मातुः । पितुः । लस्यैव किम् । ऊर्क् । न्यमार्ट् ॥

धि च ॥ २५ ॥

धादौ प्रत्यये परे सस्य लोपः स्यात् । अभविद्वम् । अभविध्वम् । अत्र सिच एव लोप इष्यते । इह न । चकाद्धि । भाष्ये तु सकारमात्रस्यैव लोपः चकाधीत्येव भवितव्यमिति स्थितम् ॥

कारैकदेशस्यापि रेफस्य ऌकारैकदेशो लः। कल्पते। क्लृप्तः॥

कृपणादीनां लत्वं न॥

कृपणः। कृपीतः। क्रपः सम्प्रसारणं चेति विदादिपाठा-द्ङि कृपीति सिध्यति। तस्य च लाक्षणिकत्वादनेन न लत्वम्। कृपणकृपीटकर्पूरादयोऽपि क्रपेरेवेत्यप्याहुः॥

वालमूललघ्वलमसुलाङ्गुलीनां वा॥

वालः। वारः। मूलम्। मूरम्। लघु। रघु। अग्रम्। अलम्। असुरः। असुलः। अङ्गुलिः। अङ्गुरिः॥

कपिलकादीनां वा संज्ञाच्छन्दसोः॥

कपिलकः। कपिरकः। तित्तिरिकम्। तित्तिलिकम्। लोमानि। रोमाणि। पांसुरम्। पांसुलम्। कर्म। कल्म। रल-योरभेद इत्यप्याहुः॥

## उपसर्गस्यायतौ॥ १९॥

आयतौ परे उपसर्गरेफस्य लत्वं स्यात्। प्लायते। पलायते कल्पयते॥

प्रतेर्न॥

प्रत्ययते। प्लत्ययत इत्यपि केचित्। प्रतिपूर्वस्या-यतेरप्रयोग एवेत्यन्ये। निस् दुस् एतयो रेफस्यासिद्धत्वा-न्न लत्वम्। निरयते। दुरयते॥

## ग्रो यङि॥ २०॥

गॄ इत्येतस्य रेफस्य लत्वं स्यात् यङि। निजेगिल्यते। यङि किम्। निगीर्यते॥

## अचि विभाषा॥ २१॥

ग्रो रेफस्य लत्वं वा स्यादजादौ। गिलति। गिरति।

उदन्वानुदधौ च ॥ १३ ॥

उदधौ संज्ञायां चायं निपातः । उदकस्योदन् । उदन्वा-
नाम ऋषिः । यस्यौदन्वतः पुत्रः । उदन्वानुदधिः । उदधौ
किम् । उदकवानम्बुदः ॥

राजन्वान्त्सौराज्ये ॥ १४ ॥

...राज्य गम्य
भूमिः । राजवानन्यत्र निपातः । राजन्वान् देशः । राजन्वती
तु ।

इवर्णान्ताद्रेण... छन्दसीरः ॥ १५ ॥

उपानुनाक...र्णान्ताच्च मतुपो वः स्याच्छन्दसि । त्रिवतीर्या-
...ः । हरिवो मे दिनं । गीर्वान् । धूर्वान् ॥

वेति वाच्यम् ॥

ऋषिमन्तम् ॥

अनो नुट् ॥ १६ ॥

अन्नन्तान्मतोर्नुडागमः स्याच्छन्दसि । अक्षण्वन्तः शीर्ष-
ण्वतीरुपदधाति । नुटोसिद्धत्वान्न तस्य वत्वं परस्य च वत्वम् ॥

नाढस्य ॥ १७ ॥

नकारान्ताढस्य नुट् स्याच्छन्दसि । पथिन्तरः । दस्यु-
हन्तमः ॥

भूरिदाव्नस्तुड्वाच्यः ॥

भूरिदावत्तरः ॥

ईद्रथिनः ॥

रथीतरः ॥

कृपे रो लः ॥ १८ ॥

कृपे रेफस्य लत्वं स्यात् । रो ल इति सामान्योक्तेः ऋ-

वा क्लीबस्येति वाच्यम् ॥

हे चर्मन् । हे चर्म ॥

मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥ ९ ॥

मकारान्तान्मकारोपधादवर्णान्तादवर्णोपधाच्च यवादिवर्जितपरस्य मतुपो मस्य वः स्यात् । किंवान् । लक्ष्मीवान् । ज्ञानवान् । विद्यावान् । यशस्वान् । भास्वान् । मादुपधायाश्च किम् । अग्निमान् । यवादेस्तु यवमान् । भूमिमान् । यवादिराकृतिगणः । नृमत इदं नार्मतमित्यत्रावर्णोपधत्वस्य बहिरङ्गत्वाद्वत्वाभावः ॥

झयः ॥ १० ॥

झयन्तान्मतुपो मस्य वः स्यात् । विद्युत्वान् ॥

संज्ञायाम् ॥ ११ ॥

मतुपो मस्य वः स्यात्संज्ञायाम् । अहिवती । कपिवती । मुनिवती । ऋषिवती ॥

असन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ॥ १२ ॥

एते संज्ञायां निपात्यन्ते । आसनस्यासन्दीभावः । असन्दीवान् ग्रामः । आसनवानसंज्ञायाम् । आसन्दीशस्यासनपर्यायत्वे तु पूर्वेणैव सिद्धम् । अस्थिशब्दस्याष्ठीभावः । अष्ठीवान् शरीरावयवविशेषः । अस्थिमानन्यः । चक्रस्य चक्रीभावः । चक्रीवान् राजा । चक्रवानन्यः । कक्ष्यायाः सम्प्रसारणम् । कक्षीवान्नाम ऋषिः । कक्ष्यावानन्यः । लवणस्य रुमण् । रुमण्वान्नाम पर्वतः । लवणवानन्यः । चर्मणो नलोपाभावः । चर्मण्वती नाम नदी । चर्मवत्यन्यत्र ॥

द्विर्वचने परसवर्णत्वं सिद्धम् ॥

सय्य्यन्ता। सव्ँव्वत्सरः। तल्ल्ँलोकम्। परसवर्णस्यासिद्धत्वा-
द्यर इति द्विर्वचनं स्यात् ॥

लत्वघत्वसत्वरुत्वपत्वणत्वानुनासिकच्छत्वानि सिद्धानि ॥

गलोगलः । गरोगरः । द्रोग्धाद्रोग्धा । द्रोढाद्रोढा । नुन्नो नुन्नः । नुत्तोनुत्तः । रुत्व । अभिनोभिनः । अभिनदभिनत् । पत्व । मातुष्ष्वसा मातुष्ष्वसा । मातुःस्वसा मातुस्स्वसा । णत्व मापवापानि मापवापानि । मापवापाणि मापवापाणि । अनुनासिक । वाङ्नयनं वाङ्नयनम् । वाग्नयनं वाग्नयनम् । छत्व वाक्छयनं वाक्छयनम् । वाक्शयनं वाक्शयनम् । लत्वादीनामसिद्धत्वादाष्टमिके द्विर्वचने पश्चाल्लत्वादिप्रवृत्तौ गलो गरः गरो गल इत्यपि द्विरुक्तं स्यादिति सिद्धवचनम् । एतत्सर्वं न मु ने(८।२।३)इत्यत्र नेति योगविभागेन सिद्धमित्याहुः ॥

नलोपः प्रातिपदिकान्तस्य ॥ ७ ॥

प्रातिपदिकेति लुप्तपष्ठीकम् । प्रातिपदिकस्य पदस्य योन्तस्तस्य नस्य लोपः स्यात् । राजभ्याम् । प्रातिपदिकस्य किम् । अहन्नङः पद्भ्या । अन्तस्य किम् । राजानौ ॥

रुत्वस्यासिद्धत्वान्नलोपे प्राप्तेऽह्नो नलोपप्रतिषेधः ॥

अहः । अहोभ्याम् ॥

न ङिसम्बुध्योः ॥ ८ ॥

ङौ सम्बुद्धौ च नस्य लोपो न स्यात् । आर्द्रे चर्मन् । हे राजन् । अस्मादेव प्रतिषेधात्प्रत्ययलक्षणेनाप्रत्यय इति प्रातिपदिकसंज्ञा न निषिध्यते भसंज्ञा च न भवतीति ज्ञायते । तेन राजपुरुष इत्यत्र नलोपोऽल्लोपाभावश्च ॥

ति गतेर्निघातो न भवति ॥

संयोगान्तलोपः रोरुत्वे सिद्धो वाच्यः ॥

हरिवो मे दिनं त्वा। हरिव इति मत्वन्तं छन्दसीर(८।२।१५) इति वत्वम् । नुम् । संयोगान्तलोपः । मतुवसो रुरि(८।३।१)ति रुत्वम् । संयोगान्तलोपस्य सिद्धत्वाद्धशि चे(६।१।११५)त्युत्वम् ॥

मिज्लोप एकादेशे सिद्धो वाच्यः ॥

अलावीत् ॥

निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः ॥

वृक्णः। वृक्णवान् । निष्ठादेशस्य सिद्धत्वाज्झलीति षत्वं न। कुत्वं तु स्यादेव । स्वरप्रत्ययेड्विधिषु क्षीवशब्द उदाह्रियते । यदा क्षीवेर्निष्ठायामिटि कृते इच्छब्दलोपो निपात्यते तदा तस्यासिद्धत्वान्निष्ठा च द्व्यजना(६।१।२०५)दिति स्वरो न स्यात् । क्षीवेन तरति क्षीविक इति द्व्यज्लक्षणष्ठन्न स्यात् । यदा तु इटे कृते तकारलोपमात्रं निपात्यते तदा तस्यासिद्धत्वादिट् स्यात् ॥

प्लुतश्चिकारस्तुग्विधौ छे सिद्धः ॥

अग्ना इच्छत्रम् । पटा उच्छत्रम् । अत्र नित्यं तुङ् न स्यात् । छे किम् । अग्निसुत् । असिद्ध एवात्र ॥

श्चुत्वं धुट्त्वे सिद्धं वाच्यम ॥

आट् श्च्योतति। तट् श्च्योतति। श्च्युतिः सकारादिः। शकारादित्वे तु मधुश्च्युतमाचष्ट इति णिचि टिलोपे संयोगान्तलोपद्वये मधुगिति स्यात् । मधुगिति चेष्यते । संयोगादिलोपसंयोगान्तलोपाभ्यां सकारयकारलोपे चकारस्य कुत्वम् ॥

अभ्यासजश्त्वचर्त्वे एत्वतुकोः सिद्धे वाच्ये ॥

बभणतुः । उचिच्छिषति ॥

कृतीत(८।१।२८)इत्यनुदात्तः। उदात्तविकल्पे आन्तर्यत एव स्वरितसिद्धेः स्वरितग्रहणं विस्पष्टार्थम् । अनुदात्ते किम् । देवोऽत्र । पदादौ किम् । अग्नी । वायू ॥

एकादेशस्वरोऽन्तरङ्गः सिद्धो वाच्यः अयायावेकादेशशतृस्वरैकानन्नुदात्तसर्वानुदात्तार्थम् ॥

अय् । वृक्ष इदम् । अत्र प्रातिपदिकान्तसप्तम्योरुदात्तानुदात्तयोः एकादेश उदात्तः तस्य सिद्धत्वादान्तर्यत अयादेश उदात्तः । अन्यथोदात्तानुदात्तयोः स्थाने स्वरितः स्यात् । आय् कुमार्या इदम् । कुमारी आ ए इति स्थिते यण् । तत उदात्तयणो हल्पूर्वावि(६।१।१७४)त्याट उदात्तत्वम् । तत आटश्चे(६।१।९०)त्येकादेश ऐकार उदात्तः । तस्य सिद्धत्वादायुदात्तः। अत्र परत्वादाट् अन्तरङ्गत्वादेकादेशः पश्चादुदात्तयण इत्यैकारस्योदात्तत्वम्र न त्वेकादेश उदात्तेन(८।२।५)अनेनेत्यनुदाहरणमिदमिति भाष्ये । आव् । वृक्षाविदम् । एकादेशस्वर गाङ्गेऽनूपे । गाङ्गे इत्यत्र प्रातिपदिकसप्तम्योरेकादेशस्योदात्तस्य सिद्धत्वादेङः पदान्ता(६।१।१०९)दित्येकादेशस्य स्वरितो वानुदात्ते पदादावि(८।२।६)त्येष स्वरो भवति । अत्र परस्मिन् पूर्वं सिद्धमेवेति कथमिदमुदाहरणमित्याभाति । शतृस्वर तुदति। लसार्वधातुकानुदात्तत्वे शेन तस्यैकादेशे तस्योदात्तत्वस्य सिद्धत्वाच्चतुरनुमो नद्यजादी इत्यन्तोदात्ताश्रयः स्वरः सिद्धो भवति । एकानन्नुदात्त तुदन्ति । एकादेशस्वरस्य सिद्धत्वादनुदात्तं पदमेकवर्जमित्येतद्भवति । सर्वानुदात्त ब्राह्मणास्तुदन्ति । एकादेशस्वरस्य सिद्धत्वात्सर्वनिघातः । अन्तरङ्गः किम् । प्रपचतीति । अत्रेतिशब्देनैकादेशस्य पदद्वयाश्रितत्वेन बहिरङ्गत्वात्स्वरोपि बहिरङ्गः । तस्यासिद्धत्वात्तिङि चोदात्तवती(८।१।७१)

## न मु ने ॥ ३ ॥

नाभावे कर्तव्ये मुभावो नासिद्धः स्यात् । अमुना । ने कृते मुभावस्यासिद्धत्वात्सुपि चे(७ ३।१०२)ति दीर्घत्वं प्राप्नोति । नैष दोषः । ने परतो मुभावो नासिद्ध इत्यत्र सूत्रार्थः । अर्थान्ने कर्तव्येपि सिद्धत्वं भविष्यति वृद्धकुमारीवरन्यायेन ॥

## उदात्तस्वरितयोर्यणः स्वरितोनुदात्तस्य ॥ ४ ॥

उदात्तस्थानिकात् स्वरितस्थानिकाच्च यणः परस्यानुदात्तस्य स्वरितः स्यात् । कुमार्यौ । कुमार्यः । उदात्तनिवृत्तिस्वरेण ईकार उदात्तः । तत्स्थानिकाद्यणः परस्यानुदात्तस्य सुपः स्वरितत्वम् । खलप्व्याशा । कृत्स्वरेण खलपूशब्दोन्तोदात्तः । पूर्ववत्सप्तम्येकवचनस्य स्वरितत्वम् । तत्स्थानिकाद्यणः परस्याशब्दाकारस्यानुदात्तस्य स्वरितत्वम् ॥

## यण् स्वरितयणादेशे सिद्धो वाच्यः ॥

तेनात्र यणूस्वरितस्थानिकः । उदात्तस्वरितयोः किम् । शार्ङ्गरव्याशा । अनुदात्तस्य किम् । कुमार्यत्र । अत्रेति लित्स्वरेणाद्युदात्तम् ॥

## एकादेश उदात्तेनोदात्तः ॥ ५ ॥

उदात्तेन सह योनुदात्तस्यैकादेशः स उदात्तः स्यात् । अग्नि औ अग्नी । वायू । उदात्तेन किम् । पचन्ति । लसार्वधातुकानुदात्तत्वे द्वयोरनुदात्तयोरेकादेशः ॥

## स्वरितो वानुदात्ते पदादौ ॥ ६ ॥

अनुदात्ते पदादौ परत उदात्तेन सहैकादेशः स्वरित उदात्तो वा स्यात् । वसुकः असि वसुकोसि । असीति ति-

---

## पूर्वत्रासिद्धम् ॥ १ ॥

आध्यायसमाप्तेरयमधिकारः। सपादसप्ताध्याय्यां विहितं कार्यं प्रति त्रिपाद्यां विहितं कार्यमसिद्धम्। इतः परमप्युत्तरोत्तरकार्यं पूर्वपूर्वकार्यं प्रत्यसिद्धं ज्ञेयम्। असिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च। राजभ्याम्। राजभिः। नलोपे कृते तस्यासिद्धत्वात् दीर्घैस्भावौ न स्तः। अमुष्मै। अमुष्मात्। उत्वमत्वयोरसिद्धत्वाददन्तत्वमाश्रित्य स्मायादयः स्युः। कार्यकालं संज्ञापरिभाषमिति षष्ठीस्थाने योगे(१।१।४९)त्यादौ नासिद्धत्वम्। तुल्यबलत्वाभावाद्विप्रतिषेधे पर(१।४।२)मिति न प्रवर्तते। दोग्धेत्यत्र वचनसामर्थ्यात् ढत्वं प्रति घत्वं नासिद्धम्॥

## नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ॥ २ ॥

सुबाश्रितविधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो नान्यत्र। सुब्विधौ राजभ्यां राजभिः। स्वरविधौ पञ्चदण्डी। अत्र नलोपस्यासिद्धत्वादिगन्ते द्विगाविति प्रकृतिस्वरो नास्ति। संज्ञाविधौ पञ्च ब्राह्मण्यः। नलोपस्यासिद्धत्वात् षट्संज्ञायां न षट्स्वस्रादिभ्य(४।१।१०)इति टाप् न। तुग्विधौ वृत्रहभ्याम्। नलोपस्यासिद्धत्वात् ह्रस्वस्य पिति कृती(६।१।७१)ति तुक्। कृति किम्। वृत्रहच्छत्रम्। नियमः किम्। राजाश्वः। राजायते॥

नामन्त्रिते समानाधिकरणे सामान्यवचनम् ॥ ७३ ॥

समानाधिकरणे आमन्त्रिते परतः सामान्यवचनमामन्त्रितं नाविद्यमानवत्स्यात् । अग्ने गृहपते । पूर्वस्य विद्यमानत्वादुत्तरस्य निघातः । आमन्त्रिते किम् । देवदत्त पचसि । समानाधिकरणे किम् । देवदत्त यज्ञदत्त । सामान्यवचनं किम् । पर्याये न निषेधः । इडे रन्ते दिते सरस्वति प्रिये एतानि ते अघ्निये नामानीति । पर्याया एते ॥

विभाषितं विशेषवचने बहुवचनम् ॥ ७४ ॥

विशेषवचने समानाधिकरणे आमन्त्रिते परे बहुवचनमामन्त्रितमविद्यमानवद्वा स्यात् । हे देवाः शरण्याः । हे ब्राह्मणा वैयाकरणाः । सामान्यवचनमित्येव विशेषवचन इति सिद्धे विशेषवचन इति स्पष्टार्थम् । बहुवचनं किम् । देव शरण्य । पूर्वसूत्रेण । नित्यनिषेधः ॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्नम्भट्टस्य कृतौ व्याकरणमिताक्षरायामष्टमस्याध्यायस्य प्रथमः पादः ॥

पचन्ति पूति। प्रपचन्ति पूति॥

## गतिर्गतौ॥ ७०॥

गतौ परे गतिरनुदात्तः स्यात्। अभ्युद्धरति। गतिः किम्। देवदत्तः प्रपचति। गतौ किम्। आमन्द्रैरिन्द्र हरिभिर्याहि॥

## तिङि चोदात्तवति॥ ७१॥

उदात्तवति तिङि परे गतिरनुदात्तः। यत्प्रकरोति। अत्र तिङ्ग्रहणं व्यर्थम् अन्यथा प्रपचतितरामित्यत्रामन्ते परे गतिरनुदात्तो न स्यात् न चैवमामन्द्रैरित्यत्र प्रसङ्गः यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसञ्ज्ञा न च मन्द्रशब्दं प्रति क्रियायोगः किं तु याहीत्येतत्प्रतीत्याकरे। उदात्तवति किम्। प्रकरोति॥

## आमन्त्रितं पूर्वमविद्यमानवत्॥ ७२॥

पूर्वमामन्त्रितमविद्यमानवत्स्यात्। आमन्त्रिततिङ्घातयुष्मदस्मदादेशादयः प्रयोजनम्। देवदत्त यज्ञदत्तेत्यत्र पदात्परस्यामन्त्रितस्य न निघातः। देवदत्त पचमीत्यत्र तिङ्ङतिङः(८।१।२८) इति न निघातः। देवदत्त तव ग्रामः स्वम् देवदत्त मम स्वमित्यादौ युष्मदस्मदादेशा न स्युः। एवं यावद्देवदत्त पचसि देवदत्त जातु पचसि अहो देवदत्त पचसि उताहो देवदत्त पचसीत्यादौ पूजायां नानन्तरम्(८।१।३७) जात्वपूर्वम्(८।१।४७) आहोउताहो चानन्तर(८।१।४९)मित्यादयः स्युः। आमन्त्रितं किम्। देवदत्तः पचति। पूर्वं किम्। देवदत्तेत्येतदाद्युदात्तत्वेनाविद्यमानवत्। पूर्वमिति वचनात्परकार्य एवाविद्यमानत्वं न स्वकार्ये॥

ब्राह्मणः । यत्कामास्ते जुहुमः । यद्यङ्गायुर्याति ॥ पञ्चमीनिर्देशेपि व्यवहितेपि कार्यमत्रेष्यते ॥

पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ॥ ६७ ॥

पूजनेभ्यः काष्ठादिभ्यः परं पूजितमनुदात्तं स्यात् । काष्ठाध्यायः । वेशाध्यायः । सुभगवचनो वेशशब्दः । अनुज्ञाताध्यापकः भृशाध्यापक इत्यर्थः । समासान्तोदात्तत्वापवादोयम् । पूजनादित्येव पूजितग्रहणे सिद्धेऽनन्तरप्रतिपत्त्यर्थं पूजितग्रहणम् । इद मेव ज्ञापकम् इह प्रकरणे पञ्चमीनिर्देशेपि व्यवहितग्रहणस्य ॥

सगतिरपि तिङ् ॥ ६८ ॥

सगतिरगतिरपि तिङ् पूजनेभ्यः काष्ठादिभ्यः परोनुदात्तः स्यात् । यत्काष्ठं पचति यत्काष्ठं प्रपचति । तिङ्ङतिङः(८।१।२८) इत्यस्य निपातैर्यद्यदी(८।१।३०)ति निषेधे पुनरिदं विधानम् । गतिरत्रोपसर्ग एव । नेह यत्काष्ठं शुक्लीकरोति ॥

कुत्सने च सुप्यगोत्रादौ ॥ ६९ ॥

पदादिति निवृत्तम् । कुत्सने सुप्यगोत्रादौ परतः सगतिरगतिश्च तिङनुदात्तः स्यात् । पचति पूति । प्रपचति पूति । कुत्सने किम् । पचति शोभनम् । सुपि किम् । पचति क्लिश्नाति । अगोत्रादौ किम् । पचतिगोत्रम् ॥

क्रियाकुत्सन इति वाच्यम् ॥

कर्तुः कुत्सने मा भूत् । पचति पूतिः ॥

पूतिश्च चानुबन्ध इति वाच्यम् ॥

तेनान्तोदात्तत्वम् ॥

बह्वर्थमनुदात्तं वेति वाच्यम् ॥

धारणे प्रयुज्यते । गम्यमानार्थत्वादप्रयोग एव लोपः । समानकर्तृके चलोपः । नानाकर्तृके अहलोपः । अह केवलार्थः । चः समुच्चयार्थः । देवदत्त एव ग्रामं गच्छतु । स एवारण्यं गच्छतु । अरण्यं चेत्यर्थः । अहलोपे देवदत्त एव ग्रामं गच्छतु यज्ञदत्त एवारण्यं गच्छतु । ग्राममह गच्छतु केवलमित्यर्थः । अवधारणे किम् । देवदत्त क्व भोक्ष्यसे । क्वाध्येष्यसे । अनवक्लृप्तावेवकारः ॥

## चादिलोपे विभाषा ॥ ६३ ॥

चादिपञ्चकलोपे प्रथमा तिङ्विभक्तिर्वा नानुदात्ता । चलोपे शुक्ला व्रीहयो भवन्ति कृष्णा भवन्ति । वालोपे व्रीहिभिर्यजेत यवैर्यजेत ॥

## वैवावेति च च्छन्दसि ॥ ६४ ॥

आभ्यां युक्ता प्रथमा तिङ्विभक्तिर्वा नानुदात्ता छन्दसि । अहर्वै देवानामासीत् रात्रिरसुराणामासीत् । अयं वाव हस्त आसीन्नेतर आसीत् ॥

## एकान्याभ्यां समर्थाभ्याम् ॥ ६५ ॥

आभ्यां युक्ता प्रथमा तिङ्विभक्तिर्वा नानुदात्ता छन्दसि । प्रजामेका जिन्वति । प्रजामेका रक्षति । अन्यामित्यर्थः । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति । समर्थाभ्यां किम् । एको देवानुह तिष्ठत । सङ्ख्यावाच्यत्र ॥

## यद्वृत्तान्नित्यम् ॥ ६६ ॥

प्रथमा छन्दसीति च निवृत्तम् । यत्र पदे यद्वर्तते तत्सर्वं यद्वृत्तम् । यद्वृत्तात्परं तिङन्तं नित्यं नानुदात्तम् । यस्मै करोति

पचतिपचति वा । अगतेः किम् । देवदत्तः प्रपचतिचन । अस्मिन् सूत्रे प्रगतिरपि तिङि(८।१।६८)सूत्र च गतिग्रहणे उपसर्गो ग्राह्यः । शुक्लीकरोति चन ॥

## चादिषु च ॥ ५८ ॥

न चवाहे(८।१।२४)ति सूत्रोक्ताः पञ्चेह गृह्यन्ते । एषु परेष्वगतेः परं तिङन्तं नानुदात्तम् । देवदत्तः पचति च । पचति वा । पचति ह । पचत्यह । पचत्येव वा । अगतेः किम् । देवदत्तः प्रपचति च ॥

## चवायोगे प्रथमा ॥ ५९ ॥

आभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता । पचति वा खादति वा । योगग्रहणात्पूर्वाभ्यामपि योगे स्यात् । प्रथमाग्रहणात् द्वितीयादेस्तिङन्तस्य निघात एव ॥

## हेति क्षियायां ॥ ६० ॥

हेत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता स्याद्धर्मव्यतिक्रमे गम्ये । स्वयं ह रथेन याति । गुरुं पदातिं गमयति । प्रथमस्य तिङन्तस्य निघातप्रतिषेधः ॥

## अहेति विनियोगे च ॥ ६१ ॥

अहेत्यनेन युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता विनियोगे क्षियायां च । दानाप्रयोजने नियोगो विनियोगः । त्वमह ग्रामं गच्छ ३ । त्वमहारण्यं गच्छ ३ । स्वयमह रथेन याति । गुरुमह पदातिं गमयति ॥

## चाहलोप एवेत्यवधारणम् ॥ ६२ ॥

चाहयोर्लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता स्याद्देवश्चेदव-

## विभाषितं सोपसर्गमनुत्तमम् ॥ ५३ ॥

अनुत्तमं सोपसर्गं लोडन्तं प्रागिवषये वा नानुदात्तम् । आगच्छ देवदत्त ग्रामं प्रविशेनम् । सोपसर्गं किम् । आगच्छ देवदत्त ग्रामं पश्य । अनुत्तमं किम् । आगच्छ देवदत्त ग्रामं प्रविशानि ॥

## हन्त च ॥ ५४ ॥

हन्तेन युक्तं लोडन्तं वा नानुदात्तम् । हन्त प्रपश्य । सोपसर्गेव । हन्त पश्य । अनुत्तममेव । हन्त प्रपश्यानि । निपातैर्य(८।१।३०)दित्यादिना नित्यमेव ॥

## आम एकान्तरमामन्त्रितमनन्तिके ॥ ५५ ॥

आमः परमेकान्तरमामन्त्रितमनन्तिके नानुदात्तम् । आं पचसि देवदत्त । आमः किम् । शाकं पचसि देवदत्त । एकान्तरं किम् । आं प्रपचसि देवदत्त । अनन्तिक किम् । आं पचसि देवदत्त ॥

## यद्धितुपरं छन्दसि ॥ ५६ ॥

आमन्त्रितं न स्वर्यते । यदादिपरं तिङन्तं नानुदात्तं छन्दसि । अस्रजा यदङ्गिरः । उशन्ति हि । आख्यास्यामि तु ते । निपातैरित्यादिभिर्निषेधे सिद्धे एतैरेव पदैर्योगे नान्यैरिति नियमार्थमिदम् । जाये स्व रोहावेहि । इहीति गत्यर्थ लोटा युक्तस्य रोहावेति लोटो न निघातः ॥

## चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ॥ ५७ ॥

एषु परेष्वगतेः परं तिङन्तं नानुदात्तम् । देवदत्तः पचति चन । पचति चित् । पचतीव । पचतिगोत्रम् । पचतिकल्पम् ।

# विज्ञापनम् ।

## बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह :अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ४ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड १ ) | ४ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |

सानयोरन्तोदात्तः स्याद्बहुव्रीहौ । इदं प्रथममागमनं यस्य इदंप्रथमः । एतत्प्रथमः । तत्प्रथमः । इदंद्वितीयः । एतद्द्वितीयः । तद्द्वितीयः । बहुव्रीहौ किम् । अनेन प्रथमः इदंप्रथमः । तृतीये(२।१।३०)ति योगविभागात्समासः । इदमादिभ्यः किम् । यत्प्रथमः । प्रथमपूरणयोः किम् । तानि बहून्यस्य तद्बहुः । क्रियागणने किम् । अयं प्रथम एषां इदम्प्रथमाः । इदम्प्रधाना इत्यर्थः । द्रव्यगणनमेतत् । कापि तु प्रथमपूरणयोरेव कार्यित्वात्कपि पूर्वमन्तोदात्तम् । इदम्प्रथमकाः । बहुव्रीहाविति वनं समासे(६।२।१७८) इति यावदधिक्रियते ॥

सङ्ख्यायाः स्तनः ॥ १६३ ॥

सङ्ख्यायाः परः स्तनोन्तोदात्तो बहुव्रीहौ । द्विस्तना । सङ्ख्यायाः किम् । दर्शनीयस्तना । स्तनः किम् । द्विशिराः ॥

विभाषा छन्दसि ॥ १६४ ॥

छन्दसि प्रागुक्तं वा । द्विस्तनां करोति । चतुःस्तनाम् ॥

संज्ञायां मित्राजिनयोः ॥ १६५ ॥

एतयोरुत्तरपदयोः अन्तोदात्तः स्यात्संज्ञायां बहुव्रीहौ । वेदमित्रः । वृकाजिनः । संज्ञायां किम् । स्ते(प्रि)यमित्रः । महाजिनः ॥

ऋषिप्रतिषेधो मित्रे ॥

विश्वामित्र ऋषिः ॥

व्यवायिनोन्तरम् ॥ १६६ ॥

व्यवधायकवाचिनः परमन्तरमन्तोदात्तं बहुव्रीहौ । वस्त्रमन्तरं व्यवधायकं यस्य वस्त्रान्तरः । व्यवायिनः किम् ।

आत्मा स्वभावोन्यो यस्य सः आत्मान्तरः। सर्वनाम्नोपि परनिपात एतत्सूत्रबलात्॥

मुखं स्वाङ्गम्॥ १६७॥

स्वाङ्गवाचि मुखमुत्तरपदमन्तोदात्तं स्यात् बहुव्रीहौ। गौरमुखः। स्वाङ्गं किम्। दीर्घमुखा शाला॥

नाव्ययदिक्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः॥१६८॥

एभ्यो मुखं नान्तोदात्तं स्यात्। उच्चैर्मुखः। प्राङ्मुखः। गोमुखः। महामुखः। स्थूलमुखः। मुष्टिमुखः। पृथुमुखः। वत्समुखः। यथायोगं पूर्वपदप्रकृतिस्वर एव। गोमुष्टिवत्सेभ्यः उपमानलक्षणविकल्पस्यापि निषेधः॥

निष्ठोपमानादन्यतरस्याम्॥ १६९॥

आभ्यां मुखमन्तोदात्तं स्याद्बहुव्रीहौ। प्रक्षालितमुखः। पक्षे निष्ठोपसर्गपूर्व(६।२।११०) इति पूर्वपदान्तोदात्तत्वम्। तदभावपक्षे पूर्वपदप्रकृतिस्वरेण गतिस्वर इति त्रैस्वर्यम्। सिंहमुखः॥

जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः॥ १७०॥

आच्छादनवर्जिताज्जातिवाचिनः कालवाचिनः सुखादिभ्यश्च कृतादिवर्जक्तान्तमन्तोदात्तं स्यात् बहुव्रीहौ। पलाण्डुभक्षितः। सुरापीतः। मासजातः। सुखजातः। दुःखजातः। जात्यादिभ्यः किम्। पुत्रजातः। अनाच्छादनात्किम्। वस्त्रच्छन्नः। कृतादिवर्जं किम्। कुण्डकृतः। कुण्डमितः। कुण्डप्रतिपन्नः। सुखादिभ्यः कर्तृवेदनाया(३।१।१८)मित्यत्र सुखादयः पठ्यन्ते॥

वा जाते ॥ १७१ ॥

जात्यादिभ्यो जातस्यान्तोदात्तो वा स्याद्बहुव्रीहौ । दन्तजातः । मासजातः । सुखजातः ॥

नञ्सुभ्याम् ॥ १७२ ॥

आभ्यां परं पदमन्तोदात्तं स्याद्बहुव्रीहौ । अयवः सुयवो देशः । कृते समासान्तेयं स्वर इष्यते । अनृचः ॥

कपि पूर्वम् ॥ १७३ ॥

नञ्सुभ्यां कपि पूर्वमन्तोदात्तं स्यात् । अकुमारिकः । सुकुमारिकः ॥

ह्रस्वान्तेन्त्यात्पूर्वम् ॥ १७४ ॥

ह्रस्वान्त उत्तरपदे बहुव्रीहौ नञ्सुभ्यां कप्युत्तरपदमन्त्यात्पूर्वमुदात्तं स्यात् । अयवकः । अव्रीहिकः । सुव्रीहिकः । पूर्वमिति वर्तमाने पुनः पूर्वग्रहणं नियमार्थम् । तेनाज्ञकः सुज्ञक इत्यत्र कपि पूर्व(६।२।१७३)मिति बाधित्वा कबन्तस्यैवान्तोदात्तत्वम् ॥

बहोर्नञ्वदुत्तरपदभूम्नि ॥ १७५ ॥

उत्तरपदार्थबहुत्वे वर्तमानात् बहोः परस्य नञ इव स्वरः स्यात् नञ्सुभ्याम् । बहुयवः । कपि पूर्वम्(६।२।१७३) । बहुकुमारिकः । ह्रस्वान्तेन्त्यात्पूर्वम् । (६।२।१७४) बहुव्रीहिकः । नञो जरमर (६।२।११६) । बहुजरसी इत्यादि । उत्तरपदभूम्नि किम् । बहुषु मनोस्य बहुमनाः ॥

न गुणादयोवयवाः ॥ १७६ ॥

वहोः परेवयववाचिनो गुणादयो नान्तोदात्ताः स्युः। वहुगुणा रज्जुः। वहवयवेऽसर्थः। पूर्वपदप्रकृतिस्वर एव। गुणादिराकृतिगणः। अवयवाः किम्। वहुगुणो ब्राह्मणः। अध्ययनादयोऽत्र गुणाः॥

उपसर्गात्स्वाङ्गं ध्रुवमपर्शु॥ १७७॥

पर्शुवर्जितं ध्रुवं स्वाङ्गमुपसर्गात्परमन्तोदात्तं स्याद्बहुव्रीहौ। प्रपृष्ठः। प्रोदरः। ध्रुवमेकरूपम्। उपसर्गात्किम्। दर्शनीयललाटः। ध्रुवं किम्। उद्बाहुः क्रोशति। अपर्शु किम्। उत्पर्शुः॥

वनं समासे॥ १७८॥

उपसर्गात्परं वनं समासमात्रेन्तोदात्तम्। प्रवणम्। प्रनिरन्त(८।४।५) इति णत्वम्॥

अन्तः॥ १७९॥

अन्तश्शब्दाचोत्तरं वनमन्तोदात्तं स्यात्। अन्तर्वणो देशः॥

अन्तश्च॥ १८०॥

उपसर्गादन्तशब्दोऽन्तोदात्तः समासे। समन्तः। पर्यन्तः। प्रादिसमासो वहुव्रीहिर्वा॥

न निविभ्याम्॥ १८१॥

आभ्यामन्तशब्दो नान्तोदात्तः। न्यन्तः। व्यन्तः। पूर्वपदप्रकृतिस्वरत्वे उदात्तस्वरितयो(८।२।४)रिति स्वरितः॥

परेरभितो भावि मण्डलम्॥ १८२॥

अभित उभयतः भावोऽस्यास्तीति अभितोभावि कूलादिकं गृह्यते। परेः परमभितोभाविवचनं मण्डलं चान्तोदात्तं स्यात्। परिकूलम्। परितीरम्। परिमण्डलम्। वहुव्रीहिः

प्रादिसमासोऽव्ययीभावो वा । अव्ययीभावे परिप्रत्युपे(६।२।३३)-
त्येतदनेन बाध्यते ॥

## आद्युदात्तं स्वाङ्गं संज्ञायाम् ॥ १८३ ॥

प्रात्परमस्वाङ्गवाच्यन्तोदात्तं स्यात्संज्ञायाम् । प्रगृहम् ।
प्रद्वारम् । स्वाङ्गं किम् । प्रहस्तः । संज्ञायां किम् । प्रपीठम् ॥

## निरुदकादीनि च ॥ १८४ ॥

एतान्यन्तोदात्तानि । निरुदकम् । निरुपलमित्यादि ।
निरुदकादिराकृतिगणः ॥

## अभेर्मुखम् ॥ १८५ ॥

अभेर्मुखमन्तोदात्तम् । अभिमुखम् ॥
उपसर्गात्स्वाङ्गमिति सिद्धेऽध्रुवार्थमस्वाङ्गार्थं चेदम् ॥
अभिमुखा शाला ॥

## अपाच्च ॥ १८६ ॥

अपान्मुखमन्तोदात्तम् । अपमुखम् । अव्ययीभावे प-
रिप्रत्युपापा(६।२।३३) इत्यस्यापवादः । योगविभाग उत्तरार्थः ॥

## स्फिगपूतवीणाञ्जोऽध्वकुक्षि सीरनाम नाम च ॥१८७॥

अपात्पराणि स्फिगपूतादीनि सीरनामानि नामशब्दश्चा-
न्तोदात्तानि स्युः । अपस्फिगमपपूतमपवीणमपाञ्जः अपा-
ध्वा । उपसर्गादध्वन(५।४।८५) इति समासान्ते के चित
(६।१।१६३) इत्येव सिद्धे समासान्तविधेरनित्यत्वमध्वग्रहणेन
ज्ञाप्यते । अपकुक्षि । अपसीरम् । अपलाङ्गलम् । अपनाम ।
सर्वत्र बहुव्रीहिरव्ययीभावः प्रादिसमासो वा ॥

स्विगपूतकुसीणामबहुव्रीह्यर्थमध्रुवार्थमस्त्राङ्गार्थं च ग्रहणम् ॥

## अधेरुपरिस्थम् ॥ १८८ ॥

अधेरुत्तरमुपरिस्थवाच्यन्तोदात्तं स्यात् । अधिकेशः । अधिकर्णः । आधदन्तः । प्रादिसमासः । दन्तस्योपरि योन्यो दन्तः सोधिदन्तः । उपरि किम् । अधिकरम् ॥

## अनोरप्रधानकनीयसी ॥ १८९ ॥

अनोः परमप्रधानवाचि कनीयश्चान्तोदात्तं स्यात् । अनुगतो ज्येष्ठम् अनुज्येष्ठः । पूर्वपदार्थप्रधानः प्रादिसमासः । अनुगतः कनीयान् अनुकनीयान् । उत्तरपदार्थप्रधानोयम् । प्रधानार्थं च कनीयोग्रहणम् । अप्रधानकनीयसी किम् । अनुज्येष्ठः ॥

## पुरुषश्चान्वादिष्टः ॥ १९० ॥

अनोः परः पुरुषोन्वादिष्टवाच्यन्तोदात्तः । अन्वादिष्टः पुरुषोनुपुरुषः । अन्वादिष्टोन्वाचितः कथितानुकथितो वा । अन्वादिष्टः किम् । अनुगतः पुरुषोनुपुरुषः ॥

## अतेरकृत्पदे ॥ १९१ ॥

अतेः परमकृदन्तं पदं चान्तोदात्तम् । अत्यङ्कुशो नागः । अतिकशोश्वः । पद । अतिपदा शक्वरी ॥

अकृत्पदे इति परिसज्यातेर्धातुलोप इति वाच्यम् ॥

इह मा भूत् । शोभनो गार्ग्यः अतिगार्ग्यः । इह च यथा स्यात् अतिक्रान्तः कारकमतिकारकः । अतिपदा शक्वरी ॥

## नेरनिधाने ॥ १९२ ॥

प्रकाशेर्थे नेरुत्तरपदमन्तोदात्तं स्यात् । निश्चितं मूलं निर्मूलम् । न्यक्षम् । प्रादिसमासो बहुव्रीहिर्वा । अनिधाने किम् । निवाग्न्यपालः । निहितवागित्यर्थः ॥

## प्रतेरंश्वादयस्तत्पुरुषे ॥ १९३ ॥

प्रतेः परे एतेन्तोदात्ताः स्युस्तत्पुरुषे । प्रतिगतोंशुः प्रत्यंशुः । प्रतिजन इत्यादि । तत्पुरुषे किम् । प्रतिगता अंशवो यस्य प्रत्यंशुः ॥

## उपाद् द्व्यजजिनमगौरादयः ॥ १९४ ॥

उपाद् द्व्यचूकमजिनं चान्तोदात्तं स्याद् तत्पुरुषे गौरादीन्वर्जयित्वा । उपगतो देवः उपदेवः । उपाजिनः । अगौरादयः किम् । उपगौरः । तत्पुरुषे किम् । उपगतो देवोस्य उपदेवः ॥

## सोरवक्षेपणे ॥ १९५ ॥

सोरुत्तरमन्तोदात्तं स्यात्तत्पुरुषे निन्दायाम् । इह खल्विदानीमास्व सुस्थण्डिले सुस्फिगाभ्यां सुप्रत्यवसितः । यद्यप्यत्र सुः पूजायामेव तथापि असूययैवमभिधानान्निन्दात्र वाक्याद्गम्यते । निन्दायां किम् । सुतृणेषु । सोः किम् । कुब्राह्मणः ॥

## विभाषोत्पुच्छे ॥ १९६ ॥

अस्यान्तोदात्तो वा स्यात् । उत्क्रान्तः पुच्छादुत्पुच्छः । उत्पुच्छयतेरजन्तस्यापि थाथादिस्वरं बाधित्वायं विकल्प इष्यते । तत्पुरुष इत्येव । उदस्तं पुच्छमस्य उत्पुच्छः ॥

## द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ॥ १९७ ॥

आभ्यां पादादिषु परेषु यो बहुव्रीहिस्तस्यान्तोदात्तो वा स्यात् । द्वौ पादौ यस्य द्विपात् । त्रिपात् । द्विदन् । त्रिदन् ।

द्विमूर्धा । त्रिमूर्धा । पादिति कृताकारलोपः । दत्रादेशः । अकृतसमासान्तो मूर्द्धशब्दश्च गृह्यते । पादत्साहचर्यात्कृतसमासान्त एव मूर्धेष्विति ग्राह्ये मूर्द्धास्विति समासान्तविधेरनित्यत्वं ज्ञापयति । तेन द्विमूर्द्धः द्विमूर्द्धा इत्युभयत्रायं स्वरः । बहुव्रीहेः कार्यित्वात्तदेकदेशत्वात्समासान्तस्य विकल्पसिद्धिः । द्वित्रिभ्यां किम् । कल्याणमूर्धा । पादादिषु किम् । द्विहस्तः । तत्पुरुषे किम् । द्वयोर्मूर्धा द्विमूर्धा ॥

## सक्थं चाक्रान्तात् ॥ १९८ ॥

आक्रान्तशब्दात्परो सक्थान्तोदात्तो वा स्यात् । सक्थमिति बहुव्रीहौ कृतषजन्तं गृह्यते । गौरसक्थः । अक्रान्तात्किम् । चक्रसक्थः । नित्यं चित्स्वरः ॥

## परादिश्छन्दसि बहुलम् ॥ १९९ ॥

छन्दसि परादिरुदात्तः स्यात् बहुलम् । चित्पतिः वाक्पतिः ॥

परादिश्च परान्तश्च पूर्वान्तश्चापि गृह्यते ।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं यतः ॥

अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम् ॥
त्रिचक्रेण त्रिवृता रथेन त्रिमधु(बन्धु)रेण ॥
पूर्वपदान्तोदात्तत्वे मरुद्वृतादीनां छन्दसि ॥
मरुद्वृतः ॥
पूर्वपदाद्युदात्तत्वे दिवोदासादीनाम् ।
दिवोदासायेत्यादि । सर्वसंग्रहः श्लोकेन कृतः ॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यश्रीराघवसोमयाजिकुलावतंस-
श्रीतिरुमलाचार्यसूनोरन्नंभट्टस्य कृतौ व्याकरणमिता-
क्षरायां षष्ठस्याध्यायस्य द्वितीयः पादः ॥

## अलुगुत्तरपदे ॥ १ ॥

अधिकारोयम् । अलुगधिकारः प्रागानङः । उत्तरपदाधिकारः प्रागङ्गाधिकारात् ॥

## पञ्चम्याः स्तोकादिभ्यः ॥ २ ॥

एभ्यः पञ्चम्या अलुक् स्यात् उत्तरपदे । स्तोकान्मुक्तः । अन्तिकादागत इत्यादि । उत्तरपदे किम् । निर्गतः स्तोकात् निःस्तोकः । स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इति द्विवचनबहुवचनान्तानामनभिधानान्न समासः । तेनैकपद्यमैकस्वर्यं च न ॥

ब्राह्मणाच्छंसिनश्छन्दस्यलुक् ॥

ब्राह्मणाच्छंसी ऋत्विक् ॥

## ओजःसहोम्भस्तमसस्तृतीयायाः ॥ ३ ॥

एभ्यस्तृतीयाया अलुगुत्तरपदे । ओजसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । तमसाकृतम् ॥

अञ्जसोपि ॥

अञ्जसाकृतम् ॥

पुंसानुजो जनुषान्ध इत्यत्रालुगिष्यते ॥

## मनसः संज्ञायाम् ॥ ४ ॥

मनसस्तृतीयाया अलुक् संज्ञायाम् । मनसागुप्तः । मनसागन्ता । संज्ञायां किम् । मनोदत्ता कन्या ॥

## अज्ञायिनि च ॥ ५ ॥

अज्ञायिन्युत्तरपदे मनसस्तृतीयाया अलुक् । मनसा अज्ञातुं शीलमस्य मनसाज्ञायी ॥

## आत्मनश्च पूरणे ॥ ६ ॥

पूरणे परे आत्मनस्तृतीयाया अलुक् । आत्मनापञ्चमः । तृतीये(२।१।३०)ति योगविभागात्समासः । प्रकृत्यादिभ्यश्चे-(२।३।१८वा)त्युपसङ्ख्यानात्तृतीया । जनार्दनस्त्वात्मचतुर्थ एवेत्यत्र आत्मा चतुर्थोऽस्येति बहुव्रीहिः । न तृतीयासमासः ॥

## वैयाकरणाख्यायां चतुर्थ्याः ॥ ७ ॥

आत्मनश्चतुर्थ्या अलुक् स्याद्वैयाकरणसंज्ञायाम् । आत्मनेपदम् । आत्मनेभाषा । चतुर्थी(२।१।३६)तियोगविभागात्समासः ॥

## परस्य च ॥ ८ ॥

अस्माच्चतुर्थ्या अलुग्वैयाकरणाख्यायाम् । परस्मैपदम् । परस्मैभाषः ॥

## हलदन्तात्सप्तम्याः संज्ञायाम् ॥ ९ ॥

हलन्तादन्ताच्च सप्तम्या अलुक् संज्ञायाम् । युधिष्ठिरः । त्वचिसारः । गविष्ठिर इत्यत्र गवियुधिभ्यां स्थिर(८।३।९५) इति निपातनादलुक् । अदन्तात् आरण्येतिलकाः । वनेकिंशुकाः(कशेरु)-काः । हलदन्तात्किम् । नद्यां कुक्कुटिका नदीकुक्कुटिका । भूम्यां पाशो भूमिपाशः । संज्ञायां किम् । अक्षशौण्डः ॥

हृद्द्युभ्यामसंज्ञायामपि ॥

हृदिस्पृक् । दिविस्पृक् ॥

## कारनाम्नि च प्राचां हलदौ ॥ १० ॥

कारः स्वामिग्राह्यो भागः। प्राचां देशे यत्कारनाम तत्र हलादावुत्तरपदे हलन्तादन्ताच्च सप्तम्या अलुक् स्यात्। स्तूपेशाणकाः। दृषदिमाषकाः। कारविशेषस्य संज्ञेयम्। पूर्वेण प्राप्ते विभाषेयम्। नियमत्रयमत्रेष्यते। कारनाम्न्येव। नेह। अभ्याहिते पशुः अभ्याहितपशुः। कारादन्यस्य देयस्य संज्ञेयम्। प्राचामेव। नेह। यूथे पशुः यूथपशुः। उदीचां कारसंज्ञेयम्। हलादावेव। नेह। अविकटे उरणः अविकटोरणः। हलदन्तात्किम्। नद्यां दोहनी नदीदोहनी॥

## मध्याद्गुरौ ॥ ११ ॥

मध्यात्सप्तम्या अलुक् गुरौ परे। मध्येगुरुः॥

## अन्ताच्च॥

अन्तेगुरुः। सप्तमी(२।१।४०)ति योगविभागात्समासः॥

## अमूर्धमस्तकात्स्वाङ्गादकामे ॥ १२ ॥

स्वाङ्गात्सप्तम्या अलुक् स्यात् न तु कामे। कण्ठे कालोस्य कण्ठेकालः। उरसिलोमा। उदरेमणिः। अमूर्द्धमस्तकात्किम्। मूर्द्धशिखः। मस्तकशिखः। स्वाङ्गात्किम्। अक्षशौण्डः। अकामे किम्। मुखे कामोस्य मुखकामः। हलदन्तादित्येव। अङ्गुलित्राणः। जङ्घाबलिः॥

## बन्धे च विभाषा ॥ १३ ॥

घञन्तो बन्धशब्दोत्र गृह्यते। तस्मिन् परतो हलदन्तात्सप्तम्या अलुग्वा स्यात्। हस्तेबन्धः। हस्तबन्धः। चक्रेबन्धः। चक्रबन्धः। उभयत्र विभाषेयम्॥

## तत्पुरुषे कृति बहुलम् ॥ १४ ॥

कृदन्त उत्तरपदे सप्तम्या बहुलमलुक्स्यात्तत्पुरुषे। स्तम्बेरमः। कर्णेजपः। इह न। कुरुचरः॥

## प्रावृट्छरत्कालदिवां जे ॥ १५ ॥

जे परे एभ्यः सप्तम्या अलुक्। प्रावृषिजः। शरदिजः। कालेजः। दिविजः। पूर्वस्यैव प्रपञ्चोयम्॥

## विभाषावर्षक्षरशरवरात् ॥ १६ ॥

एभ्यः सप्तम्या अलुग्वा उत्तरपदे। वर्षेजः। क्षरेजः। शरेजः। वरेजः। पक्षे वर्षज इत्यादि॥

## घकालतनेषु कालनाम्नः ॥ १७ ॥

एषु कालनाम्नः सप्तम्या अलुग्वा। पूर्वाह्णेतमे। पूर्वाह्णतरे। पूर्वाह्णतमे। काल। पूर्वाह्णेकाले। पूर्वाह्णकाले। तन। पूर्वाह्णेतने। पूर्वाह्णतने। कालनाम्नः किम्। शुक्लतरे। हलदन्तादित्येव। रात्रितरायाम्। उत्तरपदाधिकारे प्रत्ययेन तदन्तविधिर्नेष्यते। लेखग्रहणाल्लिङ्गात्। तेन घतनाभ्यां तन्न॥

## शयवासवासिष्वकालात् ॥ १८ ॥

एष्वकालवाचिनः सप्तम्या अलुग्वा। खेशयः। ग्रामेवासः। ग्रामेवासी। पक्षे खशय इत्यादि। अकालात्किम्। पूर्वाह्णशयः। हलदन्तादित्येव। भूमिशयः॥

### अपो योनियन्मतुषु॥

अप्सुयोनिः। अप्सव्यः। अप्सुमतीः। दिगादित्वाद्यत्। योगविभागात्सप्तमीसमासः॥

## नेन्सिद्धबध्नातिषु च ॥ १९ ॥

एषु सप्तम्या अलुग्न स्यात् । तत्पुरुषे कृती(६।३।१४)ति प्राप्ति-र्निषिध्यते । स्थण्डिलशायी । साङ्काश्यसिद्धः । बध्नातीति धातुनिर्देशः । चक्रबन्धनम् । चक्रबन्ध इति केचिदुदाहरन्ति । तत्राजन्तो बन्ध शब्दः । घञन्ते बन्धे च विभाषे(६।३।१३)त्यत्र भवति ॥

## स्थे च भाषायाम् ॥ २० ॥

स्थे परतः सप्तम्या अलुग्न । समस्थः । विषमस्थः । भाषायां किम् । कृष्णोस्याखरेष्ठः । पूर्वपदा(८।४।३)दिति षत्वम् ॥

## षष्ठ्या आक्रोशे ॥ २१ ॥

षष्ठ्या अलुक् स्यान्निन्दायाम् । चौरस्य कुलम् । आक्रोशे किम् । ब्राह्मणकुलम् ॥

वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु ॥

वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः ॥

अमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च ॥

अमुष्यापत्यमामुष्यायणः । नडादिभ्यः फक्(४।१।९९) । अमुष्यपुत्रस्य भावः । मनोज्ञादित्वाद्वुञ् । अमुष्यपुत्रिका । तथा अमुष्यकुलिका ॥

देवानां प्रिय इति अलुक् मूर्खे ॥

शेफपुच्छलाङ्गूलेषु शुनः ॥

शुनःशेफः । शुनःपुच्छः । शुनोलाङ्गूलः ॥

दिवश्च दासे ॥

दिवोदासः ॥

## पुत्रेऽन्यतरस्याम् ॥ २२ ॥

षष्ठ्या अलुग्वा स्यात् पुत्रे परे । दास्याःपुत्रः । दासीपुत्रः ।

निन्दायामेव। ब्राह्मणीपुत्रः॥

ऋतो विद्यायोनिसम्बन्धेभ्यः॥ २३॥

विद्यायोनिसम्बन्धवाचिन ऋदन्तात् षष्ठ्या अलुक्। होतुःपुत्रः। होतुरन्तेवासी। पितुः पुत्रः। पितुरन्तेवासी। ऋतः किम्। आचार्यपुत्रः॥

विद्यायोनिसम्बन्धित्वमुत्तरपदस्यापि॥

होतृधनम्। पितृधनम्॥

विभाषा स्वसृपत्योः॥ २४॥

एतयोः परत ऋदन्तात् षष्ठ्या अलुग्वा। मातृष्वसा। मातुःष्वसा। मातुःस्वसा। पितृष्वसा। पितुःष्वसा। पितुःस्वसा। लुकि मातृपितृभ्यां स्वसे(८।३।८४)ति नित्यं षत्वम्। अलुकि तु मातुःपितुर्भ्यामन्यतरस्या(८।३।८५)मिति विकल्पेन। दुहितृपतिः। दुहितुःपतिः॥

आनङ् ऋतो द्वन्द्वे॥ २५॥

विद्यायोनिसम्बन्धवाचिनामृदन्तानां द्वन्द्वे पूर्वपदस्यानङादेशः स्यात्। होतापोतारौ। मातापितरौ। अकार उच्चारणार्थः। नकारो रपरत्वनिवृत्त्यर्थः। ऋतः किम्। पितृपितामहौ। पुत्र इत्यनुवृत्तेः पितापुत्रौ॥

देवताद्वन्द्वे च॥ २६॥

अत्रापि पूर्वपदस्यानङ् स्यात्। इन्द्रावरुणौ। इन्द्राबृहस्पती॥

उभयत्र वायोः प्रतिषेधः॥

अग्निवायू। वाय्वग्नी। पुनर्द्वन्द्वग्रहणमेकहविर्भागित्वेन

प्रसिद्धद्वन्द्वग्रहणार्थम्। तेन ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखाविसादौ न॥

इदग्नेः सोमवरुणयोः॥ २७॥

अनयोः परयोरग्नेरीकारादेशः स्याद्देवताद्वन्द्वे। अग्नीषोमौ। अग्नीवरुणौ। अग्नेः स्तुत्स्तोमसोमाः (८।३।८२)इति षत्वम्॥

इद्वृद्धौ॥ २८॥

वृद्धिमत्युत्तरपदे अग्नेरिकारादेशः स्याद्देवताद्वन्द्वे। आग्निवारुणीमनड्वाहीम्। आग्निमारुतं कर्म। अग्नि(ग्नी)वरुणौ देवतास्याग्निवारुणी। अग्निमरुतौ देवता अस्य आग्निमारुतम्। देवताद्वन्द्वे चे(७।३।२१)त्युभयपदवृद्धौ सत्यामानङीत्त्वबाधनार्थमित्वं क्रियते। वृद्धौ किम्। अग्नीन्द्रम्। नेन्द्रस्य परस्ये(७।३।२२)त्युत्तरपदवृद्धिर्न॥

विष्णौ न॥

अग्नावैष्णवम्। देवताद्वन्द्वे चे(६।३।२६)त्यानङ्॥

दिवो द्यावा॥ २९॥

दिवो द्यावादेशः स्याद्देवताद्वन्द्वे। द्यावाभूमी॥

दिवसश्च पृथिव्याम्॥ ३०॥

पृथिव्यामुत्तरपदे देवताद्वन्द्वे दिवो दिवसादेशः स्यात् द्यावा च। दिवस्पृथिव्यौ। द्यावापृथिव्यौ। अकारोच्चारणं सकारस्य रुत्वादिनिवृत्त्यर्थम्। द्यावा चिदस्मै पृथिवी नमेते इत्यादावसमासेपि द्यावादेशश्छान्दसः॥

उषासोषसः॥ ३१॥

उषस उषासादेशः स्याद्देवताद्वन्द्वे उत्तरपदे। उषासा-

नक्ता । उपासासूर्यः ॥

मातरपितरावुदीचाम् ॥ ३२ ॥

मातृशब्दस्य पितर्यरङादेशो निपात्यते । मातरपितरौ । उदीचां किम् । मातापितरौ ॥

पितरामातरा चच्छन्दसि ॥ ३३ ॥

अत्र पूर्वपदस्याराङन्तादेशो निपात्यते उत्तरपदे तु सुपां सुलुगि(७।१।३९)त्याकारः । ऋतो ङी(७।३।११०)तिगुणः । आमागन्तां पितरामातरा । छन्दसि किम् । मातापितरौ ॥

स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ॥ ३४ ॥

भाषितः पुमान्यस्मिन्नर्थे प्रवृत्तिनिमित्तलक्षणे स भाषितपुंस्क इति स्त्रीपुंसमाधारणं प्रवृत्तिनिमित्तमन्यपदार्थस्तद्वाचकः भाषितपुंस्कः । एकस्मिन्प्रवृत्तिनिमित्ते भाषितपुंस्कादनूङ् ऊङभावो यस्मिन् स्त्रीशब्दे सभाषितपुंस्कादनूङ् निपातनात्पञ्चम्या अलुक् । तस्य भाषितपुंस्कादनूङ्स्त्रीशब्दस्य पुंशब्दस्येव रूपं स्यादेकार्थे स्त्रीलिङ्गे परे न तु पूरण्यां प्रियादौ च । दर्शनीयभार्यः । स्त्रियाः किम् । ग्रामणि ब्रह्मणकुलम् दृष्टिरस्य ग्रामणिदृष्टिः । भाषितपुंस्कात्किम् । खट्वाभार्यः । द्रोणीभार्यः । गर्भिभार्यः प्रसूतभार्यः प्रजातभार्य इत्यत्र गर्भसम्बन्धमात्रस्यापत्यसम्बन्धमात्रस्य च स्त्रीपुंसमाधारणस्य प्रवृत्तिनिमित्तत्वात्पुंवद्भावः । अनूङ् किम् । वामोरूभार्यः । समानाधिकरणे किम् । कल्याणीमाता । स्त्रियां किम् । कल्याणि प्रधानमेषां कल्याणिप्रधानाः । अपूरण्यादौ किम् । कल्याणी पञ्चमी यासां रात्रीणां

कल्याणीपञ्चमा रात्रयः । पुंवद्भावनिषेधोऽप्रत्ययश्च प्रधानपूरण्यामेव । रात्रिः पूरणी वाच्येत्यत्र मुख्यत्वम् । अन्यत्र कल्याणपञ्चमीकः पक्षः । अप्रियादौ किम् । कल्याणीप्रियः । भक्तिशब्दस्य प्रियादित्वेऽपि दृढभक्तिरित्यादौ भजनार्थे दार्ढ्यमात्रं विवक्षितम् । न तु स्त्रीत्वमिति रूपसिद्धिः ॥

## तसिलादिष्वाकृत्वसुचः ॥ ३५ ॥

तसिलादिषु कृत्वसुजन्तेषु परतः पूर्वं पुंवत्स्यात् । तस्याः ततः । तस्यां तत्र । तसिलादिषु परिगणनं कर्तव्यम् । तरप्तमपौ चरड्जातीयरौ कल्पब्देश्यदेशीयरः रूपप्पाशपौ थम्थालौ दार्हिलौ तिल्तातिलौ ॥

शसि बह्वल्पार्थस्य ॥

बह्वीभ्यो देहि बहुशः । अल्पशः ॥

त्वतलोर्गुणवचनस्य ॥

पट्व्याः भावः पटुत्वम् । पटुता । नेह । कठिन(ठी)त्वं कठिन(ठी)ता ॥

भस्याढे तद्धिते पुंवत् ॥

हस्तिनीनां समूहो हास्तिकम् । अढे किम् । रौहिणेयः । कथमाग्नेयी देवता अस्य आग्नेयः स्थालीपाक इति पुंवद्भावनिषेधादग्नायेय इति स्यात् । स्त्रीभ्यो ढगि(४।१।१२०)त्यस्मिन् प्रतिषेधो न त्वग्नेर्ढगि(४।२।३३)त्यस्मिन्नित्याग्नेयसिद्धिरिति कैयटः ॥

ठक्छसोश्च ॥

भवत्याश्छात्राः भावत्काः भवदीयाः ॥

## क्यङ्मानिनोश्च ॥ ३६ ॥

एतयोश्च परतः पुंवत् । एनीवाचरति एतायते । मानिन्ग्रहणमस्त्र्यर्थमसमानाधिकरणार्थं च । दर्शनीयां मन्यते दे-

वदत्तो यज्ञदत्तां दर्शनीयमानी । अयमस्याः दर्शनीयां मन्यते देवदत्तां यज्ञदत्ता दर्शनीयमानिनीयमस्याः । दर्शनीयमात्मानं मन्यते दर्शनीयमानिनीति तु स्त्रियाः पुंवदि(६।३।३४)त्येव सिद्धम् ॥

न कोपधायाः ॥ ३७ ॥

कोपधायाः स्त्रिया न पुंवत् । पाचिकाभार्यः । पाचिकायते । मद्रिकाभार्यः । मद्रिकामानिनी ॥

कोपधप्रतिषेधे तद्धितवुग्रहणम् ॥

पाका भार्या यस्य पाकभार्यः ॥

संज्ञापूरण्योश्च ॥ ३८ ॥

एतयोर्न पुंवत् । दत्ताभार्यः । दत्तायते । पञ्चमीभार्यः । पञ्चमीयते ॥

वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ॥ ३९ ॥

वृद्धेर्निमित्तं यस्मिन् तस्य तद्धितस्यारक्तविकारार्थस्य न पुंवत् । स्रौघ्नीभार्यः । माथुरीयते । माथुरीमानिनी । वृद्धिनिमित्तस्य किम् । मध्यमभार्यः । तद्धितस्य किम् । काण्डलावभार्यः । बहुव्रीहिः किम् । तावती भार्या यस्य तावद्भार्यः । यावद्भार्यः । अरक्ते किम् । काषायी कन्थास्य काषायकन्थः । हैममुद्रिकः ॥

स्वाङ्गाच्चेतोऽमानिनि ॥ ४० ॥

स्वाङ्गविहितस्येतो न पुंवत् । सुकेशीभार्यः । सुकेशीयते । स्वाङ्गात्किम् । पटुभार्यः । ईतः किम् । अकेशभार्यः । अमानिनि किम् । सुकेशमानिनी ॥

जातेश्च ॥ ४१ ॥

जातेर्विहितो ङीप् न पुंवत् । ब्राह्मणीभार्यः । अमानिनी-

त्येव। ब्राह्मणमानिनी ॥ अयं निषेध औपसङ्ख्यानिकस्य नेष्यते ॥ हस्तिनीनां समूहो हास्तिकम् ॥

पुंवत्कर्मधारयजातीयदेशीयेषु ॥ ४२ ॥

कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कमनूङन्तं पूर्वं पुंवत्स्यात्। कोपधादौ प्रतिषिद्धः कर्मधारयादौ प्रतिप्रसूयते। पाचकस्त्री। दत्तभार्या। पञ्चमभार्या। सौघ्नभार्या। सुकेशभार्या। ब्राह्मणभार्या। एवं पाचकजातीया पाचकदेशीयेत्यादि। भाषितपुंस्कात्किम्। खट्वाभार्या। अनूङन्तं किम्। वामोरूभार्या ॥

कुक्कुट्यादीनामण्डादिषु ॥

कुक्कुटाण्डम्। मृगपदम्। मृगक्षीरम्। काकशावः। पूर्वपदस्य स्त्रीत्वविवक्षायां पुंसोऽप्यण्डादिसम्बन्धाद्वार्तिकं गत्याख्यातम्। कुक्कुट्या अण्डमित्यादि वाक्यमेव। वृत्तिस्त्वनभिधानान्न भवतीति प्रत्याख्यानाभिप्रायः ॥

पुंवद्भावाद्ध्रस्वत्वं खिद्घादिकेषु ॥

हरिणिमन्या। पट्वितरा। पट्वितमा। पट्विरूपा। पट्विकल्पा। पट्विका ॥

इडविट् पृथु उशिङ् शरद् ॥

एते जनपदशब्दाः क्षत्रियवाचिनः। तत्र इडविडोपत्यं पृथोरपत्यमिति जनपदशब्दा(४।१।१६८)दित्यञ्। उशिक्शरद्भ्यां व्यञ्मगधे(४।१।१७०)त्यण्। उभयोरतश्च(४।१।१७७)ति स्त्रियां लुकि पुंवद्भावे च कृते इडविट् च सा वृन्दारिका च ऐडविडवृन्दारिका। एवं पार्थवृन्दारिका औशिजवृन्दारिका शारदवृन्दारिकेति सिध्यति ॥

घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योनेकाचो ह्रस्वः ॥ ४३ ॥

ङ्यन्तस्यानेकाचो ह्रस्वः स्याद्घादौ परे । घरूपकल्पाः प्रत्ययाः । चेलडादीन्युत्तरपदानि । ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली । ब्राह्मणिगोत्रा । ब्राह्मणिमता । ब्राह्मणिहता । ब्रुवेति पचाद्यचि वच्यादेशगुणाभावौ निपातनात् । ङ्यः किम् । दत्तातरा । अनेकाचः किम् । एकाचो विकल्पं वक्ष्यति । उक्तपुंस्कादेव । नेह । आमलकीतरा ॥

नद्याः शेषस्यान्यतरस्याम् ॥ ४४ ॥

अङ्यन्तनद्याः ङ्यन्तस्यैकाचो ह्रस्वो वा स्यात् घादौ परे । वामोरुतरा । वामोरूतरा । स्त्रीतरा । स्त्रितरा । एवं तमरूपादि ॥

कृन्नद्याः प्रतिषेधः ॥

लक्ष्मीतरा । तन्त्रीतरा ॥

उगितश्च ॥ ४५ ॥

उगितो नद्याः ह्रस्वो वा स्याद्घादौ ॥

पक्षे पुंवद्भावो वाच्यः ॥

विदुषितरा । विदुषीतरा । विद्वत्तरा ॥

आन्महतः समानाधिकरणजातीययोः ॥ ४६ ॥

महत आकारोन्तादेशः स्यात्समानाधिकरणे जातीये च परे । महादेवः । महाजातीयः । अनयोः किम् । महतः पुत्रः महत्पुत्रः । अप्रधानं महान् सम्पन्नः महद्भूतश्चन्द्रमा इत्यत्र गौणत्वान्नात्वम् ॥

महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्वचनं चासमानाधिकरणार्थम् ॥

महत्याः घासो महाघासः । महत्याः करो महाकरः । महत्या विशिष्टो महाविशिष्टः । पुंवद्भावेन सन्नियोगशिष्टमात्वमन्यत्र न भवतीति महतो घासो महद्घास इत्येव भवतीति कैयटः । अन्वाचये चशब्दमास्थाय तत्राप्यात्वमेके इच्छन्ति ॥

अष्टनः कपाले हविषि ॥

अष्टाकपालः पुरोडाशः । हविषि किम् । अष्टकपालं ब्राह्मणस्य ॥

गवि च युक्ते ॥

अष्टागवेन शकटेन । युक्ते किम् । अष्टगवं ब्राह्मणस्य ॥

द्व्यष्टनस्सङ्ख्यायामबहुव्रीह्यशीत्योः ॥ ४७ ॥

सङ्ख्यायामुत्तरपदे द्व्यष्टनोरात्स्यात् । द्वादश । द्वाविंशतिः । द्वात्रिंशत् । अष्टादश । अष्टाविंशतिः । अष्टात्रिंशत् । बहुव्रीहौ । द्वित्राः । अशीतौ तु द्व्यशीतिः ॥

प्राक्छतादेव ॥

नेह । द्विशतम् । द्विसहस्रम् । अष्टशतम् ॥

त्रेस्त्रयः ॥ ४८ ॥

त्रि इत्यस्य त्रयसादेशः स्यात् पूर्वविषये । त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् । सङ्ख्यायामित्येव । त्रैमातुरः । अबहुव्रीह्यशीत्योरित्येव । त्रिदशाः । त्र्यशीतिः । प्राक्छतादेव । त्रिशतम् । त्रिसहस्रम् ॥

विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥ ४९ ॥

द्वि अष्टन् त्रि एषां सर्वेषां प्रागुक्तं वा स्याच्चत्वारिंशदादौ परे । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् ।

त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । एवं पञ्चाशत्षष्टिप्रभृतिनवतिषु । प्राक्शतादेव । द्विशतम् ॥

## हृदयस्य हृल्लेखयदण्लासेषु ॥ ५० ॥

हृदयस्य हृदादेशः स्याल्लेखादौ । हृदयं लिखतीति हृल्लेखः । यत् । हृदयस्य प्रियः हृद्यः । अण् । हृदयस्येदं हार्दम् । लास । हृदयस्य लासः हृल्लासः । लेख इत्यणन्तं गृह्यते । घञन्तस्य तु हृदयलेख इत्येव । लेखग्रहणं ज्ञापकमुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्ताग्रहणस्य ॥

## वा शोकष्यञ्रोगेषु ॥ ५१ ॥

एषु हृदयस्य हृद्वा स्यात् । हृच्छोकः । हृदयशोकः । सौहार्द्यम् । सौहृदय्यं । ब्राह्मणादित्वात् ष्यञ् । हृदादेशे हृद्भग० (७।३।१९) इत्युभयपदवृद्धिः । हृद्रोगः । हृदयरोगः । हृच्छब्दः प्रकृत्यन्तरमिति सूत्रमेतद्व्यर्थमित्याहुः ॥

## पादस्य पदाज्यातिगोपहतेषु ॥ ५२ ॥

पादस्य पद इत्यादेशः स्यादाज्यादिषु । पादाभ्यामजत्यतति वा पदाजिः पदातिः । अजपतिभ्यां पाद (उ० ५।७०) इत्यौणादिक इण्प्रत्ययः । अस्मादेव निपातनाद्वीभावो न । पादाभ्यां गच्छतीति पदगः । पादेनोपहतं पदोपहतम् । पादशब्दो वृषादित्वादाद्युदात्तः । तदादेशस्य पदशब्दस्य स्थानिस्वरं प्राप्तेऽप्युपदेशकाल एवान्तोदात्तत्वं निपात्यते । तेन पदोपहतमिति तृतीया कर्मणी(६।२।४८)ति पूर्वपदस्य प्रकृतिस्वरेण मध्योदात्तं भवति । पदाज्यादौ तु कृत्स्वरेणान्तोदात्तत्वम् ॥

## पद्यत्यतदर्थे ॥ ५३ ॥

पादस्य पत्स्यादतदर्थे यति । पादौ विध्यन्ति पद्याः

शर्कराः। अतदर्थे किम्। पाद्यम्॥

इके चरतावुपसङ्ख्यानम्।

पादाभ्यां चरतीति पदिकः। पर्पादित्वात् ष्ठन्। स्वाङ्गग्रहणात्पणपादमाषशताद्यति न भवति। द्विपाद्यम्॥

हिमकाषिहतिषु च॥ ५४॥

एषु पादस्य पत्स्यात्। पद्धिमम्। पत्काषिणो यान्ति। पद्धतिः॥

ऋचः शे॥ ५५॥

ऋक्सम्बन्धिनि शे परे पादस्य पत्स्यात्। पच्छो गायत्रीं शंसति। पादं पादं शंसति। सङ्ख्यैकवचनाच्च वीप्सायाम्(५।४।४३)-मिति शस्प्रत्ययः। ऋचः किम्। पादशः कार्षापणं ददाति॥

वा घोषमिश्रशब्देषु॥ ५६॥

एषु पादस्य पद्वा स्यात्। पद्घोषः। पन्मिश्रः। पच्छब्दः। पक्षे पादघोष इत्यादि॥

निष्के च॥

पन्निष्कः। पादनिष्कः॥

उदकस्योदः संज्ञायाम्॥ ५७॥

उदकस्योदादेशः स्यादुत्तरपदे संज्ञायाम्। उदमेघः। उदवाहः॥

उत्तरपदस्यापि॥

लोहितोदा क्षीरोदा नदी। संज्ञायां किम्। उदकगिरिः॥

पेषंवासवाहनधिषु च॥ ५८॥

एषूदकस्योदादेशः स्यात्। उदपेषं पिनष्टि। स्नेहने पिषः(३।४।३८)इति णमुल्। उदवासः। उदवाहनः। उदधिः।

किमत्ययान्तः ॥

## एकहलादौ पूरयितव्येन्यतरस्याम् ॥ ५९ ॥

असंयुक्तहलादौ परे उदकस्योदादेशो वा स्यादुत्तरपदं चेत्पूरयितव्यार्थम् । उदकुम्भः । उदककुम्भः । उदपात्रम् । उदकपात्रम् । एकेति किम् । उदकस्थाली । पूरयितव्ये किम् । उदकपर्वतः ॥

## मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ॥६०॥

एषूदकस्योदादेशो वा स्यात् । उदकेन मन्थः उदमन्थः । उदकेनौदनः उदौदनः । उदकेन सक्तुः उदसक्तुः । उदकस्य बिन्दुः उदबिन्दुः । उदकस्य वज्रम् । उदवज्रम् । उदकं बिभर्ति उदभारः । उदकं हरति उदहारः । उदकस्य वीवधः उदवीवधः । उदकं गाहते उदगाहः । पक्षे उदकमन्थ इत्यादि ॥

## इको ह्रस्वोऽङ्यो गालवस्य ॥ ६१ ॥

अङ्यन्तस्येको ह्रस्वो वा स्यादुत्तरपदे । ग्रामणिपुत्रः । ग्रामणीपुत्रः । इकः किम् । खट्वापादः । ङ्यन्तस्य तु गार्गीपुत्रः । व्यवस्थितविभाषात्वादत्र न । कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । इयङुवङ्भाविनामव्ययानां च न । श्रीकुलम् । भ्रूकुलम् । काण्डीभूतम् । भ्रुकुंसादीनां स्यादेव । भ्रुकुंसः । भ्रुकुटिः ॥

अकारो वाच्यः ॥

भवति । भ्रकुंसः । भ्रकुटिः ॥

## एकतद्धिते च ॥ ६२ ॥

पादस्य पत्स्याद ... त्रः स्यात्तद्धिते उत्तरपदे च । एकस्याः ... रम् ॥

ङ्यापोः संज्ञाछन्दसोर्बहुलम् ॥ ६३ ॥

एतयोर्ह्रस्वो वा स्यात्संज्ञाच्छन्दसोः । संज्ञायां रेवतिपुत्रः । रोहिणिपुत्रः । क्वचिन्न । नान्दीकरः । नान्दीघोषः । छन्दसि कुमारिदा । प्रदर्विदा । क्वचिन्न । जगतीच्छन्दः । आपः संज्ञायाम् शिलवहम् । शिलप्रस्थम् । क्वचिन्न । लोमकागृहम् । लोमकाषण्डः । छन्दसि अजक्षीरेण जुहोति । ऊर्णम्रदा युवतिः । क्वचिन्न ऊर्णासूत्रेण कवयः ॥

त्वे च ॥ ६४ ॥

त्वप्रत्यये ङ्यापोर्ह्रस्वो वा छन्दसि । अजायाः भावः अजत्वम् । अजात्वम् । रोहिणित्वम् । रोहिणीत्वम् ॥

इष्टकेषीकामालानां चिततूलभारिषु ॥ ६५ ॥

इष्टकादीनां चितादौ परे यथासङ्ख्यं ह्रस्वः स्यात् । इष्टकचितम् । इषीकतूलम् । मालभारिणी कन्या ॥ तदन्तस्यापीष्यते ॥ पक्वेष्टकचितम् । मुञ्जेषीकतूलम् । उत्पलमालभारिणी ॥

खित्यनव्ययस्य ॥ ६६ ॥

खिति परतोऽनव्ययस्य ह्रस्वः स्यात् । कालिंमन्या । हरिणिंमन्या ॥

मुमा ह्रस्वो न बाध्यतेऽनवकाशत्वात् ॥

अव्ययस्य तु दोषामन्यमहः । दिवामन्या रात्रिः । अव्ययप्रतिषेधो ज्ञापकः खिद्ग्रहणे तदन्तग्रहणस्य ॥

अरुर्द्विषदजन्तस्य मुम् ॥ ६७ ॥

अरुस् द्विषत् एतयोरजन्तानां च मुमागमः स्यात् खिति । अरुन्तुदः । द्विषन्तपः । हरिणिंमन्या । अनव्ययस्यैव । दो-

पामन्यमहः । एषां किम् । विद्वन्मन्यः । अन्तग्रहणं ह्रस्वे कृते मुम्प्रतिपत्त्यर्थम् ॥

इच एकाचोम्प्रत्ययवच्च ॥ ६८ ॥

इजन्तस्यैकाच इदन्ते परतः अमागमः स्यात्स च द्वितीयैकवचनाम्प्रत्ययवत्स्यात् । अमिपूर्वत्वगुणेयङुवङः प्रत्ययवद्भावात्स्युः । गाम्मन्यः । स्त्रीम्मन्यः । नरम्मन्यः । श्रियम्मन्यः । भ्रुवम्मन्यः । इचः किम् । त्वङ्मन्यः । एकाचः किम् । लेखाभ्रुम्मन्यः । श्रियमात्मानं ब्राह्मणकुलं मन्यत इत्यत्र स्वमोर्नपुंसका(७।१।२३)दित्यमो लुकि श्रीमन्य इति स्यात् । मत्तस्य स्त्री मत्तीत्यादौ पुंल्लिङ्गस्यापि स्त्रीलिङ्गवच्छ्रीशब्दस्य क्लीबत्वमविरुद्धम् ॥

वाचंयमपुरन्दरौ च ॥ ६९ ॥

एतौ निपात्येते । वाचंयमः । पुरन्दरः ॥

कारे सत्यागदस्य ॥ ७० ॥

कारे परे अनयोर्मुम् स्यात् । सत्यङ्कारः । अगदङ्कारः ॥

अस्तोरपि ॥

अस्तुङ्कारः ॥

भक्षस्यच्छन्दसि ॥

भक्षङ्कारः ॥

धेनोर्भव्यायाम् ॥

धेनुम्भव्या ॥

लोकस्य पृणे ॥

लोकम्पृणम् ॥

इत्येनभ्याशस्य ॥

अनभ्याशमित्यः ॥

भ्राष्ट्राग्न्योरिन्धे ॥

भ्राष्ट्रमिन्धः। अग्निमिन्धः ॥

गिलेऽगिलस्य ॥

तिमिङ्गिलः। अगिलस्य किम्। गिलगिलः ॥

गिलगिले च ॥

तिमिङ्गिलगिलः। तिमिङ्गिलं गिलतीति वृत्तौ तु पूर्वेणैव सिद्धम् ॥

उष्णभद्रयोः करणे ॥

उष्णङ्करणम्। भद्रंकरणम् ॥

सूतोग्रराजभोजमेरुभ्यो दुहितुः पुत्रड्वा ॥

सूतपुत्री। उग्रपुत्री। राजपुत्री। भोजपुत्री। मेरुपुत्री। पक्षे सूतदुहितोग्रदुहितेत्यादि ॥

अन्यत्रापि दृश्यते।

शैलपुत्री। केचिच्छार्ङ्गरवादिषु पुत्रशब्दं पठन्ति ॥

श्येनतिलस्य पाते ञे ॥ ७१ ॥

ञप्रत्ययान्ते पातशब्दे श्येनतिलयोर्मुमागमः स्यात्। श्येनपातोऽस्यां क्रीडायां श्यैनंपाता। तैलंपाता। ञे किम्। श्येनपातः ॥

रात्रेः कृति विभाषा ॥ ७२ ॥

कृदन्ते परे रात्रेर्मुम् वा स्यात्। रात्रिञ्चरः। रात्रिचरः। रात्रिमटो। रात्र्यटः। खिति तु नित्यम्। रात्रिम्मन्यः ॥

नलोपो नञः ॥ ७३ ॥

नञो नस्य लोपः स्यादुत्तरपदे। अब्राह्मणः ॥

अवक्षेपे तिङि च ॥

अपचसि त्वं जाल्म ॥

तस्मान्नुडचि ॥ ७४ ॥

लुप्तनकारान्नञ उत्तरस्याजादेर्नुडागमः स्यात् । अनश्वः ॥

नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसक-
नक्षत्रनक्रनाकेषु प्रकृत्या ॥ ७५ ॥

एषु नञ् प्रकृत्या स्यात् । न भ्राजत इति नभ्राट् । न पातीति नपात् । शत्रन्तः । न वेत्तीति नवेदाः । असुनन्तः । सत्सु साधवः सत्याः न सत्या असत्याः न असत्या नासत्याः । न मुञ्चतीति नमुचिः । मुचेरौणादिकः । नास्य कुलं नकुलः । नास्य खमस्ति नखः । न स्त्री पुमान्वा नपुंसकः । स्त्रीपुंसयोः पुंसक इति निपात्यते । न क्षरतीति नक्षत्रम् । क्षरतेः क्षत्रमिति निपात्यते । न क्रमतीति नक्रः । क्रमेर्डो निपातनात् । न अकमस्मिन्नाकः ॥

एकादिश्चैकस्य चादुक् ॥ ७६ ॥

एकादिर्नञ् प्रकृत्या स्यादेकस्यादुगागमश्च । एकेन न विंशतिः एकान्नविंशतिः । तृतीये(२।१।३०)ति योगविभागात्समासः । ऊनार्थे चात्र नञ् । एकोनविंशतिरित्यर्थः । अनुनासिकविकल्पपक्षे एकाद्नविंशतिः । अदुकि सवर्णदीर्घे रूपसिद्धिरिति भाष्ये स्थितम् । वृत्तिकारैः प्रतिपत्तिलाघवादादुगाश्रितः ॥

नगोऽप्राणिष्वन्यतरस्याम् ॥ ७७ ॥

नगशब्दे नञ् प्रकृत्या वा स्यात् । नगः अगो वा पर्वतः । अप्राणिषु किम् । अगः शीते(ते)न वृषलः ॥

## सहस्य सः संज्ञायाम् ॥ ७८ ॥

सहस्य सः स्यादुत्तरपदे संज्ञायाम् । साश्वत्थम् । सपलाशम् । संज्ञायां किम् । सहयुध्वा । उपदेशे सादेश उदात्तो निपात्यते । अन्यथोदात्तानुदात्तवतः स्थाने स्वरितः स्यात् । तस्य च पूर्वपदप्रकृतिस्वरस्थले श्रवणेऽप्यन्यत्र समासान्तोदात्तेन बाधः ॥

## ग्रन्थान्ताधिके च ॥ ७९ ॥

ग्रन्थान्ते अधिके च वर्तमानस्य सहस्य सः स्यात् । सकाष्ठं ज्योतिषमधीते । सकलम् । समुहूर्तम् । काष्ठादयः कालविशेषवाचिनस्तत्प्रतिपादकग्रन्थे उपचाराद्वर्तन्ते । अन्तवचन इत्यव्ययीभावः । अव्ययीभावे चाकाल(६।३।८१) इति काले न प्राप्नोतीत्ययमारम्भः । अधिके सद्रोणा खारी । सस्तु(मा)षः कार्षापणः ॥

## द्वितीये चानुपाख्ये ॥ ८० ॥

द्वयोः सह प्रयुक्तयोरप्रधानं द्वितीयम् । अनुपाख्यमप्रत्यक्षम् । द्वितीये चानुपाख्ये सहस्य सः स्यात् । साग्निः कपोतः । सपिशाचा वात्या । सराक्षसीका निशा । अग्न्यादयः प्रत्यक्षेणानुपलभ्यमानाः कपोतादिभिरनुमीयमाना अनुपाख्याः ॥

## अव्ययीभावे चाकाले ॥ ८१ ॥

सहस्य सः स्यादव्ययीभावे न तु काले । चक्रेण युगपदेहि सचक्रम् । काले तु सहपूर्वाह्णम् ॥

## वोपसर्जनस्य ॥ ८२ ॥

उपसर्जनसर्वावयवसमासे सहस्य सः स्याद्वा । सपुत्रः सहपुत्रो वा आगतः । सर्वोपसर्जनत्वं किम् । सहयुध्वा । सहकृत्वा ।

सहयुध्वप्रिय इत्यत्र बहुव्रीहौ यदुपसर्जनं तत्परत्वाभावात्स-हस्य न सादेशः ॥

## प्रकृत्याशिष्यगोवत्सहलेषु ॥ ८३ ॥

सहस्य सो न स्यादाशिषि । स्वस्ति देवदत्ताय सह-पुत्राय । सहच्छात्राय । अगवादिषु किम् । स्वस्तिसहगवे सगवे सहवत्साय सवत्साय सहहलाय सहलाय । वोपसर्जनस्ये-(६।३।८२)ति विकल्पः ॥

## समानस्यच्छन्दस्यमूर्द्धप्रभृत्युदर्केषु ॥ ८४ ॥

समानस्य सः स्याच्छन्दसि न तु मूर्द्धादौ । सगर्भ्यः । स-यूथ्यः । सनुतः । समानो गर्भः सगर्भः। तत्र भवः सगर्भ्यः। स-गर्भसयूथसनुताद्य(४।४।११४)दिति यत्प्रत्ययः। अमूर्द्धादौ किम्। समानमूर्द्धा । समानप्रभृतयः । समानोदर्काः । समानस्येति यो-गविभागात्सपक्षः । सधर्म्यः । सजातीयः इत्यादिसिद्धिः ॥

## ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णव-योवचनबन्धुषु ॥ ८५ ॥

समानस्य सः स्यात् ज्योतिरादिषु । समानं ज्योति-र्यस्य सज्योतिः । सजनपदः । सरात्रिः । सनाभिः । सना-मा । सगोत्रः । सरूपः । सस्थानः । सवर्णः । सवयाः । सवचनः । सबन्धुः ॥

## चरणेऽब्रह्मचारिणि ॥ ८६ ॥

अब्रह्मचारिण्युत्तरपदे समानस्य सः स्याद्व्रताचरणे गम्ये । समानो ब्रह्मचारी सब्रह्मचारी । ब्रह्म वेदस्तदध्ययनार्थं व्रतमपि ब्रह्म । तच्चरतीति ब्रह्मचारी । समानत्वं च ब्रह्मसमानत्वा-

दिति समाने ब्रह्मणि व्रतचारी सब्रह्मचारीत्यर्थो लभ्यते ॥

तीर्थे ये ॥ ८७ ॥

यान्ते तीर्थे प्राग्वत् । समानतीर्थे गुरौ वासी सतीर्थ्यः ॥

विभाषोदरे ॥ ८८ ॥

यान्ते उदरे प्राग्वद्वा । सोदर्यः । समानोदर्यः ॥

दृग्दृशवतुषु ॥ ८९ ॥

एषु समानस्य सः स्यात् । सदृक् । सदृशः । समाना-न्ययोश्चे(३।२।६०वा०)ति कञ्क्विनौ ॥

दृक्षे च ॥

सदृक्षः । दृशेः क्सः (३।२।६०वा०) । वतुरुत्तरार्थः ॥

इदं किमोरीश्की ॥ ९० ॥

इदम ईश् किमः की स्याद् दृग्दृशवतुषु । ईदृक् । ईदृशः । इयान् । कीदृक् । कीदृशः । कियान् । किमि-दम्भ्या(५।२।४०)मिति वतुप् ॥

दृक्षे च ।

ईदृक्षः । कीदृक्षः ॥

आ सर्वनाम्नः ॥ ९१ ॥

सर्वनाम्नः आकारोन्तादेशः स्याद् दृग्दृशवतुषु । तादृ-क् । तादृशः । तावान् ॥

दृक्षे च ॥

दृक्षः । एवं यादृगित्यादि ॥

विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ॥ ९२ ॥

अनयोः सर्वनाम्नश्च टेरद्र्यादेशः स्यादप्रत्ययेऽञ्चतौ परे ।

विष्वद्र्यङ् । देवद्र्यङ् । तद्र्यङ् । यद्र्यङ् । अद्रिसम्र्योरन्तोदात्तत्व-निपातनं कृत्स्वरनिवृत्त्यर्थम् । तत्र यणादेशे उदात्तस्वरितयोर्यण(८।२।४)इत्येव स्वरः सिध्यति। विष्वग्देवयोः किम्। अश्वाङ्। अञ्चतौ किम् । विष्वग्युक् । अप्रत्यये किम् । विष्वगञ्चनम् । अप्रत्ययग्रहणमन्यत्र धातुग्रहणे तदादिमतिपत्त्यर्थम्। तेन अयस्कृतमयस्कार इत्यत्राप्यतः कृकमी(८।३।४६)तिसत्त्वं सिद्धम्भवति॥

छन्दसि स्त्रियां बहुलमिति वाच्यम् ॥

कद्रीची । न च भवति । विश्वाची ॥

## समः समि ॥ ९३ ॥

समः समिरादेशः स्यादप्रत्ययेऽञ्चतौ परे । सम्यङ् । सम्यञ्चौ ॥

## तिरसस्तिर्यलोपे ॥ ९४ ॥

लुप्ताकारेऽञ्चतौ परे तिरसस्तिर्यादेशः स्यात् । तिर्यङ् । तिर्यञ्चौ । अलोपे किम् । तिरश्चः ॥

## सहस्य सध्रिः ॥ ९५ ॥

अस्यायमादेशः स्यादप्रत्ययेऽञ्चतौ । सध्र्यङ् । सध्र्यञ्चौ । सध्रीचः । सध्रीचा ॥

## सध मादस्थयोश्छन्दसि ॥ ९६ ॥

मादस्थयोः परतः सहस्य सधः स्याच्छन्दसि । सधमादः । सधस्थः ॥

## द्व्यन्तरुपसर्गेभ्योऽप ईत् ॥ ९७ ॥

एभ्योऽपोऽकारस्य ईत्स्यात् । द्वीपम् । अन्तरीपम् । समीपम् । अन्वीपम् ॥

समाप ईत्वं न ॥

समापं नाम देवयजनम् ॥

अवर्णान्नेष्यते ॥

सापम् । परापम् ॥

ऊदनोर्देशे ॥ ९८ ॥

अनोः परस्यापोकारस्य ऊत्स्यात् । अनूपो देशः । अन्य-त्रान्वीपम् । सवर्णदीर्घेण सिद्धे दीर्घोच्चारणमवग्रहे श्रवणार्थ-मिति भाष्यकारः । न लक्षणेन पदकारा अनुवर्त्याः पद-कारैर्नाम लक्षणमनुवर्त्यमित्येतद्भाष्यविरुद्धमत्रत्यभाष्यमिति कैयटः । अत्रावग्रहे दीर्घ इष्यत इति तथैव लक्षणं कृतमिति न विरोध इत्याहुः ॥

अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितो-त्सुकोतिकारकरागच्छेषु ॥ ९९ ॥

अन्यस्य दुगागमः स्यादाशीरादिषु । अन्या आशीः अन्यदाशीः । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यत्कारकः । अन्यद्रागः । अन्यदीयम् । आषष्ठ्यतृतीयास्थस्येति किम् । अन्यस्यान्येन वा आशीः अन्याशीः ॥

कारकच्छयोरिष्यत एव ॥

अन्यस्य कारकः अन्यत्कारकः । अन्यस्येदम् । अ-न्यदीयम् । गहादित्वाच्छः ॥

अर्थे विभाषा ॥ १०० ॥

अन्यस्य दुक् । अन्यदर्थम् । अन्यार्थम् ॥

८९

## कोः कत्तत्पुरुषेचि ॥ १०१ ॥

कोः कदादेशः स्यात्तत्पुरुषेचि। कदन्नम्। तत्पुरुषे किम्। कूष्ट्रो राजा। अचि किम्। कुब्राह्मणः॥

## त्रौ च ॥

कुत्सितास्त्रयः कत्रयः॥

## रथवदयोश्च ॥ १०२ ॥

कोः कत्। कद्रथः। कद्वदः॥

## तृणे च जातौ ॥ १०३ ॥

कत्तृणं नाम जातिविशेषः। जातौ किम्। कुत्सितं तृणम् कुतृणम्॥

## का पथ्यक्षयोः ॥ १०४ ॥

कोः का स्यादेतयोः। कापथः। काक्षः॥

## ईषदर्थे ॥ १०५ ॥

कोः का स्यात्। ईषल्लवणम् कालवणम्। काम्लम्। अजादावपि परत्वाद्भवति॥

## विभाषा पुरुषे ॥ १०६ ॥

कोः का वा स्यात्पुरुषे परे। कुपुरुषः। कापुरुषः। ईषदर्थे नित्यमेव। ईषत्पुरुषः कापुरुषः॥

## कवं चोष्णे ॥ १०७ ॥

उष्णे परे कोः कवादेशः स्यात्का च वा। कवोष्णम्। कोष्णम्। कदुष्णम्॥

पथि चच्छन्दसि ॥ १०८ ॥

कोः काकवौ वा स्तः छन्दसि पथि परे । कापथम् । कवपथम् । कुपथम् ॥

पृषोदरादीनि यथोपदिष्टम् ॥ १०९ ॥

येषु लोपागमविकाराः शास्त्रेणाविहिता दृश्यन्ते तानि पृषोदरादीनि यथाशिष्टप्रयोगं साधूनि । पृषत् उदरं यस्य पृषोदरः।पृषत् उत्था(द्वा)नं यस्य पृषोत्था(द्वा)नः। अत्र तलोपः। वारिवाहको बलाहकः। पूर्वपदस्य बादेश उत्तरपदादेर्लत्वम् । जीवनमूतो जीमूतः । वनस्य लोपः । ऊर्ध्वमुखस्योलूखलादेशः । मुहुर्मुहुः पततीत्यस्य मुसलादेशः । पिशिताशनस्य पिशाचादेशः । ब्रुवन्तोऽस्यां सीदन्तीति बृसीति ब्रुवतो बृ आदेशः। सीदतेर्डट् प्रत्ययः । मह्यां रौतीति मयूरः । पूर्वपदस्य मयूभावः । रौतेरचि टिलोपः । एवमश्वत्थकपित्थादयोऽप्यूह्याः ॥

दिक्छब्देभ्यस्तीरस्य तारो वा ॥

दक्षिणतीरम् । दक्षिणतारम् । उत्तरतीरम् । उत्तरतारम् ॥

वाचो वादे त(ड)त्वं वादस्य वलश्चेञि ॥

वाग्वादस्यापत्यं वाग्वलिः ॥

षष उत्वं दतृदशसूत्तरपदादेष्टुत्वं च ॥

षोडन् । षोडश ॥

धासु वा ॥

उत्वस्य विकल्पः । ष्टुत्वं तु नित्यम् । षोढा । षढा । बहुवचनादधिकरणविचाले चे(५।३।४३)ति विहितधाशब्दस्य ग्रहणं न धामात्रस्य । तेन षट् दधातीति षड्धा ॥

दुरो दाशनाशदभध्येषूत्वमुत्तरस्यादेः ष्टुत्वञ्च ॥

दुःखेन दाश्यते नाश्यते दभ्यत इति दूडाशः दूणाशः

दूडभः। दभेर्नलोपोत एव निपातनात् । दुष्टं ध्यायतीति दूढ्यः। आतश्चोपसर्ग(३।३।१०६) इति कः॥

स्वरो रोहतौ छन्दस्युत्वम्॥

जाय एहि स्वो रोहाव॥

पीवोपवसनादीनां छन्दस्यन्त्यलोपः॥

पीवोपवसनानाम्। पयोपवसनानाम्॥

## संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ॥ ११०॥

सङ्ख्याविसाय एतत्पूर्वस्याह्नस्याहन्नादेशो वा स्यात् ङौ। द्व्यह्नि। द्व्यहनि। द्व्यह्ने। व्यह्नि। व्यहनि। व्यह्ने। सायाह्नि। सायाहनि। सायाह्ने। एतदेव सायाह्नग्रहणं ज्ञापकं पूर्वादिभ्योऽन्यत्राप्येकदेशिसमासस्य । मध्याह्नः। सङ्ख्यादिपूर्वस्य किम्। पूर्वाह्णे॥

## ढ्रलोपे पूर्वस्य दीर्घोऽणः॥ १११॥

ढ्रोर्लोपो यस्मिंस्तस्मिन् पूर्वस्याणो दीर्घः स्यात् । लीढम्। शम्भू राजते। पूर्वग्रहणमनुत्तरपदेऽपि दीर्घार्थम्। अणः किम्। तृढः॥

## सहिवहोरोदवर्णस्य॥ ११२॥

एतयोरवर्णस्य ओत्स्यात् ढ्रलोपे सति। सोढा। वोढा। अवर्णस्येति किम्। ऊढः। वर्णग्रहणात्कृतायामपि वृद्धावोत्वम्। अवोढाम्। अवोढ। अस्येत्युक्तौ तात्परत्वात् ह्रस्वस्यैव स्यात्॥

## साढ्यै साढ्वा साढेति निगमे॥ ११३॥

एते छन्दसि निपात्यन्ते। सहेः क्त्वाप्रत्यय ओत्वभावः पक्षे क्त्वो ल्यभावश्च। त्वचि साढा। सोढ्वा सोढेति भाषायाम्॥

संहितायाम् ॥ ११४ ॥

अधिकारोऽयम् । वक्ष्यति द्व्यचोऽतस्तिङः(६।३।१३५) । विद्मा हित्वा । संहितायां किम् । विद्म हि त्वा ॥

कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुव-स्वस्तिकस्य ॥ ११५ ॥

कर्णे परे चिह्नवाचिनो दीर्घः स्याद्विष्टादीन्वर्जयित्वा । दात्राकर्णः । द्व्यङ्गुलाकर्णः । यत्पशूनां स्वामिविशेषसम्बन्धज्ञापनार्थं पत्राकारादि क्रियते तदिह लक्षणं गृह्यते । लक्षणस्य किम् । शोभनकर्णः । विष्टादेस्तु विष्टकर्णः । अष्टकर्ण इत्यादिः ॥

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ ११६ ॥

क्विबन्तेष्वेषु परतः पूर्वस्य दीर्घः स्यात् । उपानत् । नीवृत् । प्रावृट् । मर्माविध् । नीरुक् । मतीषट् । पुरीतत् । गमः क्वौ(६।४।४०)वित्यत्र गमादीनामिष्यत इति तनोतेर्नलोपः । क्वौ किम् । परिणहनम् । गतिकारकयोरेव । नेह । पटुरुचः ॥

वनगिर्योः संज्ञायाङ्कोटरकिंशुलुकादीनाम् ॥ ११७ ॥

कोटरादीनां वने किंशुकादीनां गिरौ पूर्वस्य दीर्घः स्यात् । कोटरावणम् । मिश्रकावणम् । किंशुकागिरिः । साल्वागिरिरित्यादि । एषां किम् । असिपत्रवनम् । कृष्णगिरिः ॥

वले ॥ ११८ ॥

वलचि परतः पूर्वस्य दीर्घः स्यात् । कृषीवलः । दन्तावलः ॥

मतौ बह्वचोऽनजिरादीनाम् ॥ ११९ ॥

बह्वचो दीर्घः स्यान्मतौ न त्वजिरादेः संज्ञायाम् । उदुम्बरावती । पुष्करावती । नद्यां मतुप् । बह्वचः किम् । व्रीहिमती ।

अनजिरादीनां किम् । अजिरवती । खदिरवतीत्यादि । संज्ञायां किम् । चक्रवाकवती ॥

## शरादीनां च ॥ १२० ॥

मतौ दीर्घः । संज्ञायामेव । शरावती । वंशावतीत्यादि ॥

## इको वहेऽपीलोः ॥ १२१ ॥

वहे परत इगन्तस्य दीर्घः स्यान्न तु पीलोः । ऋषीवहः । कपीवहः । मुनीवहः । इकः किम् । पिण्डवहः । पीलोस्तु । पीलुवहः ॥

अपील्वादीनां वाच्यम् ॥

रुचिवहम् । चारुवहम् ॥

## उपसर्गस्य घञ्यमनुष्ये बहुलम् ॥ १२२ ॥

प्रादेर्बहुलं दीर्घः स्यात् घञन्ते परे । अपामार्गः । मनुष्ये तु निषादः ॥

अमनुष्यार्थे वाच्यम् ॥

प्रसेवः । प्रसारः । प्रहारः ॥

सादकारयोः कृत्रिमे ॥

प्रासादः । प्राकारः । अन्यत्र प्रसादः प्रकारः ॥

वेशादीनां वा ॥

प्रतिवेशः । प्रतीवेशः । प्रतिकारः । प्रतीकारः । बहुलग्रहणादेवायम् ॥

## इकः काशे ॥ १२३ ॥

काशे परे इगन्तस्योपसर्गस्य दीर्घः । नीकाशः । अनूकाशः । प्रतीकाशः । इकः किम् । प्रकाशः । घञन्ते पूर्वेण

सिद्धेरजन्तः काश इति वृत्तिकारः । घञन्तेपि नियमार्थं सूत्र-मित्यप्याहुः ॥

दस्ति ॥ १२४ ॥

दा इत्यस्य यस्तकारादिरादेशः तस्मिन्निगन्तस्योपसर्गस्य दीर्घः स्यात् । नीत्तम् । वीत्तम् । अच उपसर्गात्तः(७।४।४७) इति अन्त्यस्यादेशः । चर्त्वेन दस्य तः । आश्रयात्सिध्या तादित्वम् । इकः किम् । प्रत्तम् । द इति किम् । वितीर्णम् । तीति किम् । सुदत्तम् । प्रतिदत्तम् ॥

अष्टनः संज्ञायाम् ॥ १२५ ॥

दीर्घ उत्तरपदे । अष्टावक्रः । अष्टापदः । संज्ञायां किम् । अष्टपुत्रः ॥

छन्दसि च ॥ १२६ ॥

अष्टनो दीर्घ उत्तरपदे । अष्टाकपालः ॥

गवि च युक्ते भाषायाम् ॥

अष्टागवेन शकटेन । इदं भाष्यवार्तिकयोर्नास्ति ॥

चितेः कपि ॥ १२७ ॥

दीर्घः । एकचितीकः । त्रिचितीकः ॥

विश्वस्य वसुराटोः ॥ १२८ ॥

विश्वस्य दीर्घः स्याद्वसौ राट्छब्दे च । विश्वावसुः । विश्वाराट् । राटि किम् । विश्वराजौ । विश्वराजः ॥

नरे संज्ञायाम् ॥ १२९ ॥

विश्वस्य दीर्घः । विश्वानर इति कश्चित् । संज्ञायां किम् ।

विश्वे नरा यस्य विश्वनरः ॥

मित्रे चर्षौ ॥ १३० ॥

मित्रे परे विश्वस्य दीर्घः स्यादृषौ । विश्वामित्रो नाम ऋषिः। अन्यत्र विश्वमित्रो माणवकः ॥

मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ॥ १३१ ॥

मतौ सोमादीनां दीर्घः स्यान्मन्त्रे । सोमावती । अश्वावती । इन्द्रियावती । विश्वदेव्यावती ॥

ओषधेश्च विभक्तावप्रथमायाम् ॥ १३२ ॥

ओषधेर्मन्त्रे दीर्घः स्यादप्रथमायां विभक्तौ । ओषधीभिः । ओषधीभ्यः । विभक्तौ किम् । ओषधीवती । प्रथमायां तु ओषधिः ॥

ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ॥ १३३ ॥

एषां दीर्घः स्यादृचि । आ तू नः । नूकरणे । उत वाघा स्यालात् । मक्षू देवदत्तः । तदू भराहरः । भरता जातवेदसम् । कचित्र । शृणोत ग्रावाणः । कुत्राचिव । उरुष्याणः ॥

इकः सुञि ॥ १३४ ॥

सुञि परे इगन्तस्य दीर्घः स्यान्मन्त्रे । अभीषुणः । ऊषुणः। सुञि इति षत्वं नश्च धातुस्थोरुषुभ्य(८।४।२७)इति णत्वम् ॥

द्व्यचोतस्तिङः ॥ १३५ ॥

द्व्यचोदन्तस्य तिङो दीर्घः स्यान्मन्त्रे । विद्मा हि त्वा । द्व्यचः किम् । अश्वामवथ वाजिनः । अतः किम् । वक्षि यक्षि च ॥

## निपातस्य च ॥ १३६ ॥

मन्त्रे दीर्घः। एवा ते। अच्छा ते ॥

## अन्येषामपि दृश्यते ॥ १३७ ॥

अन्येषामपि दीर्घो दृश्यते। स च प्रयोगानुसाराद् ज्ञेयः। केशाकेशि। कचाकचि ॥

शुनो दन्तदंष्ट्राकर्णककुद(कुन्द)वराहपुच्छपदेषु ॥

श्वादन्तः। श्वादंष्ट्रः। श्वाकर्णः। श्वाककुदः(कुन्दः)। श्वावराहः। श्वापुच्छः। श्वापदः। इदमपि भाष्यवार्तिकानुक्तम् ॥

## चौ ॥ १३८ ॥

लुप्ताकारेऽञ्चतौ परे पूर्वस्य दीर्घः स्यात्। दधीचः। मधूचः। प्रतीचः। अत्रान्तरङ्गोपि यण् दीर्घविधिसामर्थ्यान्न ॥

## सम्प्रसारणस्य ॥ १३९ ॥

संप्रसारणान्तस्य दीर्घः स्यादुत्तरपदे। कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः। ष्यङः संप्रसारण(६।१।१३)मिति संप्रसारणम्। अत्र इको ह्रस्वोऽङ्यो गालवस्ये(६।३।६१)ति ह्रस्वत्वं न भवति। दीर्घेण ह्रस्वत्वस्य परेण बाधात् ॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यश्रीराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ व्याकरणमिताक्षरायां षष्ठस्याध्यायस्य तृतीयः पादः ॥

## अङ्गस्य ॥ १ ॥

आ सप्तमाध्यायपरिसमाप्तेरयमधिकारः। सम्बन्धसमान्ये षष्ठी। अविवक्षतविभक्त्यर्थ [वा] प्रातिपादिकार्थमात्रमधिक्रियते। तेनातो भिस ऐसि(७।१।९)यादौ अकारान्तादङ्गादिति पञ्चम्यन्तेनान्वयः नौमीसादानङ्गस्येति षष्ठ्यन्तेन चान्वयो यथायोगं सिद्धो भवति। अधिकारप्रयोजनं तु तत्र तत्र वक्ष्यते ॥

## हलः ॥ २ ॥

संप्रसारणस्य दीर्घ इत्यनुवर्तते। अङ्गस्येति द्विरावर्तते। अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्याङ्गस्य दीर्घः स्यात्। हूतः। जीनः। शूनः। हलः किम्। ऊढ(त)वान्। अङ्गावयवात्किम्। निरुतम्। दुरुतम्। तदन्तस्य किम्। विद्धः। अण इति नानुवर्तते। कथं तृतीयः। द्वितीयतृतीये(२।२।३)ति निपातनाद्दीर्घाभावः। चाविसन्नाणनुवृत्तौ कर्तृच इति अननुवृत्तौ कर्तृच इति भवति। तत्राथर्वसादिनाननुवृत्तिरेव भाष्ये स्थिता ॥

## नामि ॥ ३ ॥

सनुट्कस्य षष्ठीबहुवचनस्य ग्रहणम्। नामि परतोऽजन्ताङ्गस्य दीर्घः। अग्नीनाम्। वायूनाम्। कर्तॄणाम्। सनुट्कग्रहणं नोपधाया (६।४।७)इत्यत्रामीत्युक्तौ चर्मणामित्यत्र दीर्घः स्यात्तन्निवृत्त्यर्थम् ॥

## न तिसृचतसृ ॥ ४ ॥

एतयोर्नामि न दीर्घः। तिसृणाम्। चतसृणाम्। अचि

र ऋत(७।२।१००)इत्यस्मात्पूर्वविप्रतिषेधेन नुडेव स्यादित्यत्रायं प्रतिषेध एव ज्ञापकः ॥

छन्दस्युभयथा ॥ ५ ॥

तिसृणाम् । तिसृणाम् । चतसृणाम् । चतसृणाम् ॥

नृ च ॥ ६ ॥

अस्यापि नामि वा दीर्घः । नृणाम् । नृणाम् ॥

नोपधायाः ॥ ७ ॥

नान्तस्योपधाया दीर्घः स्यान्नामि । पञ्चानाम् । सप्तानाम् । नान्तस्य किम् । चतुर्णाम् । नामि किम् । चर्मणाम् ॥

सर्वनामस्थाने चासम्बुद्धौ ॥ ८ ॥

नान्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने । राजा । राजानौ । राजानः । सीमा । सर्वनामस्थाने किम् । राजनि । सम्बुद्धौ तु हे राजन् ॥

वा षपूर्वस्य निगमे ॥ ९ ॥

षपूर्वस्याचो नोपधायाः सर्वनामस्थाने वा दीर्घः । तक्षणम् । तक्षाणम् । ऋभुक्षणम् । ऋभुक्षाणम् । निगमे किम् । तक्षाणौ । तक्षाणः ॥

सान्तमहतः संयोगस्य ॥ १० ॥

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे । श्रेयान् । श्रेयांसौ । महान् । महान्तौ । असम्बुद्धौ किम् । हे श्रेयन् । हे महन् ॥

अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृ-
प्रशास्तॄणाम् ॥ ११ ॥

अबादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने। आपः। समासान्तस्यानित्यत्वाद्बह्वाम्पि तटाकानि। नित्यादपि नुमः पूर्वं दीर्घ इष्यते। तृन्। कर्ता। तृच्। हर्ता। स्वसारौ। नप्तारौ। नेष्टारौ। त्वष्टारौ। क्षत्तारौ। होतारौ। पोतारौ। प्रशास्तारौ। नप्त्रादिग्रहणमव्युत्पत्तिपक्षे विध्यर्थम्। व्युत्पत्तिपक्षे नियमार्थम्। तेनेह न। पितरौ। मातरौ। असम्बुद्धौ किम्। हे कर्तः। हे स्वसः॥

इन्हन्पूषार्यम्णां शौ ॥ १२ ॥

एषां शावेवोपधाया दीर्घः स्यात्। बहुदण्डीनि। बहुवृत्रहाणि। बहुपूषाणि। बह्वर्यमाणि। शावेव किम्। दण्डिनौ। वृत्रहणौ। पूषणौ। अर्यमणौ॥

उपधादीर्घमात्रस्यायं नियम इष्यते॥

तेन भ्रूणहनमिसत्रानुनासिकस्य क्विझलो(६।४।१९)रित्यपि दीर्घो न स्यात्। अनुपधादीर्घस्तु स्यादेव। पुत्रहायते॥

सौ च ॥ १३ ॥

इन्नादीनां सावुपधादीर्घः स्यात्। दण्डी। वृत्रहा। पूषा। अर्यमा। असम्बुद्धावेव। हे दण्डिन्। हे पूषन्॥

अत्वसन्तस्य चाधातोः ॥ १४ ॥

अत्वन्तस्यासन्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सौ परे न तु धातोः। भवतु। भवान्। कृतवान्। मतुपोऽप्यतुग्रहणेन ग्रहणमिष्यते। धीमान्। दीर्घे कृते नुम्। पूर्वं नुम्यनुपधा न स्यात्। सुयशाः। सुपयाः। अधातोः किम्। चर्म वस्ते च-

मेत्रः। अनिनस्मिन्ग्रहणेष्वर्थवता चानर्थकेन च तदन्तविधिरित्यनर्थकस्याप्यसो ग्रहणम्। असम्बुद्धौ किम्। हे सुयशः। हे गोमन्॥

अनुनासिकस्य क्विझलोः क्ङिति॥ १५॥

अनुनासिकान्तस्योपधादीर्घः स्यात् क्वौ झलादौ च क्ङिति। प्रशान्। प्रतान्। किति शान्तः। तान्तः। ङिति शंशान्तः। तन्तान्तः। दन्दान्तः। यङ्लुगन्तात्तस्। अनुनासिकस्य किम्। ओदनपक्। पक्वा। क्विझलोः किम्। गम्यते। क्ङिति किम्। गन्ता॥

अज्झनगमां सनि॥ १६॥

अजन्तानां हन्तेरिङादेशगमेश्च दीर्घः स्याज्झलादौ सनि। चिचीषति। चिकीर्षति। जिघांसति। अधिजिगांसते। इङादेशेति किम्। सञ्जिगंसते वत्सो मात्रा। छन्दस्यनिङादेशस्यापि स्वर्गं लोकमजिगांसदित्याद्यावन्येषामपि दृश्यत (६।३।१३७) इति दीर्घः॥

तनोतेर्विभाषा॥ १७॥

तनोतेर्दीर्घो वा स्याज्झलादौ सनि। तितांसति। तितंसति। झलादौ किम्। तितनिषति। सनीवन्त(७।२।४९)-त्यत्र तनोतेरुपसङ्ख्यानाद्विकल्पः॥

क्रमश्च क्त्वि॥ १८॥

झलादौ क्त्वाप्रत्यये क्रमो दीर्घो वा स्यात्। क्रान्त्वा। क्रन्त्वा। झलि किम्। क्रमित्वा। उदितोपीड्विकल्पः। प्रक्रम्येत्यत्र बहिरङ्गोपि ल्यबन्तरङ्गान् बाधत इति न दीर्घः॥

## —च्छ्वोः शूडनुनासिके च ॥ १९ ॥

सतुक्कस्यच्छस्य वस्य च क्रमात् श ऊठ् एतावादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति। विश्नः। प्रश्नः। अन्तरङ्गानपि छे चे(६।१।७३)ति तुकि सतुक्कस्य शादेशः। स्योनः। सिवेरौणादिके नमत्यये उठ्। यण्। सार्वधातुके(७।३।८४)ति गुणः। क्वौ। शब्दप्राट्। क्विब्वची(उ०२१५)ति क्विप् दीर्घश्च। अक्षद्यूः। झलादौ पृष्टः। द्यूतः। क्ङितीत्येव। द्युभ्याम्। द्युभिः। क्ङितीत्यननुवृत्तावपि दिव उदि(६।१।१३१)त्युत्वेन द्युभ्यामित्यादि सिध्यतीत्याकरे। ऊठः ठित्करणमित्येभत्यूठ्स्वि(६।१।८९)ति विशेषणार्थम्। वाह ऊडपि ठिदेव ॥

## ज्वरत्वरस्रिव्यविमवामुपधायाश्च ॥ २० ॥

एषां वकारस्योपधायाश्चोठ् स्यात् क्वौ झलादौ च। जूः। जूर्तिः। तूः। तूर्तिः। स्रूः। स्रूतिः। ऊः। ऊतिः। मूः। मूतिः ॥

## राल्लोपः ॥ २१ ॥

रेफात्परयोः छ्वोर्लोपः स्यात्क्वौ झलादौ च। मूर्छ। मूः। मुरौ। मूर्तः। मूर्तिः। नध्याख्ये(८।२।५७)ति नत्वनिषेधः। तुर्वी। तूः। तुरौ। तूर्णः ॥

## असिद्धवदत्राभात् ॥ २२ ॥

इत ऊर्ध्वमापदसमाप्तेः कार्यमाभाच्छास्त्रीयम्। तस्मिन् कर्तव्ये तद्वत् कार्यमसिद्धवत्स्यात्। एधि। शाधि। एत्वशाभावयोरसिद्धत्वाज्झलन्तलक्षणं धित्वम्। जहि। हन्तेर्जादेशस्यासिद्धत्वादतो हे(६।४।१०५)रिति न लुक्। अत्रग्रहणं कार्यद्वयस्य समानाश्रयत्वलाभार्थम्। तेन वपुषः पश्येत्यादौ वसोः संप्रसारणमाल्लोपे नासिद्धम्। आल्लोपः वसौ। त्रस्वन्तस्य

र्वोहुर्छ्यों यङ्लुगन्तयो राल्लोप(६।४।२१)इति छकारवकारयो स्थि
प माश्रित्य झलादिप्रत्ययपरत्वनिमित्तलोपेसति तन्निमित्तगुणो
स्यात्। इकःकिम्। अभाजि। रागः। लोलुव इत्यादौ यङोऽका
रस्यातो लोपे सति यकारमात्रस्यैव सम्भवा दचिपरतो गुणादौ क
र्तव्ये ऽल्लोपस्य स्थानिवत्त्वादगुणाद्यप्रसङ्गात्सूत्रमिदं नकर्तव्य मि
त्याकरे। यदिसूत्रं नक्रियेत लोलुव इत्यादा वुवङि कृते लघूपधगु
णः स्यात्। नच तत्राचः स्थानिवद्भावः। अनादिष्टादचः पूर्ववि
धौस्थानिवद्भावात्। उवङ आदिष्टादचः पूर्वत्वात्। एवंयायावरः
दरीदृशइति आतोलोप (६।४।६४) इति ऋदृशोङिगुण (७।४।१६)
इतिचस्यात् इतिहरदत्तः। अत्राहुः। अङ्गवृत्ते पुनर्वृत्तावविधि र्नि-
ष्ठितस्ये त्येवंगुणादयोनभविष्यन्तीत्येवंभाष्याभिप्रायइति॥

## क्ङितिच ॥५॥

क्ङिन्निमित्ते इकोगुणवृद्धीनस्तः। चितम्। छिन्नम्। मृष्टः। अत्र
गकारोऽपि चर्त्वभूतोनिर्दिश्यते। ग्लाजिस्थश्चग्स्नुः (३।२।१३९)।
जिष्णुः। इकःकिम्। लैगवायनः। कामयते॥

## मृजेरजादौक्ङितिवृद्धिर्वेष्यते॥

मृजन्ति। मार्जन्ति॥

१ क्ङितीतिपरसप्तमीत्यपिभाष्येस्थितम्। निङ्त्यनन्तरो य
इ तस्ययत्किंचिन्निमित्ते गुणवृद्धीनेति। नचैवंभिन्नमित्यादौदे
वर्णेण व्यवधानान्निषेधाप्रसङ्गः। क्नोः कित्त्वविधानाद् ज्ञापकात्

संप्रसारणं विभक्तावितिः समानाश्रयत्वाभावः ॥

वुग्युटावुवङ्यणोः सिद्धौ वाच्यौ ॥

बभूव । बभूवतुः । दिदीये । दिदीयाते ॥

श्नान्न लोपः ॥ २३ ॥

श्नमः परस्य नस्य लोपः स्यात् । हिनस्ति । सशकारग्रहणं किम् । यज्ञानाम् । विश्नानामित्यादौ लाक्षणिकत्वान्नलोपाभावः ॥

अनिदितां हल उपधायाः क्ङिति ॥ २४ ॥

हलन्तानामनिदितामुपधाया नकारस्य लोपः स्यात्किति ङिति प्रत्यये । स्रस्तः । सनीस्रस्यते । अनिदितां किम् । नन्द्यते । हलः किम् । नीयते । उपधायाः किम् । नह्यते । क्ङिति किम् । स्रंसिता ॥

लगिकम्प्योरुपतापशरीरविकारयोर्नलोपो वाच्यः ॥

विलगितः । विकपितः । उपतापादौ किम् । विलङ्गितः । विकम्पितः ॥

रञ्जेर्णौ मृगरमणे ॥

रजयति मृगान् । अन्यत्र रञ्जयति वस्त्रम् ॥

घिनुणि च ॥

रागि । त्यजरजेति निपातनादप्येतत्सिद्धम् ॥

रजनरजकरजस्सु च ॥

रजनम् । रजकः । रजः । रुचकभुवनवदौणादिकप्रत्ययानां कित्वेनापि रजकादिसिद्धिरित्याकरे ॥

दंशसञ्जस्वञ्जां शपि ॥ २५ ॥

एषां नलोपः शपि । दशति । सजति । परिष्वजते ॥

रञ्जेश्च ॥ २६ ॥

शपि नलोप इत्येव । रजति । योगविभाग उत्तरार्थः ॥

घञि च भावकरणयोः ॥ २७ ॥

भावकरणवाचिनि घञि रञ्जेर्नलोपः स्यात् । रागः । रजत्य(ज्यते)नेनेति रागः। भावादौ किम्। रजत्यस्मिन्निति रङ्गः॥

स्यदो जवे ॥ २८ ॥

स्यन्देर्नलोपो वृद्ध्यभावश्च निपात्यते वेगे । अश्वस्य स्यदः । जवे किम् । तैलस्य स्यन्दः ॥

अवोदैधौद्मप्रश्रथहिमश्रथाः ॥ २९ ॥

एते निपाताः । अवपूर्वस्योन्देर्घञि नलोपः । अवोदः । इन्देर्घञि नलोपगुणौ । एधः । उन्देरौणादिके मन्प्रत्यये नलोपगुणौ । ओद्मः । प्रहिमपूर्वस्य श्रन्थेर्घञि नलोपो वृद्ध्यभावश्च । प्रश्रथः । हिमश्रथः ॥

नाञ्चेः पूजायाम् ॥ ३० ॥

पूजार्थस्याञ्चतेर्नलोपो न । अञ्चिता गुरवः । अञ्चेः पूजाया(७।२।५३)मितीट् । पूजायां किम् । उदक्तमुदकम् । उद्धृतमित्यर्थः । यस्य विभाषे(७।२।१५)तीडभावः ॥

क्त्वि स्कन्दस्यन्दोः ॥ ३१ ॥

क्त्वाप्रत्यये एतयोर्नलोपो न । स्कन्त्वा । स्यन्त्वा । स्यन्दित्वेति तु न क्त्वा सेडि(१।२।१८)ति कित्वाभावादेव सिध्यति ॥

जान्तनशां विभाषा ॥ ३२ ॥

जकारान्तानां नशेश्च नलोपो न स्याद्वा क्त्वि । मङ्-

त्त्वा। मक्त्वा। भङ्क्त्वा। भक्त्वा। रङ्क्त्वा। रक्त्वा। नंष्ट्वा। नष्ट्वा॥

भञ्जेश्च चिणि॥ ३३॥

वा नलोपः। अभञ्जि। अभाजि॥

शास इदङ्हलोः॥ ३४॥

शास उपधाया इकारादेशः स्यादङि हलादौ च क्ङिति। अशिषत्। अशिषताम्। शिष्टः। शिष्टवान्। शिष्टः। शिष्मः। शासिवसी(८।३।६०)ति षत्वम्। अङ्हलोः किम्। शासति। क्ङिति किम्। शास्ति॥

क्वौ च शास इत्वम्॥

आर्यं शास्तीत्यार्यशीः। शासु अनुशिष्टावित्यस्यात्र ग्रहणम्। तेन आङः शासु इच्छायामित्यस्य इत्वं न। आशास्यते। आशास्यमानः॥

क्विपि तस्यापीष्यते॥

अशीः। क्षियाशी(८।२।१०४)रिति निपातनाद्वा सिद्धम्॥

शा हौ॥ ३५॥

हौ परे शास्तेः शादेशः स्यात्। शाभावस्यासिद्धत्वात् हुझल्भ्य(६।४।१०१) इति हेर्धिः। शाधि॥

हन्तेर्जः॥ ३६॥

हन्तेर्जादेशः स्याद्धौ। जहि। जादेशस्यासिद्धत्वान्न हेर्लुक्॥

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति॥ ३७॥

अनिटां वसतेस्तनोत्यादीनां चानुनासिकलोपः स्याज्झलादौ

क्षिति। यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः। तनु क्षणु ऋणु[तृणु]घृणु वनु मनु तनोत्यादयः। यतिः। त(र)तम्। नतवान्। गत्वा। हत्वा। मतिः। ततिः। क्षतिः। ऋतम्। घृतवान्। वतवान्। मतवान्। ङित्यपि। अतत। अतथाः। एषां किम्। दान्तः। अनुनासिकस्य किम्। पक्वम्। झलि किम्। गम्यते। क्ङिति किम्। यन्ता। उपदेशेति किम्। इह च यथा स्यात्। गतिः। इह मा भूत्। शान्तः॥

वा ल्यपि॥ ३८॥

ल्यपि प्रागुक्तं वा स्यात्। व्यवस्थितविभाषात्वान्मन्त्रे विकल्पोऽन्यत्र नित्यम्। प्रयत्य। प्ररत्य। प्रणत्य। प्रगत्य। पक्षे प्रयम्येत्यादि। प्रतत्य। प्रवत्य। प्रमत्य॥

न क्तिचि दीर्घश्च॥ ३९॥

क्तिचि प्रागुक्तानुनासिकलोपो न स्यात्तत्रानुनासिकस्य क्विझलो(६।४।१५)रिति प्राप्तदीर्घश्च न स्यात्। यन्तिः। तन्तिः॥

गमः क्वौ॥ ४०॥

अनुनासिकलोपः। जनगत्॥

गमादीनां वाच्यम्॥

संयत्। परितत्॥

ऊङ् च गमादीनामलोपश्च॥

अग्रेगूः। अग्रभ्रूः॥

विड्वनोरनुनासिकस्यात्॥ ४१॥

अनुनासिकान्तस्याङ्गस्याकारोऽन्तादेशः स्याद्विटि वनि च। अब्जाः। गोजाः। दधिक्राः। जनसने(३।२।६७)ति

विट्। वनिपि विजावा। अग्रेगावा। अन्येभ्योपि दृश्यन्त (३।२।७५) इति वनिप्॥

जनसनखनां सञ्झलोः॥ ४२॥

एषामकारोन्तादेशः स्याज्झलादौ सनि क्ङिति झलि च। जातः। सिषासति। सातः। खातः। झलादौ किम्। जिजनिषति। सिसनिषति। चिखनिषति। सनीवन्तर्धे(७।२।४९)-तीड्विकल्पात्सनोसर्थमेव सन्ग्रहणम्। अन्यत्र झलादित्वाभावात् परत्वादात्वं सनोतेरनुनासिकलोपं बाधते॥

ये विभाषा॥ ४३॥

जनसनखनामाकारोन्तादेशो वा स्याद्यादौ क्ङिति। जायते। जन्यते। सायते। सन्यते। खायते। खन्यते। चाखायते। चङ्खन्यते॥

तनोतेर्यकि॥ ४४॥

आकारोन्तादेशो वा। तायते। तन्यते। यकि किम्। तन्तन्यते॥

सनः क्तिचि लोपश्चास्यान्यतरस्याम्॥ ४५॥

सनोतेः क्तिचि आकारादेशो वा स्यान्नलोपश्च वा। सातिः। सतिः। सन्तिः॥

आर्धधातुके॥ ४६॥

न ल्यपीति(६।४।६९)पर्यन्तमयमधिकारः॥

भ्रस्जो रोपधयोरमन्यतरस्याम्॥ ४७॥

भ्रस्जो रेफस्योपधायाः सकारस्य च स्थाने रमागमो वा स्यादार्धधातुके। मिदचोन्त्यात्परः(१।१।४७)। रोपधयोः स्थाने

विहितत्वात्तयोर्निवृत्तिः । मर्ष्टा । भ्रष्टा । भर्ष्टुम् । भ्रष्टुम् । भ्रज्जनम् । मर्जनम् ॥ क्ङिति तु पूर्वविप्रतिषेधेन संप्रसारणमेवेष्यते ॥ भृष्टः । भृष्टवान् । उपदेश इत्येव । वरीभृज्यते ॥

अतो लोपः ॥ ४८ ॥

अकारस्य लोपः स्यादार्धधातुके । चिकीर्षिता । चिकीर्षितुम् । अतः किम् । चेता । तपरत्वं किम् । याता । अर्धधातुके किम् । वृक्षत्वम् । वृद्धिदीर्घाभ्यामतो लोपः पूर्वविप्रतिषेधेनेति । चिकीर्षकः । चिकीर्ष्यते ॥

यस्य हलः ॥ ४९ ॥

हलः परस्य यकारस्य लोपः स्यादार्धधातुके । बेभिदिता । बेभिदितुम् । यस्येति सङ्घातग्रहणम् । अतो लोपः । आदेः परस्ये(१।१।५४)ति यलोपः । सङ्घातग्रहणं किम् । ईर्ष्यिता । हलः किम् । लोलूयिता ॥

क्यस्य विभाषा ॥ ५० ॥

हलः परयोः क्यच्क्यङोर्लोपो वा स्यादार्धधातुके । समिधिता । समिध्यिता । समिधमिच्छति समिदिवाचरतीति क्यच्क्यङौ ॥

णेरनिटि ॥ ५१ ॥

अनिडादावार्धधातुके परे णेर्लोपः स्यात् । अररक्षत् । कारणा । हारणा । अनिटि किम् । कारयिता ॥

निष्ठायां सेटि ॥ ५२ ॥

निष्ठायां णेर्लोपः । कारितं गणितं च । सेटीति कालावधारणार्थं पूर्वमिट् पश्चाण्णिलोपो यथा स्यात् । अन्यथा नि-

सत्वात्पूर्वं णिलोपे ससेकाच इतीट्प्रतिषेधः कारितमित्यादौ स्यात्। पूर्वस्मादपि विधौ स्थानिवद्भावात्सेड्ग्रहणं चिन्त्यप्रयोजनकम् ॥

## जनिता मन्त्रे ॥ ५३ ॥

इडादौ णिलोपो निपात्यते। यो नः पिता जनिता। मन्त्रे किम्। जनयिता ॥

## शमिता यज्ञे ॥ ५४ ॥

यज्ञकर्मणि मन्त्रे शमितेति निपातः। शृतं हविः शमितः। यज्ञे किम्। शमयिता ॥

## अयामन्ताल्वाय्येत्न्विष्णुषु ॥ ५५ ॥

आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात्। कारयाञ्चकार। मन्त्रयन्तः। गतिमन्तिजानिभ्यश्चेति झच्। स्पृहयालुः। स्पृहयाय्यः। स्तनयित्नुः। पोषयिष्णुः। नेति वाच्ये अयादेशवचनमुत्तरार्थम् ॥

## ल्यपि लघुपूर्वात् ॥ ५६ ॥

लघुपूर्वाद्वर्णात्परस्य णेरयादेशः स्याल्ल्यपि। प्रशमय्य गतः। प्रबेभिदय्य। प्रगणय्य। ल्याश्रयत्वात् ह्रस्वयलोपालोपानामसिद्धत्वं न। णौ ह्रस्वादयो ल्यप्ययादेशः। लघुपूर्वात्किम्। प्रपाठ्य ॥

## विभाषापः ॥ ५७ ॥

आपः परस्य णेरय् वा स्याल्ल्यपि। प्राप्य। प्रापय्य। अध्याप्येत्यत्र आत्वे पुकि चाकृतमिति लाक्षणिकत्वान्नायादेशः ॥

## युप्लुवोर्दीर्घश्छन्दसि ॥ ५८ ॥

एतयोर्ल्यपि दीर्घः स्यात् । वियूय । परिप्लूय । छन्दसि किम् । संयुत्य । आप्लुत्य ॥

## क्षियः ॥ ५९ ॥

ल्यपि दीर्घः इत्येव । प्रक्षीय ॥

## निष्ठायामण्यदर्थे ॥ ६० ॥

अभावकर्मवाचिन्यां निष्ठायां परतः क्षियो दीर्घः स्यात् । प्रक्षीणः । अकर्मकत्वात्कर्तरि क्तः । अण्यदर्थे किम् । अक्षितमसि । भावेऽत्र क्तः ॥

## वाऽऽक्रोशदैन्ययोः ॥ ६१ ॥

एतयोर्गम्यमानयोः प्रागुक्तं वा स्यात् निन्दायाम् । क्षितायुः क्षीणायुर्वा जाल्मः । दैन्ये क्षितकः । क्षीणकः । क्षियो दीर्घा(८।२।४६)दिति निष्ठानत्वम् । एतयोः किम् । क्षीणस्तपस्वी ॥

## स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ॥ ६२ ॥

उपदेशे अजन्तानाम् हनादेश्च चिण्वत्कार्यं वा स्यात् भावकर्मविषयेषु स्यादिषु परतो यदा चिण्वद्भावस्तदा स्यादीनामिडागमश्च । चिण्वद्भावाद्वृद्धिः । आतो युक् ॥

हन्तेर्घत्वं, मितां वा दीर्घश्च ॥

चेष्यते । चायिष्यते । दास्यते । दायिष्यते । शमिष्यते । शामिष्यते । शमयिष्यते । हनिष्यते । घानिष्यते । ग्रहीष्यते ।

ग्राहिष्यते । ग्रहोऽलिटी(७।२।३७)ति तु प्रकृतस्यैवेटो दीर्घत्वम् । न चिण्वदिटः । द्रक्ष्यते । दर्शिष्यते । सिचि । अचेषाताम् । अचायिषाताम् । अवधिषाताम् । अहसाताम् । अघानिषाताम् । अग्रहिषाताम् । अग्राहिषाताम् । अदृक्षाताम् । अदर्शिषाताम् । आशिषि । चेषीष्ट । चायिषीष्ट । वधिषीष्ट । घानिषीष्ट । परत्वाद्वधिभावं बाधित्वा पक्षे चिण्वद्भावः । ग्रहिषीष्ट । ग्राहिषीष्ट । दृक्षीष्ट । दर्शिषीष्ट । तासौ । चेता । चायिता । हन्ता । घानिता । ग्रहिता । ग्राहिता । द्रष्टा । दर्शिता । स्यादिषु किम् । चेतव्यम् । भावकर्मणोः किम् । चेष्यति । उपदेशे किम् । नारिष्यते । परत्वाद्गुणे परत्वे चानजन्तत्वान्न स्यात् । पाठिष्यते । न तु हनो वध लुङी(२।४।४२)त्याङ्गमेव कार्यमतिदिश्यते । न तु हनो वध लुङी(२।४।४२)त्यादिकम् ॥

दीङो युडचि क्ङिति ॥ ६३ ॥

दीङः परस्याजादेः क्ङितो युडागमः स्यात् । दिदीये । दिदीयते । दिदीयेत । अचि किम् । देदीयते । क्ङिति किम् । दानम् ॥

आतो लोप इटि च ॥ ६४ ॥

इट्यजादावार्धधातुके क्ङिति चातो लोपः स्यात् । पपिथ । पपथुः । गोदः । आर्धधातुके किम् । यान्ति । अचि किम् । ग्लायते ॥

ईद्यति ॥ ६५ ॥

आत ईकारादेशः स्याद्यति । देयम् । गेयम् ॥

घुमास्थागापाजहातिसां हलि ॥ ६६ ॥

एषामात ईत्स्यात्क्ङिति हलि । दीयते । देदीयते । धी-

यते । मीयते । स्थीयते । गीयते । पीयते । पिबतेर्ग्रहणम् । पातेस्तु पायत इत्येव । हीयते । जहाति निर्देशाज्जिहीतेर्न । हायते । अवमीयते । हलि किम् । ददतुः । आतो लोपाद्धि परत्वादीत्वं स्यात् । हलग्रहणं ज्ञापकमस्मिन् प्रकरणे विप्रतिषेधो भवतीति । क्ङिति किम् । दाता ॥

एर्लिङि ॥ ६७ ॥

घ्वादीनामात एत्वं स्यादार्धधातुके लिङि । देयात् । धेयात् । मेयात् । स्थेयात् । गेयात् । पेयात् । हेयात् । अवसेयात् । कृङितीत्येव । दासीष्ट ॥

वान्यस्य संयोगादेः ॥ ६८ ॥

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके लिङि । ग्लेयात् । ग्लायात् । संयोगादेः किम् । यायात् । कृङितीत्येव । ग्लासीष्ट ॥

न ल्यपि ॥ ६९ ॥

घ्वादेरीत्वं न स्याल्ल्यपि । प्रदाय । प्रमायेत्यादि ॥

मयतेरिदन्यतरस्याम् ॥ ७० ॥

मेङ इद्वा स्याल्ल्यपि । अपमित्य । अपमाय ॥

लुङ्लङ्लृङ्क्ष्वडुदात्तः ॥ ७१ ॥

एषु परेष्वङ्गस्याडागमः स्यात्स चोदात्तः । अकार्षीत् । अकरोत् । अकरिष्यत् ॥

आडजादीनाम् ॥ ७२ ॥

अजादेरङ्गस्य उदात्त आडागमः स्याल्लुङ्लङ्लृङ्क्षु ।

ऐक्षिष्ट । ऐक्षत । ऐक्षिष्यत । औप्यतेत्यादावडागमादन्तरङ्गत्वात्पूर्वं लादेशः। पश्चान्नित्यत्वाद्विकरणः । नित्यत्वादेव संप्रसारणम्। पश्चादाडागमः ॥

छन्दस्यपि दृश्यते ॥ ७३ ॥

हलादेरप्याट्। सुरुचो वेन आवः। आवरिति वृञो लुङि मन्त्रे घसह्वरे(२।४।८०)ति लेर्लुकि रूपम् ॥

न माङ्योगे ॥ ७४ ॥

लुङ्लङ्लृङ्क्षूक्तं माङ्योगे न स्यात्। मा भवान् भूत् । मा स्म भवत्। मा स्म भूत्। म भावानीक्षिष्ट। मा भवानीहत ॥

बहुलं छन्दस्यमाङ्योगेपि ॥ ७५ ॥

छन्दसि बहुलमडाटौ स्याताम् माङ्यपि स्यातामामाङ्यपि न स्याताम्। जनिष्ठा उग्रः । मा वः क्षेत्रे परबीजान्यवाप्सुः ॥

इरयो रे ॥ ७६ ॥

इरे इत्यस्य रे वा स्याच्छन्दसि। प्रथमं दध्र आपः । कचिन्न। कर्माणि चक्रिरे ॥

अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ॥ ७७ ॥

श्नुप्रत्ययान्तस्य भ्रू इत्येतस्य धातोश्चेवर्णोवर्णयोः क्रमादियङुवङौ स्तोऽचि परे । आप्नुवन्ति । चिक्षियतुः। लुलुवतुः। भ्रुवौ। भ्रुवः। अचि किम् । आप्नुयात्। श्न्वादीनां किम्। लक्ष्म्यौ। वध्वौ। य्वोः किम्। चक्रतुः ॥

इयङुवङ्भ्यां गुणवृद्धी विप्रतिषेधेन ॥

चयनम्। चायकः ॥

तन्वादीनां छन्दसि वा ॥

तनुवम् । तन्वम् । त्र्यम्बकम् । त्रियम्बकम् ॥

अभ्यासस्यासवर्णे ॥ ७८ ॥

अभ्यासस्येवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेचि । इयेष । उवोष । असवर्णे किम् । ईषतुः । ऊषतुः । अचि किम् । इयाय ॥

स्त्रियाः ॥ ७९ ॥

स्त्रीशब्दस्येयङ् स्यादजादौ । स्त्रियौ । स्त्रियः । परत्वान्नुट् । स्त्रीणाम् ॥

वामशसोः ॥ ८० ॥

अमि शसि च स्त्रिया इयङ्वा स्यात् । स्त्रीम् । स्त्रियम् । स्त्रीः । स्त्रियः ॥

इणो यण् ॥ ८१ ॥

इणोऽङ्गस्य यण्स्यादचि । इयङोऽपवादः । यन्ति । यन्तु । परत्वाद्गुणवृद्धी । अयनम् । आयकः ॥

एरनेकाचोऽसंयोगपूर्वस्य ॥ ८२ ॥

अनेकाचोऽङ्गस्य धातोरिवर्णस्य यण् स्यादचि धात्ववयवसंयोगः पूर्वो यस्मात्तस्य तु न स्यात् ॥

गतिकारकपूर्वस्यैव किवन्तस्येष्यते ॥

निन्यतुः । निन्युः । उन्न्यौ । उन्न्यः । ग्रामण्यौ । ग्रामण्यः । एः किम् । लुलुवतुः । अ'ः सुधी(६।४।८३)ति नियमेनाप्येतत्सिध्यति । अनेकाचः किम् । नियौ । नियः । असंयोगपूर्वस्य किम् । सुश्रियौ । यवक्रियौ । गतिकारकेति किम् । परमनियौ ॥

## ओः सुपि ॥ ८३ ॥

उवर्णान्तस्य यण्स्यादजादौ सुपि। खलप्वौ। खलप्वः। सुपि किम्। लुलुवतुः। अनेकाच एव। लुवौ। लुवः। असंयोगपूर्वस्यैव। कटप्रुवौ। कटप्रुवः॥

गतिकारकपूर्वस्यैव॥

परमलुवौ॥

## वर्षाभ्वश्च ॥ ८४ ॥

अस्य यण् स्यादचि सुपि। वर्षाभ्वः॥ वर्षाभ्वौ

दृन्कारापुनर्भ्वश्च॥

दृन्भ्वौ। काराभ्वौ। पुनर्भ्वौ॥

## न भूसुधियोः ॥ ८५ ॥

भ्वन्तस्य सुधियश्च(१) यण् न स्यादचि। प्रतिभुवौ। सुधियौ॥

## छन्दस्युभयथा ॥ ८६ ॥

वनेषु विचित्रं विभुवम्। विभ्वम्। सुधियो नव्यम्। सुध्यो नव्यम्॥

## हुश्नुवोः सार्वधातुके ॥ ८७ ॥

हुश्नुवोरसंयोगपूर्वोवर्णस्य यण् स्यादचि सार्वधातुके। जुह्वति। सुन्वन्ति। हुश्नुवोः किम्। योयुवति। हुश्नुग्रहणं ज्ञापकं भाषायामपि यङ्लुगस्तीति। छन्दसि तु छन्दस्युभयथे-(३।४।११७)त्यार्धधातुकत्वादेव यणोऽप्रसङ्गात्। नहि लोके यङ्लुगन्तादन्यदुवर्णान्तमनेकाजसंयोगपूर्वं सार्वधातुके वर्तते। सार्वधातुके किम्। जुहुवतुः। असंयोगपूर्वस्य किम्। आप्नुवन्ति॥

---

१ 'एतयोः, पा०।

भुवो वुग्लुङ्लिटोः ॥ ८८ ॥

भुवो वुगागमः स्यात् लुङ्लिटोरचि । अभूवन् । बभूव ॥

ऊदुपधाया गोहः ॥ ८९ ॥

गुहेः उपधाया ऊकारादेशः स्याद्गोह इति निर्देशाद्गुणहेतावचि । गूहयति । गूहनम् । गूहकः । उपधायाः किम् । अन्त्यस्य मा भूत् । गुणहेतौ किम् । निजुगुहतुः । अचि किम् । निगोढा ॥

दोषो णौ ॥ ९० ॥

दोष उपधाया ऊत्स्याण्णौ । दूषयति । णौ किम् । दोषः ।

वा चित्तविरागे ॥ ९१ ॥

चित्तविरागेऽर्थे दोष उक्तं वा । चित्तं दूषयति दोषयति वा ।

मितां ह्रस्वः ॥ ९२ ॥

घटादयो मित इति कृतसंज्ञकानामुपधायाः ह्रस्वः स्याण्णौ । घटयति । व्यथयति । अत्र वेत्यनुवृत्त्या सङ्कामयतीत्यादिर्मिद्धिरिति केचित् ॥

चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ॥ ९३ ॥

चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यात् । अशामि । अशमि । शामं शामम् । शमम् शमम् । दीर्घग्रहणं किम् । द्वितीये णिचि पूर्वणिलोपस्य दीर्घविधौ स्थानिवत्त्वनिषेधात् शमयन्तं प्रयोजितवान् अशामि अशमीति रूपद्वयं यथा स्यात् । ह्रस्वविकल्पे तु स्थानिवद्भावात्पक्षे दीर्घो न स्यात् । चणाश्रयत्वादसिद्धत्वमपि नास्ति । णौ णिलोपः चिण्णमुल्परे णौ दीर्घ इति ॥

खचि ह्रस्वः ॥ ९४ ॥

खच्परे णावङ्गस्योपधाया ह्रस्वः स्यात् । द्विषन्तपः । पुरन्दरः ॥

ह्लादो निष्ठायाम् ॥ ९५ ॥

अस्योपधाया ह्रस्वः स्यान्निष्ठायाम् । प्रह्लन्नश्चैत्रः प्रह्लन्नवान् । निष्ठायां किम् । ह्लादयति । योगविभागात् प्रह्लत्तिरिति सिद्ध्यति ॥

छादेर्घेऽद्व्युपसर्गस्य ॥ ९६ ॥

छादयतेरुपधायाः ह्रस्वः स्यात् घे । दन्तच्छदः । प्रच्छ- । विधिवत्वाण्णिलोपस्य न स्थानिवत्त्वासिद्धत्वे । अद्व्यु- स्य किम् । समुपच्छादः ॥

द्विप्रभृतौ वाच्यम् ॥

समुपाभिच्छादः ॥

इस्मन्त्रन्क्विषु च ॥ ९७ ॥

एषु छादेर्ह्रस्वः । छदिः । छद्म । छत्रम् । धामच्छत् ॥

गमहनजनखनघसां लोपः क्ङित्यनङि ॥ ९८ ॥

एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । जग्मतुः । जग्मुः । जघ्नतुः । जघ्नुः । जज्ञुः । चख्नतुः । जक्षुः । क्ङिति किम् । गमनम् । अचि किम् । गम्यते । अनङि किम् । अगमत् ॥

तनिपत्योश्छन्दसि ॥ ९९ ॥

उपधालोप इत्येव । विततिनरे । विपप्तिरे । छन्दसि किम् । वितेनिरे । विपेतिरे ॥

## घसिभसोर्हलि च ॥ १०० ॥

एतयोश्छन्दस्युपधालोपः स्यात् हल्यजादौ च । सग्धिः । बप्साम् । अद्रेः क्तिनि बहुलं छन्दसी(२।४।३९)ति घस्लादेशे उपधालोपे झलो झली(८।२।२६)ति नलोपे तस्य धत्वे घस्य जश्त्वे समाना ग्धिरिति समासे समानस्य सभावे सग्धिः । बप्सामिति भसेर्लोटि तामि श्लौ द्विर्वचने उपधालोपसलोपचर्त्वजश्त्वानि । अजादौ बप्सति । क्विनीखेव । कपिर्भमस्ति ॥

## हुझल्भ्यो हेर्धिः ॥ १०१ ॥

होर्झलन्ताच्च हेर्धिः स्यात् । जुहुधि । भिन्धि । हुझल्भ्यः किम् । क्रीणीहि । हेरिति किम् । भिन्ताम् । हलादिरेव । रुदिहि । भिन्धकीत्यत्र धिभावे कृते पश्चादकच् । पुनः प्रसङ्गात् ॥

## श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ १०२ ॥

एभ्यो हेर्धिः स्याच्छन्दसि । श्रुधी हवम् । शृणुधि । धिविधित्वलादुतश्चे(६।४।१०६)ति न हेर्लुक् । पूर्धि चक्षुः । उरुणस्कृधि । अपावृधि ॥

## अङितश्च ॥ १०३ ॥

अङितो हेर्धिः स्याच्छन्दसि । वा छन्दसी(३।४।८८)ति पित्त्वेनाङित्त्वं हेः । प्रयन्धि । युयोधि । यमेः शपो लुक् । यौतेः शपः श्लुः । अनुनासिकलोपाभावगुणाभ्यां पित्त्वम् ॥

## चिणो लुक् ॥ १०४ ॥

चिणः परस्य प्रत्ययस्य लुक् स्यात् । अकारि । अकारितरामित्यत्र तलोपस्यासिद्धत्वात्तरपो लोपो न । विषयभेदेनैकमपि शास्त्रं भिद्यत इति चिणो लुक् । चिणो लुक्येवासिद्धः ॥

अतो हेः ॥ १०५ ॥

अतः परस्य हेर्लुक्स्यात् । पच । अतः किम् । युहि । तपरः किम् । लुनीहि । इत्वस्यासिद्धत्वादवर्णान्तत्वम् ॥

उतश्च प्रत्ययादसंयोगपूर्वात् ॥ १०६ ॥

असंयोगपूर्वप्रत्ययोकारात्परस्य हेर्लुक् स्यात् । चिनु । कुरु । उतः किम् । लुनीहि । प्रत्ययात्किम् । युहि । असंयोगपूर्वात्किम् । आप्नुहि ॥

छन्दसि वा वचनम् ॥

अत्रास्थिरातनुहि । धिनुहि । कृणुहि ॥

लोपश्चास्यान्यतरस्यां म्वोः ॥ १०७ ॥

असंयोगपूर्वप्रत्ययोकारस्य लोपो वा स्यात् मवयोः परतः । चिन्वः । चिनुवः । चिन्मः । चिनुमः । तन्वः । तनुवः । तन्मः । तनुमः । प्रत्ययेति किम् । युवः । युमः । असंयोगपूर्वेति किम् । शक्नुवः ॥

नित्यं करोतेः ॥ १०८ ॥

करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यात् म्वोः परतः । कुर्वः । कुर्मः । न भकुर्छुरा(८।२।७९)मिति न दीर्घः ॥

ये च ॥ १०९ ॥

कृञ उलोपः स्याद्यादौ प्रत्यये । कुर्यात् ॥

अत उत्सार्वधातुके ॥ ११० ॥

अप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति । कुरुतः । कुर्वन्ति । सार्वधातुके किम् । भूतपूर्वसार्वधा-

तुकेपि यथा स्यात् । कुरु । तपरकरणं लघूपधगुणनिवृत्त्यर्थम् । क्ङिति किम् । करोति ॥

श्नसोरल्लोपः ॥ १११ ॥

श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति । भिन्तः । भिन्दन्ति । स्तः । सन्ति । क्ङिति किम् । भिनत्ति । अस्ति । श्नसोरिति शकन्ध्वादित्वात्पररूपम् ॥

श्नाभ्यस्तयोरातः ॥ ११२ ॥

अनयोरातो लोपः स्यात् सार्वधातुके क्ङिति । लुनते । मिमते । श्नाभ्यस्तयोः किम् । याति । आतः किम् । बिभ्यति । क्ङिति किम् । अलुनात् । अजहात् ॥

ई हल्यघोः ॥ ११३ ॥

श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि न तु घुसंज्ञस्य । पुनीते । मिमीते । हलि किम् । लुनते । मिमते । अघोः किम् । दत्तः । क्ङिति किम् । लुनाति ॥

इद्दरिद्रस्य ॥ ११४ ॥

दरिद्रातेरात इत्स्यात्सार्वधातुके क्ङिति हलि । दरिद्रितः । दरिद्रिथः । हलि किम् । दरिद्रति । क्ङिति किम् । दरिद्राति ॥

दरिद्रातेरार्धधातुके लोपो वाच्यः सिद्धश्च प्रत्ययविधौ ॥

दरिद्रातीति दरिद्रः । श्याद्व्यधे(३।१।१४१)त्यादन्तलक्षणो णप्रत्ययो न । किं तु पचाद्यजेव ॥

न दरिद्रायके लोपो दरिद्राणे च नेष्यते ।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा ॥

लुङि वा ॥

अदरिद्रीत् । अदरिद्रासीत् । दरिद्रस्येति द्रो निर्देशः । छान्दसं ह्रस्वत्वम् ॥

भियोन्यतरस्याम् ॥ ११५ ॥

भिय इकारोन्तादेशो वा स्यात्सार्वधातुके क्ङिति हलि । बिभितः । बिभीतः । बिभियात् । बिभीयात् । हलि किम् । बिभ्यति । क्ङिति किम् । बिभेति । सार्वधातुके किम् । भीतः ॥

जहातेश्च ॥ ११६ ॥

जहातेरात इत्स्याद्वा सार्वधातुके क्ङिति हलि । जहितः । जहीतः । जहिथः । जहीथः । हलि किम् । जहति । क्ङिति किम् । जहाति । सार्वधातुके किम् । हीयते । योगविभाग उत्तरार्थः ॥

आ च हौ ॥ ११७ ॥

हौ परे जहातेरात आ वा स्यात्पक्षे इत् ई च । जहाहि । जहिहि । जहीहि ॥

लोपो यि ॥ ११८ ॥

जहातेरालोपः स्यात्सार्वधातुके ये परे । जह्यात् । सार्वधातुके किम् । हेयात् ॥

घ्वसोरेद्धावभ्यासलोपश्च ॥ ११९ ॥

घोरस्तेश्चैत्वं स्यात् हौ परेभ्यासस्य च लोपः स्यात् । शित्त्वं सर्वादेशार्थम् । अन्यथान्त्यस्य लोपः स्यात् । देहि । धेहि । श्नसोरल्लोपः । एत्त्वस्यासिद्धत्वात् हेर्धिः । एधि ॥

अत एकहल्मध्येऽनादेशादेर्लिटि ॥ १२० ॥

लिट्कृताभ्यासादेशहीनस्य धातोरसंयुक्तहलोर्मध्यस्थस्या-

त एत्त्वं स्यात्किति लिट्यभ्यासलोपश्च । पेचतुः । येमतुः । देभतुः । अतः किम् । दिदिवतुः । तपरः किम् । रराते । एकहल्मध्ये किम् । ततसरतुः । अनादेशादेः किम् । बभणतुः । लिट्क्ङितीति किम् । नेमतुः । सेहे । अनैमित्तिके नत्वसत्त्वे । फलिभजिग्रहणं ज्ञापकमभ्यासजश्त्वचर्त्वयोः सिद्धत्वस्य । तेन बभणतुरित्यादावादेशादित्वम् । पेचतुरित्यादावभ्यासस्य चर्त्वेऽपि रूपाभेदादादेशादित्वं नाङ्गीक्रियते । शसिदद्योः प्रतिषेधात् ज्ञापकात् । किति किम् । पपचाहम् । अहं पपर ॥

दम्भेरेत्वं वाच्यम् ॥

देभतुः । नलोपस्यासिद्धत्वान्न स्यात् ॥

नशिमन्योरप्येत्त्वं वाच्यम् ॥

अनेशम् । मेनका । नशेर्लुङि पुषादी(३।१।५५)त्यङ् । मनेराशिषि चेति वुन् । क्षिपकादित्वादित्वं न ॥

छन्दस्यमिपच्योरेत्वमलिटि ॥

व्येमानम् । विपूर्वस्यामेश्चानश् । मुगभावश्छान्दसः । लिङि पेचिरन् । ह्रस्वत्वं छान्दसम् ॥

यजिवप्योश्च ॥

आयेजे । आवेपे । लोङ इटि रूपम् । छन्दस्यपी(६।४।७३)त्याडागमः ॥

## थलि च सेटि ॥ १२१ ॥

इडुति थलि परे पूर्वविषये एत्त्वाभ्यासलोपौ स्तः । पेचिथ । सेटि किम् । पपक्थ । ऋतो भारद्वाजस्ये(७।२।६३)ति पक्षे इट् । अतः किम् । दिदेविथ । एकहल्मध्ये किम् । ततसिथ । अनादेशादेः किम् । बभणिथ । अकिदर्थमेतत्सूत्रम् । थल्ग्रहणं स्पष्टार्थम् । अन्यस्य सेटः कित्त्वेन पूर्वेणैव सिद्धेः ॥

तॄफलभजत्रपश्च ॥ १२२ ॥

एषां किति लिटि सेटि थलि चैत्वाभ्यासलोपौ स्तः। तेरतुः। तेरिथ। फेलतुः। फेलिथ। भेजतुः। भेजिथ। त्रेपे। गुणशब्दार्थानेकहल्मध्यार्थमिदम्॥

श्रन्थेश्च॥

श्रेथतुः। श्रेथिथ॥

राधो हिंसायाम्॥ १२३ ॥

हिंसार्थस्य राध एत्त्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च। रेधतुः। रेधिथ। हिंसायां किम्। आरराधतुः। राधादिषु अत इत्यनुवृत्तं तपरत्वं परित्यज्यावर्णमात्रमुपस्थापयति। सामर्थ्यात्। आभ्यस्तयो(६।४।११२)रित्यत आत इत्यनुवृत्तेर्वा॥

वा जॄभ्रमुत्रसाम्॥ १२४ ॥

एषां पूर्वविषये एत्वाभ्यासलोपौ वा स्तः। जेरतुः। जजरतुः। जेरिथ। जजरिथ। भ्रेमतुः। बभ्रमतुः। भ्रेमिथ। बभ्रमिथ। त्रेसतुः। तत्रसतुः। त्रेसिथ। तत्रसिथ॥

फणां च सप्तानाम्॥ १२५ ॥

फण राजृ भ्राजृ भ्राशृ भ्लाशृ स्यमु स्वन एषां किति लिटि सेटि थलि चैत्वाभ्यासलोपौ वा स्तः। फेणतुः। पफणतुः। फेणिथ। पफणिथ। रेजतुः। रराजतुः। रेजिथ। रराजिथ। भ्रेजे। बभ्राजे। भ्रेशे। बभ्राशे। भ्लेशे। बभ्लाशे। स्येमतुः। सस्यमतुः। स्येमिथ। सस्यमिथ। स्वेनतुः। सस्वनतुः। स्वेनिथ। सस्वनिथ। सप्तानां किम्। दध्वनतुः॥

न शसददवादिगुणानाम्॥ १२६ ॥

शसेर्ददेर्वकारादीनां गुणसम्बन्धिनश्चाकारस्यैत्वाभ्यासलोपौ न स्तः किति लिटि सेटि थलि च । शशसतुः । शशसिथ । ददे । वबमतुः । वबमिथ । शशरतुः । शशरिथ । लुलुविथ । गुण इति निर्दिष्टस्य अरित्यस्य ओकारस्य च अव् इत्यस्य अकारो गुणसम्बन्धीति विप्रतिषेधसिद्धिः । शसादिग्रहणसामर्थ्याद्गुणे तद्भावितग्रहणम् ॥

## अर्वणस्त्रसावनञः ॥ १२७ ॥

नञ्रहितस्यार्वणस्तृ इत्यन्तादेशः स्यादसौ प्रत्यये । अर्वन्तौ । अर्वन्तः । अर्वता । अर्वद्भ्याम् । अर्वद्भिः । अर्वताम् । अर्वत्सु । असौ किम । अर्वा । अनञ् किम् । अनर्वा ॥

## मघवा बहुलम् ॥ १२८ ॥

मघवन्नित्यस्य वा तृ इत्यन्तादेशः स्यादसौ परे । मघवन्तौ । मघवन्त इत्याद्यर्ववत् । पक्षे मघवानौ । मघवानः । मघोनः । मघवद्भ्यामित्यादि ॥

अर्वणस्तृ मघोनश्च न शिष्यम छान्दसं हि तत ॥

## भस्य ॥ १२९ ॥

आपादपरिसमाप्तेरयमधिकारः ॥

## पादः पत् ॥ १३० ॥

भस्य पाच्छब्दस्य पदादेशः स्यात् । द्विपदः । द्विपदा । भस्य किम् । द्विपात् । द्विपादौ ॥

## वसोः संप्रसारणम् ॥ १३१ ॥

वस्वन्तस्य भस्य संप्रसारणं स्यात् । विदुषः । पेचुषः । व्याश्रयत्वादातो लोपे(६।४।६४)संप्रसारणं नासिद्धम् । उकारोच्चारणात्क्सुरपि गृह्यते ॥

## वाह ऊठ् ॥ १३२ ॥

भस्य वाहो वा शब्दस्य ऊठ् स्यात्। एत्येधत्यूठ्स्वि(६।१।८९) ति वृद्धिः। प्रष्ठौहः पश्य। प्रष्ठौहा। संप्रसारणविधानेपि लघूपधगुणे वृद्धिरेची(६।१।८८)ति वृद्धौ च रूपसिद्धेरूड्वचनमासिद्धं बहि-र[ङ्गमन्तर]ङ्गे इति परिभाषाज्ञापनार्थम्। संप्रसारणस्य बहिर-ङ्गत्वादन्तरङ्गो गुणो न स्यात् ॥

## श्वयुवमघोनामतद्धिते ॥ १३३ ॥

भसंज्ञकानामेषामतद्धिते परे संप्रसारणं स्यात्। शुना। यूना। मघोना। अतद्धितेति किम्। माघवनः स्थालीपाकः॥

नान्तानामेवेष्यते ॥

नेह। युवतीः पश्य। मघवतः पश्येति ॥

## अल्लोपोनः ॥ १३४ ॥

अन्नन्तस्य भस्यानोकारस्य लोपः स्यात्। राज्ञा। राज्ञे। अ-नोकारेति किम्। राजकीयम् ॥

## षपूर्वहन्धृतराज्ञामणि ॥ १३५ ॥

षपूर्वो योन् तदन्तस्य हन्धृतराज्ञोश्च भानामनोकारलोपः स्यादणि। औक्ष्णः। वार्त्रघ्नः। धार्तराज्ञः। एषां किम्। साम्नो-यम् सामनः। अन्नि(६।४।१६७)ति प्रकृतिभावान्नालोपटिलोपौ। अणि किम्। ताक्षण्यः। सेनान्तलक्षणकारिभ्यश्चे(४।१।१५२)-ति ण्यः॥

## विभाषा ङिश्योः ॥ १३६ ॥

अनयोः परयोरनोकारस्य लोपो वा स्यात्। राज्ञि। राजनि। दाम्नि। दामनि॥

न संयोगाद्वमन्तात् ॥ १३७ ॥

वकारमकारान्तसंयोगात्परस्यानोकारस्य लोपो न स्यात् । अथर्वणा । चर्मणा । संयोगात्किम् । प्रतिदीव्ना । साम्ना । वमन्तात्किम् । तक्ष्णा ॥

अचः ॥ १३८ ॥

लुप्तनकारस्याञ्चतेर्भस्याकारस्य लोपः स्यात् । दधीचः । दधीचा ॥

उद ईत् ॥ १३९ ॥

उदः परस्याञ्चतेर्भस्याकारस्य ईत्स्यात् । उदीचः । उदीचा ॥

आतो धातोः ॥ १४० ॥

आकारान्तस्य भस्य धातोराल्लोपः स्यात् । सोमपः । सोमपा । आतः किम् । नियः । निया । धातोः किम् । शिवाः । शिवया । आत इति योगविभागादधातोरप्याल्लोपः । क्त्वः । श्नः ॥

मन्त्रेष्वाङ्यादेरात्मनः ॥ १४१ ॥

आत्मन आदेर्लोपः स्यात्तृतीयैकवचने । त्मना देवेषु । मन्त्रेषु किम् । आत्मना । आङि किम् । आत्मनस्तत्रोपतिष्ठते ॥

आङोन्यत्रापि दृश्यते ॥

त्मन्यामपश्यन् ॥

ति विंशतेर्डिति ॥ १४२ ॥

भस्य विंशतेस्तिशब्दलोपः स्यात् डिति । विंशत्या क्रीतः विंशकः । विंशतित्रिंशद्भ्या(५।१।२४)मिति ड्वुन् । डिति किम् । विंशत्या ॥

टेः ॥ १४३ ॥

डिति परे भस्य टेर्लोपः स्यात्। त्रिंशता क्रीतः त्रिंशकः। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। उपसरजः। मन्दुरजः॥

नस्तद्धिते ॥ १४४ ॥

नान्तस्य भस्य टेर्लोपः स्यात्तद्धिते। आग्निशर्मिः। वाह्वादित्वादिञ्। नः किम्। सात्वतः। तद्धिते किम्। शर्मणा॥

सब्रह्मचारि–पीठसर्पि–कलापि–कुथुमि–तैतलि–जाजलि–लाङ्गलि–शिलालि–शिखण्डि–सूकरसद्म–सुपर्वणामुपसंख्यानम्॥

अत्र अन् (६।४।१६७) इनण्यनपत्ये(६।४।१६४) इति च प्रकृतिभावः प्राप्त इति वचनम्। सब्रह्मचारिण इमे साब्रह्मचाराः। पीठसर्पिणः पैठसर्पाः। कलापिना प्रोक्तमधीयते कालापाः। कुथुमिनः कौथुमाः। तैतिलाः। जाजिलाः। लाङ्गलाः। शैलालाः। शैखण्डाः। सौकरसद्माः। सौपर्वाः॥

अश्मनो विकारे॥

आश्मो विकारः। आश्मनोऽन्यः॥

चर्मणः कोशे॥

चार्मः कोशः। चार्मणोऽन्यः॥

शुनः सङ्कोचे॥

शौवः सङ्कोचः। शौवनोऽन्यः॥

अव्ययानां भमात्रे टिलोपः॥

सायम्प्रातर्भवः सायम्प्रातिकः। पौनःपुनिकः। कालाट्ठञ्(४।३।११)। ट्युट्युलौ नात्रेष्येते। बाहपाट्टिलोपविधानादनित्योऽव्ययानां टिलोपः। आरातीयः। शाश्वतिकः। शाश्वतम्॥

अह्नष्टखोरेव ॥ १४५ ॥

अह्नष्टखयोरेव टिलोपः स्यान्नान्यत्र । द्वे अहनी समाहृते द्व्यह्नः ॥

अह्नः समूहे खः ॥

अहीनः क्रतुः । नियमः किम् । अह्ना निर्वृत्तमाह्निकम् ॥

ओर्गुणः ॥ १४६ ॥

उवर्णान्तस्य भस्य गुणः स्यात्तद्धिते । औपगवः । तद्धितेति किम् । पट्वी । ओरोदिति वक्तव्ये गुणोक्तिः संज्ञापूर्वको विधिरनित्यो यथा स्यात् । तेन स्वायम्भुवमिति सिद्धम् ॥

ढे लोपोऽकद्र्वाः ॥ १४७ ॥

ढे परे उलोपः स्यात् कद्रूं विना । कामण्डलेयः । माद्रबाहेयः । कद्र्वास्तु काद्रवेयः ॥

यस्येति च ॥ १४८ ॥

भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे । इवर्णस्य ईकारे । दाक्षी । सखी । यद्यत्र लोपो न स्यात् सवर्णदीर्घे सत्यतिसखेरागच्छतीत्यत्रैकादेशस्यान्तवत्त्वे सत्युपसर्जनह्रस्वत्वे चासखी(१।४।७)ति घिसंज्ञाप्रतिषेधः स्यात् । इवर्णस्य तद्धिते । आत्रेयः । अवर्णस्य ईकारे । गौरी । तद्धिते दाक्षिः ॥

औङः श्यां प्रतिषेधः ॥

काण्डे । औङः शीभावे यस्येति चेति प्राप्नोति । सौर्ये हिमवतः शृङ्गे । अत्र सूर्यतिष्ये(६।४।१४९)ति यलोपः प्राप्तः ॥

इयङुवङ्भ्यां लोपो विप्रतिषेधेन ॥

वत्सं प्रीणातीति वत्सप्रीः । तस्यापत्यं वात्सप्रेयः । चतु

ष्पाञ्यो ढञ्(४।२।१३५) । लेखाभ्रूः शुभ्रादिः । लैखाभ्रेयः ॥

सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ॥ १४९ ॥

एषामीति तद्धिते च उपधाया यकारस्य लोपः स्यात् ।

मत्स्यस्य ङ्यां सूर्यागस्त्ययोश्छे च ङ्यां च तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम् ॥

मत्सी । ङ्यां किम् । मत्स्यस्येदं मात्स्यम् । सौरी बलाका । सौरीयः । सूर्येणैकादिगित्यण् । वृद्धाच्छः । आगस्ती । आगस्तीयः । छङ्योः किम् । सौर्यं चरुम् । आगस्त्यः । तिष्येण युक्तः कालः तैषः । पौषः । तिष्यस्येदं तैष्यमित्येव ॥

अन्तिकस्य तसि कादिलोप आद्युदात्तत्वं च ॥

अन्तितो न दूरादिति ॥

तमे तादेश्च ॥

अन्तिकस्य तमे परतस्तादेः कादेश्च पर्यायेण लोपः । अन्तमः । कादिलोपे अन्तितमः ॥

कादिलोपोऽन्यत्रापि दृश्यते ॥

अन्तिके सीदतीत्यन्तिषत् । पूर्वपदा(८।३।१०६)दिति षत्वम् ॥

ये च ॥

अन्तियः ॥

हलस्तद्धितस्य ॥ १५० ॥

हलः परस्य तद्धितयकारस्य लोपः स्यादीति परे । गार्गी । हलः किम् । कारिकेयी । तद्धितस्य किम् । वैश्यस्य भार्या वैश्यी ॥

आपत्यस्य च तद्धितेऽनाति ॥ १५१ ॥

आपत्ययकारस्य तद्धिते लोपः स्यान्न त्वाकारादौ । गर्गाणां स-

मूढो गार्गकम् । आपत्यस्य किम् । साङ्काश्यकः । योपधा(५।१।१३२)-दिति वुञ् । तद्धिते किम् । गार्ग्येण । अत्रैकादेशस्य परादि-ग्रहणेन ग्रहणात् यलोपः स्यात् । इदमेव तद्धितग्रहणं ज्ञापकं पूर्वसूत्रे सप्तम्यन्ततद्धितग्रहणं नानुवर्तत इति । तेन लावण्य-मस्यास्तीति ठनि हलस्तद्धितस्ये(६।४।१५०)ति यलोपे लावणिक इति सिध्यतीति पाद्मट्टीयं चिन्त्यम् । अनाति किम् । गार्ग्या-यणः । हल इत्येव । कारिकेयस्यापत्यं कारिकेयी ॥

## क्यच्व्योश्च ॥ १५२ ॥

हलः परस्यापत्ययकारस्य लोपः स्यात् क्ये च्वौ च परे । गार्गीयते । गार्गायते । गार्गीभूतः । आपत्यस्य किम् । साङ्काश्यीयति । हलः किम् । कारिकेयीयति ॥

## बिल्वकादिभ्यश्छस्य लुक् ॥ १५३ ॥

एभ्यश्छस्य लुक्स्यात्तद्धिते । बिल्वकीयाः । बैल्वकाः । नडादीनां कुक् च(४।२।९१)तिच्छः कुगागमश्च । तस्माच्छै-षिकोण् । एवं वैणुका ऐक्षुका इत्यादि । तद्धिते किम् । इक्षु-कीयाः । छस्येति किम् । सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यभाव इति परिभाषाज्ञापनार्थम् । अन्यथा बिल्व-कादयो हि कृतकुगागमा अत्र गृहीताः । कुक् चच्छे परत एवेतिच्छग्रहणं व्यर्थं स्यात् । लुग्ग्रहणं सर्वलोपार्थम् ॥

## तुरिष्ठेमेयःसु ॥ १५४ ॥

तुरिति तृन्तृचोर्ग्रहणम् । तृ इत्यस्य लोपः स्यादिष्ठेम-यस्सु । करिष्ठः । दोहीयसी धेनुः । टे(६।४।१५५)रित्येव सिद्धे तृग्रहणात्सर्वलोपः । लुगनुवृत्तौ त्वन्तरङ्गानपि विधीनिति न्यायेन पूर्वं लोके करिष्ठ इत्यादावार्धधातुकनिमित्तगुणो न

स्याद । न लुमते(१।१।६३)ति निषेधात् । इमनिजुत्तरार्थः । इतरौ तुश्छन्दसी(५।३।५९)त्यगुणवचनादपि भवतः ॥

टेः ॥ १५५ ॥

भस्य टेर्लोपः स्यादिष्ठेमेयःसु। पटिष्ठः। पटिमा। पटीयान् ॥
णाविष्ठवत्प्रातिपदिकस्य ॥

इष्ठे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुल्लोपयणादिलोपप्रस्थस्फाद्यादेशास्तद्वण्णावपीत्यर्थः । एनीमाचष्टे एतयति । तसिलादि(६।३।३५)ष्विति पुंवत् । प्रथयति । पटुमाचष्टे पटयति । विन्मतोर्लुक्(५।३।६५) । स्रग्विणमाचष्टे स्रजयति । त्वग्वन्तमाचष्टे त्वचयति । स्फावयति । दवयति । स्थूलदूरे(६।४।१५६)त्यादिना यणादिलोपगुणौ । प्रियस्थिरे(६।४।१५७)त्यादिना प्रस्थाद्यादेशाः । प्रापयति । स्थापयति । युवाल्पयोः कन् (५।३।६४)। युवानमल्पं वाचष्टे कनयति ॥

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ॥ १५६ ॥

एषां परं यणादि लुप्यते पूर्वस्य च गुणः स्यादिष्ठेमेयःसु । स्थविष्ठः । स्थवीयान् । दविष्ठः । दवीयान् । यविष्ठः । यवीयान् । ह्रसिष्ठः । ह्रसीयान् । ह्रसिमा । क्षेपिष्ठः । क्षेपीयान् । क्षेपिमा । ह्रस्वक्षिप्रौ पृथ्वादी । क्षोदिष्ठः । क्षोदीयान् । परं किम् । यविष्ठ इत्यादौ पूर्वयणादेर्लोपो मा भूत् । पूर्वग्रहणं स्पष्टार्थम् । य(ये)त्वगुणवचनास्तेभ्योऽत एव ज्ञापकादजादिप्रत्ययौ भवतः ॥

प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां

प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ॥ १५७ ॥

प्रियादीनां क्रमात्प्रादय आदेशाः स्युरिष्ठेमेयःसु। प्रेष्ठः। प्रेमा। प्रेयान्। [स्थेष्ठः। स्थेयान्।] स्फेष्ठः। स्फेयान्। वरिष्ठः। वरीयान्। वरिमा। बंहिष्ठः। बंहीयान्। बंहिमा। गरिष्ठः। गरीयान्। गरिमा। वर्षिष्ठः। वर्षीयान्। त्रपिष्ठः। त्रपीयान्। द्राघिष्ठः। द्राघीयान्। द्राघिमा। वृन्दिष्ठः। वृन्दीयान्। प्रियोरुगुरुबहुलदीर्घाः पृथ्वादयो नान्ये ॥

बहोर्लोपो भू च बहोः ॥ १५८ ॥

बहोः परयोरिमेयसोरादेर्लोपः बहोर्भू आदेशः। भूमा। भूयान्। बहुः पृथ्वादिः ॥

इष्ठस्य यिट् च ॥ १५९ ॥

बहोर्भू आदेशः स्यात् इष्ठस्यादेर्लोपः तस्येडागमश्च भूयिष्ठः ॥

ज्यादादीयसः ॥ १६० ॥

ज्यात्परस्येयस आकारादेशः स्यात्। आदेः परस्य(१।१।५४)। ज्यायान् ॥

र ऋतो हलादेर्लघोः ॥ १६१ ॥

हलादेर्लघोः ऋकारस्य साच्को रेफः स्यादिष्ठेमेयःसु। प्रथयति। प्रथिष्ठः। प्रथिमा। प्रथीयान्। ऋतः किम्। पटिमा। हलादेः किम्। ऋजिष्ठः। लघोः किम्। कृष्णिमा ॥

पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वं इष्यते ॥

नेह। कृतमाचष्टे कृतयति। मातरमाचष्टे मातयति। भ्रातयति ॥

## त्रिभाषर्जौश्छन्दसि ॥ १६२ ॥

अस्य ऋतो रो वा स्यादिष्ठादौ छन्दसि। ऋजिष्ठः। रजिष्ठः॥

## प्रकृत्यैकाच् ॥ १६३ ॥

इष्ठादावेकाच् प्रकृत्या स्यात्। श्रेष्ठः। अतिशयेन स्रग्वी स्रजिष्ठः। स्रजीयान्। अत्र टिलोपो न। एकाच्किम्। वसुमन्तं करोति वसयति। मतुपो लुकि टिलोपः॥

प्रकृत्या अके राजन्यमनुष्ययुवानः॥

राजन्यानां समूहो राजन्यकम्। गोत्रोक्षेत्या(४।२।३९)दिना वुञ्। आपत्यस्ये(६।४।१५१)ति यलोपः प्रतिषिध्यते।यूनो भावः यौवनिका। मनोज्ञादित्वाद् वुञ्। नस्तद्धित(६।४।१४४) इति टिलोपो न॥

## इनण्यनपत्ये ॥ १६४ ॥

अनपत्यार्थेऽणि इन् प्रकृत्या स्यात्।आरावर्णं वर्तते। अणि किम्। दण्डिनां समूहो दाण्डम्। अनुदात्तादे(४।४।१४०)-रित्यञ्। अपत्ये तु मेधाविनोपत्यं मैधावः॥

## गाथिविदथिकेशिगणिपणिनश्च ॥ १६५ ॥

एतेपत्याण्यपि प्रकृत्या स्युः। गाथिनोपत्यं गाथिनः। वैदथिनः। कैशिनः। गाणिनः। पाणिनः॥

## संयोगादिश्च ॥ १६६ ॥

संयोगात्पर इन् प्रकृत्या स्यादणि। यज्वनोऽपत्यं याज्वनः। वाज्रिणः॥

## अन् ॥ १६७ ॥

अनपत्य इति निवृत्तम्। अण्यन् प्रकृत्या स्यात्। साम्न इदं सामनम्॥

ये चाभावकर्मणोः ॥ १६८ ॥

यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः । साम्नि साधुः सामन्यः । ब्रह्मण्यः । भावकर्मणोस्तु राज्ञो भावः कर्म वा राज्यम् । राजास इति पुरोहितादित्वाद्यक् ॥

आत्माध्वानौ खे ॥ १६९ ॥

एतौ खे प्रकृत्या स्तः । आत्मने हितमात्मनीनम् । अध्वानमलङ्गामी अध्वनीनः । खे किम् । अत्यात्मम् । माध्वम् । आत्मानमात्मनं प्रतीत्यव्ययीभावादनश्चे(५।४।१०८)ति टच् । प्रागतोध्वानमिति प्रादिसमासादुपसर्गादध्वनः(५।४।८५)इत्यच् ॥

न मपूर्वोऽपत्ये वर्मणः ॥ १७० ॥

मात्पूर्वोऽन् प्रकृत्या न स्यादपत्येऽणि न तु वर्मणः । सुषाम्णोऽपत्यं सौषामः । मपूर्वः किम् । सौत्वनः । अपत्ये किम् । साम्नोयं सामनः । अवर्मणः किम् । चक्रवर्मणोऽपत्यं चाक्रवर्मणः ॥

वा हितनाम्नः ॥

हितनाम्नोऽपत्यं हैतनामः । हैतनामनः ॥

ब्राह्मो जातौ ॥ १७१ ॥

अत्र ब्राह्म इत्येको योगः । तत्रापत्य इति न सम्बध्यते । सर्वत्र जातावजातौ च ब्राह्म इति निपात्यते । ब्राह्ममहः ब्राह्मी ओषधिरिति जातिः । अजातावपत्येऽपि टिलोप । ब्राह्मो नारद इति । ततो जाताविति द्वितीयो योगः । तत्रापत्य इत्यनुवर्तते । जातावपत्ये टिलोपो न । ब्रह्मणोऽपत्य ब्राह्मणः । जातौ किम् । ब्राह्मो नारदः । अपत्ये किम् । ब्राह्मी ओषधिः ॥

कार्मस्ताच्छील्ये ॥ १७२ ॥

अयं निपात्यते। कर्मशीलः कार्मः। कार्मणमन्यत्। ननु-च्छत्रादित्वाण्णो सति नस्तद्धित(६।४।१४४) इत्येन सिद्धम्। ज्ञापनार्थं तर्हि निपातनम्। ताच्छीलिके णेऽण्कृतं कार्यं ज्ञाप्यते। तेन चौरी तापसीत्यादौ णेप्यणन्तवत् ङीप् सिध्यति। अन्नि(६।४।१६७)ति अणाश्रितप्रकृतिभावनिरासाय न निपातनम्॥

औक्षमनपत्ये ॥ १७३ ॥

अयं निपात्यते। उक्ष्ण इदमौक्षम्। अपत्ये तु उक्ष्णोऽपत्यम् औक्ष्णः। षपूर्वे(६।४।१३५)त्यल्लोपः॥

दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यदै(धै)वत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ॥ १७४ ॥

एते निपात्यन्ते। दण्डिन् हस्तिन् आभ्यां नडादिफकि टिलोपाभावः। अथर्वणा प्रोक्तमुपचारादथर्वा। तदधीत इति वसन्तादित्वाट्ठकि प्रकृतिभावः। जिह्माशिनशब्दस्य शुभ्रादित्वाड्ढकि प्रकृतिभावः। वाशिनोपत्यमित्युदीचां वृद्धादगोत्रा-(४।१।१५७)दिति फिञि प्रकृतिभावः। भ्रूणहन् दि(धी)-वन् अनयोः ष्यञि तकारान्तादेशो निपात्यते। सरय्वां भवं सारवम्। अय् इत्यस्य लोपो निपात्यते। इक्ष्वाकोरपत्यं जनपदशब्दादञ्युकारलोपो निपात्यते। अत्रान्तमाद्युदात्तम्। इक्ष्वाकुषु भव इति कोपधादण्यन्तोदात्तम्। द्वयोरपि निपातनमत्रेष्यते। तन्त्रैकश्रुत्या सूत्रपाठात् द्वयमपि सिध्यति। मित्रयोरपत्यमिति गृष्ट्यादिपाठात् ढञि युलोपो

निपात्यते । हिरण्यस्य मयटि यलोपो निपात्यते ॥

ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ॥ १७५॥

एते छन्दसि निपात्यन्ते । ऋतुवास्तुभ्यां भवे छन्दसी-(४।४।११०)ति यति यणादेशो निपात्यते । ऋत्व्यः । वास्त्व्यः । वस्तुशब्दस्याणि यणादेशः । वास्त्वम् । मधुशब्दस्याणि स्त्रियां यणादेशः । माध्वीर्नः । हिरण्यशब्दान्मयटि यलोपः । हिरण्ययेऽन्तरिक्षे चरन्ति ॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यश्रीराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ व्याकरणमिताक्षरायां पञ्चमस्याध्यायस्य चतुर्थः पादः ॥

समाप्तोऽध्यायश्च ॥



युवोरनाकौ ॥ १ ॥

यु वु एतयोः क्रमादन अक एतावादेशौ स्तः । नन्द्यादिभ्यो ल्युः । नन्दनः । सायन्तनम् । कारकः । वासुदेवकः ॥

अनुनासिकयोरिष्टिः ॥

नेह । ऊर्णायुः । भुजिमृङ्भ्यां युक्त्युकौ (उ० २०१) । भुज्युः । मृत्युः । अत्र यणोऽनुनासिकत्वं न प्रतिज्ञायते । युवोरिति समाहारद्वन्द्वे अनित्यमागमानुशासनमिति नुम् न कृतः लिङ्गमशिष्यमिति वा नपुंसकत्वं नाश्रितम् । इतरेतरयोगद्वन्द्वे तुच्छान्दस उकारलोपः । द्विवचनस्य वा एकवचनादेशः । अन्यथा युव्वोरिति स्यात् ॥

अयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ॥ २ ॥

प्रत्ययादिभूतानां फादीनां क्रमादायन्नादय आदेशाः स्युः । फस्य आयन् । नाडायनः । ढस्य एय् । वैनतेयः । खस्य ईन् । कुलीनः । छस्य ईय् । शालीयः । घस्य इय् । क्षत्रियः । प्रत्ययेति किम् । खनति । आदीनां किम् । जानुदघ्नम् । एते प्रत्ययोपदेशकाल एव स्युः । तेनाद्युदात्तत्वं सिध्यति । उणादीनामव्युत्पन्नत्वाच्छण्ढः पण्ढः इत्यादौ न । कुनेश्छङिति वाच्ये कुनेरीयङ्(३।१।२९)वचनं वा ज्ञापकं धातुप्रत्ययानामायनाद्यभावस्य । फिनो नित्करणं ज्ञापकमायनो नकारस्येत्संज्ञा नास्तीति । योगापेक्षं च ज्ञापकमिति ईनोऽपि न । यकारस्य तु प्रयोजनाभावान्नेत्संज्ञा ॥

झोन्तः ॥ ३ ॥

सकारेकार उच्चारणार्थः । प्रत्ययसम्बन्धिनो झस्यान्तादेशः स्यात् । भवन्ति । जॄविशिभ्यां झः(ऋच्-उ०४०६) । जरन्तः । वेशन्तः । आदिग्रहणाननुवृत्त्या शपान्ता इति सिध्यति । शीङ उपसंवादाशङ्कयोश्चे(३।४।८)ति लेट् । तस्य लेटोऽडाटा(३।४।९४)वित्याडागमः । टेरेत्वं वैतोन्यत्रे(३।४।९६) त्यैत्वम् । झोन्तः । शब्लुक् । शीङः सार्वधातुक(७।४।२१) इति गुणः । अत्र प्रतिपदविधानाच्छावस्थायामेवादि सति पश्चाज्झादेश इति झस्यानादित्वम् । प्रत्ययेति किम् । उज्झिता । अस्याप्युपदेशिवद्भावादाद्युदात्तत्वम् ॥

अदभ्यस्तात् ॥ ४ ॥

अभ्यस्तात्परस्य झस्यादादेशः स्यात् । अन्तापवादः । ददति । जक्षति । जुमा बाध्यत एव । अदुः ॥

आत्मनेपदेष्वनतः ॥ ५ ॥

अनकारान्तादङ्गादुत्तरस्यात्मनेपदेषु झस्यादादेशः स्यात् । चिन्वते । आत्मनेपदेषु किम् । चिन्वन्ति । अनतः किम् । भवन्ते । शपान्ता इत्यत्राटा व्यवधानेनाङ्गात्परत्वं झस्य विहन्यत इत्यन्तादेश एव ॥

शीङो रुट् ॥ ६ ॥

शीङः परस्य झादेशस्यातो रुडागमः स्यात् । शेरते । अशेरत । शीङ इति सानुबन्धकग्रहणं यङ्लुग्निवृत्त्यर्थम् । शेशयते ॥

वेत्तेर्विभाषा ॥ ७ ॥

वेत्तेः परस्य झादेशस्यातो रुड्वा । संविदते । संविद्रते । समविदत ।

समविद्रत । वेत्तेर्ग्रहणाद्विन्तेर्न । विन्ते । विन्दाते । विन्दते ॥

बहुलं छन्दसि ॥ ८ ॥

रुडिष्येव । देवा अदुह्र । दुहेर्लङि झादेशस्य रुट् । लोपस्त आत्मनेपदे(७।१।४१)ष्विति तकारलोपः । क्वचिन्न । अदुह्रत । बहुलवचनादन्यत्रापि । अदृशान् । दृशोर्लुङि झेरन्तादेशः । इरितो वे(३।१।५७)त्यङ् । तस्य रुट् । इतश्चे(३।४।१००)तीकारलोपः । संयोगान्तलोपः । पररूपम् । बहुलवचनादेव ऋदृशोऽङी(७।४।१६)ति गुणः ॥

अतो भिस ऐस् ॥ ९ ॥

अकारान्तादङ्गाद्भिस ऐसादेशः स्यात् । रामैः । अतिजरसैः । अतः किम् । हरिभिः । तपरः किम् । रमाभिः ॥

बहुलं छन्दसि ॥ १० ॥

भिस ऐस् । देवेभिः । तण्डुलैर्जुहोति ॥

नेदमदसोरकोः ॥ ११ ॥

अककारयोरिदमदसोर्भिस ऐस् न स्यात् । एभिः । अमीभिः । अकोः किम् । इमकैः । अमुकैः । अकोरित्येवदेव ज्ञापकम् तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इत्यस्य ॥

टाङसिङसामिनात्स्याः ॥ १२ ॥

अकारान्तादङ्गाट्टादीनां क्रमादिन आत् स्य एते स्युः । रामेण । रामात् । रामस्य । अतिजरसेन अतिजरसादिति केचिदिच्छन्ति ॥

ङेर्यः ॥ १३ ॥

अतोऽङ्गात्परस्य चतुर्थ्येकवचनस्य यादेशः स्यात् । रा-

माय । कृष्टाय क्रमण(३।१।१४)इति ज्ञापकात्सन्निपातपरिभाषा अनित्या । तेन सुपि चे(७।३।१०२)ति दीर्घः । अतः किम् । पत्ये ॥

सर्वनाम्नः स्मै ॥ १४ ॥

अतः सर्वनाम्नो ङे इत्यस्य स्मै स्यात् । सर्वस्मै । अतः किम् । भवते । अत्र इदम् ए इति स्थिते इदमोन्वादेशे अ शादेशे अन्तरङ्गत्वात्पूर्वं स्मै पश्चात्सवर्णदीर्घः । अत्रास्मै ॥

ङसिङ्योः स्मात्स्मिनौ ॥ १५ ॥

अतः सर्वनाम्नो ङसिङ्योः क्रमात् स्मात्स्मिनौ स्तः । सर्वस्मात् । सर्वस्मिन् । अतः किम् । भवतः । भवति ॥

पूर्वादिभ्यो नवभ्यो वा ॥ १६ ॥

एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । एवं पर अवर दक्षिण उत्तर अपर अधर स्व अन्तर । नवभ्यः किम् । यस्मात् । यस्मिन् ॥

जसः शी ॥ १७ ॥

अतः सर्वनाम्नो जसः शी स्यात् । सर्वे । ये । ते । अतः किम् । भवन्तः । दीर्घोच्चारणमुत्तरार्थम् ॥

औङ आपः ॥ १८ ॥

आपः परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे । अम्बिके ॥

नपुंसकाच्च ॥ १९ ॥

क्लीबात्परस्यौङः शी स्यात् । ज्ञाने । वारिणी । मधुनी ॥

जश्शसोः शिः ॥ २० ॥

क्लीबात्परयोरनयोः शिः स्यात् । कुण्डानि तिष्ठन्ति । कुण्डानि पश्य । जसा सहचरितस्य शसो ग्रहणादिह न । कुण्डशो ददाति ॥

अष्टाभ्य औश् ॥ २१ ॥

कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात् । अष्टनो दीर्घा-(६।१।१७२)दिति दीर्घग्रहं ज्ञापकमात्त्वविकल्पस्य । अष्टौ सन्ति । अष्टौ पश्य । येन नाप्राप्तिन्यायेन षड्भ्यो लुकं(७।१।२२) बाधते । नतु सुपो धात्वि(२।४।७१)ति लुकम् । अष्टपुत्रः । तदन्तस्यापि । परमाष्टौ । गौणत्वे प्रियाष्टानः । आत्वाभावादौश् न । कृताकारात्किम् । अष्ट ॥

षड्भ्यो लुक् ॥ २२ ॥

षट्संज्ञकेभ्यः परयोर्जश्शसोर्लुक् स्यात् । षट् । पञ्च । परमषट् । परमपञ्च । गौणत्वे तु प्रियषषः । प्रियपञ्चानः ॥

स्वमोर्नपुंसकात् ॥ २३ ॥

क्लीबात्स्वमोर्लुक्स्यात् । दधि । सदाद्यत्त्वस्य लुका बाध इष्यते । तद्ब्राह्मणकुलम् ॥

अतोम् ॥ २४ ॥

अकारान्तात्क्लीबात्स्वमोरमादेशः स्यात् । लुकोपवादः । फलम् अस्ति पश्य वा ॥

अद्ड्डतरादिभ्यः पञ्चभ्यः ॥ २५ ॥

डतर डतम इतर अन्य अन्यतर एभ्यः क्लीबेभ्यः स्वमो-

रदृडादेशः स्याद । अमोऽपवादः । टिलोपः । कतरत् । कतमत् । इतरत् । अन्यत् । अन्यतरत् । टेर्लुप्तत्वादेङ्ह्रस्वादि-(६।१।६९)ति संबुद्धिलोपः । हे कतरत् ॥

नेतराच्छन्दसि ॥ २६ ॥

अस्माच्छन्दसि स्वमोरदृडादेशो न । इतरम् । लोके तु इतरत् । नेति योगविभागादेकतरात्सर्वत्र न । एकतरम् ॥

युष्मदस्मद्भ्यां ङसोऽश् ॥ २७ ॥

आभ्यां परस्य ङसः स्थाने अश् स्यात् । तव । मम ॥

ङेप्रथमयोरम् ॥ २८ ॥

युष्मदस्मद्भ्यां परस्य ङे इत्यस्य प्रथमाद्वितीयाविभक्त्योश्चामादेशः स्यात् । तुभ्यम् । मह्यम् । त्वम् । युवाम् । यूयम् । त्वाम् । त्वा । युवाम् । अहम् । आवाम् । वयम् । माम् । आवाम् ॥

शसो न ॥ २९ ॥

आभ्यां परस्य शसो न स्यात् । आदेः परस्य(१।१।५४) युष्मान् अस्मान् ब्राह्मणान् ब्राह्मणीः कुलानि वा । तस्माच्छसो न(६।१।१०३) इत्येव सिद्धे स्त्रीनपुंसकार्थमिदम् । अलिङ्गे वा युष्मदस्मदी ॥

भ्यसो भ्यम् ॥ ३० ॥

आभ्यां परस्य भ्यसो भ्यम् स्यात् । युष्मभ्यम् । अस्मभ्यम् । अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति शेषलोप एत्वं न । अभ्यमित्यादेशो वा ॥

पञ्चम्या अत् ॥ ३१ ॥

आभ्यां परस्य पञ्चम्या भ्यसोऽदादेशः स्यात् । युष्मत् । अस्मत् ॥

एकवचनस्य च ॥ ३२ ॥

युष्मदस्मद्भ्यां परस्य पञ्चम्येकवचनस्य अत्स्यात् । त्वत् । मत् ॥

साम आकम् ॥ ३३ ॥

आभ्यां परस्य सुट्सहितस्याम आकमादेशः । युष्माकम् । अस्माकम् । ससकारग्रहणं शेषे लोपे सुटो भाविनो निवृत्त्यर्थम् ॥

आत औ णलः ॥ ३४ ॥

आदन्ताद्धातोर्णल औ आदेशः स्यात् । पपौ । तस्थौ । अत्रौत्वमेकादेशः स्थानिवद्भावो द्विर्वचनमिति कार्यक्रमः ॥

तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ॥ ३५ ॥

आशिषि तुह्योस्स्थाने तातङ् वा स्यात् । ङित्त्वं गुणाद्यभावाय नान्त्यादेशाय । जीवतात् । युतात् । म्रियतात् । मृष्टात् ॥

विदेः शतुर्वसुः ॥ ३६ ॥

वेत्तेः परस्य शतुर्वसुरादेशः स्यात् । विद्वान् । विद्वांसौ । वेत्ति केचिदनुवर्तयन्ति । विदन् । विदन्तौ । स्थानिवत्त्वादेवोगित्कार्ये सिद्धे वसोरुकारोच्चारणम् वसोः संप्रसारण(६।४।१३१)मित्यत्र क्वसोरपि ग्रहणार्थम् । अत एवैकानुबन्धकपरिभाषा नाश्रीयते ॥

समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥ ३७ ॥

अनञ्पूर्वे समासे क्त्वो ल्यबादेशः स्यात् । प्रकृत्य । द्विधाकृत्य । पार्श्वतःकृत्य । समासे किम् । कृत्वा । अनञ्पूर्वे किम् । अकृत्वा । परमकृत्वा । सन्महदि(२।१।६१)ति समासः । परमत्वस्य

क्रियाविशेषणत्वात्समानाधिकरण्यम् । अनञ् नञ्समद्दशमव्ययमेव गृह्यते । स्नात्वाकालकः पीत्वास्थिरक इत्यादौ मयूरव्यंसकादिषु निपातनात् ल्यबभावः । हित्वा मदायेत्यादौ हित्वाद्यादेशात्प्रागल्यबादेश इष्यते । तत्र च ज्ञापकमदो जग्धिर्ल्यप्ति किती(२।४।३६)ति ल्यब्ग्रहणम् ॥

क्त्वापि छन्दसि ॥ ३८ ॥

पूर्वविषये । कृष्णं वासो यजमानं परिधापयित्वा । अपिशब्दाल्ल्यबपि । उद्धृत्य जुहोति ॥

सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥ ३९ ॥

छन्दसि सुपां स्थाने एते आदेशाः स्युः । सु । ऋजवः सन्तु पन्थाः । पन्थान इति प्राप्ते ॥

सुपां सुपो भवन्तीति वाच्यम् ॥

धुरि दक्षिणायाः । दक्षिणामिति माप्ते ॥

तिङ् तिङ इति वाच्यम् ॥

ये अश्वयूपाय तक्षति । तक्षन्तीति माप्ते । लुक् । आर्द्रे चर्मन् । चर्मणीति माप्ते । पूर्वसवर्णः । धीती मती । धीत्या मत्येति माप्ते । आ । उभा पितरा । उभौ पितराविति माप्ते । आत् । न ताद्ब्राह्मणान् । नतान् ब्राह्मणानिति माप्ते । शे । युष्मे । अस्मे । यूयं वयमिति माप्ते । यूयवयौ छान्दसत्वान्न स्तः । या । ऊरुया । ऊरुणेति माप्ते । अनुष्ट्या वाचं यच्छ । अनुष्टुभेति माप्ते । याच् । साधुया । साध्विति सोर्लुकि प्राप्ते । आल् । वसन्ता यजेत । वसन्ते इति माप्ते ॥

इयाडियाजीकाराणामुपसङ्ख्यानम् ॥

इया । उर्विया । दार्विया । उरुणा दारुणेति माप्ते ।

डियाच् । सुक्षेत्रिया । सुक्षेत्रेणेति प्राप्ते । ईकारः । सरसी
इयानम् । सरसि इति प्राप्ते ॥

आङ्याजयारां चोपसङ्ख्यानम् ॥

आङ् प्रवाहवा । प्रवाहुनेति प्राप्ते । अयाच् । स्वप्नया ।
स्वप्नेनेति प्राप्ते । अयार् । नावया । नावेति प्राप्ते ॥

## अमो मश् ॥ ४० ॥

मिप आदेशस्यामो मशादेशः स्याच्छन्दसि । वधीं वृत्रम् ।
लुङि हनो वधादेशे मशादेशे च सिच इटि अस्तिसिच(७।३।९६)
इति मश ईटि इट ईटी(८।२।२८)ति सिज्लोपे सवर्णदीर्घे बहुलं
छन्दसी (६।४।७५)ति अडभावे रूपम्। मशोऽकार उच्चारणार्थः॥

## लोपस्त आत्मनेपदेषु ॥ ४१ ॥

आत्मनेपदेषु यस्तकारस्तस्य लोपः स्याच्छन्दसि । अदुह ।
अदुहतेति प्राप्ते दुहेर्लङि झः । शपो लुक् । झस्यादादेशः । ब-
हुलं छन्दसी(७।१।८)ति रुट् । तलोपे अकारद्वयस्य पररूपम् ।
क्वचिन्न । कुरुते । आत्मनेपदेषु किम् । उ(व)त्सं दुहन्ति ॥

## ध्वमो ध्वात् ॥ ४२ ॥

ध्वमो ध्वात्स्याच छन्दसि । वारयध्वात् । वारयध्व-
मिति प्राप्ते ॥

## यजध्वैनमिति च ॥ ४३ ॥

यजध्वमेनमित्यत्र मलोपो वस्य च यत्वं निपात्यते । य-
जध्वैनम् ॥

## तस्य तात् ॥ ४४ ॥

लोण्मध्यमपुरुषबहुवचनस्य तशब्दस्य तात् स्यात् ।

सूर्यं चक्षुर्गमयतात् ॥

तप्तनप्तनथनाश्च ॥ ४५ ॥

लोण्मध्यमतस्यैते स्युश्छन्दसि । शृणोत । शृणुतेति प्राप्ते । पित्राहुणः । तनप् । सर्ववीरं(संवरत्रा) दधातन । धत्तेति प्राप्ते । तन । मरुतस्तज्जुजुष्टन । जुषतेति प्राप्ते । छान्दसः शपः श्लुः । थन । यजथन । यजतेति प्राप्ते ॥

इदन्तो मसि ॥ ४६ ॥

इदिति तकार उच्चारणार्थः । मसित्यत्र प्रथमाया लुक् । इकार उच्चारणार्थः । मस इकारोन्तागमः स्याच्छन्दसि । चरामसि । चराम इति प्राप्ते ॥

क्त्वो यक् ॥ ४७ ॥

क्त्वा इत्यस्य यगागमः स्याच्छन्दसि । स्थित्वाय । स्थित्वेति प्राप्ते ॥

इष्ट्वीनमिति च ॥ ४८ ॥

छन्दस्ययं निपात्यते । इष्ट्वा । अत्र क्त्वाप्रत्ययस्येनमित्यन्तादेशः । इष्ट्वीनं देवान् । इष्ट्वा देवानिति प्राप्ते चकारात्पीत्वीनमिति च । पीत्वेति प्राप्ते ॥

स्नात्व्यादयश्च ॥ ४९ ॥

आदिशब्दः प्रकारार्थः । स्नात्वीप्रकाराश्छन्दसि साधवः । स्नात्वी मलादिव । स्नात्वेति प्राप्ते । पीत्वी । पीत्वेति प्राप्ते ॥

आज्जसेरसुक् ॥ ५० ॥

अवर्णान्ताज्जसोऽसुगागमः स्याच्छन्दसि । ब्राह्मणासः । ब्राह्मणा इति प्राप्ते ॥

अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ५१ ॥

छन्दसीति निवृत्तम्। एषां क्यच्यसुगागमः स्यादात्मप्रीतौ ॥

अश्ववृषयोर्मैथुनेच्छायामिष्टः ॥

अश्वस्यति वडवा। वृषस्यति गौः ॥

क्षीरलवणयोर्लालसायाम् ॥

क्षीरस्यति बालः। लवणस्यत्युष्ट्रः। अन्यत्राश्वीयतीत्यादि ॥

सर्वप्रातिपदिकेभ्यः क्यच् लालसायां क्यचि सुग-

सुगागमश्चेत्येके ॥

दधिस्यति। दध्यस्यति ॥

आमि सर्वनाम्नः सुट् ॥ ५२ ॥

अवर्णान्तात्सर्वनाम्नः परस्य षष्ठीबहुवचनस्य सुडागमः स्यात्। सर्वेषाम्। सर्वासाम्। अवर्णान्तात्किम्। भवताम् ॥

त्रेस्त्रयः ॥ ५३ ॥

त्रीत्यस्य त्रयादेशः स्यादामि। त्रयाणाम् ॥ त्रीणामिति च्छन्दसीष्यते ॥

ह्रस्वनद्यापो नुट् ॥ ५४ ॥

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चामो नुडागमः स्यात्। रामाणाम्। हरीणाम्। धातॄणाम्। गौरीणाम्। वधूनाम्। रमाणाम् ॥

षट्चतुर्भ्यश्च ॥ ५५ ॥

षट्संज्ञकेभ्यश्चतुरश्चामो नुट् स्यात्। पञ्चानाम्। षण्णाम्। चतुर्णाम्। परमपञ्चानाम्। परमषण्णाम्। परमचतुर्णाम्। उपसर्जनत्वे तु प्रियपञ्च्नाम्। प्रियषषाम्। प्रियचतुराम् ॥

श्रीग्रामण्योश्छन्दसि ॥ ५६ ॥

एनयोः सम्बन्धिन आमो नुट् छन्दसि । श्रीणामुदारः । सूत(त)ग्रामणीनाम् । वामी(१।४।५)ति व्यवस्थितविभाषाङ्गीकाराच्छन्दसि नित्यं नदीसंज्ञया श्रीणामिति सिध्यति । सूता(ता)श्च ग्रामण्यश्चेति समाहारद्वन्द्वे ह्रस्वान्तादिश्चेव सूत(त)ग्रामणीनामिति नुट्सिद्धेरशिष्योयं योग इत्याकरे ॥

गोः पादान्ते ॥ ५७ ॥

पादान्तस्थेगोः परस्यामो नुट् छन्दसि । गोपतिं शूरगोनाम् । पादान्ते किम् । गवां पतिः फल्गुनीनाम् । क्वचित्पादान्तेपि । विराजं गोपतिं गवाम् ॥

इदितो नुम् धातोः ॥ ५८ ॥

इदितो धातोर्नुमागमः स्यात् । कुण्डिता । हुण्डता । धातूपदेशावस्थायामेव नुमिष्टः । तेन कुण्डा हुण्डा । अत्र गुरोश्च हल(३।३।१०३)इत्यकारप्रत्ययः सिद्धः । धातोः किम् । अभैत्सीत् । सिच इदित्त्वेपि न नुम् । सिच इकारस्योच्चारणार्थत्वेनेत्संज्ञाया अभावाद्धातुग्रहणमुपदेशावस्थालाभार्थमित्याहुः ॥

शे मुचादीनाम् ॥ ५९ ॥

मुच् लुप् विद् लिप् सिच् कृत् पिश् खिद् एषां नुमागमः स्याच्छे परे । मुञ्चति । लुम्पति । विन्दति । लिम्पति । सिञ्चति । कृन्तति । पिंशति । खिन्दति । शे किम् । मोक्ता । एषां किम् । तुदति ॥

तृम्फ-दृम्फ-गुम्फ-उम्भ-शुम्भां शे नुम्वाच्यः ॥

नुम्विधिसामर्थ्यान्नलोपो न । तृम्फतीत्यादि ॥

मस्जिनशोर्झलि ॥ ६० ॥

अनयोर्नुम् स्याज्झलि। मङ्क्ता(ङ्क्ता)। मङ्क्तु(ङ्क्तु)म्। नंष्टा। नंष्टुम्। झलि किम्। मज्जनम्। नशनम्। मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगादिलोपार्थम्। मग्नः। मग्नवान्।

रधिजभोरचि ॥ ६१ ॥

अनयोर्नुम् स्यादजादौ प्रत्यये। रन्धयति। जम्भयति। नित्येन नुमा परापि वृद्धिर्बाध्यते। अचि किम्। रद्धा। जब्धा ॥

नेट्यलिटि रधेः ॥ ६२ ॥

लिड्वर्जिते इटि रधेर्नुम न स्यात्। रधिता। रधितुम्। इटि किम्। रन्धनम्। अलिटि किम्। ररन्धिव। ररन्धिम। अत्र नुमि सति संयोगाल्लिटोऽकित्त्वान्नलोपो न। रेधिवानित्यत्र क्वसोरौपदेशिकाकित्त्वमाश्रित्य नुमो लोपः ॥

रभेरशब्लिटोः ॥ ६३ ॥

रभेर्नुम् स्यादचि न तु शब्लिटोः। आरम्भणाम्। आरम्भकः। शब्लिटोस्तु आरभते। आरेभे। अचि किम्। आरब्धा ॥

लभेश्च ॥ ६४ ॥

अस्य नुम् स्यात्प्राग्विषये। लम्भयति। लम्भकः। शब्लिटोस्तु। लभते। लेभे। अचीत्येव। लब्धा ॥

आङो यि ॥ ६५ ॥

आङः परस्य लभेर्नुम् स्यादजादौ प्रत्यये विवक्षिते। आलम्भ्या गौः। प्रत्ययात्प्रागेव नुमि सति अदुपधत्वाभावात्

ण्यति प्रत्यन्तस्वरितं पदं सिध्यति । पोरदुपधा(३।१।९८)दिति यति सति यतोऽनाव(६।१।२१३)इत्युत्तरपदाद्युदात्तं स्यात्तत्रा-निष्टमित्युपदेश एव नुमिष्यते । आलम्भयत इत्यादावनिदि-ता(६।४।२४)मिति न्लोपः ॥

उपात्प्रशंसायाम् ॥ ६६ ॥

उपाल्लभेर्नुम् स्याद्यादौ विवक्षिते प्रशस्ते । उपलम्भ्या भवता विद्या । प्रशंसायां किम् । उपलभ्यं किञ्चिद्वृषलात् । अदुपधत्वाद्यदन्तमिदम् । स्वरे भेदः ॥

उपसर्गात् खल्घञोः ॥ ६७ ॥

एतयोः परत उपसर्गात्परस्यैव लभेर्नुम्स्यात् । ईषत्प्र-लम्भः । नियमः किम् । ईषल्लभः । लाभः ॥

न सुदुर्भ्यां केवलाभ्याम् ॥ ६८ ॥

उपसर्गान्तररहिताभ्यामाभ्यां परस्य लभेर्नुम्न स्यात् खल्घञोः । सुलभम् । दुर्लभम् । सुलाभः । दुर्लाभः । केवलाभ्यां किम् । अतिसुलम्भम् । अतिसुलभमित्यत्रातेः कर्म-प्रवचनीयत्वेनोपसर्गत्वाभावात्केवलः सुः । सुप्रलम्भमित्यत्र प्रेण व्यवधानान्निषेधाभावः । सुदुर्भ्यामिति तृतीया पक्षे व्यवहिते-नाप्युपसृष्टत्वसम्भवात्सुप्रलम्भ इत्यपि केवलपदप्रयोजनम् ॥

विभाषा चिण्णमुलोः ॥ ६९ ॥

अनयोर्लभेर्नुम्वा स्यात् । अलम्भि । अलाभि । लम्भ-लम्भम् । लाभं लाभम् । व्यवस्थितविभाषया सोपसर्गा-न्नित्यं नुम् । प्रालम्भि । प्रालम्भम् ॥

उगिदचां सर्वनामस्थानेऽधातोः ॥ ७० ॥

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनामस्था-

ने। भवान्। कुर्वन्। श्रेयान्। प्राङ्। प्राञ्चौ। [ प्राञ्चः। ] उगिदचां किम्। दृषत्। सर्वनामस्थाने किम्। प्राचः। प्राचाम्। अधातोः किम्। अधातुभूतपूर्वादपि नुम्यथा स्यात्। गोमन्तमिच्छति गोमत्यति। गोमत्यतेरप्रत्ययः। गोमान्। उखास्रत् पर्णध्वदित्यत्राञ्चतेर्ग्रहणस्य नियमार्थत्वादेव न स्यात्॥

## युजेरसमासे ॥ ७१ ॥

युजेः सुटि नुम् स्यात् असमासे। युङ्। युञ्जौ। युञ्जः। असमासे किम्। सुयुक्। सुयुजौ। युज समाधावित्यस्य न नुम्। युक्। समाधिमानित्यर्थः॥

## नपुंसकस्य झलचः ॥ ७२ ॥

झलन्तस्याजन्तस्य च क्लीबस्य नुम्स्यात्सर्वनामस्थाने। श्रेयांसि। गोमन्ति। वनानि। क्लीबस्य किम्। मरुत्। झलचः किम्। चत्वारि अहानि। उगितो नपुंसकस्य परत्वादनेनैव नुम्॥

बहूर्जो नुम्प्रतिषेधः॥

बहूर्जि कुलानि॥

अन्त्यात्पूर्वं नुममिच्छन्त्येके॥

बहूर्न्जि॥

## इकोऽचि विभक्तौ ॥ ७३ ॥

इगन्तस्य क्लीवस्य नुम् स्यादचि विभक्तौ। वारिणी। त्रपुणी। इकः किम्। वनाय। अचि किम्। सम्बुद्धेर्लुकि प्रत्ययलक्षणे न नुम् मा भूत्। न च नलुमते(१।१।६३)ति निषेधः। अत एवाज्ग्रहणात्तस्यानित्यत्वज्ञापनात्। अन्यत्र हलादौ नलोपः प्रातिपदिकान्तस्ये(८।२।७)ति सिद्धत्वात्। अनित्यत्वज्ञापनाच्च

पक्षे सम्बुद्धिनिमित्तो गुणः । हे वारे । हे वारि ॥

तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ॥ ७४ ॥

एकस्मिन् प्रवृत्तिनिमित्ते उक्तपुंस्कं क्लीबं पुंवद्वा स्याट्टादावचि । अनादिने । अनादये । एकस्मिन्किम् । पीलुने फलाय ॥

पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे ।
वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः ॥

अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ॥ ७५ ॥

एषां क्लीबानामनङादेशः स्याट्टादावचि । स चोदात्तः । अस्थ्ना । दध्ना । सक्थ्ना । अक्ष्णा ॥

तदन्तविधिरत्रेष्यते ॥

प्रियदध्ना ब्राह्मणेन । प्रियास्थ्ना । प्रियसक्थ्ना । प्रियाक्ष्णा शुना(!)। टादौ किम् । अस्थीनि । अचि किम् । अस्थिभिः ॥

छन्दस्यपि दृश्यते ॥ ७६ ॥

अस्थ्यादीनामनङ् । दृशिग्रहणाद्धनियमः । अस्थभिः । अक्षभिर्यजत्रा । अस्थान्यशातयत । अक्षण्वता लाङ्गलेन ॥

ई च द्विवचने ॥ ७७ ॥

अस्थ्यादेर्द्विवचने परे ई आदेशः स्यादुदात्तश्छन्दसि । अक्षीभ्याम् । अक्षी ते इन्द्र पिङ्गले । ईकारेण नुम् परत्वाद्बाध्यते ॥

नाभ्यस्ताच्छतुः ॥ ७८ ॥

अभ्यस्तात्परस्य शतुर्नुम् न स्यात् । दधत् । जक्षत् ॥

वा नपुंसकस्य ॥ ७९ ॥

अभ्यस्तात् क्लीबात्परस्य शतुर्नुम् वा स्यात् । दधति

दधन्ति वा कुलानि । जक्षति जक्षन्ति वा ॥

## आच्छीनद्योर्नुम् ॥ ८० ॥

अवर्णान्ताच्छतुर्नुम् वा स्यात् शीनद्योः परतः । तुदती । तुदन्ती वा कुले । तुदती तुदन्ती वा ब्राह्मणी । तत्रान्तरङ्गत्वादेकादेशेऽवर्णादङ्गात्परत्वं शतुर्न सम्भवति उभयत आश्रये च नान्तादिवत् भूतपूर्वगत्याश्रयणे च लुनती अत्रापि प्राप्नोति । अत्राहुः । शत्रवयवे तृ इत्यस्मिन् शतृशब्दो वर्तते । तेनाकारान्तादङ्गाद्यः शत्रवयव इति । तेन नोभयत आश्रयः । आत्किम् । कुर्वन्ति । शीनद्योः किम् । तुदति । नुमनुवृत्त्यैव सिद्धेः पुनर्नुम्ग्रहणं व्यर्थमित्याकरे ॥

## शप्श्यनोर्नित्यम् ॥ ८१ ॥

आभ्यां शतुर्नुम् नित्यं स्यात् । पचन्ती दीव्यन्ती कुले ब्राह्मणी वा । अत्रारम्भसामर्थ्यादेव नित्यत्वे सिद्धेऽग्रे विकल्पाननुवृत्तये नित्यग्रहणम् ॥

## सावनडुहः ॥ ८२ ॥

अस्य नुम् स्यात्सौ । अनड्वान् । हे अनड्वन् । अत्राद्वित्यधिकारादवर्णाद्वन्त्याचो विधीयमानो नुमाममौ न बाधते ॥

## दृक्स्ववःस्वतवसां छन्दसि ॥ ८३ ॥

एषां छन्दसि नुम् स्यात्सौ । ईदृङ् चान्यादृङ् च । स्ववस् । स्ववान् । स्वतवस् । स्वतवान् ॥

## दिव औत् ॥ ८४ ॥

दिवः प्रातिपदिकस्यौत्स्यात्सौ । प्रातिपदिकस्य किम् । अक्षद्यूः ॥

पथिमथ्यृभुक्षामात् ॥ ८५ ॥

एषामाकारोन्तादेशः स्यात्सौ । पन्थाः । मन्थाः ऋभुक्षाः ॥

इतोत्सर्वनामस्थाने ॥ ८६ ॥

पथ्यादेरिकारस्य अत्स्यात्सर्वनामस्थाने । पन्थानौ । पन्थानः । मन्थानम् । ऋभुक्षाणम् ॥

अदिति वर्तमाने अद्वचनं ऋभुक्षणमिन्द्रमिसत्र वा षपूर्वस्ये(६।४।९)ति दीर्घविकल्पार्थम् ॥

थो न्थः ॥ ८७ ॥

पथिमथोस्थस्य न्थादेशः स्यात्सुटि । पन्थाः मन्था इत्युक्तान्येवोदाहरणानि ॥

भस्य टेर्लोपः ॥ ८८ ॥

भसंज्ञस्य पथ्यादेष्टेर्लोपः स्यात् । पथः । पथा । पथे । पथोः । पथाम् । पथि । एवम् पथः ऋभुक्षः इत्यदि ॥

पुंसोऽसुङ् ॥ ८९ ॥

पुंसोन्तस्यासुङ् स्यात्सुटि । पुमान् । पुमांसौ । पुमांसः ॥

असुङ उपदेशिवद्वचन स्वरार्थम् ॥

अन्यथा परमपुमानित्यत्रान्तरङ्गत्वात्समासान्तोदात्तत्वेन मकाराकारस्योदात्तत्वे पश्चादसुंङ अनुदात्तं पदमेकवर्जे(६।१।१५८)मित्यसुङोऽकारोनुदात्तः स्यात् । उदात्तश्चेष्यत इत्युपदेशिवद्भावः ॥

गोतो णित् ॥ ९० ॥

गोशब्दात्परं सर्वनामस्थानं णित्स्यात् । गौः । गावौ ।

णत्वं। गोत इति तपरत्वमोकारान्तोपलक्षणार्थम्। यस्माद्वर्ण-निर्देशे तपरत्वं प्रसिद्धम्। तेन द्यौः द्यावौ द्यावः इत्यादिसिद्धिः। हे चित्रगो चित्रगव इत्यत्र गुणं कृते गोरूपस्य लाक्षणिकत्वाद्गोत इति षष्ठीमाश्रित्य गोसम्बन्धित्वेन सुटो विशेषणाद्वा णित्त्वाभावः॥

णलुत्तमो वा॥ ९१॥

उत्तमो णल् णिद्वा स्यात्। अहं पपाच पपच वा॥

सख्युरसम्बुद्धौ॥ ९२॥

सख्युः परं सम्बुद्धिवर्जं सर्वनामस्थानं णित्स्यात्। सखायौ। सखायः। सम्बुद्धौ तु हे सखे॥

अनङ् सौ॥ ९३॥

सख्युरसम्बुद्धौ सावनङादेशः स्यात्। सखा। हे सखे॥

ऋदुशनस्पुरुदंशोऽनेहसां च॥ ९४॥

ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ परे। धाता। उशना। पुरुदंशा। अनेहा। असम्बुद्धौ किम्। हे धातः। हे उशनः। हे पुरुदंशः। हे अनेहः॥

उशनसः सम्बुद्धौ वानङ् वाच्यः नलोपश्च वा॥

हे उशन। हे उशनन्॥

तृज्वत्क्रोष्टुः॥ ९५॥

क्रोष्टुशब्दस्य क्रोष्टृशब्दवद्रूपं स्यादसंबुद्धौ सर्वनामस्थाने। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। संबुद्धौ हे क्रोष्टो। शसि क्रोष्टून्॥

स्त्रियां च॥ ९६॥

क्रोष्टोस्तृजन्तवद्रूपं स्यात् स्त्रियाम्। ऋन्नेभ्यो ङी-

पू(४।१।५) । क्रोष्ट्री । क्रोष्ट्र्यौ इत्यादि ॥

विभाषा तृतीयादिष्वचि ॥ ९७ ॥

क्रोष्टुर्वा तृज्वत्स्यात्तृतीयादावचि । क्रोष्ट्रा । क्रोष्टुना । तृज्वद्भावात्पूर्वविप्रतिषेधेन नुमनुटौ स्याताम् । प्रियक्रोष्टुने । प्रियक्रोष्टूनाम् ॥

चतुरनडुहोरामुदात्तः ॥ ९८ ॥

अनयोः सर्वनामस्थाने आमागमः स्यात्स चोदात्तः । चत्वारः । अनड्वान् । अनड्वाहावित्यादि ॥

तदन्तस्यापीष्यते ॥

प्रियचत्वाः । प्रियचत्वारौ । प्रियचत्वारः । प्रियानड्वान् ॥

अनडुहः स्त्रियामाम्वा वाच्यः ॥

अनड्वाही । अनडुही ॥

अम् सम्बुद्धौ ॥ ९९ ॥

अनयोः सम्बुद्धावम् स्यात् । आमोऽपवादः । हे प्रियचत्वः । [ हे अनड्वन् । ] हे प्रियानड्वन् ॥

ऋत इद्धातोः ॥ १०० ॥

ऋदन्तस्य धातोरिकारोन्तादेशः स्यात् । रपरत्वम् । किरति । गिरति । धातोः किम् । मातॄणाम् । चिकीर्षतीत्यादौ लाक्षणिकस्यापीष्टत्वात्प्रसङ्गः ॥

उपधायाश्च ॥ १०१ ॥

धातोरुपधाया ऋकारस्य इत्स्यात् प्रत्यये । कीर्तयति ॥

उदोष्ठ्यपूर्वस्य ॥ १०२ ॥

ओष्ठ्यपूर्वस्य ऋत उत्स्यात् । निपूर्ताः पिण्डाः । पु-

पूर्षति। मुमूर्षति। वुवूर्षति॥

इत्त्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन॥

आस्तरणम्। अस्तारकः। निपरणम्। निपारकः॥

बहुलं छन्दसि॥ १०३॥

ॠदन्तस्य बहुलमुत्स्यात् छन्दसि। ततुरिः। जगुरिः। किकिनोरन्यतरः। उत्त्वे द्विर्वचनेऽची(१।१।५९)ति स्थानिवद्भावः। क्वचिन्न। पप्रितमम्। उत्त्वाभावे यण्। किमत्ययान्तादतिशायने तमप्॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यश्रीराघवसोमयाजिकुलावतंस-
श्रीतिरुमलार्यवर्यसूनोरन्नम्भट्टस्य कृतौ व्याकरणमिताक्षरायां
सप्तमस्याध्यायस्य प्रथमः पादः।



## सिचि वृद्धिः परस्मैपदेषु ॥ १ ॥

सिचि परस्मैपदे परे इगन्तस्याङ्गस्य वृद्धिः स्यात् । अचैषीत् । अनैषीत् । अकार्षीत् । न्यनुवीत् । न्यधुवीत् । अत्र कुटादित्वेन ङित्त्वान्न वृद्धिः । परस्मैपदेषु किम् । अस्तोष्ट । सिचि किम् । नेष्यति ॥

## अतो ल्रान्तस्य ॥ २ ॥

अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्याकारस्य वृद्धिः स्यात् सिचि परस्मैपदेषु । अक्षारीत् । अत्सारीत् । अद्वारीत् । अज्वालीत् । अतो हलादे(७।२।७)रित्यस्यापवादः । अतः किम् । न्यमीलीत् । ल्रान्तस्य किम् । मा भवानश्वीत् । अतः समीपौ किम् । अश्वल्लीत् । अवभ्रीत् । अत्र यावतः समीपौ ल्रौ न तदन्तमङ्गम् ॥

## वदव्रजहलन्तस्याचः ॥ ३ ॥

एषामचः स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु । अवादीत् । अव्राजीत् । अनयोर्विकल्पापवादः । अभैत्सीत् । अधाक्षीत् । अत्र योगविभागः क्रियते । वदिव्रज्योः । अत्रात इत्यनुवर्तनात् तयोरतो वृद्धिः । अच इति द्वितीयो योगः । तत्राङ्गेनाज्विशेष्यत इति हलन्तस्याङ्गस्याचो वृद्धिः सिध्यति । हलन्तग्रहणमतिरिच्यमानं हल्समुदायार्थं विज्ञायते । अकाङ्क्षीत् ।

अभाङ्क्षीत् । अन्यथा येन नाव्यवधानमिति न्यायेन अनेकहल्व्यवधाने न स्यात् । उदवोढामित्यादौ ढत्वादीनामसिद्धत्वात्पूर्वं वृद्धिः पश्चादौत्वादौ कृते पुनर्न प्रवर्तते । कृतत्वात् । या त्वकृता सा भवत्येव । सोढामित्रस्यापत्यं सौढामित्रिरिति । अत्रान्तरङ्गमोत्त्वं वहिरङ्गा वृद्धिः ॥

नेटि ॥ ४ ॥

इडादौ सिचि परस्मैपदे हलन्तस्य वृद्धिर्न स्यात् । अचेतीत् । अकोषीत् ॥

ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ ५ ॥

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च इडादौ सिचि परस्मैपदे वृद्धिर्न स्यात् । अग्रहीत् । अवमीत् । अहयीत् । अक्षणीत् । अश्वसीत् । अजागरीत् । औ(ऊ)नयीत् । अश्वयीत् । अकटीत् । औनयीदश्वयीदित्यत्रान्तरङ्गत्वाद्गुणावादेशयोः कृतयोर्यान्तत्वादेव निषेधसिद्धेर्णिश्विग्रहणं ज्ञापकं न सिच्यन्तरङ्गं भवतीति ॥

ऊर्णोतेर्विभाषा ॥ ६ ॥

ऊर्णोतेर्वा वृद्धिः स्यादिडादौ सिचि परस्मैपदेषु । और्णावीत् । और्णवीत् । ङित्त्वपक्षे और्णुवीत् ॥

अतो हलादेर्लघोः ॥ ७ ॥

हलादेर्लघोरकारस्य इडादौ सिचि परस्मैपदे वा वृद्धिः स्यात् । अगदीत् । अगादीत् । अतः किम् । अचेतीत् । हलादेः किम् । मा भवानवीत् । लघोः किम् । अतक्षीत् । येन नाव्यवधानमिति न्यायेनात्र वृद्धेरप्रसङ्गाल्लघोरिति स्पष्टार्थम् । इटीत्येव । अपाक्षीत् ॥

## नेड्वशि कृति ॥ ८ ॥

वशादौ कृतीण्न स्यात्। आर्धधातुकस्ये(७।२।३५)ति वक्ष्यमाणस्य पुरस्तात्प्रतिषेधः । ईशिता ईश्वरः । दीपिता दीप्रः । भसिता भस्म । पतिता पत्रः । परमनादौ कृति प्रयोजनमन्यत्रोणादीनामव्युत्पत्त्यापि सिध्यति । कृति किम् । रुदिवः । रुदिमः ॥

## तितुत्रतथसिसुसरकसेषु च ॥ ९॥

एषु कृत्सु इण्न स्यात्। ति । दीप्तिः । तु । सचेस्तुन्(उ० ६९) ।सक्तुः । त्र । दाम्नी(३।२।१८२)ति त्रन् । पत्रम् । त । हसेस्तन्( उ० ३६३) । हस्तः । औणादिकस्यैव तस्य ग्रहणम् । अन्यत्र हसितमित्येव । थ । कुषेः क्थन्(उ० १६९) । कुष्ठम् । कुषेः क्सिः(?) । कुक्षिः । सुः । इषेः क्सुः(उ० ४३७) । इक्षुः । सर । अशेः सरन्(उ ३५०) । अक्षरम् । कः । शलेः कन्(उ ३२३) । शल्कः । स । वदेः सः(उ ३४२) । वत्सः ॥

तितुत्रेष्वग्रहादीनामिति वाच्यम् ॥

निगृहीतिः । निकुञ्चितिः । उपस्निहितः । कृतीत्येव । स्वपिति ॥

## एकाच उपदेशेऽनुदात्तात् ॥ १० ॥

उपदेशे योधातुरेकाजनुदात्तस्ततः परस्य वलादेरार्धधातुकस्येण्न स्यात् । गन्ता । गन्तुम् । एकाचः किम् । अवधीत् । वृद्धिनिवृत्त्यर्थमदन्तो वधिः । उपदेशे किम् । प्रविष्यति । अत्र प्रत्ययस्वरे शेषनिघातेन प्रकृतिरनुदात्ता । उपदेशे तूदात्ता । एवं कर्ता कर्तुमित्यत्र निरस्वरेणाद्युदात्तत्वादिट् स्यात् । उपदेशेऽनुदात्तत्वान्न ॥

अदृदृदन्तरुस्नुक्ष्णुशीयुणुक्षुश्विडीङ्श्रिभिः।
वृङ्वृञ्भ्यां च विनैकाचः स्वरान्ता धातवोऽनिटः॥
वसतिः शक्लृघसृभ्यभ्लभ्यमो रमिमन्यती।
नमिर्हनिगमी दोग्धिदुह्मिहवहिहो रुहिः॥
दहिर्दिशिदृशी दंशस्पृशिमृश्विश्रिशिक्रुशः।
लिश्रुश् सिध्यतिरुध्राधसाध्युधः शुध्यतिवुध्यती॥
क्रोधक्षुधी व्यधिर्वन्धिः शु(श्लि)ष्यतिः पुष्यतिः श्लि(शु)षिः॥
दुषिद्विषी विष्पिषौ त्विट्तुषौ शिष्वषि(ष्कृषि)कर्षती।
तप्तिप्याप्यपिस्वप्लिप्लुपस्तृप्यतिदृप्यती॥
सृप्शपौ छुप्क्षिपौ स्कन्दिर्हदिच्छिदिभिदिक्षुदः।
अदः शदिसदी खिदनुत्तुदः स्विद्यतिपद्यती॥
विनत्तिर्विद्यतिः [पच्]वच्विचिरिचूप्रच्छिरञ्जयः।
निजिः(र्) सिचिमुची भञ्जिभजिभृज्जातियज्त्यजः॥
युजिः सञ्जिरुजिस्वञ्जिसृजिमस्जिभुजो विजिक्(र्)।
इमे हलन्तेष्वनिट इत्यनिड्धातुसंग्रहः(१)॥

## श्र्युकः किति॥ ११॥

श्रयतेरुगन्ताच्च किति इण्न स्यात्। श्रितः। श्रितवान्। युतः। लूनः। श्र्युकः किम्। विदितः। किति किम्। श्रयिता। श्र्युकः कितीत्यत्र गकारोपि चर्त्वभूतो निर्दिष्टः। तेन भूष्णुरित्यत्रेण्निषेधसिद्धिः॥

## सनिग्रहगुहोश्च॥ १२॥

ग्रहेर्गुहेरुगन्तानां च सन इण्न स्यात्। जिघृक्षति। जु-

---

(१) अत्र भट्टोजिदीक्षितेन कौमुद्यां लिखिताः कारिका आद्यन्तक्रमसहिता अतिश्लाघ्याः। प्रक्रियाकौमुदी—मिताक्षराचोरोपन्नं तादृशक्रमनिर्माणामिति तु विश्वासं नार्हति॥

घुक्षति । रुरुपति । लुलुपति ॥

## कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ १३ ॥

क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात् । चकृव । सस्रव । बभृव । ववृव । तुष्टुव । दुद्रुव । सुस्रुव । शुश्रुव ॥

कृञोऽसुट इति वाच्यम् ॥

सञ्चस्करिव ॥ ऋतो भारद्वाजस्ये(७।२।६३)त्येतदपि न । सञ्चस्करिथ ॥

## श्वीदितो निष्ठायाम् ॥ १४ ॥

श्वयतेरीदितश्च निष्ठायामिण्न स्यात् । शूनः । शूनवान् । विजी । उद्विग्नः । दीपी । दीप्तः ॥

## यस्य विभाषा ॥ १५ ॥

यस्य धातोः क्वचिदपि वेट् तस्य निष्ठायामिण्न स्यात् । गूढः । गूढवान् ॥

## आदितश्च ॥ १६ ॥

आदितो निष्ठायामिण्न स्यात् । भिन्नः । भिन्नवान् । चकारोऽनुक्तसमुच्चयार्थः । श्वस । आश्वस्तः । आदितश्च विभाषा भावादिकर्मणोरित्येकयोगेपि भावकर्मव्यतिरिक्ते यस्य विभाषेति सिद्धे निषेधे यदर्थस्य विकल्पस्तदर्थस्यैव निषेध इति ज्ञा[प]नार्थो योगविभागः । तेन विभाषा गमहनविदविशा(७।२।६८)मिति विदेर्लाभार्थस्य विकल्पे ज्ञानार्थस्य न निषेधः । विदितः ॥

## विभाषा भावादिकर्मणोः ॥ १७ ॥

आदितो भावकर्मवाचिनिष्ठाया इड्वा स्यात् । जिमिदा स्नेहने । मिन्नं मिदितं वानेन । प्रमिन्नः । प्रमेदितः ॥

कर्मणि शकेर्वा ॥

शकितः शक्तो वा कर्तुं घटः । भावे तु शक्तः ॥

क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ॥ १८ ॥

एते निपात्यन्ते यथासङ्ख्यं मन्थादिष्वर्थेषु । क्षुब्धो मन्थः । क्षुभितमन्यत् । क्षुभितः समुद्रः । क्षुभितं मन्थेन । क्षुब्धा गिरिनदीत्युपमानात् । स्वान्तं मनः । स्वनितमन्यत् । ध्वान्तं तमः । ध्वनितमन्यत् । लग्नं सक्तम् । लगितमन्यत् । म्लिष्टमविस्पष्टम् । म्लेच्छितमन्यत् । एत इत्त्वं निपातनात् । विरिब्धं स्वरश्चेत् । विरेभितमन्यत् । रेभृ शब्द इत्यस्य निपातनम् । केचिद्विरिभितमिति प्रत्युदाहरन्ति । तेषां रिभिः सौत्रो धातुः । फाण्टमनायासश्चेत् । फाणितमन्यत् । न विद्यते अयासः प्रयत्नाधिक्यं यस्मिन्निस्वल्पायाससाध्यमनायास इत्युच्यते । अनायासकृतं फाण्टम् । तदपि रूढ्या क्वचिदेव प्रयुज्यते न सर्वत्र । बाढं भृशं चेत् वाहितमन्यत् । वाहृ प्रयतने । भृशमतिशयः ॥

धृषिशसी वैयात्ये ॥ १९ ॥

विगातस्य भावो वैयात्यमविनीतता । एतयोर्निष्ठायामिण्न स्याद्वैयात्ये । धृष्टः शस्तो वा ब्राह्मणः । आदितश्च (७ २।१६)यस्य विभाषे(७.२।१५)ति सिद्धे निषेधे नियमार्थमिदम् । भावादिकर्मणोरपि वैयात्य एव । अन्यत्र धर्षितः विशसितः ॥

दृढः स्थूलबलयोः ॥ २० ॥

एतयोरयं निपातः । दृढः स्थूलो बलवान्वा । दृह दृहि बृह बृहि वृद्धाविति पठ्यते । द्वयोरप्ययं निपातः । अन्यत्र दृहितः

दृंहितः । दृढनिपातनं नकारहकारलोपार्थं परस्य च ढत्वार्थमिति वार्तिके नलोपश्रुतेरिदित एव अयं निपातोऽनिदितः स्थूलबलयोरपि दृंहितमित्येवेति कैयटः ॥

## प्रभौ परिवृढः ॥ २१ ॥

वृहिवृंह्योर्निपातोयम् । परिवृढः प्रभुः । अन्यत्र परिवृंहितः परिबृंहितः । अत्रापि तुल्यन्यायतया प्रभावपि अनिदितः परिवृंहितं इति कैयटस्वरसः ॥

## कृच्छ्रगहनयोः कषः ॥ २२ ॥

कृच्छ्रे ग्रहने च कषतेर्निष्ठायामिण्न स्यात् । कृच्छ्रं दुःखम् । तत्साधनमपि कृच्छ्रम् । कष्टं व्याकरणम् । कष्टं वनम् । कषितमन्यत् ॥

## घुषिरविशब्दने ॥ २३ ॥

घुषेर्निष्ठायामिण्न स्यान्न तु विशब्दने । विशब्दनं शब्देन स्वाभिप्रायप्रकाशनम् । घुष्टा रज्जुः । घुष्टौ पादौ । विशब्दने तु घुषितं वाक्यमाह । घुषिरविशब्दन इति भ्वादिः । घुषिर्विशब्दन इति चुरादिः । विशब्दनप्रतिषेधो ज्ञापकश्चुरादेर्णिज्वेति । नित्यत्वे तु घुषिग्रहणे घोषेरसङ्गाव । तेन चुरादेरपि जुघुषुः घोषयाञ्चकुरित्यादिसिद्धिः ॥

## अर्देः संनिविभ्यः ॥ २४ ॥

एभ्योर्देर्निष्ठायामिण्न स्यात् । समर्णः । न्यर्णः । व्यर्णः ॥

## अभेश्चाविदूर्ये ॥ २५ ॥

अभेरर्देर्निष्ठायामिण्न स्यात्सामीप्ये । अभ्यर्णानि वनानि । अविदूर्ये किम् । अभ्यर्दितो वृषलः शीतेन । पीडित इत्यर्थः । विदूरं विप्रकृष्टं ततोन्यदविदूरम् । स्वार्थे ष्यञ् ।

भावेप्यस्मादेव निपातनान्न नञ्पूर्वा(५।१।१२१)दिति निषेधो न ॥

## णेरध्ययने वृत्तम् ॥ २६ ॥

ण्यन्तस्य वृतेः निष्ठायामिण्न स्यात् । वृत्तं पारायणमनेन । अध्ययने किम् । वर्तितमनेन । अण्यन्तस्य तूदित्त्वाञ्चस्य विभाषे(७।२।१५)तीण्निषेधात् वृत्तं पारायणस्येति भवति ॥

## वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ २७ ॥

ण्यन्तानामेषां निष्ठायामनिट्त्वं(ड्वा)निपात्यते । दान्तः । दमितः । शान्तः । शमितः । पूर्णः । पूरितः । दस्तः । दासितः । स्पष्टः । स्पाशितः । छन्नः । छादितः । ज्ञप्तः । ज्ञापितः । इट्प्रतिषेधो णिलुक् च निपात्यते ॥

## रुष्यमत्वरसङ्घुषास्वनाम् ॥ २८ ॥

एषां निष्ठायामिड्वा स्यात् । रुष्टम् । रुषितम् । अभ्यन्तः । अभ्यमितः । तूर्णम् । त्वरितम् । सङ्घुष्टः । सङ्घुषितः । अविशब्देनेपि परत्वादयं विकल्पः सम्पूर्वादिष्यते । आस्वान्तम् । आस्वनितं वा । मनस्यपि परत्वादाङ्पूर्वादयं विकल्प इष्यते ॥

## हृषेर्लोमसु ॥ २९ ॥

अस्य निष्ठायामिड्वा स्यात् । हृष्टानि हृषितानि वा लोमानि । केशानामपि लोमत्वात् हृष्टाः केशाः । हृषिताः । हृषिरेको वेट् । अन्यः सेट् । द्वयोरपि ग्रहणम् । लोमसु किम् । वेट्कस्य हृष्टः । इतरस्य हृषितः ॥

### विस्मितप्रतिघातयोश्च ॥

हृषितो हृष्टो वा देवदत्तः । विस्मित इत्यर्थः । हृषिता हृष्टा वा दन्ताः । प्रतिहता इत्यर्थः ॥

## अपचितश्च ॥ ३० ॥

अयं निष्ठायां वा निपात्यते । चापश्चिभावोऽनिट्त्वं च । अपचितो गुरुरपचायितो वा देवदत्तेन ॥

क्तिनि नित्यम् ॥

अपचितिः ॥

## हु ह्वरेश्छन्दसि ॥ ३१ ॥

ह्वरतेः हु इत्यादेशः स्यान्निष्ठायां छन्दसि । अहुतमसि । लोके तु ह्वृतः ॥

## अपरिह्वृताश्च ॥ ३२ ॥

अत्र ह्वरतेरादेशाभावो निपात्यते छन्दसि । अपरिह्वृताः ॥

## सोमे ह्वरितः ॥ ३३ ॥

सोमेऽभिधेये ह्वरतेः निष्ठायामिट् गुणश्च निपात्यते । ह्वरितः सोमः ॥

## ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृ शंस्तृ शास्तृ तरुतृ तरूतृ वरुतृ वरूतृ वरूत्रीरुज्ज्वलिति क्षरिति क्षमिति वमित्यमितीति च ॥ ३४ ॥

एते छन्दसि निपात्यन्ते । विकस्ता इत्यन्तस्य द्वन्द्वनिर्देशः । विशस्त्रादिषु प्रत्येकमसमस्तनिर्देशः । आद्येषु चतुर्षु निष्ठायामिण्निपात्यते । लोके तु ग्रस्तं स्कब्धं स्तब्धं उत्तब्धम् । चत्तविकस्तेष्विडभावो निपात्यते । चतितं विकसितमिति भाषायाम् । ततस्त्रिषु तृचीडभावः । विशसिता शंसिता शासितेति भाषायाम् । ततः पञ्चसु तरतेर्वृङ्वृञोश्च तृचि उट् ऊट् आगमौ निपात्येते । तरिता वरितेति भाषायाम् । वरूतृशब्दात् ङीपि

सिद्धे वरूत्रीग्रहणं प्रपञ्चार्थम् । वरूत्रीरिति जसि पूर्वसवर्णादीर्घोच्चारणं प्रपञ्चार्थम् । न तु तन्त्रम्। तेन वरूत्रय इत्यपि सिद्धम् छान्दसं ह्रस्वत्वम् । अन्त्येषु पञ्चसु तिपि शब्लुगिडागमौ निपात्येते। उज्ज्वलति क्षरति क्षमति वमति अमतीति भाषायाम्। इतिकरणात् क्वचिदिडागमः । अभ्यमीति ॥

## आर्धधातुकेस्येड्वलादेः ॥ ३५ ॥

वलादेरार्धधातुकस्येडागमः स्यात् । लविता । पविता । लवितुम् । अर्धधातुकस्य किम् । आस्ते । शेते । वलादेः किम् । लव्यम् । रुदादिभ्यः सार्वधातुक(७।२।७६)इत्यस्य नियमार्थत्वादार्धधातुकेति व्यर्थम् । निषेधाननुवृत्त्या इडनुवृत्तिसम्भवात् इडिति च व्यर्थम् ॥

## स्नुक्रमोरनात्मनेपदनिमित्ते ॥ ३६ ॥

स्नुक्रमोः सम्बन्धिनो वलाद्यार्धधातुकस्येट् स्यान्न चेत् स्नुक्रमौ आत्मनेपदस्य निमित्ते भवतः नोत्पादयतः । अनात्मनेपदनिमित्ते इति प्रथमाद्विवचनम् । स्नुक्रमोरुदात्तत्वादिटि सिद्धे आत्मनेपदिप्रतिषेधार्थमिदम् । प्रक्रमिता । प्रक्रमितुम् । प्रस्नविता । प्रस्नवितुम् । अनात्मनेपदनिमित्ते इति किम् । प्रस्नोषीष्ट । प्रक्रंस्यते । प्रचिक्रंसिष्यते । अत्रापि पूर्ववत्सन(१।३।६२)इति क्रमेरात्मनेपदनिमित्तत्वम् ॥

क्रमेः कर्तर्यात्मनेपदविषयात्कृति नेति वाच्यम् ॥

प्रक्रन्ता । कर्तरि किम् । प्रक्रमितव्यम् । आत्मनेपदविषयात्किम् । निष्क्रमिताः । क्रिति सनि च श्र्युकः क्रिति(७।२।११) सनि ग्रहगुहोश्चे(७।२।१२)ति प्रतिषेध एव । सुस्नूषति । स्नुतः । प्रस्नुतवान् ॥

## ग्रहोऽलिटि दीर्घः ॥ ३७ ॥

ग्रहेरिटो दीर्घः स्यान्न तु लिटि । ग्रहीता । ग्रहीतुम् । लिटि तु जगृहिव ॥

### चिण्वदिटो न दीर्घः ॥

ग्राहिता ॥

## वृतो वा ॥ ३८ ॥

वृङ्वृञोरॄदन्ताच्चेटो दीर्घो वा स्यात् । वरिता । वरीता । तरिता । तरीता । अलिटीत्येव । तेरिव ॥

## न लिङि ॥ ३९ ॥

वॄत इटो लिङि न दीर्घः । वरिषीष्ट । तरिषीष्ट ॥

## सिचि च परस्मैपदेषु ॥ ४० ॥

वॄत इटो न दीर्घः सिचि परस्मैपदेषु । अवारिष्टाम् । अतारिष्टाम् । परस्मैपदेषु किम् । अवरीष्ट । अवरिष्ट ॥

## इट् सनि वा ॥ ४१ ॥

वॄतः सन इड्वा स्यात् । वुवूर्षते । विवरिषते । विवरीषते । तितीर्षति । तितरिषति । तितरीषति । चिकीर्षतीत्यत्र लाक्षणिकत्वादृकारस्येण्न स्यात् ॥

## लिङ्सिचोरात्मनेपदेषु ॥ ४२ ॥

वृङ्वृञोॠदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि । वृषीष्ट । वरिषीष्ट । आस्तीर्षीष्ट । आस्तरिषीष्ट । अवृत । अवरिष्ट । अवरीष्ट । आस्तीर्ष्ट । आस्तरिष्ट । [आस्तरीष्ट।] आत्मनेपदेषु किम् । अवारिष्टाम् । अवारिषुः ॥

## ऋतश्च संयोगादेः ॥ ४३ ॥

संयोगादेः ऋदन्तात्परयोर्लिङ्सिचोरिड्वा स्यात्तङि । स्तरिषीष्ट । स्तृषीष्ट । अस्तृत । अस्तरिष्ट । ऋतः किम् । च्योषीष्ट । अच्योष्ट । संयोगादेः किम् । कृषीष्ट । अकृत । तङि किम् । अस्तार्षीत् । संस्कृषीष्ट । समस्कृतेत्यत्र सुटोऽभक्तत्वादुपदेशाधिकाराद्वा इण्न ॥

## स्वरतिसूतिसूयतिधूञूदितो वा ॥ ४४ ॥

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात् । वेति वर्तमाने पुनर्वाग्रहणं लिङ्सिचो(७।२।४२)रिति निवृत्त्यर्थम् ।स्वर्ता । स्वरिता । सोता । सविता । धोता । धविता। ऊदितः । गोप्ता । गोपिता । विकरणनिर्देशात् षू प्रेरण इत्यस्य धूञ्ग्रहणात् धू विधूनन इत्यस्य च नित्यमिट् । सविता । धविता ॥

अस्माद्विकल्पादृद्धनोः स्य(७।२।७०) इतीट् विप्रतिषेधेन ॥

स्वरिष्यति । किति तु श्र्युकः किती(७।२।११)त्येव भवति पूर्वविप्रतिषेधेन । स्वृत्वा । सूत्वा । धूत्वा ॥

## रधादिभ्यश्च ॥ ४५ ॥

रध नश तृप दृप द्रुह मुह ष्णुह ष्णिहः एभ्योऽष्टभ्यः परस्य वलादेरार्धधातुकस्येड्वा स्यात् । रधिता । रद्धा । नंष्टा । नशिता । त्रप्ता । तर्प्ता । तर्पिता ।द्रप्ता । दर्प्ता ।दर्पिता । द्रोग्धा । द्रोढा । द्रोहिता । मोग्धा ।मोढा । मोहिता । स्नोग्धा । स्नोढा । स्नोहिता । स्नेग्धा । स्नेढा । स्नेहिता । लिटि क्रादिनियमात्परत्वाद्रधादिभ्यो विकल्पं केचिदाहुः । अन्ये तु त्रिधः पूर्वमिट्प्रतिषेधबलान्निषेधस्य बलीयस्त्वात्क्रादिनियमान्नित्यमि-

टमाहुः । ररन्धिव ॥

निरः कुपः ॥ ४६ ॥

निरः परात्कुपो वलादेरार्धधातुकस्येड्वा स्यात् । निष्कोपिता । [निष्कोप्टा । ] निरः किम् । कोपिता । निस इति वाच्ये निर इति वचनाद्रेफान्तमुपसर्गान्तरं वर्तत इति ज्ञाप्यते । तेन निलयनमित्यत्रोपसर्गस्यायतावि ति लत्वं सिद्धम् । सान्ते तु रुत्वस्यासिद्धत्वाल्लत्वं न स्यात् ॥

इण्निष्ठायाम् ॥ ४७ ॥

निरः कुपो निष्ठायामिट् स्यात् । यस्य विभाषे(७।२।१५)ति विकल्पे सिद्धे पुनर्विधानसामर्थ्यान्नित्यमिट् । निष्कुपितम् । निष्कुपितवान् ॥

तीषसहलुभरुषरिषः ॥ ४८ ॥

इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् । एषिता । एष्टा । इष्यतीष्णात्योर्नित्यमिट् इच्छतेर्विकल्प इति काशिकायाम् । इष्यतेरेव नित्यमिट् इष्णातीच्छत्योर्विकल्प इति भाष्ये । सहिता । सोढा । लोभिता । लोब्धा । रोषिता । रोष्टा । रेषिता । रेष्टा । तीति किम् । एषिष्यति ॥

सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ॥ ४९ ॥

इवन्तेभ्यो ऋधादिभ्यश्च सन इड्वा स्यात् । दिव् । दुद्यूषति । दिदेविषति । अर्दिधिषति । ईर्त्सति । बिभ्रज्जिषति । [बिभर्जिषति । ] बिभर्क्षति । बिभ्रक्षति । दिदम्भिषति । धिप्सति । [धीप्सति । ] शिश्रयिषति । शिश्रीषति । सिस्वरिषति । सुस्वूर्षति । यियविषति । युयूषति । ऊर्णुनविषति । ऊर्णुनूषति । ऊर्णुनुविषति । भरे-

ति निर्देशात् भौवादिकस्य भृञो ग्रहणम् । विभरिषति । बुभूर्षति । जिज्ञपयिषति । ज्ञीप्सति । सिसनिषति । सिषासति ॥ तनिपतिदरिद्राणां चेति केचित् ॥ तितनिषति । तितांसति । तितंसति । पिपतिषति । पित्सति । दिदरिद्रिषति । दिदरिद्रासति । सनि किम् । देविता ॥

क्लिशः क्त्वानिष्ठयोः ॥ ५० ॥

इड्वा । क्लेशित्वा । क्लिष्ट्वा । क्लेशितः । क्लिष्टः ॥

पूङश्च ॥ ५१ ॥

पूङः क्त्वानिष्ठयोरिड्वा । पूत्वा । पवित्वा । पूतः । पूतवान् । पवितः । पवितवान् । पूङः क्त्वा चे(१।२।२२)ति किच्वप्रतिषेधः ॥

वसतिक्षुधोरिट् ॥ ५२ ॥

क्त्वानिष्ठयोः । उषित्वा । उषितः । उषितवान् । क्षुधित्वा । क्षोधित्वा । रलो व्युपधा(१।२।२६)दिति वा किच्वम् । क्षुधितः । क्षुधितवान् । इडिति वर्तमाने पुनरिड्ग्रहणं नित्यार्थम् ॥

अञ्चेः पूजायाम् ॥ ५३ ॥

क्त्वानिष्ठयोरिट् । अञ्चित्वा । अञ्चितम् । उदितो वे(७।२।५६)ति क्त्विविकल्पे यस्य विभाषे(७।२।१५)ति निष्ठायां निषेधे च प्राप्ते इदम् । पूजायां किम् । उदक्तमुदकं कूपात् । उद्धृतमित्यर्थः ॥

लुभो विमोहने ॥ ५४ ॥

क्त्वानिष्ठयोरिट् । लुभित्वा । लोभित्वा । लुभितम् । विमोहनादन्यत्र क्त्वायां तीषसहे(७।२।४८)ति विकल्पः निष्ठायां

यस्य विभाषे(७।२।१५)ति निषेधश्च। लुब्धम्। [लुब्धवान्]लुभित्वा। लोभित्वा॥

जॄव्रश्च्योः क्त्वि॥ ५५॥

आभ्यां क्त्वो नित्यमिट् स्यात्। जरित्वा। अत्र श्र्युक (७।२।११) इति निषेधः प्राप्तः। व्रश्चित्वा। अत्र ऊदित्त्वाद्विकल्पः। क्त्वाग्रहणं निष्ठानिवृत्त्यर्थम्॥

उदितो वा॥ ५६॥

उदितो धातोः क्त्व इड्वा स्यात्। शमित्वा। शान्त्वा॥

सेऽसिचि कृतचृतच्छृदतृदनृतः॥ ५७॥

एभ्यः परस्य सिज्वर्जस्य सकारादेरार्धधातुकस्येड्वा स्यात्। कर्त्स्यति। कर्तिष्यति। चिकृत्सति। चिकर्तिषति। चृत। चर्त्स्यति। चर्तिष्यति। चिचृत्सति। चिचर्तिषति। छृद। छर्दिष्यति। छर्त्स्यति। चिच्छर्दिषति। चिच्छृत्सति। [तृद।]तर्त्स्यति। तर्दिष्यति। तितृत्सति। तितर्दिषति। नर्तिष्यति। नर्त्स्यति। निनृत्सति। निनर्तिषति। से किम्। नर्तिता। असिचि किम्। अनर्तीत्॥

गमेरिट् परस्मैपदेषु॥ ५८॥

गमेः सकारादेरार्धधातुकस्य सिज्वर्जितस्येट् स्यात्परस्मैपदेषु। गमिष्यति। जिगमिषति। गमेः किम्। चेष्यति। परस्मैपदेषु किम्। सङ्गस्यते। अत्र योगविभागः कार्यः। गमेरिट्। गमेः सकारादेः सर्वत्रेट् स्यात्। तेन परस्मैपदे तल्लुकि क्वनि चेट् सिद्ध। जिगमिषति। जिगमिषितुम्। जिगमिषत्वम्। ततः परस्मैपदेष्विति द्वितीयो योगो नियमार्थस्तुल्य-

जातीयस्यात्मनेपदस्यैव निवर्तकः। न कृल्लुकोः॥

न वृद्भ्यश्चतुर्भ्यः॥ ५९॥

वृत्-वृध्-शृध्-स्यन्द्भ्यः सकारादेरार्धधातुकस्येण्न स्यात्तङानयोरभावे। वृतुवृधोः। वर्त्स्यति। विवृत्सति। शृधु। शर्त्स्यति। शिशृत्सति। स्यन्त्स्यति। सिस्यन्त्सति। आत्मनेपदे तु वर्तिष्यते॥

कृति परस्मैपदे लुकि च प्रतिषेधः॥

विवृत्सितुम्। विवृत्स त्वम्॥ चतुर्भ्योऽनन्तरं क्लृपिः पठ्यते। तस्याप्ययं निषेध इष्यते। तदनन्तरं वृत्करणं वर्तते। ततश्चतुर्भ्य इति न वक्तव्यमिति स्थितम्॥

तासि च क्लृपः॥ ६०॥

तासेः सकारादेश्चेण्न स्यात् तङानयोरभावे। कल्प्ता। कल्प्स्यति। चिक्लृप्सति। तङि तु कल्पिष्यते। अत्रापि कृति परस्मैपदलुकि च नेट्। चिक्लृप्सिता। चिक्लृप्स त्वम्॥

अचस्तास्वत् थल्यनिटो नित्यम्॥ ६१॥

तासाविव तास्वत्। अजन्तो यो धातुस्तासौ नित्यमनिट् ततः परस्य थल इण्न स्यात्। ययाथ। ववाथ। अचः किम्। बिभेदिथ। तासौ किम्। लूता। लुलविथ। थलि किम्। ययिव। ययिम। नित्यमनिटः किम्। धूञ्। दुधविथ। वतिनिर्देशः किम्। उत्तरसूत्रेपि तास्वदित्यनुवर्तते। तेन तासावविद्यमानस्य नित्यानिटोपि थलीट् यथा स्यात्। जघसिथ॥

उपदेशेऽत्वतः॥ ६२॥

धातुपाठे अकारवतस्तासौ नित्यानिटः परस्य थलो नेट्।

शक्ता । शशक्थ । उपदेशे किम् । कर्ता । चकर्थिथ । अस्वतः किम् । बिभेदिथ । तपरत्वं किम् । रराधिथ । तासौ नित्यानिटः किम् । ग्रहि जघृक्षति । जग्राहिथ । नित्यं किम् । अञ्ज । अञ्जिता । आनञ्जिथ ॥

ऋतो भारद्वाजस्य ॥ ६३ ॥

तासौ नित्यानिट ऋदन्तस्यैव थलि नेट् भारद्वाजस्य मतेन । तेन अनृदन्ते विकल्पः सिध्यति । चकर्थ । ससर्थ । अन्येषां तु पपिथ । पेचिथ । शकिथ । अर्थात्पूर्वसूत्रयोर्विकल्पः ॥

बभूथाततन्थजगृभ्मववर्थेति निगमे ॥ ६४ ॥

अत्र यत्पनिणिपात्यते छन्दसि । भाषायां तु बभूविथ । आततनिथ । जगृभिम । ववरिथ । क्रादिनियमादेव सिद्धे इग्रहणं छन्दस्येव न भाषायामिति नियमार्थम् ॥

विभाषा सृजिदृशोः ॥ ६५ ॥

आभ्यां परस्य थल इड्वा स्यात् । ससर्जिथ । सस्रष्ठ । ददर्शिथ । दद्रष्ठ ॥

इडत्त्यर्तिव्ययतीनाम् ॥ ६६ ॥

अदि ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आदिथ । आरिथ । विव्ययिथ । निषेधविधावर्तिग्रहणं व्यर्थम् । विकल्पविधावित्व्ययतिग्रहणमित्यारम्भसामर्थ्यान्नित्यमिटि सिद्धे इड्ग्रहणं व्यर्थमित्याहुः ॥

वस्वेकाजाद्घसाम् ॥ ६७ ॥

कृतद्विर्वचनानामेकाचामादन्तानां च घसेश्च वसोरिडागमः स्यात् । आदिवान् । पेचिवान् । आदन्तानां पपिवान् । त-

स्थिवान्। घसेः। जक्षिवान्। क्रादिनियमादेवेटि सिद्धे नियमार्थमिदम्। नेह। विभिद्वान्। चिच्छिद्वान्॥

विभाषा गमहनविदविशाम्॥ ६८॥

पूर्वस्मान्नियमादप्राप्तौ विभाषेयम्। एषां वसोरिड्वा स्यात्। जग्मिवान्। जगन्वान्। जघ्निवान्। जघन्वान्। विविदिवान्। विविद्वान्। विविशिवान्। विविश्वान्। विशिना साहचर्याद्विदिस्तौदादिको गृह्यते। वेत्तेस्तु विविद्वानित्येव। तेन निष्ठायां यस्य विभाषे(७।२।१५)ति नेट् प्रतिषेधः। विदितः॥

दृशेश्चेति वाच्यम्॥

दद्दशिवान्। ददृश्वान्॥

सनिंस सनिवांसम्॥ ६९॥

सनिपूर्वस्य सनेर्धातोः सनिवांसमिति निपात्यते। इयमानुपूर्वी छन्दस्येवेति तत्रैवायं निपातः। लोके तु सिनिवांसमित्येव॥

ऋद्धनोः स्ये॥ ७०॥

ऋतो हन्तेश्च स्यस्य इट् स्यात्। करिष्यते। हनिष्यति। स्वरतेरपि परत्वात्स्ये नित्यमिट्। स्वरिष्यति॥

अञ्जेः सिचि॥ ७१॥

अञ्जेः सिचो नित्यमिट् स्यात्। आञ्जीत्। आञ्जिष्टाम्। ऊदित्वादन्यत्र विकल्पः। अञ्जिता। अङ्क्ता॥

स्तुसुधूञ्भ्यः परस्मैपदेषु॥ ७२॥

एभ्यः सिच इट् स्यात् परस्मैपदेषु। अस्तावीत्। असावीत्। अधावीत्। तङि तु अस्तोष्ट॥

यमरमनमातां सक् च ॥ ७३ ॥

यमादेरादन्तानां च सिच इट् स्यात्परस्मैपदेष्वेषां सगागमश्च। अयंसीत्। अरंसीत्। अनंसीत्। अयासीत्। परस्मैपदेषु किम्। अयस्त। अरंस्त। अनंस्त ॥

स्मिपूङ्रञ्ज्वशां सनि ॥ ७४ ॥

स्मिङ् पूङ् ऋ अञ्जु अश् एभ्यः सन इट् स्यात्। सिस्मयिषते। पिपविषते। अरिरिषते। अञ्जिजिषति। अशिशिषति। पूङो ग्रहणात् पूञः पुपूषतीत्येव ॥

किरश्च पञ्चभ्यः ॥ ७५ ॥

कॄ गॄ दृ धृ प्रच्छ एभ्यः सन इट् स्यात्। चिकरिषति। जिगरिषति ॥ अस्येटो दीर्घत्वं नेष्यते ॥ दिदरिषते। दिधरिषते। पञ्चभ्यः किम्। सिस्तरिषति ॥

रुदादिभ्यः सार्वधातुके ॥ ७६ ॥

रुद् स्वप् श्वस् अन् जक्ष् एभ्यः परस्य वलादेः सार्वधातुकस्येट् स्यात्। रोदिति। स्वपिति। श्वसिति। अनिति। जक्षिति। पञ्चभ्य एव। जागर्ति। सार्वधातुके किम्। स्वप्ता। वलादेः किम्। स्वपन्ति ॥

ईशः से ॥ ७७ ॥

ईशः से इत्यस्येट् स्यात्। ईशिषे। ईशिष्व ॥

ईडजनोर्ध्वे च ॥ ७८ ॥

आभ्यां परस्य सस्य ध्वस्य च सार्वधातुकस्येट् स्यात्। ईडिध्वे। ईडिध्वम्। ईडिषे। ईडिष्व। व्यतिजज्ञिध्वे। व्यतिजज्ञिध्वम्। व्यतिजज्ञिषे। व्यतिजज्ञिष्व ॥

ईशोपि ध्वस्येडिष्यते ॥

ईशिध्वे । ईशिध्वम् । एवं तु ईशीडजनां स्ध्वोरिति सूत्रे कार्ये वैचित्र्यार्थो योगविभागः। ध्वे इति निर्देशाल्लङि न भवति। लोटि तु भवति ॥

लिङः सलोपोऽनन्त्यस्य ॥ ७९ ॥

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् । कुर्यात् । कुर्वीत । कुर्वीयाताम् । अनन्तस्य किम् । कुर्याः । सार्वधातुकेति किम् । क्रियास्ताम् । कृषीष्ट ॥

अतो येयः ॥ ८० ॥

अतः परस्य या इत्येतस्य इय् स्यात्सार्वधातुके । भवेत् । भवेयुरित्यत्र उस्यपदान्ता(६।१।९६)दित्यस्मात्परत्वादिय् स्यात् । अतः किम् । चिनुयात् । तपरः किम् । यायात् । सार्वधातुके किम् । चिकीर्ष्यात् । चिकीर्ष्यास्ताम् । या इति लुप्तषष्ठीकम् । यः इत्यस्य सन्धिर्वा सौत्रः । इय इत्यत्राकार उच्चारणार्थः ॥

आतो ङितः ॥ ८१ ॥

अतः परस्य ङितामाकारस्य इय् स्यात् । पचेते । पचेताम् । आतः किम् । पचन्ते । ङितां किम् । पचावहै । अतः किम् । चिन्वाते । तपरः किम् । मिमाते ॥

आने मुक् ॥ ८२ ॥

आने परतोकारान्ताङ्गस्य योन्त्योऽकारस्तस्य मुमागमः स्यात् । पचमानः । यजमानः ॥

ईदासः ॥ ८३ ॥

आसः परस्यानस्य ईत्स्यात् । आदेः परस्य (१।१।५४) । आसीनः ॥

१००

## अष्टन आ विभक्तौ ॥ ८४ ॥

अष्टन आकारोन्तादेशः स्याद्विभक्तौ । अष्टाभिः । अष्टाभ्यः । विभक्तौ किम् । अष्टत्वम् । अष्टनो दीर्घा(६।१।१७२)दिति दीर्घग्रहणेनात्वस्य विकल्पितत्वात् अष्टभिः अष्टभ्यः इत्यपि स्यात् ॥ तदन्तविधिरप्यिष्यते ॥ प्रियाष्टाः । प्रियाष्टानः ॥

## रायो हलि ॥ ८५ ॥

रैशब्दस्य आकारोन्तादेशः स्याद्धलि विभक्तौ । राभ्याम् । राभिः । हलि किम् । रायौ । रायः । विभक्तौ किम् । रैत्वम् । मृजेर्वृद्धि(७।२।११४)रितः प्राग्विभक्त्यधिकारः ॥

## युष्मदस्मदोरनादेशे ॥ ८६ ॥

अनयोराकारोन्तादेशः स्यादनादेशे विभक्तौ । युष्माभिः । अस्माभिः । अस्मासु । युष्मासु । अनादेश किम् । युष्मत् । अस्मत् । हलीत्यनुवृत्त्यापि सिद्धेऽनादेशग्रहणमुत्तरार्थम् ॥

## द्वितीयायां च ॥ ८७ ॥

द्वितीयायां परतो युष्मदस्मदोराकारोन्तादेशः स्यात् । आदेशार्थं वचनम् । त्वाम् । माम् । युवाम् । आवाम् । युष्मान् । अस्मान् ॥

## प्रथमायाश्च द्विवचने भाषायाम् ॥ ८८ ॥

प्रथमाद्विवचने युष्मदस्मदोराकारः स्यात् । युवाम् । आवाम् । प्रथमायाः किम् । युवयोः । आवयोः । द्विवचनं किम् । त्वम् । अहम् । यूयम् । वयम् । भाषायां किम् । युवं वस्त्राणि ॥

योचि ॥ ८९ ॥

एतयोर्यकारोन्तादेशः स्यादनादेशे अजादौ । त्वया । मया । त्वयि । मयि । अनादेशे किम् । त्वत् । मत् । अचि किम् । युष्माभिः । अस्माभिः । आत्त्वविधौ हलीत्यनुवर्तनेज्ग्रहणं शक्यमकर्तुम् ॥

शेषे लोपः ॥ ९० ॥

आत्त्वयत्त्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यलोपः स्यात् । त्वम् । अहम् ॥

पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।
यान्यद्विव(व)चनान्यत्र शेष(तेषु) लोपो विधीयते ॥

औत्सर्गिके लोपे आत्त्वयत्वयोर्बाधकत्वेनेष्टसिद्धेः शेषग्रहणं स्पष्टार्थम् । शेषे लोपे अलिङ्गत्वाट्टिलोपाद्वा टाप् न । त्वं स्त्री । अहं स्त्री ॥

मपर्यन्तस्य ॥ ९१ ॥

अधिकारोयम् । युवाम् । आवाम् । मपर्यन्तस्य किम् । युवकाम् । साकच्कस्य मा भूत् । मान्तस्येतीयत्युक्ते यत्रैतयोर्मान्तत्वं तत्रैवादेशाः स्युः युष्मयतेरस्मयतेश्चाप्रत्यये युष्म् अस्म् इत्यत्र । परिग्रहणे त्ववधिद्योतनात्सर्वत्र भवन्ति ॥

युवावौ द्विवचने ॥ ९२ ॥

द्विवचन इत्यर्थग्रहणम् । द्व्यर्थवाचिनोर्युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तः । युवाम् । आवाम् । युवाभ्याम् । आवाभ्याम् । युवयोः । आवयोः ॥

## यूयवयौ जसि ॥ ९३ ॥

युष्मदस्मदोर्मपर्यन्तस्य यूयवयौ स्तो जसि। यूयम्। वयम्। परमयूयम्। परमवयम्। अतियूयम्। अतिवयम्। तदन्तविधिरत्रेष्यते ॥

## त्वाहौ सौ ॥ ९४ ॥

युष्मदस्मदोर्मपर्यन्तस्य त्वाहौ स्तः सौ परे। त्वम्। अहम्। परमत्वम्। परमाहम्। एवम्। अतित्वम्। अत्यहम्॥

## तुभ्यमह्यौ ङयि ॥ ९५ ॥

युष्मदस्मदोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि। तुभ्यम्। मह्यम्। परमतुभ्यम्। परममह्यम्। अतितुभ्यम्। अतिमह्यम्॥

## तवममौ ङसि ॥ ९६ ॥

युष्मदस्मदोर्मपर्यन्तस्य तवममौ स्तो ङसि। तव। मम। परमतव। परममम। अतितव। अतिमम ॥

## त्वमावेकवचने ॥ ९७ ॥

एकवचन इत्यर्थग्रहणम्। एकार्थवाचिनोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तः। त्वाम्। माम्। त्वया। मया। त्वत्। मत्। त्वयि। मयि। अत्र युष्मदस्मदोर्द्व्यर्थवाचिनोः समासे समासस्यान्यसंख्यत्वेपि युवावौ स्तः। त्वाहौ यूयवयौ तुभ्यमह्यौ तवममौ एते परत्वात्स्वविषये युवावौ बाधन्ते। एकार्थवाचिनोः समासे समासस्यान्यसङ्ख्यत्वेपि त्वमौ स्तः। त्वाहादयस्तु स्वविषये त्वमावपि पूर्वविप्रतिषेधेन बाधन्ते। त्वां मां वा अतिक्रान्त इति विग्रहे अतित्वम्। अत्यहम्। अतित्वाम्। अतिमाम्। अतियूयम्। अतिवयम्। अतित्वान्। अतिमान्।

अतित्वया । अतिमया । भ्यामि अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । अतित्वभ्यम् । अतिमभ्यम् । ङसिभ्यसोः । अतित्वत् । अतिमत् । अतितव । अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकम् । अतिमाकम् । अतित्वयि । अतिमयि । अतित्वासु । अतिमासु । युवामावां वा अतिक्रान्त इत्यत्र सुजसूङ्ङस्सु प्राग्वत् । अन्यत्र अतियुवाम् । अत्यावाम् । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया इत्यादि योज्यम् । युष्मानस्मान्वा अतिक्रान्त इत्यत्रापि सुजसूङ्ङस्सु प्राग्वत् । अन्यत्र ह्येकार्थत्वाभावाद्युवावौ त्वमौ वा न स्तः । अतियुष्माम् । अत्यस्माम् । अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । अतियुष्माभ्याम् । अत्यस्माभ्यामित्यादि योज्यम् ॥

प्रत्ययोत्तरपदयोश्च ॥ ९८ ॥

एकार्थवाचिनोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तः प्रत्यये उत्तरपदे च । तवायम् त्वदीयः । मदीयः । त्वत्पुत्रः । मत्पुत्रः । एकार्थेति किम् । युवयोर्युष्माकं वा अयं युष्मदीयः । अत्र विभक्तेर्लुकि न लुमते(१।१।६३)ति निषेधाद्विभक्त्याश्रयादेशाप्राप्तेरिदं वचनम् । नन्वन्तरङ्गत्वात्पूर्वमादेशः पश्चाल्लुक्कस्मान्न भवति । एवं तर्ह्यन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इति ज्ञापनार्थमिदम् । एवं च गोमान् प्रियो यस्य गोमत्प्रिय इत्यादावन्तरङ्गोपि नुम्न भवति । अत एव त्याहाद्यादेशा अपि न । अहं प्रधानमेषां मत्प्रधानाः । यूयं पुत्रा अस्य युष्मत्पुत्रः । तुभ्यं हितं त्वद्धितम् ॥

त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ ९९ ॥

एतयोरेतावादेशौ स्तः स्त्रियां विभक्तौ । तिस्रः । ति-

सृभिः। चतस्रः । चतसृभिः । स्त्रियां किम् । त्रयः । त्रीणि । चत्वारः । चत्वारि । स्त्रियामिति त्रिचतुरोर्विशेषणम् नाङ्गस्य । तेन स्त्रियां गौण्योर्नैतावादेशौ । प्रियास्त्रयः त्रीणि वा यस्याः सा प्रियत्रिः । प्रियत्री । प्रियत्रयः । प्रियचत्वाः इत्यादि । यदा स्त्रियां मुख्यौ लिङ्गान्तरे गौणौ तदा आदेशौ स्त एव । प्रियास्तिस्रो यस्य प्रियतिसा । प्रियतिस्रौ । प्रियतिस्रः । एवं प्रियचतसा । प्रियचतस्रौ । प्रियचतस्रः । प्रियतिसृ । प्रियतिसृणी । प्रियचतसृ । प्रियचतसृणी ॥

तिसृभावे संज्ञायां कन्युपसङ्ख्यानम् ॥

तिसृका नाम ग्रामः ॥

चतसर्याद्युदात्तनिपातनम् ॥

चतुरः शसी(६।१।१६७)त्येष स्वरो मा भूत् । चतस्रो धेनूर्देयात् । चतसृणामित्यत्र निपातनस्वरं बाधित्वा षट्त्रिचतुर्भ्यो हलादि(६।१।१७९)रित्येष स्वर इष्यते ॥

अचि र ऋतः ॥ १०० ॥

तिसृ चतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि विभक्तौ । पूर्वपरविप्रतिषेधाभ्यां गुणदीर्घोत्वानामपवादः । तिस्रश्चतस्रस्तिष्ठन्ति पश्य वा। प्रियतिस्र आगतः । प्रियतिस्रः पुत्रः । प्रियतिस्रः तिष्ठन्ति । एवं प्रियचतस्र आगत इत्यादि । अचि किम् । तिसृभिः ॥

जराया जरसन्यतरस्याम् ॥ १०१ ॥

जराशब्दस्य जरस् वा स्यादचि विभक्तौ । जरसौ । जरे । जरसः । जराः । जरसा । जरयेत्यादि । अचि किम् । जराभ्याम् । परत्वाज्जरस् पश्चाज्झलन्तत्वान्नुम् । अतिजरांसि

ब्राह्मणकुलानि। अतिजरसं पश्येत्यत्र सन्निपातपरिभाषया अमो न लुक्। नन्वेवमतिजरसं तिष्ठन्ति अतिजरसैरिति न स्यात्। न स्यादेव। अतिजरम् अतिजरैरित्येवभवितव्यमिति गोनर्दीय आह। सन्निपातपरिभाषाया अनित्यत्वं ब्रुवाणाः केचिदतिजरसम् अजरसैरित्यपीच्छन्ति॥

त्यदादीनामः॥ १०२॥

त्यदादीनां द्विपर्यन्तानाम् अकारोन्तादेशः स्याद्विभक्तौ। स्यः। सः। यः। एषः। अयम्। इमौ। असौ। अमू। द्वौ। द्वाभ्याम्। संज्ञायामुपसर्जनत्वे च नाकारादेशः। त्यद्। त्यदौ। अतिद्विः। अतिद्वी। प्राधान्ये स्यादेव। परमसः। परमद्वौ॥

किमः कः॥ १०३॥

किमः कः स्याद्विभक्तौ। साकच्कस्याप्ययमादेशः। कः। कौ। के॥

कु तिहोः॥ १०४॥

तकारहकारादौ विभक्तौ किमः कुः स्यात्। कुतः। कुह॥

क्वाति॥ १०५॥

किमः क स्यादति विभक्तौ। क्व। क्वेति निपातनेनाति सिद्धे किमोत(५।३।१२)क्वातीति सूत्रद्वयं व्यर्थमित्याहुः॥

तदोः सः सावनन्त्ययोः॥ १०६॥

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ। स्यः। सः। एषः। असौ। अनन्त्ययोः किम्। हे स। अत्वत्वं वाधित्वान्त्यस्य सत्वे ह्रस्वादिति संबुद्धिलोपो न स्यात्। हल्ङ्यादिलोपे रुत्वविसर्गयोः कृतयोः हे सः इति स्यात्। सा।

अत्र अकाराविति टाप् न स्यात् ॥

अदस औ सुलोपश्च ॥ १०७ ॥

अदस औकारोन्तादेशः स्यात्सौ सुलोपश्च । असौ ॥

औत्वप्रतिषेधः साकच्काद्वा वक्तव्यः सादुत्त्वं च ॥

यदौत्वाभावस्तदा सात्परस्य उत्त्वम् । असुकौ । असुकः ॥

उत्तरपदादीनां त्यदादीनामकृतसन्धीनामेवादेशा वाच्याः॥

परमाहम् । परमानेन ॥

इदमो मः ॥ १०८ ॥

इदमो मस्य मः स्यात्सौ । त्यदाद्यत्त्वापवादः । अयम् । इयम्॥

दश्च ॥ १०९ ॥

इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे ॥

यः सौ ॥ ११० ॥

इदमो दस्य यः स्यात्सौ । इयम् ॥

इदोय् पुंसि ॥ १११ ॥

इदम इदः स्थाने अय् स्यात्सौ पुंसि । अयम् । पुंसि किम् । इयम् ॥

अनाप्यकः ॥ ११२ ॥

आविति टा इत्यस्य सुपः पकारेण प्रत्याहारः । अककारस्येदम इदोन् स्यादापि विभक्तौ । अनेन । अनयोः । अकः किम् । इमकेन । इमकयोः ॥

हलि लोपः ॥ ११३ ॥

अककारस्येदम इदो लोपः स्यादापि हलादौ । नात्र

लोन्त्यविधिः । एभिः । एषाम् । नानर्थकेलोन्त्यविधिरिति परिभाषां खण्डयता भगवता अत्र एवान्त्यलोप उक्तः ॥

मृजेर्वृद्धिः ॥ ११४ ॥

मृजेरिको वृद्धिः स्याद्धातुप्रत्यये । गुणापवादः । धातोः कार्यमुच्यमानं धातुप्रत्यये भवतीति परनियमलाभः । मार्ष्टि । मार्ष्टुम् । धातुप्रत्यये किम् । कंसपरिमृड्भ्याम् ॥

अचो ञ्णिति ॥ ११५ ॥

ञिति णिति च प्रत्यये अजन्तस्याङ्गस्य वृद्धिः स्यात् । आरावः । कारकः । गौः । सखायौ ॥

अत उपधायाः ॥ ११६ ॥

अङ्गस्योपधाया अतो वृद्धिः स्यात् ञ्णिति । पाकः । पाचकः । अतः किम् । भेदयति । उपधायाः किम् । ध्वंसयति ॥

तद्धितेष्वचामादेः ॥ ११७ ॥

ञिति णिति च तद्धिते परेऽङ्गस्याचामादेरचो वृद्धिः स्यात् । गार्ग्यः । औपगवः । जागतः । आदिवृद्धिरन्त्योपधावृद्धी बाधते ॥

किति च ॥ ११८ ॥

किति च तद्धितेऽङ्गस्यादेरचो वृद्धिः स्यात् । नाडायनः ॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ व्याकरणमिताक्षरायां सप्तमस्याध्यायस्य द्वितीयः पादः ॥

अथ सप्तमाध्यायस्य तृतीयः पादः ।

---

देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ॥ १ ॥

एषामादेरचः वृद्धिप्रसङ्गे आत्स्यात् ञ्णिति किति च । देविकायां भवमुदकं दाविकम् । देविकाकूले भवाः शालयः दाविकाकूलाः । पूर्वदेविका नाम प्राचां ग्रामः । तत्र भवः पूर्वदाविकः पुरुषः । प्राचां ग्रामनगराणा(७।३।१४)मित्युत्तरपदवृद्धिप्रसङ्गे आकार एव । शिंशपाविकारः शांशपश्चमसः । पलाशादिभ्यो वाऽण् । शिंशपास्थले भवाः शांशपास्थलाः । पूर्वशिंशपा प्राचां ग्रामः । तत्र भवः पूर्वशांशपः । दित्यौह इदं दात्यौहम् । दीर्घसत्रे भवो दार्घसत्रः । श्रेयसि भवं श्रायसम् ॥

वहीनरस्येद्वचनम् ॥

आदेरच इत्स्यात् । वहीनरस्यापत्यं वैहीनरिः । केचित्तु विहीनरस्य वैहीनरिमिच्छन्ति ॥

केकयमित्रयुप्रलयानां यादेरियः ॥ २ ॥

एषां यकारादेर्भागस्य इयादेशः स्यात् ञ्णिति किति च । केकयस्यापत्यं कैकेयः । जनपदशब्दात् क्षत्रियादञ् (४।१।१६८)। मित्रयुभावेन श्लाघते मैत्रेयकः । गोत्रचरणात् श्लाघात्याकारे(५।१।१३४)ति वुञ् । लौकिकं गोत्रं तत्र गृह्यते । लोके चर्षिशब्दो गोत्रमिति प्रसिद्धम् । प्रलयादागतं प्रालेयम् ॥

न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ ३ ॥

पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः किं तु

ताभ्यां पूर्वावैचावागमौ क्रमात् स्तः । व्याकरणमधीते वैयाकरणः । स्वश्वस्यापत्यं सौवश्वः । शिवाद्यण् । य्वाभ्यां किम् । अर्थस्यापत्यं आर्थिः । पदान्ताभ्यां किम् । यष्टिः प्रहरणमस्य याष्टीकः । यतः छात्राः याताः । यान्नानि शात्रन्नम् । प्रतिषेधः किमर्थः । यत्र य्वाभ्यां परस्य वृद्धिप्रसङ्गस्तत्रैव यथा स्यादिह मा भूत् । दाध्यश्विः । माध्वश्विः । न ह्यत्र य्वाभ्यां परस्य वृद्धिप्रसक्तिः । उत्तरपदवृद्धेरप्ययं विधिरिष्यते । पूर्वेष्वलिन्दे भवः पूर्वैषुकलिन्दः । अत्र दिशोऽमद्राणा-(७।३।१३)मित्युत्तरपदवृद्धिप्रसङ्गः । यत्रोत्तरपदसम्बन्धिनौ य्वौ न भवतस्तत्र नेष्यते । द्वे अशीती भृतो भावी वा द्व्याशीतिकः ॥

## द्वारादीनाञ्च ॥ ४ ॥

एषां य्वाभ्यां परस्य न वृद्धिः ताभ्यां पूर्वावैचौ स्तः । अपदान्तार्थमिदम् । द्वारे नियुक्तः दौवारिकः ॥

तदादिविधिरप्यत्रेष्यते ॥

द्वारपालस्येदं दौवारपालम् । स्वरस्यायं सौवरो ग्रन्थः । व्यल्कशे भवो वैयल्कशः । स्वस्तीत्याह सौवस्तिकः । नद्याहेतिमाशब्दादिभ्यः(४।४।१वा०)इति ठक् । स्वर्भवं सौवम् ॥

अव्ययानां भमात्रे टिलोपः ॥

स्वाध्यायशब्दोत्र न पठनीयः । शोभनोऽध्याय इति विग्रहे सौवाध्यायिक इति । अन्येषा(६।३।१३७)मिति दीर्घः । स्वोऽध्याय इति विग्रहे त्वत्र स्वशब्दपाठात्तदादिविधिना सिद्धेः । स्फ्यकृतस्यापत्यं स्फैयकृतः । ऋष्यन्धक(४।१।११४)इत्यण् । स्वादुमृदोरिदं सौवादुमृदवम् । शुन इदं शौवनम् । अन्नि-(६।४।१६७)ति प्रकृत्या । शुनो विकारः शावं मांसम् । प्राणिरजता(४।३।१५४)दिभ्यञ् । श्वादंष्ट्रायां भवः शौवादंष्ट्रो

मणिः। स्वस्येदं सौवम्। स्वग्रामे भवः सौवग्रामिकः। अध्यात्मादित्वाट्ठञ्॥

न्यग्रोधस्य च केवलस्य॥ ५॥

अस्यापि पूर्ववत्। नैयग्रोधं फलम्। केवलस्य किम्। न्यग्रोधमूले भवा न्याग्रोधमूलाः शालयः॥

न कर्मव्यतिहारे॥ ६॥

कर्मव्यतिहारे उक्तं न। व्यावक्रोशी। कर्मव्यतिहारे णच् स्त्रियाम्(३।३।४३)। णचः स्त्रियामञ्(५।४।१४)॥

स्वागतादीनां च॥ ७॥

एषां नैच् स्यात्। स्वागतमित्याह स्वागतिकः। स्वध्वरेण चरतीति स्वाध्वरिकः। स्वाङ्गिः। व्याङ्गिः। व्यडस्यापत्यं व्याडिः। विगतोऽडोस्य व्यडः। व्यवहारेण चरतीति व्यावहारिकः। स्वपतौ साधु स्वापतेयम्। पथ्यतिथी(४।४।१०४)ति ढञ्। तदादिविधिनात्र प्राप्तः॥

श्वादेरिञि॥ ८॥

श्वादेरङ्गस्य नैच् स्यादिञि। श्वभस्त्रस्यापत्यं श्वाभस्त्रिः। श्वन्शब्दो द्वारादिः। तत्र तदादिविधाविदमेव ज्ञापकम्॥

इकारादाविति वाच्यम्॥

श्वगणेन चरतीति श्वागणिकः॥

इगन्तस्य प्रत्ययान्तरेपि प्रतिषेध इष्यते॥

श्वाभस्त्रेरिदं श्वाभस्त्रम्॥

पदान्तस्यान्यतरस्याम्॥ ९॥

पदशब्दान्तस्य श्वादेर्नैज्वा स्यात्। श्वपदस्येदं श्वापदम्। शौवापदम्। अन्येषामपी(६।३।१३७)ति दीर्घः॥

उत्तरपदस्य ॥ १० ॥

अधिकारोयं हनस्तोऽचिण्णलो(७।३।३२)रित्यतः प्राक् ॥

अवयवादृतोः ॥ ११ ॥

अवयववाचिनः परस्यर्तुवाचिन आदिवृद्धिः स्यात् ञिदादौ तद्धिते । पूर्ववार्षिकम् । पूर्वहैमनम् । पूर्वं वर्षाणामित्येकदेशिसमासः । भवार्थे वर्षाभ्यष्ठक्(४।३।१८) । ऋतोर्वृद्धिविधौ च अवयवपूर्वपदानामिति तदन्तविधिः । अवयवात्किम् । पूर्वासु वर्षासु भवं पौर्ववर्षिकम् । कालाट्ठञ् (४।३।११) ॥

सुसर्वार्धाज्जनपदस्य ॥ १२ ॥

एभ्यो जनपदवाचिन उत्तरपदस्यादिवृद्धिर्ञिदादौ तद्धिते । सुपाञ्चालः । सर्वपाञ्चालः । अर्धपाञ्चालः । अवृद्धादपि बहुवचनविषयादि(४।२।१२५)ति वुञ् । सुसर्वार्धदिक्शब्देभ्यो जनपदस्येति तदन्तविधिः ॥

दिशोऽमद्राणाम् ॥ १३ ॥

दिग्वाचिनः परस्य जनपदवाचिनो मद्रवर्जितस्यादिवृद्धिः स्यान्ञिदादौ । पूर्वपाञ्चालकः । अपरपाञ्चालकः । पूर्ववद्वुञ् तदन्तविधिश्च । दिशः किम् । पूर्वः पञ्चालानामित्येकदेशिसमासे पूर्वशब्दोवयववाची न दिग्वाची । अमद्राणां किम् । पौर्वमद्रः । मद्रेभ्योञ् (४।२।१०८) ॥

प्राचां ग्रामनगराणाम् ॥ १४ ॥

दिशः परेषां प्राग्देशीयानां ग्रामनगराणामादिवृद्धिर्ञिदादौ । पूर्वेषुकामशमः । पूर्वकार्ष्णमृत्तिकः । भवार्थेण् । पूर्वेषुकामशमी पूर्वकृष्णमृत्तिकेति ग्रामनामानी । नगरे पूर्व-

पाटलिपुत्रकः। रोपधेतो(४।२।१२३)रिति वुञ् भवार्थे॥

सङ्ख्यायाः संवत्सरसङ्ख्यस्य च॥ १५॥

सङ्ख्यायाः परस्य संवत्सरस्य सङ्ख्यावाचिनश्चादिवृद्धिः स्यात् ञिदादौ। द्वौ संवत्सरौ अधीष्टो द्विसांवत्सरिकः। द्विषष्टिं भृतो भावी वा द्विषाष्टिकः। तमधीष्टो भृतो भूतो भावी(५।१।८०)त्यार्हीयष्ठञ्। परिमाणान्तस्येत्येव सिद्धे संवत्सरग्रहणं परिमाणग्रहणेन कालपरिमाणं न गृह्यत इति ज्ञापनार्थम्। तेन द्वौ पक्षौ भृतो द्वैपक्षिकः। अत्रोत्तरपदवृद्धिर्न। द्वे वर्षे भूता द्विवर्षा। अपरिमाणबिस्ताचिते(४।१।२२)ति परिमाणपर्युदासो न भवति॥

वर्षस्याभविष्यति॥ १६॥

सङ्ख्यायाः परस्य वर्षस्यादिवृद्धिः स्यादभविष्यदर्थे तद्धिते परे। द्वौ वर्षौ अधीष्टो भृतो भूतो वा द्विवार्षिकः। अभविष्यति किम्। त्रीणि वर्षाणि भावि त्रैवर्षिकम्॥

परिमाणान्तस्यासंज्ञाशाणयोः॥ १७॥

परिमाणान्तस्याङ्गस्य सङ्ख्यायाः परस्यादिवृद्धिः स्यात् ञिदादौ परे न तु सञ्ज्ञायां विषये शाणे चोत्तरपदे। द्वौ कुडपौ प्रयोजनमस्य द्विकौडविकः। त्रिकौडविकः। द्वाभ्यां निष्काभ्यां क्रीतं द्विनैष्किकम्। असञ्ज्ञाशाणयोः किम्। पाञ्चलोहितिकम्। पञ्च लोहिन्यः परिमाणमस्येति तदस्य परिमाण(५।१।५७)मिति ठञ्। भस्याढे तद्धित इति (६।३।३५वा) पुंवत्। द्वाभ्यां शाणाभ्यां क्रीतः द्वैशाणः। त्रैशाणः। द्वित्रिपूर्वादण् च(५।१।३६)अण्॥

कुलिजेर्षि न॥

द्वैकुलिजिकः ॥

जे प्रोष्ठपदानाम् ॥ १८ ॥

जे इति जातार्थनिर्देशः । तत्र यस्तद्धितस्तस्मिन् ञिदादौ परे प्रोष्ठपदानामुत्तरपदस्यादिवृद्धिः । प्रोष्ठपदा नक्षत्रम् । ताभियुक्तः काल इत्यणो लुबविशेष(४।२।४) इति लुप् । प्रोष्ठपदासु जातः प्रोष्ठपादः । सन्धिवेले(४।३।१६)त्यण् । जे किम् । प्रोष्ठपदासु भवः प्रौष्ठपदः । बहुवचनं पर्यायार्थम् । भद्रपदासु जातो भद्रपादः ॥

हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥ १९ ॥

हृदाद्यन्ते शब्दे पूर्वोत्तरपदयोरादिवृद्धिः स्यान्निमित्ते सति । सुहृद इदं सौहार्दम् । सुभगस्य भावः सौभाग्यम् ॥

छन्दसि नेष्यते ॥

महते सौभगाय । उद्गात्रादित्वादञ् । सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः । तत्र भवः साक्तुसैन्धवः । कच्छादित्वादण् ॥

अनुशतिकादीनां च ॥ २० ॥

एषामुभयपदवृद्धिर्निमित्ते सति । अनुशतिकस्येदमानुशातिकम् । अनुसंवत्सरं दीयते आनुसांवत्सरिकम् । पुष्करसदोपत्यं पौष्करसादिः । बाह्वादित्वादिञ् । इह लोके परलोके च भवं ऐहलौकिकम् पारलौकिकम् । लोकोत्तरपदस्येति ठञ् । सर्वलोके विदितम् सार्वलौकिकम् । सर्वपुरुषस्येदं सार्वपौरुषम् । सर्वभूमेरीश्वरः सार्वभौमः । प्रयोगे भवं प्रायोगिकम् । पारस्त्रैणेयः । कल्याण्यादीनामिनङ् (४।१।१२६) ॥ राजपुरुषात् ष्यञि ॥ राजपौरुष्यम् । ष्यञि किम् । राजपुरुषायणिः । उदीचां वृद्धादगोत्रा(४।१।१५७)दिति फिञ् । सू-

त्रनडस्यापत्यं सौत्रनाडिः । अधिदेवं भवं आधिदैविकम् । आधिभौतिकम् । आध्यात्मिकम् । अध्यात्मादेष्ठञ् । चतस्रो विद्याश्चातुर्वैद्यम इत्यादि । आकृतिगणोयम् ॥

## देवताद्वन्द्वे च ॥ २१ ॥

अभोमपदवृद्धिः स्यात् ञिदादौ । आग्निवारुणीमनड्वाहीम् । आग्निमारुतं कर्म ॥

सक्तुहविषोरेव ॥

नेह । स्कन्दविशाखः । तस्येद(४।३।१२०)मित्यण् । ब्राह्मप्राजापत्यम् । पत्युत्तरपदात् ण्यः ॥

## नेन्द्रस्य परस्य ॥ २२ ॥

परस्येन्द्रस्य देवताद्वन्द्वे न वृद्धिः । सौमेन्द्रः । परस्य किम् । ऐन्द्राग्नमेकादशकपालम् । बहिरङ्गापि वृद्धिः [पूर्वोत्तरपदयोः] पूर्वं [कार्यं] भवति पश्चादेकादेश इत्यत्र इदमेव ज्ञापकम् । अन्यथान्तरङ्गत्वात्पूर्वमेकादेश उभयत आश्रयेऽन्तादिवत्त्वनिषेधाद्वृद्धेरप्रसक्तौ निषेधानर्थक्यं स्यात् । तेन पूर्वेषुकामशम इत्यादिसिद्धिः ॥

## दीर्घाच्च वरुणस्य ॥ २३ ॥

दीर्घात्परस्य वरुणस्य न वृद्धिः । मैत्रावरुणम् । दीर्घात्किम् । आग्निवारुणीमनड्वाहीम् ॥

## प्राचां नगरान्ते ॥ २४ ॥

प्राग्देशनगरान्तेऽङ्गे पूर्वपरयोरादिवृद्धिः स्यात् ञिदादौ । सुह्मनगरे भवः सौह्मनागरः । प्राचां किम् । उदक्षु मद्(द्र)नगरम् । तत्र भवो माद(द्र)नगरः ॥

जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ॥ २५ ॥

एतदन्ताङ्गे पूर्वपदस्य नित्यमुत्तरपदस्य तु वा वृद्धिः स्यात् ञिदादौ। कुरुजङ्गलेषु भवं कौरुजाङ्गलम्। कौरुजङ्गलम्। वैश्वधैनवम्। वैश्वधेनवम्। सौवर्णवालजम्। सौवर्णवलजम्॥

अर्धात्परिमाणस्य पूर्वस्य तु वा ॥ २६ ॥

अस्मात्परिमाणवाचकस्य नित्यं वृद्धिः पूर्वपदस्य तु वा स्यात् ञिदादौ। अर्धद्रोणेन क्रीतम् आर्धद्रौणिकम्। अर्धद्रौणिकम्। आर्धकौडुपिकम्। अर्धकौडुपिकम्॥

नातः परस्य ॥ २७ ॥

अर्धात्परस्य परिमाणस्यातः स्थाने न वृद्धिः पूर्वस्य वा। आर्धप्रस्थिकम्। अर्धप्रास्थिकम्। अतः किम्। अर्धकौडुपिकम्। तपरः किम्। अर्धखार्यां भवा अर्धखारी। सा भार्यास्य अर्धखारीभार्य इत्यत्र पुंवद्भावप्रतिषेधो न स्यात्। यस्मिंस्तद्धिते वृद्धिर्न प्रतिषिध्यते तस्मिन् पुंवद्भावप्रतिषेधः। यत्र निषिध्यते तत्र पुंवद्भाव एव। वैयाकरणभार्यः॥

प्रवाहणस्य ढे ॥ २८ ॥

अस्य परस्य नित्यं वृद्धिः पूर्वस्य वा ढे परे। प्रवाहणस्यापत्यं प्रावाहणेयः। प्रवाहणेयः। शुभ्रादित्वात् ढक्॥

तत्प्रत्ययस्य च ॥ २९ ॥

ढान्तस्य प्रवाहणस्य ञिदादौ तद्धिते प्राग्वत्। प्रवाहणेयस्यापत्यं प्रावाहणेयिः। प्रवाहणेयिः॥

नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ॥ ३० ॥

नञः परेषामेषां नित्यं वृद्धिः पूर्वस्य तु वा ञिदादौ।

आशौचम् । अशौचम् । तस्येद(४।३।१२०)मित्यण् । आनैश्वर्यम् । अनैश्वर्यम् । आक्षैत्रज्ञ्यम् । अक्षैत्रज्ञ्यम् । ब्राह्मणादित्वाद्भवत्र ष्यञ् । आकौशलम् । अकौशलम् । अनैपुणम् । आनैपुणम् । उभयत्र तस्येद(४।३।१२०)त्यण् ॥

## यथातथयथापुरयोः पर्यायेण ॥ ३१ ॥

नञः परयोरेतयोः पूर्वपरवृद्धिः पर्यायेण स्यात् ञिदादौ। आयथातथ्यम् । अयाथातथ्यम् । अयाथापुर्यम् । आयथापुर्यम् । ब्राह्मणादित्वात् ष्यञ् । यथातथेत्यजन्तो निपातः । निपातद्वयस्य सुप्सुपेति समासो वा । नञ्समासात् ष्यञि ष्यञन्तेन नञ्समासे च रूपद्वयसिद्धेरनारम्भमेतदित्याकरे ॥

## हनस्तोऽचिण्णलोः ॥ ३२ ॥

तद्धिते कितीति च निवृत्तम् । हन्तेस्तकारोऽन्तादेशः स्याच्चिण्णल्वर्जे ञिति णिति च । घातः । घातकः । चिण्णलोस्तु अघानि । जघान । धातोः कार्यमुच्यमानं तत्प्रत्यये स्यादिति वचनात्तद्धिते न । वार्त्रघ्नः ॥

## आतो युक् चिण्कृतोः ॥ ३३ ॥

आतोऽङ्गस्य युगागमः स्याच्चिणि ञ्णति कृति च । अदायि । दायकः । दायः । चिण्कृतोः किम् । ददौ । दा देवतास्य दाम् । ञ्णिति किम् । गोदः ॥

## नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥ ३४ ॥

उदात्तोपदेशस्य मान्तस्योपधाया वृद्धिर्न स्याच्चिणि ञिति णिति कृति च । अशमि । शमकः । शमः । उदात्तेति किम् । यामः । उपदेशग्रहणं किम् । शमी , अत्रापि यथा

स्यात् । रामक इत्यत्र मा भूत् । मान्तस्य किम् । पावकः । अनाचमेः किम् । आचामकः ॥

अनाचमिवमिकमीनामिति वाच्यम् ॥

वामः । कामः । णिङभावे रूपम् । विश्राम इत्यसाधुः । उद्यमोपरमौ तु संज्ञापूर्वको विधिरनित्य इति वृद्ध्यभावात्साधू । चिण्कृतोः किम् । शशाम ॥

जनिवध्योश्च ॥ ३५ ॥

एतयोरुपधाया वृद्धिर्न स्याच्चिण्कृतोः । अजनि । जनकः । अवधि । वधकः । वधिः प्रकृत्यन्तरं हलन्तम् । हनादेशस्य त्वदन्तत्वादेव सिद्धम् । चिण्कृतोः किम् । जजान गर्भम् ॥

अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ॥ ३६ ॥

अर्त्यादेरादन्तानां च पुगागमः स्याण्णौ । अर्पयति । ह्रेपयति । व्लेपयति । रेपयति । यलोपः । क्नोपयति । क्ष्मापयति । दापयति ॥

शाच्छासाह्वाव्यावेपां युक् ॥ ३७ ॥

एषां युक् स्याण्णौ । पुगपवादः । शाययति । छाययति । साययति । ह्वाययति । व्याययति । वाययति । पाययति ॥

पातेर्लुग्वाच्यः ॥

पालयति ॥

धूञ्प्रीञोर्नुक् ॥

धूनयति । प्रीणयति ॥

वो विधूनने जुक् ॥ ३८ ॥

वातेर्णौ जुक्स्यात्कम्पनेऽर्थे । वाजयति । कम्पने किम् । वापयति केशान् । ओवै शोषण इत्यस्यैव ग्रहणम् ॥

लीलोर्नुग्लुकावन्यतरस्यां स्नेहनिपातने ॥ ३९ ॥

लीयतेर्लातेश्च क्रमात् नुक् लुक् एतावागमौ स्तो णौ स्नेहद्रवे। विलीनयति विलालयति विलापयति वा घृतम्। ईदन्तनिर्देशान्नात्वपक्षे नुक्। स्नेहद्रवे किम्। जतु विलाययति विलापयति वा। ली इति लीङ्लीञोर्ग्रहणम्। ला इति लातेः कृतात्वस्य च लीयतेः ॥

भियो हेतुभये पुक् ॥ ४० ॥

भियः पुक्स्याण्णौ हेतुभये। जटिलो भीपयते। ईदन्तनिर्देशान्नात्वपक्षे पुक्। मुण्डो भापयते। हेतुभये किम्। कुञ्चिकयैनं भाययति। अत्र कुञ्चिकातो भयं न प्रयोजकाद्धेतोः ॥

स्फायो वः ॥ ४१ ॥

अस्य वोन्तादेशः स्याण्णौ। स्फावयति ॥

शदेरगतौ तः ॥ ४२ ॥

शदेर्णौ तोन्तादेशः स्यान्न तु गतौ। पुष्पाणि शातयति। गतौ तु गाः शादयति गोपालः ॥

रुहः पोन्यतरस्याम् ॥ ४३ ॥

रुहः पः स्याद्वा णौ। बीजानि रोपयति रोहयति वा ॥

प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ॥ ४४ ॥

प्रत्ययस्थात्कात्पूर्वस्याकारस्येत्स्यादापि परे स आप् सुपः परो न चेत्। कारिका। एतिकाश्चरन्ति। एतच्छब्दस्याकचि रूपम्। प्रत्ययेति किम्। शक्नोतीति शका। स्थग्रहणं स्पष्टार्थम्। सामर्थ्यादेव प्राप्तेः। ककारमात्रस्य प्रत्ययस्याभावात्। का-

रिकम् । नन्दना । पूर्वस्य किम् । परस्य मा भूत् । पटुका । अनः किम् । नौका । तपरत्वं किम् । राका । आपि किम् । कारकः । असुपः किम् । वहवः परिव्राजका यस्यां शालायां वहुपरिव्राजका ॥

मामकनरकयोरुपसङ्ख्यानम् ॥

मामिका । नरं कायतीति नरिका ॥

त्यक्त्यपोश्च ॥

दाक्षिणात्यिका । इहत्यिका । उदीचामात(७।३।४६) इति विकल्पापवादः ॥

न यासयोः ॥ ४५ ॥

कात्पूर्वस्य यत्तदोरकारस्य इन्न स्यात् । यका । सका । यकाम् । तकाम् ॥

त्यकनश्च निषेधः ॥

उपत्यका । अधित्यका ॥

पावकादीनां छन्दसि ॥

शुचयः पावकाः । अलोमकाः । छन्दसि किम् । पाविकाः । अलोमिकाः ॥

आशिषि वुनश्च ॥

जीवताव जीवका । नन्दका ॥

उत्तरपदलोपे न ॥

देवदत्तिका । देवका ॥

क्षिपकादीनां च ॥

क्षिपका । ध्रुवका । चटका । दण्डका । इष्टका । पिटका । हलका । एतका । अलका । करका । कन्यका इत्यादि । अकृतिगणोयम् ॥

तारका ज्योतिषि ॥

अन्यत्र तारिका ॥

वर्णका तान्तवे ॥

वर्णिकान्या ॥

वर्तका शकुनौ प्राचाम् ॥

उदीचां तु वर्तिका ॥

अष्टका पितृदैवत्ये ॥

अष्टिकान्या ॥

सूतकादीनां वा ॥

सूतका । सूतिका । पुत्रका । पुत्रिका । वृन्दारका । वृन्दारिका ॥

उदीचामातः स्थाने यकपूर्वायाः ॥ ४६ ॥

यकपूर्वस्य स्त्रीप्रत्ययपरस्यातः स्थाने योकारस्तस्य कात्पूर्वस्य इत्स्याद्वा भापि । आर्यका । आर्यिका । चटकका । चटकिका । अतः किम् । साङ्काश्ये भवा साङ्काश्यिका । यकेति किम् । अश्वका । स्त्रीप्रत्ययस्य किम् । शुभंयिका ॥

धात्वन्तयकोस्तु नित्यम् ॥

सुनयिका । सुपाकिका ॥

भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ॥ ४७ ॥

एषां नञ्पूर्वाणामन्यपूर्वाणां केवलानां चात इद्वा स्यात् । भस्त्रका । भस्त्रिका । अभस्त्रका । अभस्त्रिका । एषका । एषेति निर्देशादेतिकाश्चरन्तीति नित्यमित्त्वम् । अजका । अजिका । अनजका । अनजिका । ज्ञका । ज्ञिका । अज्ञका । अज्ञिका । द्वके । द्विके । स्वका । स्विका । अस्वका । अस्विका ॥

एषा द्वा एतयोर्नञ्पूर्वयोर्नेत्त्वम् ॥

अनेषका । अद्वके ॥ भस्त्राधिकारे तस्य च तदुत्तरपदस्य

चेत्येव नञ्पूर्वाणामन्यपूर्वाणां च सिद्धेर्नञ्पूर्वाणामपीति व्यर्थमित्याकरे ॥

## अभाषितपुंस्काच्च ॥ ४८ ॥

अस्माद्विहितस्यातः स्थाने योऽकारस्तस्य कात्पूर्वस्येद्वा स्यात् । गङ्गका । गङ्गिका । अगङ्गका । अगङ्गिका । परमगङ्गका । परमगङ्गिका । अभाषितपुंस्काद्विहितस्यातः किम् । अखट्विका । अत्र अविद्यमाना खट्वा यस्याः सा अखट्वा । अज्ञाता अखट्वा अखट्विका । अत्र समासाद्भाषितपुंस्काद्विहितस्यातः स्थाने अकार इति प्रत्ययस्था(७।३।४४)दिति नित्यमित्त्वम् । एवं खट्वामतिक्रान्ता अतिखट्वा सा अज्ञाता अतिखट्विकेति नित्यमित्त्वम् । यदा तु बहुव्रीहावपि शेषाद्विभाषे(५।४।१५४)ति कपि आपोऽन्यतरस्या(७।४।१५)मिति ह्रस्वः तदा अभाषितपुंस्कादातः स्थाने विहितोऽकार इति भवितव्यमेवानेन विकल्पेन ॥

## आदाचार्याणाम् ॥ ४९ ॥

अभाषितपुंस्कादातः स्थाने योकारस्तस्य कात्पूर्वस्याद्वा स्यात् । गङ्गाका । अगङ्गाका । परमगङ्गाका । पक्षे प्राग्वत् । उक्तपुंस्कस्य तु शुभ्रिका ॥

## ठस्येकः ॥ ५० ॥

प्रत्ययठस्येकादेशः स्यात् । अङ्गाधिकारात्प्रत्ययत्वं लभ्यते । प्राग्वहतेष्ठक् । अक्षैर्दीव्यति आक्षिकः । कणेष्ठः कण्ठ इत्यादावुणादीनामव्युत्पन्नत्वान्न भवति । मथितं पण्यमस्य माथितिक इत्यत्रेसुसुक्तान्ता(७।४।५१)दिति स्थानिवद्भावात्कादेशः सांनिपातपरिभाषया न भवति । यस्येति लोपस्य स्थानिवद्भावाद्वा पूर्वस्मादपि विधौ ॥

## इसुसुक्तान्तात्कः ॥ ५१ ॥

इस् उस् उक् एतदन्तात्तकारान्ताच्च ठस्य कः स्यात् । सर्पिः पण्यमस्य सार्पिष्कः । धनुः प्रहरणमस्य धानुष्कः । धेनूनां समूहो धैनुकम् । पैतृकम् । पितुरागतमिति ऋतष्ठञ्(४।३।७८) । उदश्विता संस्कृतमौदश्वित्कम् । उदश्वितोन्यतरस्या(४।२।१९)मिति ठक् । आशिषा चरति आशिषिकः उषा चरति औषिक इत्यत्रेसुसोर्लाक्षणिकत्वान्न कादेशः ॥

दोष उपसङ्ख्यानम् ॥

दोर्भ्यां चरति दोष्कः ॥

## चजोः कु घिण्यतोः ॥ ५२ ॥

चकारजकारयोः कवर्गः स्यात् घिति ण्यति च प्रत्यये । पाकः । त्यागः । वाक्यम् । रोग्यम् । अत्र यथासङ्ख्यं नेष्यते । तेन रक्तं रागा(४।२।१)दिति लिङ्गात् ॥

## न्यङ्क्वादीनां च ॥ ५३ ॥

एषामपि कुत्वं स्यात् । न्यङ्कुः । नावञ्चे(उ० १७)रित्युप्रत्ययः । मद्गुः । मस्जेरुप्रत्ययः । भृगुः । भ्रस्जेः संप्रसारणं सलोपश्चोप्रत्यये । इत्यादि ॥

## हो हन्तेर्ञ्णिन्नेषु ॥ ५४ ॥

हन्तेर्हस्य कुत्वं स्यात् ञिति णिति प्रत्यये नकारे च परतः । घातः । घातकः । घ्नन्ति । ह इति किम् । अन्त्यस्य मा भूत् । हन्तेः किम् । प्रहारः ॥

## अभ्यासाच्च ॥ ५५ ॥

[अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यान्न तु चङि । जि-

घाय। जेघीयते। ]अभ्यासात्परस्य हन्तेर्हकारस्य कुत्वं स्यात्। जघान। जंघन्यते। अभ्यासनिमित्ते प्रत्यये हन्तेरङ्गस्य योऽभ्यासस्तस्मादेतत्। इह न। निहननीयितुमिच्छति नि[जि]हननीयिषतीति॥

## हेरचङि॥ ५६॥

अभ्यासात्परस्य हिनोतेर्हस्य कुत्वं स्यान्न तु चङि। जिघाय। जेघीयते। अचङि किम्। अजीहयत्। हेरङ्गस्य योऽभ्यास इत्येव चङि प्रतिषेधे सिद्धे अचङीति प्रतिषेधः सनाद्यौ ण्यन्तस्यापि कुत्वप्राप्त्यर्थः। प्रजिघाययिषति॥

## सन्लिटोर्जेः॥ ५७॥

अभ्यासात्परस्य जेः कुत्वं स्यात्सनि लिटि च। जिगीषति। जिगाय। सन्लिटोः किम्। जेजीयते। जिनातेः संप्रसारणे कृते जिरूपस्य लाक्षणिकत्वान्नात्र ग्रहणम्। जिज्यतुः॥

## विभाषा चेः॥ ५८॥

अभ्यासात्परस्य चेः कुत्वं वा स्यात्सनि लिटि च। चिकीषति। चिचीषति। चिकाय। चिचाय। सन्लिटोः किम्। चेचीयते॥

## न क्वादेः॥ ५९॥

कवर्गादेर्धातोः चजोः कुत्वं न स्यात्। कूजो वर्तते। गर्जः। कूज्यम्। गर्ज्यम्॥

## अजिव्रज्योश्च॥ ६०॥

एतयोः कुत्वं न स्यात्। समाजः। परिव्राजः। परिव्राज्यम्। अजेर्ण्यति वीभावं विना नास्त्युदाहरणम्॥

भुजन्युब्जौ पाण्युपतापयोः ॥ ६१ ॥

एतौ एतयोर्यथासङ्ख्यं निपात्येते। भुज्यतेऽनेनेति भुजः पाणिः। हलश्चे(३।३।१२१)ति घञ् । कुत्वाभावगुणाभावौ निपातनात् । न्युब्जिताः चेष्टारहिताः शेरतेऽस्मिन्निति न्युब्ज उपतापः। न्युब्जन्त्यस्मिन्निति तु विग्रहः । अधिकरणे घञि कुत्वाभावो निपातनात् । यस्मिन्व्याधौ न्युब्जिताः शेरते स तान् न्युब्जयतीति पचाद्यचैव सिद्धेर्न्युब्जोपतापग्रहणं न कर्तव्यमिति स्थितं भाष्ये ॥

प्रयाजानू(नु)याजौ यज्ञाङ्गे ॥ ६२ ॥

एतयोः कुत्वाभावो निपात्यते । प्रयाजाः। अनू(नु)याजाः। यज्ञाङ्गे किम्। प्रयागः। उपलक्षणमेतदन्यत्रापि कुत्वं नेष्यते। उपांशुयाजः। पत्नीसंयाजाः। ऋतुयाजाः इत्यादि ॥

वञ्चेर्गतौ ॥ ६३ ॥

गत्यर्थस्य वञ्चतेर्न कुत्वम् । वञ्च्यम् । वञ्चति । गन्तव्यम् गच्छतीत्यर्थः । गतौ किम् । वङ्कं काष्ठं कुटिलमित्यर्थः । हलश्चे(३।३।१२१)ति घञ् ॥

ओक उचः के ॥ ६४ ॥

उच समवाय इत्यस्य के परतः ओक इति निपात्यते। कर्तरीगुपधलक्षणे के कुत्वगुणौ निपात्येते। न्योकः शकुनः। अधिकरणादौ घञर्थे कविधान(३।३।५८वा)मिति कः। दिवौकस इत्यादयस्तु उणादयो बहुल(३।३।१)मिति कुत्वं ज्ञेयम् ॥

ण्य आवश्यके ॥ ६५ ॥

आवश्यकार्थे ण्ये परतश्चजोः कुत्वं न स्यात् । अवश्य-

वाच्यम् । कृत्याश्चे(३।३।१७१)त्यावश्यके ण्यत् । आवश्यके किम् । वाक्यम् । पाक्यम् ॥

यजयाचरुचप्रवचर्चश्च ॥ ६६ ॥

एषां ण्यति न कुत्वम् । याज्यं । याच्यम् । रोच्यम् । प्रवाच्यम् । अर्च्यम् । ऋच स्तुतौ । ऋदुपधादत एव वचनात् ण्यत् । प्रवचिग्रहणं शब्दसंज्ञार्थम् प्रवाच्यो नाम ग्रन्थविशेष इति काशिकायाम् । भगवता तु प्रपूर्वस्य वचेरशब्दसंज्ञात्वादुत्तरसूत्रेणैव प्रतिषेधसिद्धेरत्र प्रवचिग्रहणं प्रत्याख्यातम् । न चोपसर्गनियमार्थमिदम् प्रपूर्वस्यैव प्रतिषेधो नान्यपूर्वस्य अविवाक्यमहरिति वाच्यम् । दशरात्रस्य यज्ञविशेषस्य दशममहरविवाक्यम् । तत्र पृषोदरादित्वात्कुत्वम् । अन्यत्राविवाच्यमसेत्र भवितव्यमिति ॥

ण्यति प्रतिषेधे त्यजेरपि ॥

त्याज्यम् । ण्यन्तस्य पूजेः पूज्यमिति ॥

वचोऽशब्दसंज्ञायाम् ॥ ६७ ॥

वचेर्ण्ये कुत्वं न स्यात् । वाच्यम् । शब्दसंज्ञायां तु वाक्यम् ॥

प्रयोज्यनियोज्यौ शक्यार्थे ॥ ६८ ॥

एतौ निपात्येते शक्यार्थे ण्यति । प्रयोक्तुं शक्यः प्रयोज्यः । नियोक्तुं शक्यः नियोज्यः । अन्यत्र प्रयोग्यः नियोग्यः ॥

भोज्यं भक्ष्ये ॥ ६९ ॥

अत्र ण्यति कुत्वाभावो निपात्यते । भोज्यमन्नम् । भोज्या यवागूः । भक्ष्ये किम् । भोग्यः कम्बलः ॥

घोर्लोपो लेटि वा ॥ ७० ॥

लेटि घोरन्त्यलोपो वा स्यात् । दधद्रत्नानि दाशुषे । सो-

मो ददद्वन्धर्वाय । पक्षे अभये ददाव । नित्ये टिलोपे आडाग मेन ददर्दीति सिद्धेर्वेति व्यर्थमिति भाष्ये । अनित्यमागमानुशासनमिति ज्ञापनार्थं वाग्रहणम् अनित्यत्वादाधे सति ददादिति सिद्धये वाग्रहणं क्रियमाणम् आगमानित्यत्वं ज्ञापयतीति कैयटः ॥

## ओतः श्यनि ॥ ७१ ॥

श्यनि परत ओकारस्य लोपः स्यात । श्यति । छ्यति । स्यति । द्यति ॥

## क्सस्याचि ॥ ७२ ॥

अजादौ क्सस्यान्तलोपः स्यात । अधुक्षाताम् । अधुक्षाथाम् । अचि किम् । अधुक्षत ॥

## लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥ ७३ ॥

एषां क्सस्य सर्वलोपो वा स्याद्दन्त्ये तङि । अदुग्ध । अधुक्षत । अदुग्धाः । अधुक्षथाः । अदुग्ध्वम् । अधुक्षध्वम् । अदुह्वहि । अधुक्षावहि । एवमदिग्ध । अधिक्षत । अलीढ । अलिक्षत । अगूढ । अघुक्षत । आत्मनेपदे किम् । अधुक्षत । दन्त्ये किम् । अधुक्षामहि । लोपे प्रकृते लुग्ग्रहणात्सर्वादेशो लभ्यते । तच्च वह्यर्थम् । अन्यत्राकारलोपे झलो झली(८।२।२६)ति नलोपेनैव सिद्धत्वात । दन्तोष्ठस्थानिकोऽपि वकारो दन्त्यग्रहणेन गृह्यते । लाघवाय वलीति वाच्ये दन्त्यग्रहणसामर्थ्यात ॥

## शमामष्टानां दीर्घः श्यनि ॥ ७४ ॥

एषां दीर्घः स्याच्छ्यनि । शाम्यति । ताम्यति । दाम्यति । भ्राम्यति । श्राम्यति । क्षाम्यति । क्लाम्यति । माद्यति । अष्टानां किम् । असति । श्यनि किम् । भ्रमति ॥

ष्ठिवुक्लम्वाचमां शिति ॥ ७५ ॥

एषां दीर्घः स्याच्छिति । ष्ठीवति । क्लामति । आचामति । आङ् किम् । चमति । विचमति ॥

क्रमः परस्मैपदेषु ॥ ७६ ॥

क्रमेर्दीर्घः स्यात् परस्मैपदे । क्रामति । परस्मैपदेषु किम् । आक्रमते ॥

इषुगमियमां छः ॥ ७७ ॥

एषां छोन्तादेशः स्याच्छिति । इच्छति । गच्छति । यच्छति । इष्वित्युदितः पाठादिष आभीक्ष्ण्ये इत्यस्य नच्छत्वम् । इष्णाति । यथाभाष्यं तूदित्पाठो नार्हः । इष्णातिव्यावृत्तेरचीत्यनुवृत्त्या परिहृतत्वात् न चेषाणीत्यत्र प्रसङ्गः शितोऽङ्गविशेषणात् । विशेष्येण तदादिविधेरभावादच्च एव शित्त्वं विशेषणम् । इषाणेत्यत्र अङ्गश्लसमुदायः शिदिति नातिप्रसङ्गः ॥

पाघ्राध्मास्थाम्नादाणदृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥ ७८ ॥

पादीनां क्रमात्पिबादय आदेशाः स्युः शिति । पिबति । पिबादेशोदन्त आद्युदात्तो निपात्यते । तेन लघूपधगुणो न । अथवा अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येत्येवं न गुणः । जिघ्रति । धमति । तिष्ठति । मनति । यच्छति । पश्यति । ऋच्छति । धावति ॥

शीघ्रगताविष्टिः ॥

अन्यत्र सरति । शीयते । सीदति ॥

ज्ञाजनोर्जा ॥ ७९ ॥

अनयोर्जादेशः स्याच्छिति । जानाति । जायते । जनेः

दैवादिकस्य ग्रहणम्। जा इति दीर्घोच्चारणमङ्गवृत्ते इति परिभाषां ज्ञापयति। ह्रस्वेप्यतो दीर्घो यञी(७।३।१०१)ति दीर्घसम्भवात्॥

प्वादीनां ह्रस्वः॥ ८०॥

एषां ह्रस्वः स्याच्छिति। प्वादयः क्र्यादिषु पठ्यन्ते। पुनाति। लुनाति। पूञ् पवन इत्यारभ्य वृत्करणपर्यन्तं प्वादय इति केचित्। अन्ये त्वागणान्ताः प्वादय इत्याहुः॥

मीनातेर्निगमे॥ ८१॥

अस्य ह्रस्वः स्याच्छन्दसि। प्रमिणन्ति। लोके तु प्रमीणन्ति॥

मिदेर्गुणः॥ ८२॥

मिदेर्गुणः स्याच्छिति। मेद्यति। मेद्यतः। मेद्यन्ति॥

जुसि च॥ ८३॥

जुसि परे इगन्तस्य गुणः स्यात्। अजुहवुः। अबिभरुः। अचीत्यनुवृत्तेश्चिनुयुरित्यादौ न गुणः। अनुबन्धनिर्देशाद्यक्षुरित्यादौ न॥

सार्वधातुकार्धधातुकयोः॥ ८४॥

अनयोः परयोरिगन्तस्य अङ्गस्य गुणः स्यात्। जयति। भवति। तरति। चेता। स्तोता। कर्ता। अनयोः किम्। अग्नित्वम्॥

जाग्रोऽविचिण्णल्ङित्सु॥ ८५॥

जागर्तेर्गुणः स्यात्सर्वत्र वृद्धिविषये प्रतिषेधविषयेऽपि अविचिण्णल्ङित्सु। जागरयति। जागरकः। अविचिण्णल्ङि-

स्तु किम्। जागृविः। अजागारि। जजागार। जागृनः॥

कुसावपि नेष्यते॥

जागृवांसः। अजागरुः। अहम् जजागार। अत्र गुणः स्यादेव। अविचिण्णल्ङित्स्विति पर्युदासाश्रयणात्॥

पुगन्तलघूपधस्य च॥ ८६॥

पुगन्तस्य लघूपधस्य चेको गुणः स्यात्सार्वधातुकार्धधातुकयोः। क्नोपयति। क्लेपयति। भेत्ता। छेत्ता। पुक्यन्तः पुगन्तः लघ्वी उपधा लघूपधा पुगन्तश्च लघूपधा च पुगन्तलघूपधम् तस्येति सूत्रार्थो भाष्यसम्मतः॥

नाभ्यस्तस्याचि पिति सार्वधातुके॥ ८७॥

लघूपधस्याभ्यस्तस्य गुणो न स्यादचि पिति सार्वधातुके। नेनिजानि। अनेनिजम्। अभ्यस्तस्य किम्। वेदानि। अचि किम्। नेनेक्ति। सार्वधातुके किम्। नेनिजि(नेनेज)। लघूपधस्य किम्। जुहवानि॥

बहुलं छन्दसीति वाच्यम्॥

जुजोषत्। पस्पशाते॥

चाकशीति वावशीतीत्यत्रच्छन्दस्युपधा ह्रस्वत्वं वाच्यम्॥

प्रकृत्यन्तराणि वा स्पशिकाशिवशयः॥

भूसुवोस्तिङि॥ ८८॥

भू सू इत्येतयोः सार्वधातुके तिङि परे गुणो न स्यात्। अभूत्। सुवै। सुवावहै। तिङि किम्। भवति। सार्वधातुके किम्। व्यतिभविषीष्ट। प्रसविषीष्ट। बोभोतीतिच्छन्दसि निपातनात् भाषायां यङ्लुकि गुणः। बोभवीति॥

## उतो वृद्धिर्लुकि हलि ॥ ८९ ॥

लुग्विषये उकारस्य वृद्धिः स्यात्पिति हलि सार्वधातुके । यौति । रौमि । स्नौमि । उतः किम् । एति । लुकि किम् । सुनोति । हलि किम् । यवानि । पिति किम् । युतः । नाभ्यस्तस्येत्यनुवृत्तेर्नेह । योयोति । नोनोति ॥

## ऊर्णोतेर्विभाषा ॥ ९० ॥

ऊर्णोतेर्वा वृद्धिः स्यात्पिति हलि सार्वधातुके । ऊर्णौति । ऊर्णोति । पिति किम् । ऊर्णुतः । हलि किम् । ऊर्णवानि ॥

## गुणोऽपृक्ते ॥ ९१ ॥

ऊर्णोतेरपृक्ते पिति हलि सार्वधातुके गुणः स्यात् । वृद्धेरपवादः । और्णोत् । और्णोः । हलीति वर्तमाने अपृक्तग्रहणं यस्मिन्विधिस्तदादावल्ग्रहणे इति परिभाषां ज्ञापयति ॥

## तृणह इम् ॥ ९२ ॥

तृहः श्नमि कृते इमागमः स्यात्पिति हलि सार्वधातुके । तृणेढि । अतृणेट् । वर्णाश्रयेप्यत्र प्रत्ययलक्षणमिष्यते । हलि किम् । तृणहानि । पिति किम् । तृण्ढः । श्नमि कृते इम् यथा स्यादिति तृणहग्रहणम् ॥

## ब्रुव ईट् ॥ ९३ ॥

ब्रुवः परस्य पितो हलः सार्वधातुकस्येडागमः स्यात् । ब्रवीति । ब्रवीमि । पितः किम् । ब्रूतः । हलः किम् । ब्रवाणि ॥

यङो वा ॥ ९४ ॥

यङ्लुगन्तात्परस्य पितो हलः सार्वधातुकस्येडागमो वा स्यात् । वोभवीति । वोभोति । यङन्तात्पितः सार्वधातुकस्याभावात्सामर्थ्याद्यङ्लुगन्तग्रहणम् ॥

तुरुस्तुशम्यमः सार्वधातुके ॥ ९५ ॥

तुः सौत्रो धातुः । तु(रु)शब्दे । एभ्यः परस्य हलादेः सार्वधातुकस्येडागमो वा स्यात् । तौति । तवीति । रौति । रवीति । स्तौति । स्तवीति । शमीध्वम् । अभ्यमीति । अभ्यान्ति(मति) । शम्यमोर्बहुलं छन्दसी(२।४।७३)ति शपो लुक् । पुनः सार्वधातुकग्रहणमपि तदर्थम् । सुशमि । शमीध्वम् ॥

अस्तिसिचोऽपृक्ते ॥ ९६ ॥

अस्तेः सिचश्च परस्यापृक्तस्य सार्वधातुकस्य ईडागमः स्यात् । आसीत् । अकार्षीत् । अपृक्ते किम् । अस्ति । अकार्षम् ॥

आह्रो भुवश्च न ॥

आत्थ । अभूत् ॥

बहुलं छन्दसि ॥ ९७ ॥

अस्तिसिचोऽपृक्तस्य पितः सार्वधातुकस्येडागमो वा स्याच्छन्दसि । सलिलꣳ सर्वमाः । गोभिरक्षाः । आ इति अस्तेर्लङ् आद् हल्ङ्यादिलोपः रुत्वविसर्गौ । अक्षा इति । क्षर सञ्चलने । लुङ् । अतो ल्रान्तस्ये(७।२।२)ति वृद्धिः । शेषं पूर्ववत् । इडभावश्छान्दसः ॥

रुदश्च पञ्चभ्यः ॥ ९८ ॥

रुदादेरपृक्तस्य पितो हलः सार्वधातुकस्येडागमः स्या-

त् । अरोदीत् । अरोदीः । अस्वपीत् । अश्वसीत् । आनीत् । अजक्षीत् । पञ्चभ्यः किम् । अजागर्भवान् । अपृक्तस्य किम् । रोदिति ॥

## अड्गार्ग्यगालवयोः ॥ ९९ ॥

रुदादेरपृक्तस्य सार्वधातुकस्य अडागमः स्यात् । गार्ग्यगालवग्रहणम्पूजार्थम् । अरोदत् । अस्वपत् । अश्वसत् । प्राणत् । अजक्षत् ॥

## अदः सर्वेषाम् ॥ १०० ॥

अत्तेः परस्यापृक्तस्य सार्वधातुकस्याडागमः स्यात्सर्वमतेन । आदत् । अपृक्तस्य किम् । अत्ति ॥

## अतो दीर्घो यञि ॥ १०१ ॥

अतोऽङ्गस्य दीर्घः स्याद्यञादौ सार्वधातुके । पचामि । वक्ष्यामि । अतः किम् । चिनुवः । तपरत्वमुत्तरार्थम् । यञि किम् । पचतः । सार्वधातुके किम् । अङ्गना । केशवः । पामादित्वान्नः । केशाद्वोऽन्यतरस्याम् (५।२।१०९) ॥

## सुपि च ॥ १०२ ॥

यञादौ सुपि परे अतोऽङ्गस्य दीर्घः स्यात् । वृक्षाय । वृक्षाभ्याम् । अतः किम् । अग्निभ्याम् । यञि किम् । वृक्षस्य ॥

## बहुवचने झल्येत् ॥ १०३ ॥

झलादौ सुपि बहुवचने अतोऽङ्गस्य एत्स्यात् । रामेभ्यः । रामेषु । झलि किम् । रामाणाम् । बहुवचने किम् । रामाभ्याम् । सुपि किम् । यजध्वम् ॥

ओसि च ॥ १०४ ॥

ओसि च परेऽतोऽङ्गस्य एकारः स्यात् । रामयोः ॥

आङि चापः ॥ १०५ ॥

आङि ओसि च परे आप एकारः स्यात् । आङिति टासंज्ञा । रमया । रमयोः । ङ्याब्ग्रहणे दीर्घग्रहणादेत्वमत्र न । अतिखट्वेन ॥

संबुद्धौ च ॥ १०६ ॥

आप एकारः स्यात्सम्बुद्धौ । हे रमे ॥

अम्बार्थनद्योर्ह्रस्वः ॥ १०७ ॥

अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात्संबुद्धौ । हे अम्ब । हे गौरि । हे वधु ॥

डलकवतीनां न ह्रस्वः ॥

हे अम्बाडे । हे अम्बाले । हे अम्बिके । असंयुक्तानां डलकानां ग्रहणात्संयुक्ते ह्रस्वत्वमेव । हे अक्क । हे अल्ल ॥

छन्दसि वा ॥

हे अम्बे । हे अम्ब ॥

तलो ह्रस्वत्वं वा ङिसम्बुद्ध्योश्छन्दसि ॥

देवते देवतायां वा भक्तिः । हे देवते । हे देवत ॥

मातॄणां मातच् पुत्रार्थमर्हते सम्बुद्धौ ॥

गार्गी मातास्य । हे गार्गिमात । नद्यृतश्चे(५।४।१५३)ति कबनेन बाध्यते। पुत्रार्थं पुत्रमभिधातुं यो मातृशब्द उपादीयते । कस्मै । अर्हते । यः पुत्रः श्लाघनीयगुणत्वात्कुलसम्भूतया मात्रा व्यपदेशमर्हति तत्र मातजादेशो नान्यत्र । चित्करणमन्तोदात्तार्थम् ॥

## ह्रस्वस्य गुणः ॥ १०८ ॥

ह्रस्वस्य गुणः स्यात्सम्बुद्धौ । हे हरे । हे शम्भो । हे गौरीत्यत्र ह्रस्वविधिसामर्थ्यान्न गुणः ॥

## जसि च ॥ १०९ ॥

जसि च परे ह्रस्वस्य गुणः स्यात् । हरयः । वायवः । ह्रस्वेति किम् । ग्रामण्यः ॥

जसादिषु छन्दसि वा वचनं प्राक् णौ चङ्युपधायाः(७।४।१) ॥
अम्बे । अम्ब । दर्वे । दर्वि । शतक्रत्वः । शतक्रतवः । पश्वे । पशवे । किकीदिविना । किकीदिव्या । जसादिष्वित्यादिशब्दस्य प्रकारवाचित्वादम्बे इत्युदाहृतं भाष्ये ॥

## ऋतो ङिसर्वनामस्थानयोः ॥ ११० ॥

ङौ सर्वनामस्थाने च ऋदन्तस्य गुणः स्यात् । मातरि । मातरौ । मातरः । मातरम् । मातरौ ॥

## घेर्ङिति ॥ १११ ॥

घिसंज्ञस्य ङिति सुपि गुणः स्यात् । हरये । हरेः । घेः किम् । सख्ये । पत्ये । ङिति किम् । हरिभ्याम् । सुपि किम् । पट्वी । कुरुतः ॥

## आण्नद्याः ॥ ११२ ॥

नद्यन्तात्परेषां ङितामाडागमः । कुमार्यै । कुमार्याः । वध्वै । वध्वाः ॥

## याडापः ॥ ११३ ॥

आपः परस्य ङितो याडागमः स्यात् । रमायै । रमायाः । रमायाम् । अतिखट्वायेत्यत्र ह्रस्वस्य स्थानिवद्भावान्न याट् ।

ङ्याब्ग्रहणे दीर्घग्रहणात्। सुपि चे(७।३।१०२)ति दीर्घानन्तरमपि न। लाक्षणिकत्वात्॥

सर्वनाम्नः स्याड्ढ्रस्वश्च ॥ ११४ ॥

आपः सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः। याटोपवादः। सर्वस्यै। सर्वस्याः। सर्वस्याम्॥

विभाषा द्वितीयातृतीयाभ्याम् ॥ ११५ ॥

आभ्यां परस्य ङितः स्याड्वा स्यादापश्च ह्रस्वः। द्वितीयस्यै। द्वितीयायै। तृतीयस्यै। तृतीयायै॥

ङेराम्नद्याम्नीभ्यः ॥ ११६॥

नद्यन्तादाबन्तात् नीशब्दाच्च ङेराम् स्यात्। गौर्याम्। वध्वाम्। शिवायाम्। ग्रामण्याम्। सेनान्याम्॥

इदुद्भ्याम् ॥ ११७ ॥

नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेरामादेशः। मत्याम्। धेन्वाम्॥

औत् ॥ ११८ ॥

इदुद्भ्यां परस्य ङेरौत्स्यात्। यन्न नदीसंज्ञकं नापि घिसंज्ञकं तदुदाहरणम्। सख्यौ। पत्यौ॥

अच्च घेः ॥ ११९ ॥

घेः परस्य ङेरौत्स्यात् घेरन्तादेशश्चाकारः। हरौ। शम्भौ। तपरकरणं मताविवत्यत्र अत्वे कृते टाब्निवृत्त्यर्थं सन्निपातपरिभाषया वा न टाप्। औदच्च घेरित्येकमेव सूत्रम् प्रधानशिष्टमौत्वम् अन्वाचयशिष्टं च घेरत्त्वम् तेन सख्यौ इति सिध्यतीति भाष्ये॥

## आङो नाऽस्त्रियाम् ॥ १२० ॥

आङिति टासंज्ञा । घेः परस्याङो ना स्यादस्त्रियाम् । हरिणा । शम्भुना । अस्त्रियां किम् । मत्या । पुंसीति नोक्तम् । अमुना ब्राह्मणकुलेन । मुभावस्यासिद्धत्वान्नुम्न स्यात् । नाभावे तु मुभावो नासिद्धः । न मु ने(८।२।३)इति सूत्रात् ॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्नम्भट्टस्य कृतौ व्याकरणमिताक्षरायां सप्तमाध्यायस्य तृतीयः पादः ॥



## णौ चङ्युपधाया ह्रस्वः ॥ १ ॥

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् । अचीकरत् । अलीलवत् । मा भवानटिटदित्यत्र नित्यमपि द्विर्वचनं बाधित्वा पूर्वं ह्रस्वत्वं भवति । ओणे ऋदित्करणात् ज्ञापकात् । अन्यथा नित्यत्वात्पूर्वं टीत्यस्य द्वित्वे आकारस्योपधात्वाभावात् ह्रस्वो न स्यात् । णाविति किम् । चङ्युपधाया ह्रस्वः इतीयत्युच्यमाने अलीलवदित्यत्र वचनसामर्थ्यादन्तरङ्गामपि वृद्धिं बाधित्वा ह्रस्वः स्यात्ततश्चोवङ्यलीलुवदित्यनिष्टं स्यात् । न च गुणेनेष्टसिद्धिः । वृद्ध्या गुणस्य पूर्वत्वेन बाधनात् । अतिष्ठिपदित्यत्र ह्रस्वेन पुग्बाध्येत । अपीपचदित्यादौ चोपधात्वाभावाद्ध्रस्वो न स्यात् । चङि किम् । कारयति । उपधायाः किम् । अचकाङ्क्षत् ।

उपधाह्रस्वत्वे णेर्णिच्युपसङ्ख्यानम् ॥

वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन ॥

## नाग्लोपिशास्वृदिताम् ॥ २ ॥

अग्लोपिनः शास ऋदितश्चोपधाया ह्रस्वो न स्यात् चङ्परे णौ । मालामाख्यत् अममालत् । मातरमाचष्टे अममातत् । राजानमतिक्रान्तवात् अत्यरराजत् । प्रातिपदिकाद्धात्वर्थ इति णिच् । अशशासत् । अडुढौकत् ॥

## भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥ ३ ॥

एषामुपधाया ह्रस्वो वा स्याच्चङ्परे णौ । अबिभ्रजत् ।

अवभ्राजत् । अबीभसत् । अबभासत् । अबीभपत् । अबभापत् । अदिदीपत् । अदीदिपत् । अजिजीवत् । अजीजिवत् । अमीमिलत् । अमिमीलत् । अपीपिडत् । अपिपीडत् ॥

कण्यादीनां चेति वाच्यम् ॥

कणि रणि भणि श्रणि हेठि लोपयः भाष्ये गणिताः । अचीकणत् । अचकाणत् । अरीरणत् । अरराणत् । अबीभणत् । अबभाणत् । अशिश्रणत् । अशश्राणत् । अजीहिठत् । अजिहेठत् । अलूलुपत् । अलुलोपत् ॥

## लोपः पिबतेरीच्चाभ्यासस्य ॥ ४ ॥

पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत् । अपीप्यताम् । अपीप्यन् ॥

## तिष्ठतेरित् ॥ ५ ॥

तिष्ठतेरुपधाया इत्स्याचङ्परे णौ । अतिष्ठिपत् ॥

## जिघ्रतेर्वा ॥ ६ ॥

उपधाया इदिद्वेव । अजिघ्रिपत् । अजिघ्रापत् ॥

## उर्ऋत् ॥ ७ ॥

उपधाया ऋवर्णस्य ऋत्स्याद्वा चङ्परे णौ । अचीकृतत् । अवीवृतत् । अमीमृजत् । पक्षे इड्गुणवृद्धयः । अचिकीर्तत् । अववर्तत् । अममार्जत् ॥

## नित्यं छन्दसि ॥ ८ ॥

उपधाया ऋवर्णस्य ऋत् स्याच्चङ्परे णौ छन्दसि नित्यम् । अवीवृधत् । मह्योज्यायोकृत ॥

दयतेर्दिगि लिटि ॥ ९ ॥

दीङो दिगिरादेशः स्याल्लिटि । दिग्यादेशेन द्वित्वबाध इष्यते । दिग्ये । दिग्याते । दिग्यिरे ॥

ऋतश्च संयोगादेर्गुणः ॥ १० ॥

संयोगादेः ऋदन्तस्य गुणः स्यादवृद्धिनिमित्ते लिटि । सस्वरतुः । सस्वरुः । सस्मरतुः । सस्मरुः । ऋतः किम् । चिक्षियतुः । संयोगादेः किम् । चक्रतुः । अवृद्धिनिमित्ते किम् । सस्वार । अत्र पूर्वविप्रतिषेधेन वृद्धिरेवेष्यते ॥ लिटि किम् । स्मृतः ॥

संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थम् ॥

सञ्चस्करतुः ॥

ऋच्छत्यॄताम् ॥ ११ ॥

तौदादिकऋच्छेर्ऋधातोर्ॠताञ्चावृद्धिनिमित्ते लिटि गुणः स्यात् । आनर्छ । आनर्छतुः । आर । आरतुः । कॄ । चकरतुः । चकरुः । अवृद्धीति किम् । चकार ॥

शॄदॄप्रां ह्रस्वो वा ॥ १२ ॥

एषां ह्रस्वो वा स्याल्लिटि । शश्रतुः । शशरतुः । दद्रतुः । ददरतुः । पप्रतुः । पपरतुः । गुणो वेति वाच्ये ह्रस्वत्वमित्त्वनिवृत्त्यर्थम् ॥

केऽणः ॥ १३ ॥

केपरेऽणो ह्रस्वः स्यात् । कुमारिका । ब्रह्मबन्धुका । अणः किम् । नौका । राका धाका अत्र न । उणादीनामव्युत्पन्नत्वात् ॥

न कपि ॥ १४ ॥

कप्यणो ह्रस्वो न स्यात् । बहुलक्ष्मीकः । बहुब्रह्मबन्धूकः ॥

आपोऽन्यतरस्याम् ॥ १५ ॥

कप्यावन्तस्य ह्रस्वो वा स्यात् । बहुमालकः । बहुमालाकः ॥

ऋदृशोऽङि गुणः ॥ १६ ॥

ऋवर्णान्तानां दृशेश्च गुणः स्यादङि । असरत् । आरत् । अदर्शत् ॥

अस्यतेस्थुक् ॥ १७ ॥

अस्यतेस्थुक्स्यादङि । आस्थत् ॥

श्वयतेरः ॥ १८ ॥

श्वयतेरिकारस्य अः स्यादङि । अश्वत् । अश्वताम् । अश्वन् ॥

पतः पुम् ॥ १९ ॥

पतेः पुमागमः स्यादङि । अपप्तत् ॥

वच उम् ॥ २० ॥

वचोऽङ्गस्य उमागमः स्यादङि । अवोचत् ॥

शीङः सार्वधातुके गुणः ॥ २१ ॥

शीङो गुणः स्यात्सार्वधातुके । शेते । शयाते । सार्वधातुके किम् । शिश्ये ॥

अयङ्यि क्ङिति ॥ २२ ॥

शीङोऽयङादेशः स्याद्यादौ क्ङिति । शय्यते । शाश-

यपते। यीति किम्। शिश्ये। क्ङिति किम्। शेयम्॥

उपसर्गाद्ध्रस्व ऊहतेः॥ २३॥

उपसर्गात्परस्योहतेर्ह्रस्वः स्याद्यादौ क्ङिति। समुह्यते। समुह्यात्। उपसर्गात्किम्। ऊह्यते। ऊहतेः किम्। समीह्यते। क्ङीति किम्। समूहितम्। क्ङिति किम्। समूह्यम्। अण इत्येव। आ ऊह्यते। ओह्यते। समोह्यते॥

एतेर्लिङि॥ २४॥

उपसर्गात्परस्येणो ह्रस्वः स्याद्यादौ क्ङिति। उदियात्। समियात्। आशीर्लिङ्यकृत्सार्वधातुके(७।४।२५)ति दीर्घेऽनेन ह्रस्वः। उपसर्गात्किम्। ईयात्। अण इत्येव। आ ईयात्। एयात्। समेयात्॥

अकृत्सार्वधातुकयोर्दीर्घः॥ २५॥

अकृद्यकारे असार्वधातुके च यकारे क्ङित्यचो दीर्घः स्यात्। सुखायते। चीयते। चेचीयते। अकृत्किम्। प्रकृत्य। परत्वाद्दीर्घत्वेन तुग्बाध्येत। असार्वधातुके किम्। चिनुयात्। क्ङिति किम्। उरुया। सुपा(७।१।३९)मित्यादिनायादेशः॥

च्वौ च॥ २६॥

च्विप्रत्यये परेऽजन्तस्य दीर्घः स्यात्। शुचीकरोति। पटूकरोति॥

रीङृतः॥ २७॥

ऋदन्तस्य रीङादेशः स्यादकृद्यकारे असार्वधातुके च यकारे च्वौ च परतः। मात्रीयति। पित्रीयति। क्ङीति नि-वृत्तम्। वाय्वृतुपित्रुषसो यत् (४।२।३१)। पित्र्यम्। तपरत्वं किम्। चेक्रियते॥

## रिङ् शयग्लिङ्क्षु ॥ २८ ॥

शे यकि यादावसार्वधातुके च लिङि ऋदन्तस्य रिङा-देशः स्यात्। रीङं बाधित्वा रिङ्विधिसामर्थ्यादकृत्सार्वधा-तुकयो(७।४।२५)रिति न दीर्घः। आद्रियते। ह्रियते। क्रियात्। असार्वधातुके किम्। बिभृयात्। यादौ किम्। कृषीष्ट ॥

## गुणोर्तिसंयोगाद्योः ॥ २९ ॥

अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादा-वसार्वधातुके लिङि च। अर्यते। अर्यात्। स्वर्यते। स्वर्यात्। सुटो बहिरङ्गत्वादभक्तत्वाद्वा न गुणः। संस्क्रियात्। या-दौ किम्। स्मृषीष्ट। असार्वधातुके किम्। इयृयात् ॥

## यङि च ॥ ३० ॥

अर्तेः संयोगादेः ऋदन्तस्य च गुणः स्याद्यङि। यकार-परेरेफस्य न द्वित्वनिषेधः। अरार्यते। सास्मर्यते ॥

इन्तेर्हिंसार्थां यङि घ्नीभावो वाच्यः ॥

जेघ्नीयते। गतौ तु। जङ्घन्यते ॥

## ई घ्राध्मोः ॥ ३१ ॥

अनयोरीदन्तादेशः स्याद्यङि। जेघ्रीयते। देध्मीयते ॥

## अस्य च्वौ ॥ ३२ ॥

अवर्णस्य ई स्याच्च्वौ। शुक्लीकरोति। च्वौ चे(७।४।२६)-ति दीर्घापवादोयम् ॥

## क्यचि च ॥ ३३ ॥

क्यचि परेऽवर्णस्य ई स्यात्। पुत्रीयति। मालीयति ॥

अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु ॥ ३४ ॥

एते यथासङ्ख्यं बुभुक्षादौ निपात्यन्ते । अशनायति बुभुक्षा चेत् । अन्यत्र अशनीयति । उदन्यति पिपासा चेत् । अन्यत्र उदकीयति । धनायति गर्धश्चेत् । अन्यत्र धनीयति ॥

नच्छन्दस्यपुत्रस्य ॥ ३५ ॥

क्यचि दीर्घत्वमीत्वं चच्छन्दसि न स्यात्पुत्रं वर्जयित्वा । मित्रयुः । अपुत्रस्य किम् । पुत्रीयन्तः ॥

अपुत्रादीनां वाच्यम् ॥

जनीयन्तः ॥

दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ॥ ३६ ॥

एते छन्दसि क्वचित् निपात्यन्ते । दुष्टशब्दस्य दुरस् । दुरस्युः । दुष्टीयतीति प्राप्ते । द्रविणशब्दस्य द्रविणस् । द्रविणस्युः । द्रविणीयतीति प्राप्ते । वृषलस्य वृषण् । वृषण्यति । वृषलीयतीति प्राप्ते । रिष्टस्य रिषण् । रिषण्यति । रिष्टीयतीति प्राप्ते ॥

अश्वाघस्यात् ॥ ३७ ॥

एतयोः क्यच्याकारादेशः स्याच्छन्दसि । अश्वायन्तः । मा त्वां वृका अघायवः ॥

देवसुम्नयोर्यजुषि काठके ॥ ३८ ॥

एतयोः क्यच्याकारादेशः स्यात् । देवायन्तः । सुम्नायन्तः । यजुषि किम् । देवां जिगाति(य) सुम्नयुः । काठके किम् । सुम्नायुः ॥

कव्यध्वरपृतनस्यर्चि लोपः ॥ ३९ ॥

कवि अध्वर पृतना एतेषां क्यच्यन्तलोपः स्यादृचि ।

कण्वन्तः । अध्वर्यन्तो अरथुः । पृतन्यन्तः ॥

घतिस्यतिमास्थामित्ति किति ॥ ४० ॥

एषामिदन्तादेशः स्यात्तादौ किति । दितः । दितवान् । मितः । मितवान् । मितः । मितवान् । स्थितः । स्थितवान् । तीति किम् । अवस्थाय । किति किम् । स्थाता ॥

शाच्छोरन्यतरस्याम् ॥ ४१ ॥

अनयोरिद्वा स्यात्तादौ किति । शितम् । शातम् । शितवान् । शातवान् । छितम् । छातम् ॥

श्यतेरित्वं व्रते नित्यम् ॥

संशितो ब्राह्मणः । संशितव्रत इत्यर्थः । व्यवस्थितविभाषयैतत्सिद्धम् ॥

देवत्रातो गलो ग्राह इति योगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥

दधातेर्हिः ॥ ४२ ॥

दधातेर्हिः स्यात्तादौ किति । हितम् । हितवान् ॥

जहातेश्च क्त्वि ॥ ४३ ॥

जहातेर्हिः स्यात् क्त्वाप्रत्यये । हित्वा राज्यं वनं गतः ॥

विभाषा छन्दसि ॥ ४४ ॥

जहातेः क्त्वायां हिर्वा छन्दसि । हित्वा । पक्षे घुमास्थे(६।४।६६)तीत्वम् । हीत्वा ॥

सुधित वसुधित नेमधित धिष्व धिषीय च ॥ ४५ ॥

एते छन्दसि निपात्यन्ते । सुवसुनेमपूर्वाद्धाञः क-

प्रत्यये इत्वम् अन्येषु त्रिषु । सुहितमिति प्राप्ते सुधितम् । लोण्मध्यमपुरुषैकवचने धत्स्वेति प्राप्ते धिष्वेति निपात्यते । लिङि धासीयेति प्राप्ते धिषीयेति ॥

दो दद्धोः ॥ ४६ ॥

दा इत्यस्य घुसंज्ञकस्य दत्स्यात्तादौ किति । दत्तः । दत्तवान् । दत्वा । दः किम् । हितम् । घोः किम् । अवदातम् ॥

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ॥
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

अच उपसर्गात्तः ॥ ४७ ॥

अजन्तादुपसर्गात्परस्य दा इत्येतस्य घोस्तकारोन्तादेशः स्यात्तादौ किति । प्रत्तम् । अवत्तम् । वीत्तम् । नीत्तम् । सूत्तम् । परीत्तम् । अचः किम । निर्दत्तम् । उपसर्गात्किम् । दधि(पथि) दत्तम् । घोः किम् । अवदातम् ॥

द्यतेरित्त्वादचस्तः परत्वात् ॥

अवत्तं जुहोति ॥

अपो भि ॥ ४८ ॥

अपस्तकारोन्तादेशः स्याद्भादौ प्रत्यये । अद्भिः । अद्भ्यः । भि किम् । अपां । अप्सु ॥

स्वतःस्वतवसोर्मास उषसश्च त इष्यते छन्दसि ॥

स्ववद्भिः । स्वतवद्भिः । माद्भिः । उषद्भिः ॥

सः स्यार्धधातुके ॥ ४९ ॥

सस्य तः स्यात्सादावार्धधातुके । वत्स्यति । अवात्सीत् । सः किम् । भक्ष्यति । सीति किम् । वासः । अर्धधातुके किम् । आस्से ॥

तासस्त्योर्लोपः ॥ ५० ॥

तासेरस्तेश्च सस्य लोपः स्यात्सादौ प्रत्यये । कर्तासि । असि ॥

रि च ॥ ५१ ॥

रेफादौ प्रत्यये तासस्त्योः सस्य लोपः स्यात् । भवितारौ । भवितारः ॥

ह एति ॥ ५२ ॥

तासस्त्योः सस्य हः स्यादेति परे । भविताहे । व्यतिहे । आत्मनेपदोत्तमपुरुषैकवचनम् ॥

यीवर्णयोर्दीधीवेव्योः ॥ ५३ ॥

यकारोपरि इकार उच्चारणार्थः । दीधीवेव्योरन्त्यलोपः स्याद्यकारे इवर्णे च परे । आदीध्यते । आवेव्यते । आदीधिता । आवेविता । यीवर्णयोः किम् । आदीध्यनम् । आवेव्यनम् ॥

सनि मीमाघुरभलभशकपतपदामच इस् ॥ ५४ ॥

एषामचः स्थाने इसादेशः स्यात्सादौ सनि । सः स्यार्धधातुके(७।४।७९)। मित्सति । मित्सते । दित्सति । धित्सति । स्को(८।२।२९)रिति सलोपः । रिप्सते । लिप्सते । शिक्षति । पित्सति । पद पित्सति । सनि किम् । दास्यति । सादौ किम् । पिपतिषति । तनिपत्यो(वार्तिकम्)र्तीड्विकल्पः ॥

राधो हिंसायामिस्वाच्यः ॥

प्रतिरित्सति । हिंसायां किम् । आरिरात्सति ॥

आप्ज्ञप्यृधामीत् ॥ ५५ ॥

एषामच ईत्सादौ सनि । ईप्सति । ज्ञीप्सति । ईर्त्सति । ज्ञ-

पेद्धिवचौ । तत्र पूर्वविप्रतिषेधेन णेर्लोपः । प्रथमस्येकारः । सनि किम् । प्राप्स्यति । सादौ किम् । जिज्ञपयिषति । सनीवन्तर्धे(७।२।४९)ति वेट् ॥

दम्भ इच्च ॥ ५६ ॥

दम्भेरच इत्स्यादीच्च सादौ सनि । धीप्सति । धिप्सति । सादौ किम् । दिदम्भिषति ॥

मुचोऽकर्मकस्य गुणो वा ॥ ५७ ॥

अकर्मकस्य मुचो गुणो वा स्यात्सादौ सनि । मोक्षते वत्सः स्वयमेव । मुमुक्षते वा । अकर्मकस्य किम् । मुमुक्षति वत्सं कृष्णेन(ष्णः) । कर्मकर्तरि कर्मविशेषाविवक्षया [वा] मुचेरकर्मकत्वम् ॥

अत्र लोपोऽभ्यासस्य ॥ ५८ ॥

सनि मीमे(७।४।५४)त्यारभ्य यदुक्तं तत्राभ्यासस्य लोपः स्यात् । तथैवोदाहृतम् । अभ्यासस्येत्येतदाध्यायसमाप्तेरधिक्रियते ॥

अभ्यासस्यानचि ॥

अभ्यासस्य यदुच्यते तदनचीति वाच्यम् । पतापतः । चराचरः । चलाचलः । पदापदः ॥

चरिचलिपतिपदीनामाक्काभ्यासस्येति द्विर्वचनमागागमश्चाचि विधीयते ॥

तत्र हलादिशेषो न भवति ॥

ह्रस्वः ॥ ५९ ॥

अभ्यासस्य ह्रस्वः स्यात् । ददाति । अडुढौकत् ॥

हलादिः शेषः ॥ ६० ॥

अभ्यासस्य हल्मात्रं लुप्यते आदेस्तु शेषः । पपाच । आट ।

भ्रातृः ॥

शर्पूर्वाः खयः ॥ ६१ ॥

शर्पूर्वाः खयः शिष्यन्ते अन्ये हलो लुप्यन्ते । चुश्च्योत । तिष्ठासति ॥

खर्पूर्वाः खयः शिष्यन्ते इति वान्यम् ॥

उचिच्छिषति । उच्छेरन्तरङ्गत्वात्तुकि द्वित्वे हलादिःशेषे तकारशेषो मा भूदितीद वचनम् ॥

कुहोश्चुः ॥ ६२ ॥

अभ्यासस्य कवर्गहकारयोश्चवर्गादेशः स्यात् । चकार । जहार ॥

न कवतेर्यङि ॥ ६३ ॥

कवतेरभ्यासस्य चुत्वं न स्याद्यङि । कोकूयते । कवतिनिर्देशात्कौतिकुवत्योश्चुत्वमेव । चोकूयते । यङि किम् । चुकुवे ॥

कृषेश्छन्दसि ॥ ६४ ॥

अभ्यासस्य चुत्वं न स्याच्छन्दसि । करीकृष्यते । लोके तु चरीकृष्यते ॥

दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतो दविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च ॥ ६५ ॥

एतेऽष्टादशच्छन्दसि निपात्यन्ते । धारयतेः श्लौ अभ्यासदीर्घो णिलोपश्च निपात्यते । दाधर्ति । तस्यैवाभ्यासस्य रु-

गागमो निपात्यते । दर्धर्ति । दर्धर्षि । बोभूतु । अत्र यङ्लुकि गुणाभावो निपात्यते । भूसुवो (७।३।८८)रित्येव सिद्धे निपातनं भाषायां गुणज्ञापनार्थम् । बोभवीति । तेतिक्ते । तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते । यङो ङित्त्वात्प्रत्ययलक्षणेनात्मने पदं सिद्धेऽन्यत्र यङ्लुगन्तात्परस्मैपदं ज्ञाप्यते । अलर्षि । इयर्तेः सिप्यभ्यासस्य हला दिशेषापवादेन लत्वं निपात्यते । आपनीफणत् । फणतेराङ्पूर्वस्याभ्यासस्य नीगागमः । संसनिष्यदत् । स्यन्दः संपूर्वस्य यङ्लुकि शतर्यभ्यासस्य निगागमः षत्वं च । करिक्रत् । कृञो यङ्लुगन्तस्य शतर्यभ्यासस्य चुत्वाभावो निपात्यते । कनिक्रदत् । क्रन्देर्लुङि च्लेरङ् द्विर्वचनमभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते । भरिभ्रत् । बिभर्तेर्यङ्लुगन्तस्य शतर्यभ्यासस्य जश्त्वाभावो रिगागमश्च निपात्यते । । दविध्वतः । ध्वरतेर्यङ्लुगन्तस्य शतरि जसि रूपम् । अत्राभ्यासस्य विगागमो धातुऋकारलोपश्च निपात्यते । दविद्युतत् । द्युतेर्यङ्लुगन्तस्य शतर्यभ्यासस्य संप्रसारणाभावः अत्वं विगागमश्च निपात्यते । तरित्रतः । तरतेः शतरि श्लौ षष्ठ्येकवचनेऽभ्यासस्य रिगागमः । सरीसृपतम् । सृपेः शतरि श्लौ द्वितीयैकवचनेऽभ्यासस्य रिगागमो निपात्यते । वरीवृजत् । वृजेः शतरि श्लौ रिगागमः । मर्मृज्य । मृजेर्लिट्यभ्यासस्य रुक् धातोश्च युक् वृद्ध्यभावश्च निपात्यते । आगनीगन्ति । गमेराङ्पूर्वस्य लटि श्लौ अभ्यासस्य चुत्वाभावो नीगागमश्च । अत्रालाक्षणिकं सर्वं निपातनात् । इतरेष्यामप्येवंप्रकाराणां साधुत्वमनुजानाति ॥

उरत् ॥ ६६ ॥

अभ्यासऋवर्णस्यात्स्यादादेशः स्यात् । चकार । ववर्तीत्यादौ उरदत्वे कृते रुगाद्यागमा इष्टाः ॥

## द्युतिस्वाप्योः संप्रसारणम् ॥ ६७ ॥

द्युतेः स्वापेश्चाभ्यासस्य संप्रसारणं स्यात् । हलादिशेषापवादः । दिद्युते । दिद्योतिषते । सुष्वापयिषति । स्वापिर्ण्यन्तः । तस्य द्विर्वचननिमित्तप्रत्ययेनानन्तर्ये संप्रसारणमिष्यते । स्वापकीयतेः सन् । सिष्वापकीयिषति ॥

## व्यथो लिटि ॥ ६८ ॥

व्यथोऽभ्यासस्य संप्रसारणं स्याल्लिटि । हलादिशेषापवादः । विव्यथे । विव्यथाते । विव्यथिरे । लिटि किम् । वाव्यथ्यते ॥

## दीर्घ इणः किति ॥ ६९ ॥

इणोभ्यासस्य दीर्घः स्यात्किति लिटि । ईयतुः । ईयुः । इणो यणि कृते स्थानिवत्त्वात् द्वित्वम् । किति किम् । इयाय ॥

## अत आदेः ॥ ७० ॥

अभ्यासस्यादेरतो दीर्घः स्याल्लिटि । पररूपापवादः । आट । आटतुः । आटुः । आदेः किम् । पपाच ॥

## तस्मान्नुड् द्विहलः ॥ ७१ ॥

दीर्घभूतादभ्यासावर्णात्परस्य द्विहलो धातोर्नुडागमः स्यात् । आनर्द । आनञ्ज । आनञ्जतुः । [आनञ्जुः । ]ऋकारैकदेशो रेफोपि नुड्विधि मान हल् । आनृततुः । आनृतुः ॥

## अश्नोतेश्च ॥ ७२ ॥

दीर्घादभ्यासात्परस्याश्नोतेर्नुट् स्याल्लिटि । आनशे । आनशाने । आनशिरे । अश्नोतेरित्युक्तेरश्नातेर्न । आश । आशतुः । आशुः ॥

भवतेरः ॥ ७३ ॥

भवतेरभ्यासस्य अः स्याल्लिटि । बभूव । बभूवे । अनुबभूवे । लिटि किम् । बोभूयते ॥

ससूवेति निगमे ॥ ७४ ॥

सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य अत्वं च निपात्यते । ससूव स्थविरम् । लोके तु सुषुवे ॥

निजां त्रयाणां गुणः श्लौ ॥ ७५ ॥

निजविजविषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । त्रिग्रहणमुत्तरार्थम् । अत्र त्रिभिर्गणसमाप्तेः । श्लौ किम् । निनेज ॥

भृञामित् ॥ ७६ ॥

भृञ् माङ् ओहाङ् एषामभ्यासस्य इत्स्याच्छ्लौ । बिभर्ति । मिमीते । जिहीते । त्रयाणामेव । नेह । ओहाक् । जहाति । श्लौ किम् । बभार ॥

अर्तिपिपर्त्योश्च ॥ ७७ ॥

अनयोरभ्यासस्य इत्स्याच्छ्लौ । इयर्ति । पिपर्ति ॥

बहुलं छन्दसि ॥ ७८ ॥

छन्दसि बहुलमभ्यासस्य इत्स्यात् । वचेः । जनिमा विवक्ति । गृ । जिगर्ति । घृ । जिघर्ति ॥

सन्यतः ॥ ७९ ॥

अभ्यासस्यात इत्स्यात्सनि । पिपाठिषति । सनि किम् । पपाच । अतः किम् । लुलूषति ॥

ओः पुयण्ज्यपरे ॥ ८० ॥

अभ्यासोवर्णस्य सनि परे इत्वं स्यात्पवर्गयणजकारेष्ववर्णपरेषु परतः । पिपावयिषति । बिभावयिषति । पिपावयिषति । रिरावयिषति । लिलावयिषति । जुः सौत्रो गत्यर्थः । जिजावयिषति । एतदेव सूत्रं ज्ञापकमद्वित्वनिमित्तेपि णौ कृतमभ्यासस्य स्थानिवदिति । ओः किम् । पापच्यतेः सन् । पापचिषते(ति) । पुयण्जीति किम् । नुनावयिषति । अपरे किम् । बुभूषति ॥

स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥ ८१ ॥

एषामभ्यासोकारस्य इत्स्याद्वा सनि । सिस्रावयिषति । सुस्रावयिषति । शिश्रावयिषति । शुश्रावयिषति । दिद्रावयिषति । दुद्रावयिषति । पिप्रावयिषति । पुप्रावयिषति । पिप्लावयिषति । पुप्लावयिषति । चिच्यावयिषति । चुच्यावयिषति । पूर्वसूत्रे अनन्तर एव यणि भवितव्यमित्यप्राप्तविभाषेयम् । अपर इत्येव । शुश्रूषति ॥

गुणो यङ्लुकोः ॥ ८२ ॥

अभ्यासस्य गुणः स्याद्यङि यङ्लुकि च । बोभूयते । बोभवीति ॥

दीर्घोऽकितः ॥ ८३ ॥

अकितोभ्यासस्य दीर्घः स्याद्यङ्लुकोः । पापच्यते । पापचीति । यायज्यते । यायजीति । अकितः किम् । यंयम्यते । तन्तन्यते । नन्वपवादत्वान्नुकि कृतेभ्यासस्यानजन्तत्वाद्दीर्घो न भविष्यति । एवं तर्ह्यभ्यासविकारेष्वपवादो नोत्सर्गं बाधत इत्यकित इत्यनेन ज्ञाप्यते । तेन डोढौकयत इति दीर्घो-

किन इति दीर्घेण ह्रस्वत्वं न बाध्यते । अचीकरदित्यत्र दीर्घो लघो(७।४।९४)रित्यनेन सन्वदित्वं न बाध्यते । मीमांसत इत्यत्र मान्बधे(३।१।६)ति दीर्घेण सन्वदित्वं न बाध्यते ॥

नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ॥ ८४ ॥

एषामभ्यासस्य नीगागमः स्याद्यङ्लुकोः । अनिदिता(६।४।२४)मिति नलोपः । वनीवच्यते । वनिवञ्चीति । सनीस्रस्यते । सनीस्रंसीति । दनीध्वस्यते । दनीध्वंसीति । बनीभ्रस्यते । बनीभ्रंसीति । चनीकस्यते । चनीकसीति । पनीपत्यते । पनीपतीति । पनीपद्यते । पनीपदीति । चनीस्कद्यते । चनीस्कन्दीति ॥

नुगतोनुनासिकान्तस्य ॥ ८५ ॥

अनुनासिकान्तस्यादन्ताभ्यासस्य नुगागमः स्याद्यङ्लुकोः । नक्पदान्तवद्वाच्यः ॥

अश्झल्यप्यनुस्वारः । वा पदान्तस्ये(८।४।५९)ति परसवर्णः । यंयम्यते । यम्यम्यते । दन्दम्यते । दम्दम्यते । तन्तन्यते । तन्तन्यते । अतः किम् । तेतिम्यते । तपरत्वं भूतपूर्वदीर्घस्यापि निवृत्त्यर्थम । भाम क्रोधे । बाभाम्यते । अनुनासिकान्तस्य किम् । पापच्यते ॥

जपजभदहदशभञ्जपसां च ॥ ८६ ॥

एषामभ्यासस्य नुक्स्याद्यङ्लुकोः । जञ्जप्यते । जञ्जपीति । जञ्जभ्यते । जञ्जभीति । दन्दह्यते । दन्दहीति । दन्दश्यते । दन्दशीति । दशोति न्लोपिनो ग्रहणाद्यङ्लुकि न्लोपः । बम्भज्यते । बम्भजीति । पसः सौत्रः । पंपस्यते । पंपसीति ॥

चरफलोश्च ॥ ८७ ॥

अनयोरभ्यासस्य नुक्स्याद्यङ्लुकोः । चञ्चूर्यते । चञ्चु-

रीति । पंफुल्यते । पंफुलीति ॥

उत्परस्यातः ॥ ८८ ॥

चरफलोरभ्यासात्परस्यात उत्स्याद् यङ्यङ्लुकोः । तथै-वोदाहृतम् । परस्य किम् । अभ्यासस्य मा भूत् । अतः किम् । अलोन्त्यस्य मा भूत् । तपरत्वं लघूपधगुणनिवृत्त्यर्थम् । चञ्चूर्ति ॥

ति च ॥ ८९ ॥

चरफलोरकारस्य उत्स्यात्तादौ । प्रचूर्तिः । फुल्त्वा सुमनसः । यङ्लुकोरभ्यासस्येति चात्र न सम्बध्यते । उत्तरत्रानुवर्तत एव ॥

रीगृदुपधस्य च ॥ ९० ॥

ऋदुपधस्य धातोरभ्यासस्य रीगागमः स्याद्यङ्लुकोः । वरीवृत्यते । वरीवर्ति । नरीनृत्यते । नरीनर्ति ॥

ऋत्वत इति संयोगार्थं वाच्यम् ॥

वरीवृश्च्यते । परीपृच्छ्यते ॥

रुग्रिकौ च लुकि ॥ ९१ ॥

ऋदुपधस्य धातोरभ्यासस्य रुग्रिकावागमौ स्तो यङ्लुकि चाद्रीक् । वर्वर्ति । वरिवर्ति । वरीवर्ति । मर्मृज्यते ॥

मर्मृज्यमाना[स] इति चेष्यते ॥

ऋतश्च ॥ ९२ ॥

ऋदन्तस्य धातोरभ्यासस्य रुक् रिक् रीक् एते स्युर्यङ्लुकि । चर्कर्ति । चरिकर्ति । चरीकर्ति । तपरकरणं किम् । कॄ । चाकर्ति ॥

सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ९३ ॥

लघुनि धात्वक्षरे परे अभ्यासस्य सन्वत्कार्यं स्याच्चङ्परे णौ परे न त्वग्लोपे । सन्यतः(७।४।७९)। अपीपचत् । अपीपठत् । ओः पुयण्(७।४।८०)। अपीपवत् । अजीजवत् । स्रवतीत्वं वा । असिस्रवत् । असुस्रवदित्यादि । लघुनि किम् । अररक्षत् । चङ्परे किम् । अचकमत । चङ्येव मा भूत् । अनग्लोपे किम् । अचकथत् । णिलोपेनाग्लोपित्वम् । वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन । अत्र लोपोऽभ्यासस्ये(७।४।५८)त्यत्रग्रहणस्य [विषये] नियमार्थत्वात्सन्वद्भावेन नाभ्यासलोपः ॥

दीर्घो लघोः ॥ ९४ ॥

लघुनि धात्वक्षरे परे लघोरभ्यासस्य दीर्घः स्याच्चङ्परे णौ परे न त्वग्लोपे । अचीकरत् । लघोः किम् । अचिक्षयत् । लघुनि किम् । अररक्षत् ॥

अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् ॥ ९५ ॥

एषामभ्यासस्य अत्स्याच्चङ्परे णौ । इत्वापवादः । असस्मरत् । अददरत् । तपरत्वसामर्थ्यादत्र लघोर्न दीर्घः । अतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् ॥

विभाषा वेष्टिचेष्ट्योः ॥ ९६ ॥

अनयोरभ्यासस्य अत् स्याद्वा चङ्परे णौ । अववेष्टत् । अविवेष्टत् । अचचेष्टत् । अचिचेष्टत् ॥

## ई च गणः॥ १७॥

गणयतेरभ्यासस्य ई स्याद्वा चङ्परे णौ। अजीगणत्। अग्लोपित्वान्न सन्वद्भावः। अजगणत्॥

इति श्रीमहोपाध्यायाद्वैतविद्याचार्यराघवसोमयाजिकुलावतंसश्रीतिरुमलार्यवर्यस्य सूनोरन्नंभट्टस्य कृतौ व्याकरणमिताक्षरायां सप्तमस्याध्यायस्य चतुर्थः पादः॥
समाप्तोऽध्यायश्च॥

---

## सर्वस्य द्वे ॥ १ ॥

प्राक् पदस्ये(८।१।१६)त्यतोधिकारोयम् । तत्र यदा सर्वस्य स्थाने द्वे भवत इत्यर्थस्तदा एकस्य पचतिशब्दस्य स्थाने शब्दतोर्थतश्च साम्यात् द्विरुक्तः पचतिपचतिशब्द आदेशः । यदा द्विः प्रयोगो द्विर्वचनं तदा स एव पचतिशब्दो द्विरावर्तते । ननु पदस्येत्येव किं नोच्यते । न । प्रपचतिप्रपचतीत्यत्र न स्यात् । इह द्रोग्धाद्रोग्धा द्रोढाद्रोढेति घत्वढत्वयोरसिद्धयोर्द्विर्वचनं स्यात् । पश्चाद्विकल्पे सति नियामकाभावात् द्रोग्धा द्रोढा द्रोढा द्रोग्धेत्यनिष्टं स्यात् । पूर्वत्रासिद्धीयमद्विर्वचन इति वचनान्न दोषः ॥

## तस्य परमाम्रेडितम् ॥ २ ॥

द्विरुक्तस्य परमाम्रेडितसंज्ञं स्यात् ॥

## अनुदात्तं च ॥ ३ ॥

अम्रेडितमनुदात्तं स्यात् ॥

## नित्यवीप्सयोः ॥ ४ ॥

नित्यशब्द आभीक्ष्ण्यार्थ इह गृह्यते । आभीक्ष्ण्ये वीप्सायां च वर्तमानस्य द्वे स्तः । अभीक्ष्ण्यं तिङव्ययकृत्सु । पचतिपचति । भुक्त्वाभुक्त्वा व्रजति । भोजंभोजं व्रजति । लुनीहिलुनीहीत्येवायं लुनाति । क्त्वाणमुलोर्लोटश्च द्विर्वचनापेक्षाणां पौनःपुन्यप्रकाशनशक्तिः । यङ् तु निरपेक्ष एव समर्थः । पुनःपुनः पचति पापच्यत इति । यत्र पापच्यते पापच्यत इति द्विर्वचनम्

तत्र क्रियासमभिहारे यङ् द्रष्टव्यः । नानाधिकरणा क्रियागुणाभ्यां युगपत्प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा । ग्रामो ग्रामो रमणीयः । पुरुषः पुरुषो दानमुपैति । द्रव्यव्याप्तावपि । ग्रामे ग्रामे स्त्रियः । कृतद्विर्वचनात्तिङन्तात्प्रकर्षप्रत्ययः । पचतिपचतितराम् । न तु तरबन्तस्य द्विर्वचनम् । आढ्यतरमाढ्यतरमानयेति त्विष्यते ॥

## परेर्वर्जने ॥ ५ ॥

अस्य वर्जने वा द्वे स्तः । परिपरि वङ्गेभ्यः परिवङ्गेभ्यो वा वृष्टो देवः । वर्जने किम् । परिपिञ्चति ।

समासस्तु नेष्यते ।

परित्रिगर्तं वृष्टो देवः ॥

## प्रसमुपोदः पादपूरणे ॥ ६ ॥

एषां पादपूरणे द्वे स्तः । प्रप्रायमग्निः । सम्समिद्युवसे । उपोपेन्नु । किमोदुदुहर्षसे । पादपूरणे किम् । प्रदेवं देव्या ॥

## उपर्यध्यधसः सामीप्ये ॥ ७ ॥

एषां द्वे स्तः सामीप्येऽर्थे । उपर्युपरि ग्रामः । अध्यधि सुखम् । अधोधो सुखम् । उपरिचन्द्रमाः उपरि शिरसो घटं धारयतीत्यत्राधारत्वमात्रं विवक्षितं न तु सामीप्यम् ॥

## वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु ॥८॥

वाक्यादेरामन्त्रितस्य द्वे स्त एष्वर्थेषु । असूयायां सुन्दरसुन्दर वृथा ते सौन्दर्यम् । संमतौ देव देव वन्द्योऽसि । कोपे दुर्विनीतदुर्विनीत इदानीं ज्ञास्यसि । कुत्सने धानुष्क धानुष्क व्यर्थं ते धनुः । भर्त्सने चोर चोर घातयिष्यामि त्वा । असूयादिषु स्वरितमाम्रेडित इति पूर्वस्य प्लुतः । भर्त्सने त्वाम्रेडितं

भर्त्सने(८।२।९५)इति द्वितीयस्यैव । वाक्यादेः किम् । इथा ते सौन्दर्यं सुन्दर । आमन्त्रितस्य किम् । सुन्दरो देवदत्तः । असूयादिषु किम् । देवदत्त गामभ्याज ॥

## एकं बहुव्रीहिवत् ॥ ९ ॥

वीप्सार्थे द्विरुक्त एकशब्दो बहुव्रीहिवत्स्यात् । तेन सुब्लोपपुंवद्भावौ । एकैकमक्षरम् । एकैकयाऽऽहुत्या । सर्वनामसंज्ञानिषेधस्वरसमासान्ताः समासाधिकारविहितबहुव्रीहावेव । नेह । एकैकस्मै देहि । न बहुव्रीहा(१।१।२९)विति निषेधो न । नन । सुसु । नञ्सुभ्या(६।२।१७२)मित्यन्तोदात्तो न । ऋगृक् । पूःपूः । ऋक्पू(५।४।७४)रिति समासान्तो न ॥

## आबाधे च ॥ १० ॥

पीडायामर्थे द्वे स्तः बहुव्रीहिवच्च कार्यम् । गतगतः । गतगता । प्रियस्य चिरगमनेन पीड्यमानः कश्चिदेवमाह ॥

## कर्मधारयवदुत्तरेषु ॥ ११ ॥

उत्तरेषु द्विर्वचनेषु कर्मधारयवत्स्यात् । सुब्लोपपुंवद्भावान्तोदात्ताः प्रयोजनम् । पटुपटुः । सुब्लोपान्तोदात्तौ । कालककालिका । कोपधाया अपि पुंवद्भावः । परत्वादनेनान्तोदात्तेनाम्रेडितानुदात्तत्वं बाध्यते । उत्तरेष्विति स्पष्टार्थम् । अधिकारादेव सिद्धेः ॥

## प्रकारे गुणवचनस्य ॥ १२ ॥

सादृश्येऽर्थे वर्तमानस्य गुणवचनस्य द्वे स्तः स च कर्मधारयवत् । पटुपटुः । मृदुमृदुः । परिपूर्णेन न्यूनगुणस्य सादृश्ये सत्ययं प्रयोग इष्यते । जातीयरोनेन द्विर्वचनेन बाधनं नेष्यते । पटुजातीयः । प्रकारे किम् । पटुर्देवदत्तः । गुणवचन-

स्य किम्। अग्निर्माणवकः॥

आनुपूर्व्ये द्वे वाच्ये॥

मूले मूले स्थूलाः। अग्रे अग्रे सूक्ष्माः। ज्येष्ठं ज्येष्ठं प्रवेशय॥

स्वार्थेनवधार्यमाणेनैकस्मिन् द्वे वाच्ये॥

अस्मात्कार्षापणादिह भवद्भ्यां माषं देहि। स्वार्थ एवैतद्द्विर्वचनं न वीप्सायाम्। अत्र द्वावेव माषौ दीयेते न सर्वे कार्षापणसम्बन्धिनो माषा इति वीप्साऽभावः। अनवधार्यमाणे किम्। अस्मात्कार्षापणादिह भवद्भ्यां माषं देहि द्वौ देहि त्रीन् देहि। अनेकस्मिन् किम्। अस्मात्कार्षापणादिह भवद्भ्यां माषमेकं देहि॥

आशुप्रतिपादने द्वे वाच्ये॥

अहिरहिः बुध्यस्वबुध्यस्व। नात्र द्वित्वनियमः। अहिरहिरहिर्बुध्यस्व। नेदं शास्त्रीयं द्विर्वचनम्। किं तु परबोधनाय स्वतन्त्रानियतपदप्रयोग इत्याम्रेडितानुदात्ताभावात्प्रथमाप्तस्वर एवेति कैयटः॥

क्रियासमभिहारे च॥

लुनीहिलुनीहीत्येवायं लुनाति॥

आभीक्ष्ण्ये द्वे वाच्ये॥

भुक्त्वा भुक्त्वा व्रजति। पुनः पुनः क्रियाया उत्पत्तिराभीक्ष्ण्यम् क्रियाया अविच्छेदो नित्यतेति न पौनरुक्त्यमिति कैयटः। आभीक्ष्ण्यमेव नित्यमिति स्पष्टार्थम् वार्तिकमिति काशिकायाम्॥

डाचि द्वे वाच्ये॥

पटपटाकरोति। प्रयोगवशादव्यक्तानुकरणडाचीदं द्वि-

र्वचनं न तु सूत्रान्तरविहित इति द्वितीयाकरोतीत्यादौ न ॥

पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे वाच्ये ॥

पूर्वंपूर्वं पुष्प्यन्ति । प्रथमंप्रथमं पच्यन्ते । आतिशायनिकोऽपि दृश्यते । पूर्वतरं पुष्प्यन्ति । प्रथमतरं पच्यन्ते ॥

डतरडतमयोः संप्रधारणायां स्त्रीनिगदे भावे द्वे वाच्ये ॥

डतरडतमान्तयोर्द्वे स्तः समेनाढ्यत्वादिना गुणेन संप्रधारणायां निरूपणायाम । स्त्रीनिगदो भावः स्त्रीलिङ्गाभिधेया भूतिः संपत् । आढ्यतेति यावत् । इमावाढ्यौ । कतरा कतरानयोराढ्यता । इमे आढ्याः । कतमा कतमैषामाढ्यता । डतरडतमाभ्यामन्यत्रापि दृश्यते । उभावाढ्यौ । कीदृशी कीदृश्यनयोराढ्यता । स्त्रीनिगदाद्भावादन्यत्रापि । कतरः कतरोनयोर्विभवः ॥

कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये ॥

समासवच्च बहुलम् । यदा न समासवत् तदा पूर्वपदस्य प्रथमैकवचनम् । द्वितीयैकवचनमुत्तरपदस्य । अन्योन्यं विप्रा नमन्ति अन्योन्येन कृतं अन्योन्यस्मै अन्योन्यस्मात् अन्योन्यस्य अन्योन्यस्मिन् साधवः । परस्परम् । बहुलोक्तेरत्र न समासवत् । इतरस्य नित्यम् समासवदिति ज्ञेयम् । इतरेतरम् ॥

स्त्रीनपुंसकयोः परपदविभक्तेराम्भावो वाच्यः ॥

अन्योन्यम् । अन्योन्याम् । इतरेतरम् । इतरेतराम् वा ब्राह्मण्यौ भोजयतः । कुले वा । अन्योन्यदन्योन्यामितरेतरादितरेतरां वा ॥

अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ॥ १३ ॥

एतयोर्वा द्वे स्तः अक्लेशे । प्रियप्रियेण प्रियेण सुखसुखेन सुखेन वा ददाति । अक्लेशेन ददातीत्यर्थः । अकृच्छ्रे किम् । प्रियः पुत्रः सुखो रथः ॥

## यथास्वे यथायथम् ॥ १४ ॥

यथाशब्दस्य द्विर्वचननपुंसकत्वे निपात्येते यथास्वेऽर्थे । यथायथं पदार्था ज्ञाताः । यथास्वमात्मीयमित्यर्थः ॥

## द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥ १५ ॥

द्वन्द्वमिति द्विशब्दस्य द्विर्वचनं पूर्वपदस्यात्त्वम् उत्तरपदस्यात्त्वं च निपात्येते रहस्यादिषु । द्वन्द्वं मन्त्रयते । रहस्यामत्यर्थः । मर्यादावचने । आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते । माता पुत्रेण मिथुनं गच्छति । पौत्रेण प्रपौत्रेण तत्पुत्रेणेति मर्यादा । आचतुरमिति प्रायादिः । व्युत्क्रमणे द्वन्द्वं व्युत्क्रान्ताः । स्ववर्गात्पृथग्भूता इत्यर्थः । यज्ञपात्रप्रयोगे द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । अभिव्यक्तौ द्वन्द्वं नारदपर्वतौ । साहचर्येणाभिव्यक्तावित्यर्थः । अन्यत्रापि दृश्यते । द्वन्द्वं युद्धम् । द्वयोर्युद्धमित्यर्थः । द्वन्द्वानि सहते । चार्थे द्वन्द्वः । तदर्थं योगविभागः कार्यः । सूत्रे द्वन्द्वेति पाठे स्वविभक्तिको निर्देशः ॥

## पदस्य ॥ १६ ॥

अपदान्तस्य मूर्धन्य(८।३।५५)इत्यतः प्रागयमधिकारः । वक्ष्यमाणकार्यापेक्षया पदस्येति क्वचिदवयवषष्ठी क्वचित् स्थानषष्ठी ॥

## पदात् ॥ १७ ॥

कुत्सने च सुप्यगोत्रादा(८।१।६४)वित्यतः प्राक्पदादित्यधिकारः ॥

## अनुदात्तं सर्वमपादादौ ॥ १८ ॥

आपादसमाप्तेरयमप्यधिकारः । युष्मदस्मदादेशानामप्य-

नेनाऽनुदात्तत्वं विधीयते ॥

## आमन्त्रितस्य च ॥ १९ ॥

आमन्त्रितस्य पदस्य पदात्परस्यापादादौ स्थितस्य सर्वस्यानुदात्तः स्यात् । पचसि देवदत्त । पदात्परस्य किम् । देवदत्त पचसि । अपादादौ किम् । अथासोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् । आमन्त्रितस्य किम् । पचति देवदत्तः ॥

समानवाक्ये निघातयुष्मदस्मदादेशाः ॥

इह न । अयं दण्डो हर अनेन । ओदनं पच तव भविष्यति । शाकं पच मम भविष्यति ॥

## युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ ॥ २० ॥

पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिद्विवचनान्तयोः क्रमाद्वांनावादेशौ स्तः तौ चानुदात्तौ । ग्रामो वां स्वम् । ग्रामो नौ स्वम् । ग्रामो वां दीयते । नौ दीयते । ग्रामो वां पश्यति । नौ पश्यति । पदात्परयोः किम् । युवां रक्षतु शिवः । आवां रक्षतु शम्भुः । अपादादौ किम् ॥

योनाद्विनिधनो देवो युवां शुभकरोभवत् ।
स एव भगवांछम्भुरावां कुलविवर्धनः ॥

स्थग्रहणाद्विभक्तिलोपे न । युवयोः पुत्रः युष्मत्पुत्रः । अस्मत्पुत्रः । एकवचनबहुवचनयोरादेशान्तरविधानात् द्विवचनान्तत्वलाभः ॥

## बहुवचनस्य वस्नसौ ॥ २१ ॥

पदात्परयोरपादादौ स्थितयोर्युष्मदस्मदोः षष्ठ्यादिबहुवचनान्तयोः वस्नसौ एतावादेशावनुदात्तौ स्तः । ग्रामो

वः स्वम् । ग्रामो नः स्वमित्यादि । पदात्परयोः किम् । युष्मान् रक्षतु अस्मान् रक्षतु शिवः । अपादादौ किम् ॥

रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता ॥
स एव नाथो भगवानस्माकं शत्रुकर्शनः ॥

ते मयावेकवचनस्य ॥ २२ ॥

उक्तविधयोरेवानयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतयोरनुदात्तौ स्तः । ग्रामस्ते स्वम् । ग्रामो मे स्वमित्यादि ॥

त्वामौ द्वितीयायाः ॥ २३ ॥

पदात्परयोरपादादौ स्थितयोरनयोर्द्वितीयैकवचनान्तयोस्त्वामावादेशावनुदात्तौ स्तः । भक्तस्त्वा पश्यति । शिवो मा पश्यति ॥

न चवाहाहैवयुक्ते ॥ २४ ॥

चादिपञ्चकयोगे नैते आदेशाः स्युः । ग्रामस्तव च स्वम् । ग्रामो मम च स्वम् । एवं तव वा । मम वा । तव ह । मम ह । तवाह । ममाह । तवैव । ममैव । एवमादेशान्तरेऽपि योज्यम् । युक्तग्रहणात्साक्षाद्योगे निषेधः । युक्तयुक्ते तु न निषेधः । हरो हरिश्च मे स्वामी ॥

पश्यार्थैश्चानालोचने ॥ २५ ॥

अचाक्षुषज्ञानार्थैर्धातुभिर्योगे नैते आदेशाः स्युः । चेतसा त्वां समीक्षते । युक्तयुक्तेऽपि निषेधः । भक्तस्तव स्वरूपं ध्यायति । आलोचने तु भक्तस्त्वा पश्यति चक्षुषा ॥

सपूर्वायाः प्रथमाया विभाषा ॥ २६ ॥

विद्यमानपूर्वात्प्रथमान्तात्परयोरन्वादेशेऽप्येते वा स्युः ।

ग्रामे कम्बलस्तव स्वम् । ग्रामे कम्बलस्ते स्वम् । ग्रामे कम्बलो मम स्वम् । ग्रामे कम्बलो मे स्वमित्यादि । सपूर्वायाः किम् । कम्बलस्ते स्वम् । प्रथमायाः किम् । कम्बलो ग्रामे ते स्वम् ॥

एते वान्नावादयः अनन्वादेशे वा वाच्याः ॥

अन्वादेशे तु नित्यं स्युः । धाता ते तव वापत्यं तस्मै ते हरये नमः । सपूर्वाया इति त्वन्वादेशे विकल्पार्थम् ।'

तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ २७ ॥

तिङन्तात्पराणि गोत्रादीन्यनुदात्तानि स्युः कुत्सने आभीक्ष्ण्ये च । पचतिगोत्रम् । पचतिपचतिगोत्रम् । पचतिब्रुवमित्यादि । ब्रूञः कन्निपातनाद्वच्यादेशाभावश्च ॥

नाम्नो वा ॥

पचतिनाम । पक्षे आद्युदात्तमेव । तिङः किम् । कुत्सितम् । गोत्रादीनि किम् । पचतिपापम् । कुत्सनाभीक्ष्ण्ययोः किम् । समेतिगोत्रम् । कुत्सनाभीक्ष्ण्ययोरिति पाठविशेषणम् । तेन चनचिदिवगोत्रादि(८।१।५७)इत्यादावपि गोत्रादिग्रहणे कुत्सनाभीक्ष्ण्ययोरेव कार्यं विज्ञायते ॥

तिङ्ङतिङः ॥ २८ ॥

अतिङन्तात्परं तिङन्तं सर्वानुदात्तं स्यात् । श्वेतमालभेत । अतिङः किम् । तरतितरति । तिङ् किम् । नीलमुत्पलम् । अतिङ इति व्यर्थम् समानवाक्य इति वचनात् एकस्मिन्वाक्ये तिङ्द्वयाभावात् इत्याकरे ॥

न लुट् ॥ २९ ॥

अतिङन्तात्परं लुडन्तं नानुदात्तं स्यात् । श्वः कर्ता ॥

निपातैर्यद्यदिहन्तकुविन्नेचेच्चण्कच्चिद्यत्रयुक्तम् ॥ ३० ॥

यदादिनिपातैर्युक्तं तिङन्तं नानुदात्तं स्यात् । यत्पचति । एवं यदि–हन्त–कुविद्–नेद्–चेद्–चण्–कच्चिद्–यत्रयोगे द्रष्टव्यम् । चणिति णिच्चकारश्चेदर्थे । अयं च मरिष्यति । समुच्चयादौ तु न निषेधः । निपातैः किम् । यत्कूजति शाकटम् । इणः शतरि रूपम् । गच्छत्कूजतीत्यर्थः ॥

नह प्रत्यारम्भे ॥ ३१ ॥

नहेत्यनेन युक्तं तिङन्तं नानुदात्तम् । चोदितस्याकरणे पुनः प्रवर्तनेच्छया प्रतिषेधनं प्रत्यारम्भः । नह भोक्ष्यसे । नहाध्येष्यसे । प्रत्यारम्भे किम् । नह वै देवान्पापं गच्छति ॥

सत्यं प्रश्ने ॥ ३२ ॥

सत्यमित्यनेन युक्तं तिङन्तं नानुदात्तं स्यात्प्रश्ने । सत्यं भोक्ष्यसे । प्रश्ने किम् । सत्यं वक्ष्यामि नानृतम् ॥

अङ्गात्प्रातिलोम्ये ॥ ३३ ॥

अङ्गेत्यनेन युक्तं तिङन्तं प्रातिलोम्ये नानुदात्तम् । अङ्ग पच । प्रातिलोम्ये तु अङ्ग कूज वृषल इदानीं ज्ञास्यसि जाल्म । अनभिमतं कूजनं कारयन् प्रतिलोमो भवति ॥

हि च ॥ ३४ ॥

हिना युक्तं तिङन्तं नानुदात्तम् । स हि पच । अप्रातिलोम्य एव न । स हि कूज वृषल ॥

छन्दस्यनेकमपि साकाङ्क्षम् ॥ ३५ ॥

हीत्यनेन युक्तं तिङन्तमनेकमपि साकाङ्क्षं नानुदात्तं

स्यात् । अपिशब्दात्कदाचिदेकं कदाचिदनेकमिति लभ्यते । अनृतं हि मत्तो वदति पाप्मा । एवं हि पुनाति । अत्र तिङ्द्वयं न निहन्यते । अग्निर्हि पूर्वमुदजयत्तमिन्द्रोऽनूदजयत् । अत्रैकमुदात्तमपरमानुदात्तम् ॥

यावद्यथाभ्याम् ॥ ३६ ॥

आभ्यां युक्तं नानुदात्तम् । यावद्भुङ्क्ते । यथा भुङ्क्ते ॥

पूजायां नानन्तरम् ॥ ३७ ॥

आभ्यां युक्तं तिङन्तं अनन्तरं पूजायां नानुदात्तम् । किं त्वनुदात्तमेव । अनन्तरोक्तस्य प्रतिषेधः । यावत्पचति चारु । यथा पचति चारु । पूजायां किम् । यावत्पचति । अनन्तरं किम् । यावद्देवदत्तः पचति चारु ॥

उपसर्गव्यवेतं च ॥ ३८ ॥

उपसर्गव्यवहितमपि प्राग्वत् । यावत्प्रपचति शोभनम् । अनन्तरमित्येव । यावद्देवदत्तः प्रपचति ॥

तुपश्यपश्यताहैः पूजायाम् ॥ ३९ ॥

एभिर्युक्तं तिङन्तं नानुदात्तं स्यात्पूजायाम् । यत्तु माणवको भुङ्क्ते । पश्य माणवको भुङ्क्ते । पश्यत माणवको भुङ्क्ते । अह माणवको भुङ्क्ते । पूजायां किम् । पश्य मृगो धावति । पुनः पूजाग्रहणं निघातप्रतिषेधार्थम् । तद्धि निघातप्रतिषेधप्रतिषेधेन सम्बद्धम् ॥

अहो च ॥ ४० ॥

एतद्युक्तं तिङन्तं नानुदात्तम् । अहो माणवको भुङ्क्ते । पूजायामेव । अहो करोति ॥

## शेषे विभाषा ॥ ४१ ॥

पूजाव्यतिरिक्तार्थेऽहोयुक्तं वानुदात्तम् । कटमहो करिष्यति । अहो करिष्यति । अपूजावचनमेतत् । पूर्वसूत्रे पूजायामित्यस्य चानुकृष्टत्वादनधिकारे सिद्धे शेषग्रहणमनर्थकमित्याहुः॥

## पुरा च परीप्सायाम् ॥ ४२ ॥

पुरायुक्तं च नानुदात्तं स्यात्परीप्सायाम् । परीप्सा त्वरा । अधीष्व माणवक पुरा विद्योतते विद्युत् । पुरा स्तनयति स्तनयित्नुः । पुराशब्दोऽत्र भविष्यदासत्तिं द्योतयति । परीप्सायां किम् । नटेन स्म पुराधीयते । अत्र भूतविप्रकर्षं द्योतयति ॥

## नन्वित्यनुज्ञैषणायाम् ॥ ४३ ॥

नन्युक्तं तिङन्तं नानुदात्तं अनुज्ञाविषयप्रार्थनायाम् । ननु गच्छामि भोः । गमने मामनुजानीहीत्यर्थः । अनुज्ञैषणायां किम् । अकार्षीः कटं देवदत्त । ननु करोमि । पृष्टप्रतिवचनमेतत् । सूत्रे इतिशब्दः स्पष्टार्थः ॥

## किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ॥ ४४ ॥

क्रियाप्रश्नविषयकिंशब्दयुक्तमनुपसर्गमप्रतिषिद्धं च तिङन्तं नानुदात्तं स्यात् । किं देवदत्तः पचत्याहो स्विदधीते । अत्र क्रियाद्वयस्याप्युपनिघातः प्रश्नविषयस्य स्वरस्यापि किंशब्दयोगात् । क्रियाप्रश्ने किम् । किं देवदत्त ओदनं पचति शाकं वा । प्रश्ने किम् । किमधीते देवदत्तः । अत्र क्षेपे किंशब्दः । अनुपसर्गं किम् । किं देवदत्तः प्रपचति । अप्रतिषिद्धं किम् । किं देवदत्तो न पठति ॥

## लोपे विभाषा ॥ ४५ ॥

किंशब्दस्य गम्यमानार्थस्याप्रयोगो लोपः । किमो लोपे क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धं वा नानुदात्तम् । देवदत्तः पचत्याहो स्वित्पठति ॥

## एहि मन्ये प्रहासे लृट् ॥ ४६ ॥

एहिमन्ये इत्यनेन युक्तं लृडन्तं नानुदात्तं स्यात्प्रहासे । एहि मन्ये ओदनं भोक्ष्यसे भुक्तः सोऽतिथिभिः । प्रहासे किम् । एहि मन्ये ओदनं भोक्ष्य इति सुष्ठु मन्यसे । गत्यर्थलोटा (८।१।५१)इत्येव सिद्धे नियमार्थमिदम् । प्रहास एव यथा स्यादन्यत्र मा भूत् । एहि मन्ये ओदनं भोक्ष्य इति ॥

## जात्वपूर्वम् ॥ ४७ ॥

अविद्यमानपूर्वजातुना युक्तं तिङन्तं नानुदात्तं स्यात् । जातु भोक्ष्यसे । अपूर्वं किम् । कटं जातु करिष्यसि ॥

## किंवृत्तं च चिदुत्तरम् ॥ ४८ ॥

विभक्त्यन्तं डतरडतमान्तं च किमो रूपं किंवृत्तम् । अपूर्वंकिंवृत्तेन चिदुत्तरेण युक्तं तिङन्तं नानुदात्तम् । कश्चिद्भुङ्क्ते । कस्मै चिद्ददाति । कतरश्चिद्भुङ्क्ते । चिदुत्तरं किम् । को भुङ्क्ते । अपूर्वेति किम् । देवदत्तः किं चित्पठति ॥

## आहो उताहो चानन्तरम् ॥ ४९ ॥

आभ्यामपूर्वाभ्यां युक्तमनन्तरं तिङन्तं नानुदात्तम् । आहो पठति । उताहो पठति । अपूर्वाभ्यां किम् । देवदत्तः आहो पठति । अनन्तरं किम् । आहो देवदत्तः पठति ॥

शेषे विभाषा ॥ ५० ॥

उक्तविषये सान्तरं तिङन्तं वा नानुदात्तं । आहो देवदत्तः पठति । उताहो देवदत्तः पठति ॥

गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् ॥ ५१ ॥

लोडन्तगत्यर्थेन युक्तं लृट् तिङन्तं नानुदात्तं स्यात् न चेत्कारकं सर्वान्यत् । यत्रैव कर्मणि कर्तरि वा कारके तत्रैव लृडपि चेदित्यर्थः । आगच्छ देवदत्त ग्रामं द्रक्ष्यस्येनम् । आगच्छ देवदत्त ग्रामम् ओदनं भोक्ष्यसे। उह्यन्तां देवदत्तेन शालयः तेनैव भोक्ष्यन्ते । उह्यन्तां देवदत्तेन शालयः यज्ञदत्तेन भोक्ष्यन्ते । गत्यर्थेति किम् । पच देवदत्तौदनं भोक्ष्यसि एनम् । लोटा किम । आगच्छेर्देवदत्त ग्रामं द्रक्ष्यस्येनम्। लृट् किम् । आगच्छ देवदत्त ग्रामम् पश्यस्येनम् । न चेत्कारकमित्यादि किम् । आगच्छ देवदत्त ग्रामं पिता ते भोक्ष्यते । उह्यन्तां देवदत्तेन शालयः सक्तवस्तेन पास्यन्ते । सर्वेति किम । लोडन्तस्य यत्कारकं तथान्यच्च यत्र लृटः कारकं तत्रापि निघातप्रतिषेधो यथा स्यात् । आगच्छ देवदत्त ग्रामं त्वं चाहं च द्रक्ष्याव इति ॥

लोट् च ॥ ५२ ॥

लोट् तिङन्तमपि पूर्वविषये नानुदात्तम। आगच्छ देवदत्त ग्रामं पश्यैनम । आगम्यतां देवदत्तेन ग्रामः तेनैव दृश्यतां यज्ञदत्तेन वा । गत्यर्थस्येव । पच देवदत्तौदनं भुङ्क्ष्वैनम । लोटस्त्वेव । आगच्छेर्देवदत्त ग्रामं पश्यैनम्। नचेदित्येव। आगच्छ देवदत्त ग्रामं पश्यत्वेनं यज्ञदत्तः। सर्वेत्येव । आगच्छ देवदत्त ग्रामं त्वं चाहं च पश्याव । योगविभाग उत्तरार्थः ॥